केशवसंस्कृतग्रन्थमालायाः प्रथमं पुष्पम्—

# मन्दारमञ्जरी

## पर्वतीय-पण्डितप्रवर-श्रीविश्वेश्वरपाण्डेय-विरचिता ।

## (पूर्वभागस्वरूपा)

काशिक-विश्वविद्यालयीय-रणवीर-संस्कृत-पाठशालास्थ-भूतपूर्व-प्रथमा-
ध्यापक-साहित्याचार्य-व्याकरणतीर्थ-दर्शनशास्त्रि—
पं. तारादत्तपन्त-विरचित-कुसुमाभिधया
व्याख्यया समलङ्कृता ।

पाण्डेय-गोपालदत्तशास्त्रिणा सम्पादिता ।

प्रकाशकः—
पर्वतीय-पुस्तक-प्रकाशन-मण्डल,
२३।५८ दूधविनायक, बनारस ।

प्रथमावृत्तिः १००० ]　　१९९५　　मूल्य १)

# भूमिका

विदितमेव च तत्र भवतां सहृदयानां संस्कृतवाङ्मये व्युत्पत्तिजनकं काव्यमेवेति। तत्रापि-गद्य-पद्यभेदेन द्विविधे तस्मिन् काव्ये गद्यं विशेषतः सर्वशास्त्रोपकारकं, वेदानां, भाष्याणां, टीकानां, दर्शनानां, कौटिलीयादेरर्थशास्त्रस्य, वशिष्ठादिस्मृतीनां, धर्मसूत्राणां, कर्मकाण्डग्रन्थानां, निबन्धनानां हेमाद्रि-निर्णयसिन्धुप्रभृतीनाञ्च गद्यमयत्वात्। एवञ्च गद्यबहुले-वाङ्मये व्युत्पत्त्याधायकानि गद्यकाव्यानि अल्पान्येव दृश्यन्ते पद्य काव्यापेक्षया। यान्यपि सन्ति तान्यपि लौकिकपदार्थवर्णनाप्रवणान्येव प्रायः सन्ति, न खलु कार्यकारणभाव-व्याप्यव्यापकभाव-बाध्यबाधकभाव-प्रमाणप्रामाण्यभावादीनां गहनानां सर्वत्राऽपेक्षितानां दार्शनिकानां पदार्थानां सरसतया, सरलतया वर्णनपराणि दृश्यन्ते कान्यपि, येन खलु काव्येष्वपेक्षिता अपि दार्शनिकाः पदार्था मोदकखादिकयेव बुद्धिविषयीभूता भवेयुः। न च खलु एतेषां दार्शनिकानां पदार्थानां काव्येषु वर्णनाऽभावेपि न कापि क्षतिरिति वक्तुं शक्यते, काव्यानामलङ्कारप्रचुरत्वात्, तेषाञ्च कार्यकारणादिपदार्थमूलकत्वात्, अतस्तेषां पदार्थानां सुकरतया, सरसतया, सुकुमारमतीनामपठितदर्शनानां सौकर्यनिवृत्तयेऽवश्यमेवाऽपेक्षिता तेषां वर्णना। अन्यथा स्वयमप्रगल्भाः पदार्थस्वरूपज्ञाने कथङ्कारमलङ्कारान् विमलीकुर्युः, कथं वाऽविमलान् स्वहृदयकर्णिकायां निवेशयेयुः। यथा किल कार्यकारणभावज्ञानमन्तरेण हेत्वलङ्कारं, काव्यलिङ्गमलङ्कारम्, असंगतिञ्चेत्याद्यलङ्कारान् बोद्धुं न शक्नोति, एवं व्याप्यव्यापकभावज्ञानमन्तरेण न शक्नोति-अनुमानादीनलङ्कारान्। बाध्यबाधकभावज्ञानं विना विरोधाभासादीन्, सादृश्यज्ञानं विना-उपमादीन्, तत्रापि-आहार्यज्ञानं विना रूपकादीन्, कथमपि बोद्धुं न शक्नोति-अतः कृपालुना साक्षाद् विश्वेश्वरप्रसादलब्धजनिना सर्वतन्त्रस्वतन्त्रेण सर्वशास्त्रप्रणीतग्रन्थेन विश्वेश्वरकविना रचितमिदं गद्यकाव्यम्। अत्र खलु लौकिक-पदार्थवर्णनप्रकारेणैव शास्त्रीयाः पदार्थाः प्रतिपादिताः। तत्रापि--

'काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्'

इति हेतोः कविना प्रथममेव प्रमाणप्रमेयादयः पदार्थाः सादृश्यसम्बन्धमनुसृत्य वर्णिताः कुसुमपुरवर्णनाप्रसङ्गेन। एवं सर्वत्र प्रसङ्गसङ्गत्या दार्शनिकाः, अवसरसङ्गत्यादिभिः लौकिकाश्च पदार्था वर्णिता इति यथायथं स्वयमेव विचारणीयम्। प्रतिपादिताश्च टीकमानेन मया यथाशक्ति सरलतया, यथाऽनधीतदर्शनानामपि नितरामपेक्षिताः पदार्था-अत्रैव हृदयङ्गमा भवेयुरिति भावनया। विषयविभागज्ञानाय च टीकायां प्रकरणभेदः समलङ्कृतः। शीर्षके च विषयनिर्देश उल्लिखितः।

विश्वेश्वरकविश्चायम्-अलमोडामन्डलान्तर्गतपाटियाग्रामवासिभारद्वाजगोत्र-पाण्डेयोपनामक-पं०लक्ष्मीधरसूनुः काश्यां जन्म लेभे। पञ्चवर्षादारभ्याऽक्षरस्वीकारानन्तरमेव स्वबुद्धिवैचित्र्यं पङ्क्तिलापनादिना दर्शयामास। दशवर्षादारभ्य तु यच्छास्त्रम-

धीतवान् तस्मिन्नेव ग्रन्थान् निर्मितवान्। तथाहि काव्याध्ययनानन्तरं काव्यग्रन्थान्, व्याकरणाध्ययनपरिपक्वबोधे व्याकरणमित्यादि रीत्या सर्वेषु शास्त्रेषु कवेरस्य ग्रन्था उपलभ्यन्ते, तेषु-कतिचिन्मुम्बापुरीयनिर्णयसागरयन्त्रालये, इतरे च काशी-संस्कृत-ग्रन्थमालायां मुद्रिताः। ग्रन्थाश्चानेन बहवः प्रणीताः तन्मध्ये अस्मदवगतास्तु १ अलङ्कारकौस्तुभः सटीकः ( निर्णयसागरे मुद्रितः ), २ अलङ्कार-मुक्तावली ( का.सं.ग्रं.) ३ आर्यासप्तशती सटीका (का.सं.ग्रं.) ४ कवीन्द्रकर्णाभरणम् सटीकम् (नि० सा०) ५ काव्यतिलकम्, ६ काव्यरत्नम्, ७ तर्ककुतूहलम् नव्यन्याय-दीधितिटीकारूपम्, ८ दीधितिप्रवेशः ९ नवमालिका नाटिका, १०नैषधीयकाव्यटीका, ११ मन्दारमञ्जरीकथा गद्यनिबद्धा, १२ रसचन्द्रिका ( काश्यां मुद्रिता ), १३ रस-मञ्जरीटीका, १४ रोमावलीशतकम् (नि.सा.),१५ लक्ष्मीविलासः, १६ वक्षोजशतकम्, १७ शृङ्गारमञ्जरीसट्टकम् ,१८षड्ऋतुवर्णनम् ,१९सिद्धान्तसुधानिधिः(व्याकरण ग्रन्थः ( का. सं. ग्रं. ) २० होलिकाशतकम्, २१ केचनतान्त्रिकग्रन्थाः-इति। बहवस्तेषां ग्रन्थाः मत्सरिभिरनभिज्ञैश्च स्वर्गद्वारे सुरधुन्यै समर्पिता-इति च श्रूयते।

मन्दारमञ्जरी तु-अतीवरुचिरा लौकिकशास्त्रीयव्यवहारवर्णनपरा कादम्बरीतोऽपि विलक्षणा, वासवदत्ताया अपि विचित्रा। इयं कथा अद्यापि न केनापि विवृता, न पाठिता, नापि स्वयं लापिता, प्रौढसहृदयहृदयङ्गमेतिहेतोः प्रकाशकप्रेरणया संवत् १९९२ मार्गशीर्षाद् मयाऽस्य टीका आरब्धा, सहायार्थं किमपि टीकाटिप्पण्यादिकं नासीद् हृदयञ्चातीवशोकाकुलमासीत्-अत एव टीकामङ्गलावसरे 'निरालम्ब' इति पदं मुखान्निःसृतम्।

मूलपुस्तकमपि केवलं श्रीकेशवदत्तशास्त्रिभिर्लिखितमेकं प्राप्तम्, परन्तु शुद्ध-तमम्, अतएवारण्ये प्रथममार्गरचनेवेयं टीका मदुपज्ञा समाप्ता १९९५ मार्गपौर्ण-मास्यां दत्तजयन्त्याम्। मुद्रणे सम्पादनञ्च श्रीगोपालदत्तपाण्डेयेन सम्पादितम्, संशोधने च दत्तेऽपि मनोयोगे—

नेत्रयन्त्रपरिचारकदोषात्,
पुस्तकेषु बहवो लिपिदोषाः।
संभवन्ति हृदयालव एनान्,
मार्जयन्ति विषयग्रहणेहाः॥

इति न्यायेन सहृदयाः लिपिदोषं विषयदोषञ्च मार्जयन्तः, ग्रन्थोक्तान्, टीका-यां व्याख्यातान् पदार्थांश्चातीवमनोयोगेन विचारयन्तु, बोधयन्तु च समीचीनत-या शिष्यगणानिति सफलयन्तु मे परिश्रममिति मेऽनुनयः—

विदुषामनुचरस्य—

श्रीतारादत्तपन्तस्य।

# निवेदनम्

अथेदं प्रकाश्यते कविचक्रवर्ति-**विश्वेश्वरसूरि**विरचितं **मन्दारमञ्जरी**-नामकमलौकिकं गद्यकाव्यम्। संस्कृतसाहित्ये गद्यकाव्यानां सङ्ख्या अङ्गुलिगणनापरिमितैव। अतो गद्यकाव्यनिर्माणे पद्यकाव्यापेक्षया किमपि वैशिष्ट्यं प्रतीयते इति निश्चितप्रचमेव। निर्माणपद्धतिरपि इतरभाषापेक्षया भिन्ना। न केवलं सुन्दरवाक्यसमूहेनैव काव्यं गद्यस्य देवभाषायामपि तु रीतिरससमूहालम्बनोपमारूपकानुप्रासाद्यलङ्कारविशिष्टघटितगद्यस्य काव्ये परिगणना, अतः पद्यापेक्षया गद्यनिर्माणे अधिकावधानापेक्षा। ईदृशाश्च ग्रन्था नलचम्पू-हर्षचरित-वासवदत्ता-कादम्बरी-दशकुमारप्रभृतयः संस्कृतवाङ्मये गद्यकाव्येनाख्यायन्ते। इयं मन्दारमञ्जरी एतेषां गणनायां योगदानेन साकमेव किमपि वैशिष्ट्यं भजते। तस्या अयं पूर्वार्धभाग एव विश्वेश्वरपाण्डेयविरचितः, उत्तरभागस्तु अस्य शिष्यकृतिरिति किंवदन्ती परम्परया। यत उत्तरार्धमङ्गलाचरणे—

**स्वर्गस्रवत्सुरसरिद्बहलप्रवाहकल्लोलडम्बरविडम्बिभिरेव गद्यैः।**
**विश्वेश्वराभिधकवीश्वरनिर्मितेयं तोषं कथा न हृदि कस्य चरीकरीति॥**

**अस्या अपूर्तिजनितेन हि नोद्यमात्नो दुःखेन चापलमहं प्रकटीकरोमि।**
**मालां करीन्द्रवरकुम्भजमौक्तिकीयां ग्रथ्नन्नव रौप्यकृतबीजगणैर्हसाय॥**

इत्यादयः श्लोका उपलभ्यन्ते। उत्तरभागीयान्यमङ्गलश्लोकेष्वपि निर्मात्रा स्वनामोल्लेखनं न कुत्रापि कृतम्। अन्तिम ४।५ पृष्ठानामभावाच्च ग्रन्थकर्तुर्नाम न ज्ञायते। यदि केचन महाशया अस्योत्तरार्धस्य पुस्तकविषये सूचनां दास्यन्ति तर्हि महानुपकारः स्यात्तथैवोत्तरार्धप्रकाशनेऽपि सुलभता भवेत्। पूर्वार्धस्यापि अस्मत्सविधे एकैव प्रतिरासीत्। काश्यामपि द्वित्रस्थले पुस्तकान्तरमस्तीति ज्ञातमासीत्परन्तु अन्वेषणानन्तरमपि अस्माभिर्न प्राप्ता। इतरा काशिक-सरस्वतीभवनपुस्तकालयीया खण्डिता, नातीवशुद्धा ३—५१ पृष्ठात्मिका पुस्तिका उपलब्धा, यस्यां केषुचित्स्थलेषु पाठभेदा आसन्, ते तु टिप्पण्यां दर्शिताः। एतत् सरस्वतीभवनस्थपुस्तकमेलनरूपं कार्यं स्वर्गवासि-नेपालाभिजन-साहित्याचार्य-श्रीविष्णुप्रसादभण्डारिभिः कृतमासीत्, यतः पूर्वं तैरेव अस्य टीकाभारः स्वीकृतः। परन्तु ते न कर्तुं समर्था यतो दिवङ्गताः। तदनन्तरं पं० तारादत्तपन्तमहोदयैः कुसुमाभिधा टीका प्रार्थनानन्तरं कृता येन ग्रन्थपर्यालोचनेऽतीव सौकर्यं स्यादिति।

ग्रन्थकृत्पिता पं० लक्ष्मीधरपाण्डेयमहोदयः अल्मोडामण्डलान्तर्गत-पाटियाभिधाद्ग्रामात् काशीं प्रति वृद्धावस्थायां प्रतिनिवृत्तः। अत्रागत्य मणिकर्णिकातटे कोटिपार्थिवपूजनानन्तरं भक्तानुग्राहक-विश्वेश्वरकृपया पुत्रमवाप्तवान्। सोऽयं विश्वेश्वरपाण्डेयोऽनेन प्रकारेण जनिं लेभे। अस्याविर्भावस्य निश्चयात्मकवर्षं

नाद्यापि स्थिरीकर्तुं भविता। अयं खलु ईसवीयवत्सरस्याष्टादशशताब्द्याःपूर्वभागे एव सञ्जात इति न तत्र सन्देहस्यावसरः। वैयाकरणसिद्धान्तसुधानिध्यादिग्रन्थपर्यालोचनेनेदं विज्ञायते यदयं भट्टोजी दीक्षितानन्तरं स्यात्–यतस्तत्र तत्र स्थलेषु तेषां ग्रन्थानां नामोल्लेखनमनेन कृतम्। हरिदीक्षितकृत-ग्रन्थोल्लेखाभावादिदं प्रतीयते यदयं तस्मात्प्राचीनः। इदमपि कर्णाकर्णिकया आकर्णितं यद्धरिदीक्षित-महोदयसमये अयमासीत्, हरिदीक्षितेन अस्य दर्शनमपि कृतम्। अस्मत्संग्रहालयीय–**रसमञ्जर्या**–ष्टीकायामन्ते 'ग्रन्थकृत्पुत्रजयकृष्णो विलिलेखेदं पुस्तक'मिति लिखितं, तेन एकं पद्यमपि—

**दिग्गुणतुंशशलाञ्छनयुक्ते शालवाहनशके जयकृष्णः।**
**श्रावणीयसितपक्षदशम्यां निर्मितिं पितुरिमां विलिलेख ॥**

लिखितम्। अनेनापि उपर्युक्तसमयस्य निश्चयेन साकं विश्वेश्वरकवेः पुत्रस्य नामापि ज्ञायते।

अनेन स्वपितृसविध एव अध्ययनं कृतमिति तत्र तत्र ग्रन्थेषु गुरोः स्थाने स्वजनकनामैवोल्लिखि-तम्। प्रकृतगद्यकाव्यीय–

**जयति यथाजातानां वाग्जातसुजातपारिजातश्रीः।**
**श्रीलक्ष्मीधरविबुधावतंसचरणाब्जरेणुकणः ॥**

इत्यार्यायां गुरुत्वेन स्वपितुरेव वन्दना विहिता। अस्मिन् विषये न शङ्कायाः कुत्राप्यवसरः।

प्रायः सर्वेष्वपि शास्त्रेषु ग्रन्थनिर्माणमनेन कविना कृतमतोऽस्य पाण्डित्यविषयेऽनुमानं सहजमेव। ग्रन्था अपि तत्तच्छास्त्रेषु किमपि वैशिष्ट्यमेवार्हन्ति। प्राचीनग्रन्थानां शब्दान्तर-सन्निवेशेनैव ग्रन्थनिर्माणे कौशल्यं न विहितमपि तु तत्र तत्र तेषां मतप्रदर्शनपूर्वकं वस्तुतस्त्वि-त्यादिना स्वमतप्रदर्शनपुरस्सरं वैयाकरणसिद्धान्तसुधानिधिसदृशाकरग्रन्थनिर्माणं कृतम्। अतोऽस्य कवेः प्रतिभा तत्तद्ग्रन्थनिर्माणेन सहैव कीदृशीति स्वयमेव प्रतीयते। निगमागमपारावारीणतां गतोऽसौ चत्वारिंशद्वर्षदेशीयः सर्वशास्त्रीयनैकग्रन्थान् महनीयान् विरचय्य कीर्तिमात्रशरीरतां लेभे इति च किंवदन्ती। अस्यैतावत्पर्यन्तं प्रकाशितग्रन्थानां संक्षेपतो विवरणं निम्नलिखितम्–

**वैयाकरणसिद्धान्तसुधानिधिः**—अयं ग्रन्थो ग्रन्थकृताऽष्टाध्यायीसूत्रक्रमेण भगवत्पतञ्जलि-विरचितमहाभाष्यानुसारिव्याख्यानरूपः। क्वचिच्च भाष्यवार्तिककाराणां तत्तन्मतयोर्लाघवगौरवचर्चा-टङ्कनात् "वस्तुतस्तु, अत्रेदमवधेय"मित्यादिना भाष्यवार्तिकादितः स्फुटमनवगम्यमानविषयाणां निरायासेन बोधेन साकं स्वसिद्धान्तं च प्रतिपादयति। अध्यायत्रयपर्यन्तभागस्यैवोपलब्धतया चौखम्बा-ग्रन्थमालायां तदन्तो भागो मुद्रितः, सोऽपि १५१९ पृष्ठात्मकोऽस्ति। अग्रिमपञ्चाध्यायोपल-ब्ध्यनन्तरं कीदृशो विस्तीर्णः स्यादिति स्वयमेव शास्त्रधिषणा विचारयेयुः। एवञ्च कैयटप्रदीपादिवदाक-

रग्रन्थोऽयम् । अस्मिन् ग्रन्थे ग्रन्थकृता श्रुति–व्याकरण–न्याय–वेदान्त–मीमांसा–साहित्यविषयका बहवो ग्रन्थाः प्रमाणत्वेनोपन्यस्ताः ।

**अलङ्कारकौस्तुभः**—लाक्षणिकोऽयं ग्रन्थः । रस–रीति–गुण–दोषादिविषयपूरितः स्वकीयविवृत्यैव विस्तारितः सकलतद्विषयक–काव्यप्रकाश–रसगङ्गाधरादिनिबन्धेभ्यो विशिष्यते । टीकाऽपि ग्रन्थकारेण नव्यभव्यन्यायभाषयाऽनुप्राणिता, परन्तु पूर्णाऽधुना नोपलब्धा ।

**रसचन्द्रिका**–अस्मिन् प्रबन्धे नायकनायिकादीनां परिष्कृतलक्षणनवीनप्रायोदाहरणरसादिनिरूपणं स्फुटीकृतम् । स्वसदृशानपरान् ग्रन्थानप्यतिशेत इत्यत्र न बहुप्रपञ्चस्य प्रयोजनमस्ति ।

**आर्यासप्तशती**–आर्याछन्दोनिबद्धा चतुःषष्ट्युत्तरसप्तशतसंख्यामितपद्यघटिता । अस्यां पूर्वं देववन्दन–गुरुवन्दन–कविवन्दन–नृपप्रशंसादिकं विहितं, ततश्च अकारक्रमेण क्षकारपर्यन्तं व्रज्यारूपेण आर्याग्रथितपद्यानि सन्निवेशितानि । नैति गतार्थतां प्राच्या गोवर्धनाचार्यकृता आर्यासप्तशती ।

**अलङ्कारप्रदीपः**–कुवलयानन्दादिसदृशः केवलार्थालङ्कारनिरूपणात्मको ग्रन्थः । अस्मिन् प्रबन्धे ग्रन्थकर्त्रा सुकुमारमतीनां निरायासेन अलङ्कारतत्त्वावबोधार्थम् अतीवसरलैः संक्षिप्तैः सूत्रभूतैर्वाक्यैरलङ्कारलक्षणानि प्रतिपादितानि । स्वनिर्मितान्येव पद्यान्युदाहृतानि प्रतिपादितानि । सुकुमारमतीनां क्लेशकारकोऽव्याप्त्यतिव्याप्तिबाध्यबाधकभावादिगहनः शास्त्रीयो विचारोऽस्मिन् ग्रन्थे न प्रचारित इति वैशिष्ट्यम् ।

**अलङ्कारमुक्तावली**–ग्रन्थोऽयं कविना अलङ्कारकौस्तुभनामकं विस्तृतमलङ्कारविषयकग्रन्थनिर्माणानन्तरं निर्मित इति प्रतीयते । यतो ग्रन्थकर्त्रा आरम्भ एव–

**"नानापक्षविभावनकुतुकमलङ्कारकौस्तुभं कृत्वा ।**
**सुखबोधाय शिशूनां क्रियते मुक्तावली तेषाम् ॥"**

इत्यार्यया स्वयमेव निर्धारितम् । अस्मिन्ग्रन्थे "अलङ्कारकौस्तुभस्था" एव कारिकाः स्वल्पविवृतिसहिताः कृत्वा सन्निवेशिताः । अलङ्कारकौस्तुभपिपठिषूणां सुतरामुपयोगीदं ग्रन्थरत्नम् ।

**कवीन्द्रकर्णाभरणम्**–विदग्धमुखमण्डनानुसारिणी रचनेयम् । वस्तुतः पूर्वाचार्यविरचिततत्समग्रन्थैरस्य न गतार्थत्वं, यतो ग्रन्थकृता–

**यदभिहितं बहुमहितं पूर्वाचार्यैर्विचार्यैव ।**
**अनुकुर्वन् किञ्चिद् बहुविद्भिर्नाहमुपहास्यः ।**

इत्यार्यया स्पष्टमेवाभिहितम् ।

**रोमावलीशतकं** तु नाम्नैवार्थं द्योतयति । अन्ये च अप्रकाशिता ग्रन्था भूमिकातोऽवगन्तव्याः । विशेषतो विवेचनं ग्रन्थान्तरे भविष्यति ।

सा चेयं मन्दारमञ्जरी ईशकृपया प्रथममेव पर्वतीय-पुस्तक-प्रकाशन-मण्डलद्वारा प्रकाश्यते। ईदृशग्रन्थरत्नस्य प्रकाशनं संस्कृतसाहित्यरसिकानां कृते किमपि आह्लादकरं भवेदिति मे विश्वासः। अस्य संशोधनकार्ये दत्तावधानेऽपि अज्ञान-दृष्टिदोष-सीसकाक्षरसंयोजकवशादिना सम्भाव्यमाना अशुद्धीः मानुषधिषणा निसर्गबुद्ध्योपेक्ष्य प्रथमत एव मुद्रितादस्मात् ग्रन्थात् सारसुधा आदाय विशेषतो मूलभागीयशुद्धिपत्रात्तत्र तत्र अशुद्धीः सम्मार्ज्य–

**न चात्रातीव कर्तव्यं दोषदृष्टिपरं मनः।**
**दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते॥**

इति कुमारिलोक्तिमनुसरन् चित्तं दोषप्रवणमकुर्वन्त एव मम परिश्रमं सफलयन्तु इति वारं वारमभ्यर्थये।

विदुषामनुचरः—
**गोपालदत्तपाण्डेयः।**



श्रीगणेशाय नमः ।

# मन्दारमञ्जरी



जयति जगज्जननादिकृदशेषसत्त्वमतीत्यनुस्यूतम् ।
बाधावधानविधुरं किमपि ब्रह्म प्रतीचीनम् ॥ १ ॥

---

## कुसुमाभिधा टीका ।

श्रीगणेशाय नमः । विश्वेश्वराय नमः । माधवाय नमः । सरस्वत्यै नमः ।

चिन्मयशक्ति सकलां निखिलप्रत्यूहनाशिनीं सदयाम् ।
प्रणमामि भावशुद्ध्या निखिलपदार्थतत्त्वबोधाय ॥ १ ॥
विश्वेश्वरनगरीस्थस्तारादत्ताह्वयो मन्दः ( पन्तः ) ।
विश्वेश्वरकृतिमेतां व्याचिख्यासुर्निरालम्बः ॥ २ ॥
विश्वेश्वरप्रभृतयः सकला मे देवताः प्रसीदन्तु ।
मन्दारमञ्जरीं तां विवृणोमि यथा सकल्याणम् ॥ ३ ॥
मन्दारमञ्जरीयं लौकिकशास्त्रीयवर्णनानिपुणा ।
निपुणान् करोतु शिष्यान् सकलेषु पदार्थतत्त्वेषु ॥ ४ ॥
पुनरपि सकलान्देवान् नमामि भूयोऽपि देवतापीठान् ।
'कुसुम'समर्पणकामस्तेभ्यो मन्दार-मञ्जर्याः ॥ ५ ॥
आबाल्यात्तव सेवा मया कृता ब्राह्मि! चेतसा वचसा ।
सम्प्रति कृत्या सेवे शक्तिर्देया त्वया मातः ॥ ६ ॥
भूयः कोविदमुख्यान् याचे मिलितेन पाणियुगलेन ।
अवहितचित्तैश्चेयं 'कुसुमं' मन्दारमञ्जर्याः ॥ ७ ॥

'मन्दारमञ्जरी' नामकं गद्यकाव्यं निर्मातुकामः कविकुलतिलकायमानः श्रीविश्वेश्वरप्रसादलब्धजनिः श्रीलक्ष्मीधरविबुधतनुजनिः श्रीविश्वेश्वरः कविः सकलप्रत्यूहनिवारणपूर्वक-ग्रन्थनिर्माण-प्रचारादिफलकामनया परमात्मादिप्रणमन-रूपं मङ्गलमारचयति ।

तत्रादौ निखिलप्रपञ्चनिदानभूतं, सकलश्रुतिशिरोगीयमानं परमात्मानं स्तौति-जयतीति। जगतः=संसारस्य जननादयः=सृष्टिस्थितिसंहाराः तान् करोतीति (क्विप् तुक्) अशेषाः सर्वे ये सत्त्वाः प्राणिनः तेषां या प्रतीतिः "अहमस्मि" इत्याकारिका तस्याम्=अहमाकारेण अनुस्यूतम्=अनुगतम् अस्ति कश्चित्-'जगज्जननादिकृत्' इत्याकारिकायां प्रतीतौ सदाकारेणानुगतं, 'सोऽस्मि' इत्याकारिकायां प्रतीतौ अभेदतया भातम् अत एव बाधस्य=' नाहमस्मि ' इत्यादिप्रतीतिविषयस्य, यदवधानं=प्रणिधानं निश्चय-इत्यर्थः; तेन विधुरम्=रहितं तथापि किमपि=अवाङ्मनसगोचरम् अतएव प्रतीचीनं=प्रत्यग्दृष्टिगम्यम्, 'अरूपमस्पर्श'-इत्यादिश्रुतिभिरिन्द्रियग्रहणाभावस्य प्रतिपादनात् । एवमपि ब्रह्म=व्यापकं, शिवं, शान्तम्, अद्वैतम्, परं ब्रह्म जयति=सर्वश्रेष्ठतया सर्वकारणतया सर्वोत्कर्षेण वर्त्तते । अतएव तदेव प्रथमं प्रणम्यम् अतस्तदेव प्रणमामि इति ॥

अयम्भावः—जयत्यर्थेन नमस्कारस्याक्षेपः, अतो नमनरूपमेव मङ्गलम्। जननम् आदिर्येषान्ते-इति बहुव्रीहेस्तद्गुणसंविज्ञानतया स्थितिसंहारावादिशब्दार्थः। तथा च ब्रह्मणस्तटस्थलक्षणानि सूचितानि । जगज्जननकर्त्तृत्वं, जगत्स्थितिकर्त्तृत्वं, जगत्संहारकर्त्तृत्वमिति कृतिविषयाणि त्रीणि लक्षणानि । तत्र कृतिश्चापरोक्षा बोध्या । एवं ज्ञानविषयाणि त्रीणि लक्षणानि । एवमिच्छाविषयाणि । जगत्सृष्टिविषयापरोक्षज्ञानवत्त्वम् इत्यादि नवलक्षणलक्षितस्य ब्रह्मणः किं स्वरूपलक्षणम् इत्याकाङ्क्षायाम् आह—अशेष इति । तथा च-"अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्। आद्यं त्रयं ब्रह्मरूपं जगद्रूपमतोऽन्यथा"—इति वेदान्तसिद्धान्तानुसारं पुष्पमस्ति, पुष्पं भाति, पुष्पं प्रियम् इत्यादिका प्रतीतिः स्वस्वाभिलषिते वस्तुमात्रे प्राणिमात्रस्य भवति तादृशप्रतीतिविषयं ब्रह्म-इति स्वरूपलक्षणम्; "आत्मनः कामाय सर्वं प्रियं भवतीति" श्रुतेः । बाधेति—" तद्वत्ताबुद्धौ तदभाववत्ताबुद्धिः प्रतिबन्धिका" इति न्यायेन अहमस्मि इत्याकारिकप्रतीतेः प्रतिबन्धिका अहं नास्मीति प्रतीतिः, सा तु न संभवति अत उक्तं बाधावधानविधुरमिति ।

'पराञ्चि खानि व्यतृणत्स्वयम्भूः, तस्मात्पराक् पश्यति नान्तरात्मन्' इति श्रुतेरिन्द्रियाणां पराग्विषयतया तद्ग्राह्यस्य विषयस्य पराचीनत्वम्। सत्त्वप्रतीत्यनुगतस्य ब्रह्मणस्तु प्रतीचीनत्वं, न पराचीनत्वम्; 'कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्'-इति श्रुतेः॥ अस्यामार्यायाम्—"सदेव सौम्येदमग्र आसीत्, एकमेवाद्वितीयम्, तदैक्षत, बहुस्यां प्रजायेय" एतासां श्रुतीनामर्थः सन्दर्शितः ॥ १ ॥

जयति स्वेदपृषत्सु प्रत्येकं प्रतिफलितभुवनकोषः ।
धूर्जटिरूर्जितनृत्यो ब्रह्माण्डानामिवोद्गिरन्काण्डान् ॥२॥
बृहदिन्द्रनीलगुलिकातुन्दिलमरविन्दसुन्दरं जयति ।
कुचकुम्भयुगं गौरीगणेशयोर्लब्धमधुकरच्छायम् ॥ ३ ॥

अथ द्वितीयस्यामार्यायाम्–''तत्तेजोऽसृजत, तत्तेज ऐक्षत, बहु स्यांप्रजायेय- इति तदपोऽसृजत, तस्माद्यत्र क्व च शोचति स्वेदते वा पुरुषस्तेजस एव तद्धि-आपो जायन्ते''–इत्यासां श्रुतीनामर्थं विशदयितुं धूर्जटिरूपं प्रथमं-विवर्तं परिणाममवतारं वा मनसा ध्यायन् स्तौति–जयति स्वेदेति । ऊर्जितं=बलप्राणसमेतं नृत्यम्= पदार्थप्रादुर्भावाभिनयात्मको गात्रविक्षेपो विवर्त्तो यस्य स अतएव स्वेदस्य घर्मजलस्य पृषत्सु = बिन्दुषु प्रत्येकमेकैकं प्रति प्रतिफलिताः निष्पन्ना भुवनस्य जगतः कोषाः पुटाः आवरणानीत्यर्थः अत एव ब्रह्माण्डानां समूहानुद्गिरन्निव = उद्वमन्निव न तु रचयन्निव धूर्जटिः=जटति=संहतं करोति=जटिः (सर्वधातुभ्य इन् इत्युणादिसूत्रेण कर्तरि इन् प्रत्ययः) धुरां परमाणुरूपाणां धूलीनां जटिः, संघात- कारकः = नीललोहितः जयति मायावच्छिन्नतया ईश्वरत्वेन सर्वोत्कर्षेण वर्त्तते ।

अथवा—ऊर्जितं ताण्डवरूपं नृत्यं नर्त्तनं यस्य अतएव स्वेद–पृषत्सु घर्म- जल–बिन्दुषु प्रत्येकं प्रतिफलिताः प्रतिबिम्बिताः संक्रान्ता इत्यर्थः; भुवनकोषाः ब्रह्माण्डानि अतएव प्रत्येकं स्वेदपृषत्सु प्रतिबिम्बितत्वेन ब्रह्माण्डानां भुवनको- षाणां काण्डान् समूहान् उद्गिरन्निवेति क्रियोत्प्रेक्षालङ्कारः । धूः = भारभूता जटिः = जटा यस्य धुरि = उपरिस्थिता जटा यस्येति वा । एतादृशस्ताण्डवप्रसक्तः शिवो जयति सर्वोत्कृष्टतया वर्त्तते, अतस्तं प्रत्यस्मि प्रणत इत्यर्थः । ऊर्जितमिति ऊर्ज बलप्राणनयोरित्यस्मात् क्त प्रत्ययः । ऋदुपधाच्चाक्लृपि चृतेरिति क्यपि नृत्य- मिति । जट झट संघाते । धुर्वी हिंसायां धूः क्विपि । धूर्जटिर्नीललोहित इत्यमरः । जटिर्जटा, इति द्विरूपकोषः । उद्गिरन् इति गॄ निगरणे इत्यस्मात् शतृप्रत्यये । पृषन्ति बिन्दुपृषता इत्यमरः ; पृषुसेचने इत्यस्मात् 'पृषन्महद्बृहज्जगच्छतृवच्चे- ति ( उ. २-८४ ) साधुः ॥ २ ॥

''उमासहायं परमेश्वरं गुरुं त्रिलोचनं नीलकण्ठं प्रशान्तम् ।
ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ॥''

इति श्रुतेरुमासहितेश्वरस्यैव ध्येयतया, उमाया अपि सापत्याया एव ध्येयतया गौरीगणेशौ स्तौति सममेकयाऽऽर्यया—बृहदिति । गौरीगणेशयोः कुचकुम्भयुगं जयति, किमुत गौरीगणेशौ जयत इति वक्तव्यम् । कथम्भूतं तत्—बृहत् =

**अङ्कगतं कमलाया जयति स्वपतः पदं परमपुंसः ।**
**रोमलतिकाकिसलयं नाभीकमलाकरैककोकनदम् ॥ ४ ॥**

---

उद्यतम्–उन्नतमित्यर्थः बृहू–इत्यस्य धातोरुद्यमनार्थत्वात् । पुनः कथं भूतम्, इन्द्र-नीलस्य = नीलाश्मनो गुलिकेव या चूचकरूपा गुलिका तया तुन्दिलं सञ्जाततुन्दं तुन्दिभमित्यर्थः, स्वयन्तु गौर्य्याः कुचयुगं वर्णत आकारतश्च, अरविन्द इव सुन्दरम्, ( उपमानानि सामान्यवचनैरित्यनेन समासः ) अत एवोपमानस्या-रविन्दस्य कुड्मलावस्थापन्नता ग्राह्या सादृश्यात्; पुनः कथम्भूतम्—लब्धा, मधुकरस्य=भ्रमरस्य छाया इव छाया = शोभा येन तत्, इन्द्रनीलगुलिकातुन्दि-लत्वादितिभावः ।

गणेशपक्षे तु—बृहती=महती या इन्द्रनीलस्य नीलमणेर्गुलिका=गुटिका सेव तुन्दिलं=पीनं स्वयन्तु योग्यतया नीलार-विन्द-रमणीयं वासनयाऽऽकारतश्चेति भावः । अतएव लब्धा = प्राप्ता मधुकरस्य = मधुपस्य छाया=कान्तिर्येन तत् प्राप्तमधुकरकर्त्तृकशोभमित्यर्थः । कर्तृषष्ठ्या समासः । कुचश्च कुम्भश्चानयोः समा-हारः कुचकुम्भम् (प्राण्यङ्गत्वादेकवद्भावः द्वन्द्वश्च प्राणितूर्य्यसेनाङ्गानामिति) तस्य युगं = द्वन्द्वम् । षष्ठीसमासः । कुचकुम्भयोरवयवत्वात् सम्बन्धिसापेक्षत्वेऽपि गौरीगणेशयोः सम्बन्धिनोर्गम्यमानत्वेन ( गमकत्वात् ) समासः । अतएव सापे-क्षमसमर्थं भवतीति नाशङ्कनीयम् । द्वन्द्वान्ते श्रूयमाणस्य युगपदस्य प्रत्येकमन्वयेन कुचयुगं, कुम्भयुगम् इति लभ्यते तयोश्च गौरीगणेशयोरित्यनेन यथासङ्ख्य-मन्वयः । तथा च गौर्य्याः कुचयुगं जयति, गणेशस्य कुम्भयुगं जयति । जननीतनययोर्विलक्षणावयवसादृश्यं सकलभुवनचमत्कृतिजनकमिति हेतोः सर्वो-त्कर्षेण वर्त्तते । कुम्भौ घटेभमूर्द्धांशौ, कुचौ स्तनौ, इत्युभयत्रामरः । उपमाश्लेषयोः सङ्करः ॥ ३ ॥

पालिनीं सत्त्वगुणप्रधानां भगवतो मूर्त्तिं पालिन्या जगन्मातुरङ्कगतत्वेन ध्यायन् नमति जयत्याक्षिप्तप्रह्वीभावेन-अङ्कगतमिति । कमलायाः=पद्मायाः अङ्के=उत्सङ्गे गतं=स्थितं, संवाहयन्त्या इत्यर्थः; अतएव रोमलतिकाया 'लक्षणया' रोमराजी-लतिकायाः = किसलयं=पल्लवरूपं, पुनः प्रत्यासत्त्या कमलाया एव—नाभीरूपो यः कमलानां पद्मानामाकरः सरसी, "कासारः सरसीसरः" इत्यमरः तत्र, तत्सं-बन्धि, वा एकमद्वितीयं कोकनदं = रक्तोत्पलं, 'रक्तोत्पलं कोकनद'मित्यमरः, स्वपतः=शयानस्य, क्षीरसागरे-इत्यर्थः । परमपुंसः = पुराणपुरुषस्य शेषशायिन इत्यर्थः, पदं = चरणकमलम् ।

रविमयनयनमयूखज्वलितस्फटिकाक्षपावकप्रभया ।
जयति सरस्वत्यखिलं वाङ्मयमुद्दीपयन्तीव ॥ ५ ॥

पदं, शब्दे, च वाक्ये च व्यवसायापदेशयोः ।
पादतच्चिह्नयोः, स्थानत्राणयोरङ्कवस्तुनोः ॥

इति विश्वः । जयति=जगत्पालकतया सर्वोत्कर्षेण वर्त्तते । अत्र रोमराज्यां लतिकात्वारोपः 'पदे' पल्लवत्वारोपे निमित्तम् । नाभ्यां कमलाकरत्वारोपः 'पदे' कोकनदत्वारोपे निमित्तम् । अतो, "रूपकं रूपितारोपो विषये निरपह्नवे । तत्परम्परितं साङ्गं निरङ्गमिति च त्रिधा । "यत्र कस्यचिदारोपः परारोपणकारम् ॥ तत्परम्परितम्" इति सामान्यविशेषलक्षणलक्षितं, परम्परितं रूपकमलङ्करणम्, तच्च पदपल्लवयोः पदकोकनदयोर्मिथः समासविरहात् व्यस्तं रूपकमिति बोध्यम्। रूपकालङ्कारस्य, मयूरव्यंसकादयश्चेति समासे, विग्रहवाक्ये च दर्शनाद् रूपणस्योभयत्र तुल्यत्वात् । स्वपत इत्यनेन स्वापस्य प्रधानपालनाङ्गत्वं व्यज्यते । तथा च भगवान् पुनर्वसुः—निद्राया धात्रीत्वं प्रतिपादयति-

तमोभवा श्लेष्मसमुद्भवा च, मनश्शरीरश्रमसम्भवा च ।
आगन्तुकी व्याध्यनुवर्त्तिनी च, रात्रिस्वभावप्रभवा च निद्रा ॥
रात्रिस्वभावप्रभवा मता या, तां भूतधात्रीं प्रवदन्ति निद्राम् ॥ इति ।

तत्रापि जगन्मातुः कमलाया अङ्कगतम् ॥ ४ ॥

पालिनीं शक्तिं प्रणम्य "तेजोमयी वाग्" इति श्रुतिप्रतिपाद्यां वागधिष्ठात्रीं सरस्वतीं प्रणमति—रविमयेति । रविरेव रविमयं यन्नयनं नेत्रं तस्य ये मयूखाः=किरणाः तैर्ज्वलितः=प्रकाशितो यः स्फटिकाक्षस्य जपमालिकायाः पावको=वह्निः तस्य या प्रभा छविः तया करणभूतया, अखिलम्=सम्पूर्णं, वाङ्मयं=शास्त्रजातम् उद्दीपयन्तीव=प्रकाशयन्तीव सरो=गगनं हृदयाकाशं वा विद्यतेऽधिष्ठानतया यस्याः सा सरस्वती=वाग्देवी जयति='वाच्यर्था नियताः सर्वे वाङ्मूला वाग्विनिःसृताः' इति मनुवचनानुसारेण, ( श्रुतिषु च शब्दाधिष्ठातृप्रणवतद्वाच्येच्छापूर्विकाया एव सृष्टेः प्रतिपादनात् ) निखिलप्राणिव्यवहारसाधकतया जयति=उत्कृष्टा वर्त्तते, अतः प्रकृतोपयुक्तां तां नौमीति भावः । अत्रेदं बोध्यम्—'द्यौःसमुद्रसमं सरः' (य.सं. १७।४८) इति श्रुतौ सरःशब्द आकाशवाची, ततो मतुपि, वत्वे, उगित्वान्ङीपि सरस्वतीशब्दो निष्पद्यते शब्दस्याकाशवृत्तित्वेन तदधिष्ठातृदेव्याः स्वाधिष्ठानवृत्तित्वं न्याय्यमेव । ततश्च सकलगगनव्यापिकायाः सरस्वत्याः रविमयनयनमयूखादिना वाङ्मयोद्दीपनं समुचितं, सामानाधिकरण्यात् ॥ ५ ॥

आदिभवाय कवीनामनुपक्षीणप्रबोधविभवाय ।
प्राचेतसाय विहितः स्वचेतसाऽयं नमस्कारः ॥ ६ ॥
भारतनिर्माणेन व्यञ्जितनिजमुञ्जकेशिभावाय ।
पाराशर्याय नमो मुनये कुनयेन हीनाय ॥ ७ ॥

वाङ्मयाधिष्ठात्रीं प्रणम्य तदनुगृहीतमादिकविं प्रणमति—आदिभवायेति । कवीनां=काव्यकर्तृणाम् मध्ये, ( निर्धारणे षष्ठी ) आदिभवाय=प्रथमाय, ( आद्यौ-भवः सप्तमीतियोगविभागात् समासः ) पुनः न-उपक्षीणः प्रबोधस्य=प्रकृष्टज्ञानस्य विभवः=सामर्थ्यं यस्य तस्मै प्राचेतसाय=प्रचेतसो ब्रह्मणो मानसपुत्रस्य ब्रह्मर्षे-रपत्याय=वाल्मीकये मुनिमान्याय स्वस्थं समाहितं चेत स्वचेतस्तेन स्वचेतसा= स्वस्थेन स्वकीयेन मनसा अयं=काव्योपयुक्तः नमस्करणं=नमस्कारः [ भावे-घञ् , नमस्पुरसोर्गत्योरिति नमसः गतिसञ्ज्ञत्वात् सः ] प्रणामः, विहितः= कृतः, मयेति शेषः । अत्रादिभवत्वमनुपक्षीणप्रबोधविभवत्वं प्राचेतसत्वञ्च नम-स्कारे हेतुत्वं भजन्ते, तस्माद्वाक्यार्थहेतुकं काव्यलिङ्गम् , उत साभिप्रायविशेष-णत्वेन परिकरो वेति सन्देहसङ्करः । विहित इत्यत्र वि-पूर्वाद्-डुधाञ् धातोः क्तप्रत्यये दधातेर्हिः-इति धातोर्ह्यादेशे सिद्ध्यति । अनुपक्षीणप्रबोधविभवत्वञ्च ब्रह्मणो वरदानेन बोध्यम् । वाल्मीकिरामायणे द्वितीयसर्गे द्रष्टव्यम् ॥ ६ ॥

लोके पद्यावतारकमादिकविं प्रणम्य पुराणमहाभारतादिनिर्माणेन निखिल-गद्यपद्यप्रयोक्तारं वेदव्यासं प्रणमति—भारत-निर्माणेनेति । भरताः=दुष्यन्त-पुत्रभरतवंशीयाः क्षत्रिया योद्धारो यस्मिन् युद्धे तद्युद्धम्=भारतं महच्च तद् भारतं महाभारतं लक्षणया तत्प्रतिपादको ग्रन्थोऽपि महाभारतम् । अत्र तु नामैकदेशे नामग्रहणमिति भारतशब्देन महाभारतं बोध्यम्, तस्य निर्माणेन= विरचनेन व्यञ्जितः=विशेषेण प्रकटीकृतः निजस्य=स्वस्य मुञ्जकेशिभावः नारायणावतारत्वं, ( 'को ह्यन्यः पुण्डरीकाक्षात् महाभारतकृद् भवे'दित्युक्तेः- ) येन यस्य वा तस्मै, मुञ्जस्य पुष्पाणि मुञ्जानि तानीव केशाः शिरोरुहा मुञ्जकेशाः सन्त्यस्य तस्य भावः, व्यञ्जितो निजस्य मुञ्जकेशिभाव इति समानाधिकरणो बहुव्रीहिः । महाभारतनिर्माणस्य बहुकालसाध्यत्वात्, व्यासस्यातीव वृद्धत्वं प्रतीयते इति भावो वा । पराशरस्य वसिष्ठ-पौत्रस्यापत्याय [ गर्गादिभ्यो यञि सिद्धाय ] पाराशर्याय=पराशरापत्याय ततोपि कोर्भुवो नयः नीतिः कुनयोऽनयो मर्त्यत्व-मल्पज्ञत्वं प्रमादालस्यादिमत्वं कुत्सितो नयः तेनहीनाय=त्यक्ताय, मननशीलाय मुनये 'व्यासाय विष्णुरूपाय' नमः=नमस्कारोऽस्तु ।

नेत्रीकृताग्निमित्रा कुमारसूर्जनितमेघरघुभावा ।
कवितामिषेण काली वशं गता कालिदासस्य ॥ ८ ॥

व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम् ।
पराशरात्मजं वन्दे शुकतातं तपोनिधिम् ॥

इत्याद्यनुसंधेयम् ॥ ७ ॥

आर्षकवी नमस्कृत्य तदनुसारिणं कविकुलतिलकं कालिदासं प्रशंसति—नेत्रीति । अनेता नेता सम्पद्यमानः कृतः नेत्रीकृतः=[ च्विप्रत्यये रीङृतः ७।४।२७ इति रीङादेशः ] नायकीकृतः, अग्निमित्रो मालविकाग्निमित्रनाटके इत्यर्थः, अग्निमित्रनामा राजा यया कवितया सा, कुमारं कुमारसम्भवं काव्यं सूते इति कुमारसूः पुनश्च मेघश्च रघुश्चेति द्वन्द्वे 'अस्ति कश्चिद्वाग्विशेषः'—इति मेघस्याभ्यर्हितत्वात् पूर्वनिपातः तयोर्भावो दूतत्वं, वंशप्रवर्त्तकत्वञ्च "सन्देशार्थाः क्व पटुकरणैः" "वंशस्य कर्त्तारमनन्तकीर्तिमिति" तत्रैवोक्तत्वात् द्वन्द्वान्ते श्रूयमाणत्वेन भावशब्दस्य प्रत्येकमन्वयः तथा च जनितः=उत्पादितः मेघभावो मेघस्य दूतत्वम्, रघुभावो रघोर्वंशप्रवर्त्तकत्वं यया कवितया मेघदूते रघुवंशे च काव्ये-इत्यर्थः । सत्यपि यक्षान्तरे मेघस्य दूतत्वम्, सत्यपि-सूर्यस्य वंशप्रवर्त्तकत्वेऽपि "क्व सूर्यप्रभवो वंशः" इत्युक्तेः । धेनुवरप्रसादाद् रघोर्वंशप्रवर्त्तकत्वं काव्ययोरलौकिकत्वावहत्वं कालिदासकवितायाम् अतो नेयं कविता किन्तु स्वदासकरुणापूर्णा, काली=ईश्वरी "उमा कात्यायनी गौरीकालीहैमवतीश्वरी" इत्यमरात् कवितायाः मिषेण=व्याजेन वशम्=अधीनं गता=प्राप्ता कुत इति चेत् यत इयं काली नेत्रीकृताग्निमित्रा, कुमारसूः, जनितमेघरघुभावा स्वरूपेणास्ति तादृशविशेषणवती-एव मिषेण कविता, तत्र नेत्रीकृतौ लोचनीकृतौ=अग्निश्च मित्रश्च यया सा [ प्रसिद्धसाहचर्याभावाद्देवताद्वन्द्वे, च इति नानङ् ] 'अग्निर्वैश्वानरो वह्निः' 'द्युमणिस्तरणिर्मित्रः' इत्युभयत्रामरः । कुमारं कार्तिकेयं सूते सा स्कन्दमाता, जनितः कृतो मेघस्य घनस्य लघुभावो लाघवं ततोऽपि कृष्णत्वादित्यर्थः, कुतो हेतोर्वशं गता इत्यत उक्तम्-काल्याः स्वस्याः दासस्य स्वचित्तसमर्पकस्य दासृदाने इत्यस्यानुगुणत्वात् , [ङ्यापोः संज्ञाछन्दसोर्बहुलम् ३।३।६३ इति ह्रस्वः] 'अहं भक्तपराधीनः' इत्युक्तेः । 'बालमूललघ्वलमङ्गुलीनां वा लो रत्वमापद्यते' इति कृपो रोलः ८।२।१८ इत्यत्रोक्ते रलयोरेकत्वस्मरणाद्वा रघुलघुशब्दयोरभेदः । अतः स्तुत्योऽयं महाकविः कालिदास इत्यर्थः ॥ ८ ॥

भवभूतेर्विच्छित्तिव्यभिचारमुचो गिरां गुम्फाः ।
विधिनापि दुर्निवारं तेषां खलु भावभूतत्वम् ॥ ९ ॥
यः शब्दराशिशेवधिरवभाति सुवंशलक्षणान्वयतः ।
गुणमात्रग्राह्यरसः स सुबन्धुर्बन्धुरनिबन्धः ॥ १० ॥

---

सकलकविमान्यं कालिदासं संस्तुत्य रामचरितादिप्रणेतारं भवभूतिनाम्ना प्रसिद्धं श्रीकण्ठं विद्वत्कविं स्तौति–भवभूतेरिति । अत्रोत्तरार्द्धे विधेयदले तेषामिति पदस्य सत्वात्पूर्वार्द्धे 'ये' इति प्रथमान्तस्याक्षेपः 'यत्तदोर्नित्यसम्बन्धनात् । तथा च भवभूतेर्महाकवेः ये विच्छित्तिव्यभिचारमुचः = चमत्कार-विरहरहिताः, गिरां = वाणीनाम् गुम्फाः = रचनाभेदाः तेषां = वाग्गुम्फानां भावभूतत्वम् = भवभूतिसम्बन्धित्वं, भावस्य तात्पर्य्यार्थस्य भूतत्वं सत्यत्वं यथार्थत्वमित्यर्थः ; विधिनापि = सकलभुवनविधानकुशलेन प्रजापतिपतिनापि दुर्निवारं = दुःखेनापि = परिश्रमेणापि निवारयितुं न शक्यमित्यर्थः ( 'ईषद्दुःसुषु, कृच्छ्राऽकृच्छ्रार्थेषु खल्" इतिखल्प्रत्ययः विध-विधाने इति तुदादिगणपठितात्" सर्वधातुभ्य इन् इति इन् प्रत्यये इगुपधात्कित् इति कित्त्वेन गुणनिषेधे कर्तृप्रत्ययान्तो विधिशब्दः ) "विधाता विश्वसृड् विधिः" इत्यमरः । ( निधिः, विधि=भाग्यमित्यादौ तु भावे किप्रत्ययः । ) विच्छित्तेश्चमत्कारस्य यो व्यभिचारो विरहस्तं मुञ्चन्तीति क्विप्, वासरूपविधिना कर्मण्यणा विकल्पः ) सुगममन्यत् ॥ ९ ॥

वासवदत्ताकारं सुबन्धुं प्रशंसति–यः शब्दराशिरिति । सुष्ठु = सुन्दरः वाङ्मय-परिपक्व इत्यर्थः, वंशोऽन्ववायो यस्य, तस्य लक्षणं = चिह्नं तस्याऽन्वयतः = सम्बन्धात्, यः = कविः, शब्दराशिशेवधिः–शब्दानां नामाख्यातोपसर्गनिपातानां, राशिः = कारक-पुरुषादिविचित्रतयाऽनन्तव्यक्ति-समूहस्तस्य शेवधिः = निधिः, महापद्मादिनिधिरूप इत्यर्थः अवभाति = भासते, प्रत्यक्षरश्लेषमयप्रबन्ध-विन्यासवैदग्ध्यनिधित्वेनेत्यर्थः । गुणा एव गुणमात्रं गुणमात्रेण ग्राह्यो रसो यस्य सः सुबन्धुः=सुबन्धुनामकः कविः बन्धुरः = रम्यो रन्तुं योग्यो महाकवीनामतीवाह्लादजनको निबन्धो यस्य तादृशः स कविः स्तुत्य–इत्यर्थः ।

अयं भावः–नहि-एकस्मिन्पुरुषे निधिसम्भवो निधेरनेकपुरुषपरम्परासाध्यत्वात् । सुबन्धुकविश्च शब्दराशिशेवधिः प्रतीयते पूर्वोक्तहेतोः, अतः पैतृकः संस्कारोऽनुमीयते—इत्यत उक्तम्—सुवंशलक्षणेत्यादि । तथापि –शब्दचित्रमयनिबन्धनिबन्धकता प्रतीयते, न रसमय-निबन्ध-बन्धकता-इत्यत उक्तं बन्धुर-निबन्ध-

परिशीलितैव सरसं कविराजैर्बहुभिरत्र वाग्देवी ।
बाणेन तु वैजात्यात्कथयति नामैव वाणीति ॥ ११ ॥
जयति यथाजातानां वाग्जातसुजातपारिजातश्रीः ।
श्रीलक्ष्मीधरविबुधावतंसचरणाब्जरेणुकणः ॥ १२ ॥

इति । तत्र हेतुर्गुणमात्रग्राह्य-रस-इति । एतेन रसापकर्षक-दोषराहित्ये सति रसोत्कर्षक-प्रसादादिगुणवत्त्वं सुबन्धुकवित्वे प्रतीयते ।

बन्धूरबन्धुरौ रम्ये, नम्रे, हंसे तु बन्धुरः-इति विश्वः ॥ १० ॥

वासवदत्तातिशायिकादम्बरीरचयितारं बाणकविं सरस्वतीत्वेन वर्णयति **परिशीलितैवेति** । अत्र=भूतले बहुभिरनेकैः कविराजैर्महाकविभिः सरसं नवरस-सहितं यथा स्यात्तथा वाचां वाणीनां देवी=सरस्वती परिशीलितैव अभ्यस्तैव सेवितैवेत्यर्थः । बाणेन तु कविना न केवलं परिशीलिता किन्तु स्वात्मीकृता इत्याह-**वैजात्यात्**=वैलक्षण्यात् तथा सेविता यथाऽस्या वाणीति नामैव स्त्रीत्ववैजात्यात् पुंस्त्वेन बाण इति परिणतः सन् कथयति कविरयं वाणीति, पदद्वयस्योभयत्रानुषङ्गः । कवीनां राजान इति विग्रहे षष्ठीतत्पुरुषे 'राजाहःसखिभ्यष्टच्' इति टचि, टिलोपे, कविराजैरिति भिसि । बाणोऽयं कविर्व्यत्ययेन लिङ्गस्य वाण्येवेत्यर्थः, स्तुत्यस्तत इति ॥ ११ ॥

परब्रह्मणः प्रभृति देवान् मुनीन् कवीन् ससंगति ध्यात्वा "यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥" 'मातृमान् पितृमान् आचार्यवान् पुरुषो वेद' इत्यादि श्रुतिप्रतिपाद्यं गुरुचरणध्यानं कुर्वन् निखिलशास्त्रगुरुं स्वजनकं लक्ष्मीधर-सूरिं प्रणमति-**जयतीति** । यथा जातास्तथैव स्थिता यथाजाता=अज्ञाः 'अज्ञे मूर्खयथाजातमूढवैधेयबालिशाः' इत्यमरः । जातं जन्मसमयमनतिक्रम्य वर्त्तते यथाजातं ( ततः, अर्शआद्यच् ) इति वा तेषां पिपंठिषूणामिति भावः, वाग्जाता वाणीजाता, ये सुजाताः शोभनोत्पन्नाः पारिजातास्तन्नामका देवतरवः तेषां श्रीरिव=संपदिव श्रीः यस्य-सः श्रीलक्ष्मीधरविबुधावतंसचरणाब्जरेणुकणः जयति जनकत्वेन सकलविद्यागुरुत्वेन च सर्वोत्कर्षेण वर्त्तते, लक्षणया स एव । **श्रीलक्ष्मीति** । श्रीरत्र, विश्वेश्वराराधनजन्यस्तत्प्रसादः तत्सहितो यो लक्ष्मीधरः ग्रन्थकारपिता स एव विबुधावतंसः पण्डितरत्नं तस्य चरणकमलधूलिलेशः, जयति किमुत सः ।

अत्रेयं कथा-अल्मोडामण्डलस्थ-पाटियाग्रामनिवासी, भारद्वाजगोत्रः पाण्डेयोपनामकः श्रीलक्ष्मीधरसूरिः पण्डितशिरोमणिः सन्तानार्थं विश्वेश्वरं परमभक्त्याऽऽराधयामास परिणते वयसि । भक्तानुकम्पिनाऽऽशुतोषेण स्वप्ने कथितं-तव

**नैसर्गिकी खलस्य ब्रह्मण इव दुर्गमात्मनो माया।**
**जीवहृदयस्य पुनः साऽनुच्छेत्तव्या च तत्त्वधिया॥ १३॥**
**आरोपितत्वनियमं सत्तायाः पिशुनसंसदि विलोक्य।**
**प्रतिपन्नमौपनिषदैर्नूनं भावान्तरेऽपि तथा॥ १४॥**

---

सन्तानाऽदृष्टमेव नास्ति किङ्करोमि तव भक्त्या बद्धः स्वयमागमिष्यामीति, तद्-नन्तरं निवृत्तरजस्काया अपि तत्पत्न्या पुना रजोदर्शनम् अभूत् सकृदेवाधानेन सुतोऽजनि। सोऽयं विश्वेश्वरसूरिः साक्षाद् विश्वेश्वरः सर्वशास्त्रजातं स्वपितुः समधीत्य सर्वतन्त्रेषु ग्रन्थानरीरचत् इति संक्षेपः॥ १२॥

"कथायां सरसं वस्तु गद्यैरेव विनिर्मितम्।
क्वचिदत्र भवेदार्य्या तथा वक्त्रापवक्त्रके॥
आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्त्तनम्।"

इत्यादिलक्षणलक्षितं 'कथा' नामकं गद्यकाव्यं रचयन् कविः पद्यैः पूज्यान् नमस्कृत्य खलवृत्तं वर्णयति–नैसर्गिकीति। दुरधिगमात्मनः खलस्य माया ब्रह्मण इव नैसर्गिकी जीवहृदयस्य पुनः सा तत्त्वधिया च, अनुच्छेत्तव्या इत्यन्वयः। दुःखेनाभिगम्यते = बुध्यते आत्मा = चित्तं चित्तवृत्तिर्वा यस्य दुर्जनस्य कापटिक-व्यवहारः, दुर्बोधस्वरूपस्य ब्रह्मण=ईश्वरस्यैव स्वाभाविकी सहजा, वेदान्तिमतेऽपि मायाया नित्यत्वात्। अत्रेदं बोध्यं–मायावच्छिन्नं चैतन्यमीश्वरः, अन्तःकरणा-वच्छिन्नं चैतन्यं जीवः, निरवच्छिन्नं चैतन्यं ब्रह्म। बहुस्यामित्याकारिकेच्छारूपा ब्रह्मणो माया, इयमेवेश्वरोपाधिः। अनादिवासनाध्यासरूपा जीवस्य संसरणहेतु-र्जीवमाया, अत्र तु श्लिष्टो मायाशब्दः कपटवाचकोऽपि, माति तुलयति सत्यं 'माया' 'माछाशसिभ्यो यः' इति यप्रत्यये टापि सिद्धस्य तस्यान्वर्थत्वात्। जीवमाया तत्त्वज्ञाननाश्या, खलमाया तु न तथेत्याह–जीवस्य जीवात्मनो हृदयं चित्तं तस्य तत्सबन्धिनी तन्निष्ठेत्यर्थः षष्ठ्या अनेकसम्बन्धप्रतिपादकत्वात्। 'पुन' स्त्वर्थः, 'सा' माया खलीया तत्त्वज्ञानेनापि नाशयितुमशक्या, 'ब्रह्मणो माया नैसर्गिकी खल-माया च' परन्तु ब्रह्मणो माया तत्त्वज्ञाननाश्या जीवहृदयनिष्ठा, खलकपटस्तु न तथेति व्यतिरेकः। अयं भावः–यदि खलः, तत्त्वज्ञानिनं वञ्चयेत् 'रीतिं कनकत्वेन दद्यात्' तदज्ञानं न तत्त्वज्ञानेन विनश्येत्। किन्तु खलेनानेनाहं वञ्चितः 'सुवर्ण-च्छद्मना पित्तलं मह्यं दत्तम्' इत्याकारकज्ञानेनैव तन्नश्येत्॥ १३॥

खलप्रसङ्गेन मायां निरूप्य सत्तां निरूपयति, निरस्यति वेदान्तिमते, खल-संसदि च–आरोपितत्वमिति। पिशुनानां सूचकानां संसद्=गोष्ठी न तु

तादात्म्येन जगत्स्वपि जनकास्तेषामुपादेयाः ।
सत्तास्फूर्त्यैकपदं ब्रह्मानन्दात्मका विबुधाः ॥ १५ ॥
मिथ्याभावविहीना वहन्त्यनिर्वाच्यतामनिशम् ।
अज्ञानानुपधेया महाकवीनां जयति सृष्टिः ॥ १६ ॥

---

सभा 'न सा सभा यत्र न सन्ति वृद्धाः' इति नियमात् । तस्यां सतो भावः सत्ता तस्याः सज्जनताया आरोपितत्वस्य = आहार्य्यत्वस्य नियमं प्रतिज्ञानिश्चयं, विलोक्य = दृष्ट्वा औपनिषदैर्वेदान्तिभिः भावान्तरेऽपि पदार्थान्तरेऽपि तथा= सत्ताया = अस्तीति सन्—विद्यमानः तस्य भावः सत्ता विद्यमानता तस्याः आरोपितत्वम् आहार्यत्वं, प्रातिभासिकत्वं प्रतिपन्नं = स्वीकृतं नूनम्='मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः। उत्प्रेक्षावाचकाः शब्दा इवशब्दोपि तादृशः' ॥ 'ब्रह्म सत्यं जगन्मिथ्या' इति वेदान्तिनये खलसंसदं दृष्टान्तत्वेनोत्प्रेक्षते। 'नियमो यन्त्रणायाञ्च प्रतिज्ञा निश्चये व्रते'–इति मेदिनीकोषः । 'भवेदुपनिषद्धर्मे वेदान्ते विजने स्त्रियाम्' इत्यपि मेदिनी ॥ १४ ॥

वेदान्तिमते कार्यकारणयोस्तादात्म्यसम्बन्धं प्रतिपादयन् पिशुन-तज्जनकयोस्तादात्म्यं प्रतिपादयति-तादात्म्येनेति। हे ब्रह्मानन्दात्मका विबुधाः! सत्तास्फूर्त्या, एकपदं ( तत्काले ) जगत्सु तेषां = पिशुनानां जनका अपि 'तेषां' तादात्म्येन उपादेयाः अपिर्भिन्नक्रमः, तेषामित्यस्योभयत्रानुषङ्गः तादात्म्यसंबन्धानुभवकर्त्तॄन् सम्बोधयति ब्रह्मानन्दः परमानन्दः आत्मा स्वभावो येषान्ते–विबुधविशेषणम्, विशिष्टा बुधाः विबुधाः तत्सम्बुद्धौ, ब्रह्मानन्दे आत्मा = बुद्धिर्येषां वा, सत्तायाः अस्ति इत्याकारिकायाः प्रतीतेः स्फूर्त्त्या = स्फुरणेन बुद्धिविषयीभवनेनेति भावः । एकपदं = तत्काले पिशुनानामुत्पादका अपि पिशुना एव बोद्धव्या इत्यर्थः कार्यकारणयोस्तादात्म्यात् ; शेषं स्पष्टम् । नैयायिकमतेऽनयोर्भेदेऽपि पटस्तन्त्वभिन्नः, ओतप्रोत (तानाबाना) तन्तुस्वरूपत्वात् इत्यादि प्रतीत्या तन्तुपटयोस्तादात्म्यं पूर्वोत्तरमीमांसयोः । "आत्मा कलेवरे यत्ने स्वभावे परमात्मनि । चित्ते वृत्तौ च बुद्धौ च परव्यावर्त्तनेऽपि च"–इति धरणिः । 'एकपदं तत्काले, नपुंसकं, वर्त्मनि स्त्री स्यात्' इति व्याख्या सुधा ॥ १५ ॥

प्रपञ्चस्याऽज्ञानजन्यत्वेन ज्ञाननाश्यतया मिथ्यात्वं प्रपञ्चयन् कवितां वर्णयति-मिथ्येति । अनिशं = नित्यं 'सन्तताऽविरताऽनिश'मित्यमरः । निर्वक्तुं शक्या निर्वाच्या 'ऋहलोर्ण्यत्' ततो नञ्समासे भावे तल्, अनिर्वाच्यता अनिर्वचनी-

न निरूपयितुं शक्यः केवलमध्याससम्बद्धः ।
शुद्धं सच्चैतन्यं खलप्रपञ्चो न मलिनयति ।। १७ ।।
विषमदृशो विबुधानां यातु चिदिष्टावनुपयुक्तम् ।
कुकवय उग्रनिसर्गा दुर्वर्णमुदीरयन्त्यपि रुदित्वा ।।१८।।

यता अवर्णनीयतेत्यर्थः तां वहन्ती=दधाना अपि, मिथ्याभावेन असत्यत्वेन विहीना=रहिता "भवन्ति नोद्दामगिरां कवीनाम् उच्छ्रायसौन्दर्यगुणा मृषोद्याः"—इति न्यायेनेत्यर्थः, ब्रह्मणः सृष्टिस्तु अनिर्वाच्यमायारचितत्वेनाऽनिर्वाच्यतां दधत्यपि मिथ्याभाव—सहितेत्यर्थः, 'जगन्मिथ्येत्युक्तत्वात्' । अज्ञानेन=अबोधेन, उपधेया=उपक्रमितुं योग्या आरभ्येत्यर्थः; अज्ञानकारणवती ब्रह्मणः सृष्टिः अज्ञानेनाबोधेनानुपधेयाऽनुपक्रम्या किन्तु बोधपूर्वकमेवारभ्या कविसृष्टिः । अतो महान्तश्च ते कवयस्तेषां सृष्टिः—रचना कवितेत्यर्थः जयति=ब्रह्मसृष्टि-व्यतिरेकेण वर्त्तते । ब्रह्मणः सृष्टिः, अनिर्वाच्यतां वहन्त्यपि मिथ्यात्वेन सहिता, तद्विलक्षणा तु कविसृष्टिरिति जयत्यर्थेन व्यतिरेकाऽलङ्कारो व्यज्यते ॥ १६ ॥

प्रपञ्चस्य मिथ्याभावत्वादि, निरूप्य तस्य शुद्धबुद्धचैतन्यादिशब्दोपलक्षितब्रह्माऽनावरकत्वमिव खलकपटस्याऽपि शुद्धकाव्यादूषकत्वमित्याह—न निरूपयितुमिति । निरूपयितुं=निर्णेतुं न शक्यः, केवलं=निश्चयेन अध्यासेन=अवभासेन 'मिथ्या सन्नपि' सम्यक्तया बुद्धः=ज्ञातः खलस्य कुजनस्य प्रपञ्चो माया, पक्षे खल इव प्रपञ्चो मायाजन्यः संसारः कर्त्ता शुद्धं=स्वभावस्वच्छमानन्दरूपं, सद्भावत्वेन प्रतीयमानं चैतन्यं चिद्रूपं ब्रह्म, कर्म न मलिनयति न दूषयति । एवं खलप्रपञ्चः कर्त्ता अर्थतः शब्दतश्च शुद्धं=निर्दोषम् सत्,=कृत्यप्रवृत्ति-तद्विरीत-निवृत्त्युद्देशसहितं, चैतन्यं रसात्मकतयाऽऽस्वादवत्, काव्यं 'कर्म' दूषयितुं न शक्नोतीत्यर्थः । अत्र शुद्धचैतन्यात्मकब्रह्मणः, शुद्धरसात्मकसत्काव्ये प्रतिबिम्बनात, दृष्टान्तालङ्कारः, 'दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्' इति लक्षणात् ॥ १७ ॥

महाकवीन् संस्तुत्य कुकवीनुग्रश्लेषेण वर्णयति—विषमेति । उग्रस्य=रुद्रस्य निसर्गः स्वभाव इव निसर्गो येषामिति बहुव्रीहिः, रुद्रस्वभावा 'उग्रः कपर्दी श्रीकण्ठः' इत्यमरात्, 'स्वरूपञ्च स्वभावश्च निसर्ग' इत्यपि । अथवा-उग्रो रौद्रः निसर्गः स्वभावो येषां, रौद्रन्तूग्रमित्यमरात् । अतएव विषमा=अयुग्मा त्रित्वसङ्ख्यावतीत्यर्थः, दृग्=दृष्टिर्येषां ते त्रिलोचनाः " असङ्ख्याताः सहस्राणि ये रुद्राः "

विशकलितैः परकीयैः पदार्थजातैः स्वकाव्यविन्यस्तैः ।
याचितकमण्डनैरिव न भवति शोभा विजातीया ॥ १६ ॥

इति श्रुतेः । कुकविपक्षे विषमा दोषदर्शिनी दृक् दृष्टिर्येषान्ते कुत्सिताः कवयः कुकवयः विबुधानां=देवानां, विशिष्टविदुषाञ्च चितः=सचेतनस्य देवस्येष्टौ यागे, चितां संविदामिष्टिर्यागो, वाञ्छा वा कवितारूपेत्यर्थः न उपयुक्तमनुपयुक्त-मप्रयोगार्हम् अतो यातु=रक्षोरूपम् 'बर्हिषि रजतं न देयम्' इति श्रुतेः । रक्षोहण-श्रुतेश्च । अन्यत्र यातीति यातु=कविताया निरस्तं बहिर्गतमित्यर्थः । दुर्वर्णं=रजतं दुष्टं नीरसं वर्णमक्षरं वा रुदित्वापि रोदनं कृत्वाऽपि 'सो रोदीदिति' श्रुतेः ; 'स वै रुरोद देवानां पूर्वजो भगवानिति' स्मृतेश्च । उदीरयन्ति वमन्ति, विरेचयन्ति, मेहयन्ति वा, अश्रूणि मुञ्चन्ति, कुकविपक्षे-उच्चारयन्ति । अक्षरार्थोऽयम् ।

अत्रेदमनुसन्धेयम्-रुद्र उत्पन्नमानो रुरोद ततः सृष्टिकर्त्तुः सकाशात् स्थानानि नामानि च लब्ध्वा तुतोष तस्याश्रुबिन्दवो रजत-खनयो जाताः । अन्याश्च भिन्ना भिन्नाः कथाः सन्ति । देवयागे वैदिके रजतं दक्षिणात्वेन न दीयते निषेधात् निन्दार्थवादाच्च। दुर्वर्णशब्दो रजतस्य दुष्टवर्णस्य च वाचकः, रुद्रो विषमलोचनः। 'दुर्वर्णं त्रिष्वसद्वर्णे क्लीबमैलेयरूप्ययोः'—इति मेदिनी । 'यातुधानः पुण्यजनो नैर्ऋतो यातु-रक्षसी' इत्यमरः । उग्रस्य दुर्वर्णो दीरणं स्वभावः, अत उग्रस्वभा-वानां कुकवीनाञ्च दुर्वर्णोच्चारणं स्वभाव इति भावः ॥ १८ ॥

कविकर्म-काव्यं तच्च शब्दतो ऽर्थतश्च परच्छायारहितमेव विलक्षणशोभाधा-यकं भवतीत्याह विशकलितैरिति । याचितान्येव याचितकानि ( स्वार्थे कन् कुत्सिते वा कः ) कुत्सितं=सदरिद्रत्वं, सदैन्यं, याचितानि अत एव याचितकानि मण्ड्यते=भूष्यते शरीरमेतैरिति ( 'ल्युटि' ) मण्डनानि=भूषणानि तैरिव (इवेन नित्यसमासो विभक्त्यलोपश्चेति समासः ) । विशेषेण शकलितानि, परकाव्येभ्यः खण्डितानि इतस्ततोऽपहृतानि इत्यर्थः तैः परेषामिमानि, ('कुक् परस्य चेति' छप्र-त्यये कुगागमे) परकीयाणि तैः स्वस्य निजस्येदं स्वकीयम् इत्यर्थः, कवेःकर्म काव्यं ( ब्राह्मणादेराकृतिगणत्वात् ष्यञ् ) तस्मिन् विशेषेण न्यस्तानि=धृतानि=प्रयुक्तानी-त्यर्थः तैः पदानि चार्थाश्च पदार्थाः, तेषां जातानि समूहास्तैः विशिष्टप्रकारा= विलक्षणप्रकारा=विचित्रप्रकारा वा विजातीया ( वि=इत्यस्मान्निपातरूपात्सुबन्तात् 'प्रकारवचने जातीयर्' ५।३।६९ इत्यनेन जातीयर् प्रत्यये, टाप् )—शोभाविशे-षणम् । शुभदीप्तावित्यस्माण्ण्यन्तात्पचाद्यचि टापि शोभा=छविः न भवति नोत्प-द्यते । याचितकमण्डनवन्मुषितपरकीयपदार्थजातवत्काव्यं न शोभते इत्यर्थः ।

खलहृदयदर्पणतले मालिन्यं जायते विजातीयम् ।
गुणसंक्रमणविरुद्धं दोषोद्ग्राहानुकूलं च ॥ २० ॥
काव्यमयी विबुधानामन्तःकरणस्य वृत्तिरमलेयम् ।
अर्थश्चैतन्यमपि प्रतिफलति यथार्थतो यत्र ॥ २१ ॥

---

अतोऽस्याः मन्दारमञ्जर्याः निखिलकाव्येभ्यः, विचित्रता बोध्येति भावः। 'भित्तं शकलखण्डे वा पुंसि' इत्यमरः 'जातं व्यक्तयौघजन्मसु' 'क्लीबं त्रिलिङ्गमुत्पन्ने' इत्यमरटीकायां भानुदीक्षितः ॥ १९ ॥

पुरोभागितायां दोषा एव दृश्यन्ते न गुणा इत्याह—खलहृदयेति। दर्पणतले मालिन्यं, प्रतिबिम्ब-मात्राऽग्राहकं जायते। तद्विजातीयं मलिनत्वं खलस्य हृदयरूपे दर्पणतले जायते, तथाहि गुणानां=काव्यस्वरूपाधायकानां रसभावादीनाम् उत्कर्षाधायकानां माधुर्य्यौजः-प्रभृतीनाञ्च संक्रमणं=प्रतिबिम्बनं, स्फुरणञ्च, तद्विरुद्धं=तदग्राहकम्, अथ च दोषाणां=मिथ्याक्षेपाणाम् उद्ग्राहः=उच्चैर्ग्रहणं तदनुकूलं तदनुलोमम्, चशब्द उभयसमुच्चयार्थः। निःश्वासादिना मलिने मुकुरे दोषाणां गुणानाञ्च प्रतिबिम्बनं, न भवति। मलिने चेतसि तु, गुणचिन्तनेऽसत्यपि, दोषचिन्तनं भवत्येवेति—हृदयदर्पणतलस्य विलक्षणतेति भावः ॥ २० ॥

काव्यं कुर्वतः कवेश्चित्तवृत्तिरमला भवतीत्याह—काव्यमयीति। विलक्षणाः विशिष्टा वा बुधाः=विद्वांसो विबुधाः, तेषां काव्यं प्रकृतं यस्यां सा काव्यमयी, (तत्प्रकृतवचने मयट्) कवितारूपेत्यर्थः, अन्तःकरणस्य मनसश्चेतसो बुद्धेश्च वृत्तिः—मननचेतनाऽध्यवसायरूपा व्यापृतिरमला=स्वच्छा भवति, यत्र=यस्यां वृत्तौ, अर्थः=इतिवृत्तं पदार्थश्च, चैतन्यमात्मप्रतीतिश्च, यथार्थतः=तत्त्वतः प्रतिफलति भासते। इदं पदममुमर्थं बोधयति, अहमस्मिन्नर्थे व्युत्पन्नः—इत्याकारिकासु प्रतीतिषु-उभयोर्विषयीभवनात्।

मङ्गलरूपं कुसुमं प्रथमं मन्दारमञ्जर्याः ।
मङ्गलमूर्त्तिभ्य इदं समर्प्यते देवदेवेभ्यः ॥ २१ ॥



अस्ति भगवतोऽनेकज्वलननिर्दग्धमहान्धकारकान्तारस्य त्रिभुवनभवनान्तरैकप्रदीपस्य समस्तचेतनचैतन्यागमनिदानस्य श्रौतस्मार्त्ताशेषक्रियाविशेषप्रवृत्तिजनकस्य भास्वतोऽभ्युदयभूमिः, भागीरथीप्रवाहमयबालव्यजनवीज्यमाना, राकारजनिकरमण्डलसितातपत्रचिह्निता, सर्वासां दिशामाधिपत्यमिवानुभवन्ती, ईश्वरीव स्वाभिमुखानां, सर्वकर्मफलप्रदायिनी, तपस्विनीव स्थितैकपदा, हरिमूर्तिरिव वाजिमुखान्विता, सेनेव वर्द्धमानसूर्पकर्णोपेता,

---

कथामारभते—अस्तीति। भगवतो भास्वतो ऽभ्युदयभूमिः प्राचीदिग् अस्तीत्यन्वयः। कथम्भूतस्य भास्वतः—अनेके च ते कराः किरणाः त एव ज्वलना=वह्नयः, तैर्निःशेषं यथा स्यात्तथा दग्धो भस्मीकृतो महांश्चासौ अन्धकारो ध्वान्त एव कान्तारो दुर्गमाध्वा येन, तस्य । पुनस्त्रयाणां भुवनानां समाहारस्त्रिभुवनन्तदेव भवनं गृहं, तस्यान्तरा—मध्ये, एकोऽद्वितीयो यो प्रदीपः प्रकाशको दीपस्तस्य। पुनः समस्तास्सर्वे ये चेतनाः प्राणिनः तेषां यच्चैतन्यं प्रबोधः, तस्य यदागमः प्राप्तिस्तस्य निदानस्यादिकारणस्य । "रात्रिस्वभावोत्पन्नाया अभावप्रत्ययमात्रावलम्बनाया निद्राया भास्वदुदयनाश्यत्वेन चैतन्यागमादिति" भावः । पुनः श्रौताः श्रुत्युक्ता अग्निहोत्रादयः स्मार्त्ताः स्मृत्युक्ताः कृच्छ्रचान्द्रायणादयः, स्नानसन्ध्योपासनादयो वा, ये=क्रियाणां=कर्मणां विशेषाः भेदाः तेषां या प्रवृत्तिः प्रवर्त्तनमारम्भ-इत्यर्थः; तस्या, जनकस्य=प्रेरकस्य । 'सूर्योदय एव समस्तक्रियाविधानादिति भावः' । एवंविशेषणविशिष्टस्य भास्वतः भूयसी, प्रशस्ता, नित्या, अतिशायिनी, वा भाः कान्तिर्यस्य स भास्वान्=सविता तस्य उदयभूमिरुदयस्थानं प्राचीदिक्, पूर्वा ककुद् अस्ति विद्यते । प्राचीं विशिनष्टि—भागीरथीति । भगीरथतपश्चरणफलभूतत्वेन तत्सम्बन्धिन्याः त्रिपथगायाः प्रवाहमयं निर्झररूपं यद् बालव्यजनं चामरं तेन वीज्यमाना विशेषेण दूज्यमाना सेव्यमाना । पूर्वस्यां दिशि गङ्गायाः कुटिलगामितया इतस्ततश्चाल्यमानचामरसादृश्यं बोध्यम् । पुनश्च राकायाः सम्पूर्णेन्दुपौर्णमास्याः सम्बन्धी यो रजनिकरश्चन्द्रः, तस्य मण्डलं बिम्बमेव सितं श्वेतमातपत्रं,छत्रं तेन चिह्निता सञ्जातचिह्ना। सम्पूर्णेन्दुमण्डलरूपश्वेतच्छत्रवतीत्यर्थः। अतएव—सर्वासां विश्वासां, दिशामाशानाम्, आधिपत्यमिव अधिपतिभावमिव, प्रभुतामिवेत्यर्थः । अनुभवन्ती प्रमितिविषयीकुर्वन्ती अतएव—स्वाभिमुखानां पूर्वाभिमुखानां, प्राञ्चि उदञ्चि वा कर्माणि भवन्तीति श्रुतेः । उपास्यदेवताभिमुखानाञ्च भक्तानामीश्वरीव हैमवतीव, 'काली हैमवतीश्वरी' त्यमरोक्तेः । सर्वेषां कर्मणामनुष्ठेयानां फलप्रदायिनी, इष्टसम्पादयित्री, पुनः तपस्विनीव तापसीव द्वयोः साधर्म्यं प्रतिपादयति शब्दश्लेषेण, स्थितमेकपदमेकचरणं यथा तपस्वि-

कैलासभूमिरिव वृषभध्वजाश्रिता,लङ्केव पुरुषादपूर्णोत्कटा, पलाशकुसुमसम्पदिव सलौहित्या, हरलीलेव किराताश्रिता, रात्रिरिव प्राग्ज्योतिषोल्लसिता, मुमुक्षुरिवाश्रितकाशिः, नर्मदेव मेकलाश्रिता,युवतिदृगिव साञ्जना,नृसिंहतनुरिव

न्यां सेव एकपदस्थितेत्यर्थः। प्राचीपक्षे–स्थितमेकपदमेकपदाभिधानो देशो यस्याम्। पुनः कथं भूता प्राची हरेर्विष्णोर्मूर्तिरिव हयग्रीवावतारमूर्त्तिरिव वाजो वेगोऽस्तीति वाजी, अश्वः तस्य मुखेनाननेनान्विता हरिमूर्त्तिः वाजिमुखेन तन्नाम्ना देशेनान्विता प्राचीदिक् ॥ पुनश्च सेनेव पृतनेव सेना खलु–वर्द्धमाना वृद्धिं प्राप्नुवन्तो 'युवान' इत्यर्थः वृद्धानां हीयमानत्वात् पोतानामकिञ्चित्करत्वात्सेनायाम् , ये सूर्प इव कर्णाः श्रवणानि येषान्ते सूर्पकर्णा गजास्तैरुपेता युक्ता, वर्द्धमाननाम्ना सूर्पकर्णनाम्ना च देशविशेषेण उपेता प्राचीदिक् । कैलासस्य = शिवलोकस्य कैलासपर्वतस्य वा भूमिर्भूः सेव वृषभः = उक्षा नन्दिकेश्वर इत्यर्थः ध्वजश्चिह्नं यस्य, तेन, शिवेन आश्रिता प्राची तु वृषभध्वजनाम्ना देशेन शिवलिङ्गेन, वा आश्रिता अधिष्ठिता आक्रान्ता च । बहुव्रीहिर्वा, वृषभध्वजनामा देश आश्रितो यस्यामिति ॥ पुनः—लङ्केव किन्तत्र साधर्म्यमित्यपेक्षायामाह—पुरुषान् अदन्ति ते पुरुषादः राक्षसाः तैःपूर्णा = संभृता अत एवोत्कटा उग्रा लङ्का । प्राची तु पुरुषादनाम्ना देशेन पूर्णा पूरिता उद्भवन्ति कटाश्चटा यस्यामिति, उत्कटा च, कटयोनीनां वेतसमुस्ताप्रभृतीनां प्राच्यामनायासलभ्यत्वात् । "अतएव कालिदासः सूचयति—" आत्मा संरक्षितः सुह्मैर्वृत्तिमास्थाय वैतसीम् " इति । वैतसीं वृत्तिमाजीविकामवलम्ब्य सुह्मदेशीयैरात्मा शरीरं संरक्षितः पालितः" इत्यर्थस्य सूचन-योग्यशब्दप्रयोगात् ॥ पुनः पलाशानां किंशुकानां कुसुमानि पुष्पाणि तेषां सम्पदिव शोभेव, सलौहित्या लोहितस्य रक्तस्य भावः लौहित्यम् रक्तत्वन्तेन सहिता । प्राची तु-लौहित्या–नाम नदी त्रिपुराराज्ये वर्त्तते, तया सहिता ॥ पुनः-हरस्य शिवस्य लीलेव क्रीडेव, किरातैर्भिल्लैराश्रिता अवलम्बिता । प्राची तु किरातेन=किराततिक्तप्रधानेन देशेन कृताश्रया । 'किराततिक्तो भूनिम्ब इत्यमरः । अत्यन्ततिक्तः किरातभेदः 'कुनैन' इत्युच्यते ॥ पुनः रात्रिरिव रजनिरिव ( कृदिकारादिति वैकल्पिकङीषभावे रूपे उभे ) प्राचः ज्योतिः प्राग्ज्योतिः प्राक्प्रकाशस्तेन उन्मूलितं लसितं=विलासो यस्याः सा रात्रिरेतादृशी । प्राची तु–प्राग्ज्योतिषेण कामरूपेण देशेन उद्गतलसिता उल्लसिता, शोभितेत्यर्थः ॥ पुनश्च—कर्मबन्धान्मोक्तुमिच्छुः मुमुक्षुः स्त्री पुमान् वा सेव स इव वा, कथं यत आश्रितकाशिः । आश्रिता काशिः काशीपुरी यया प्राच्या मुमुक्षुणा च स्त्रियां मुमुक्षा इति, पुनः नर्मदा इव सोमोद्भवा इव मेकलः=अमर

व्याघ्रमुखाधिगता, सीतेव मिथिलोत्पत्तिभूः, अमरावतीव पुरन्दराधिष्ठिता प्राची दिक् ॥ १ ॥

---

कण्टकः पर्वतः, आश्रितो यया प्राच्या नर्मदया च । 'रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका' इत्यमरः । पुनः=अञ्जनेन अङ्गारपर्वतेन सहिता प्राची, कज्जलसहिता युवतिर्दिग् , अतः साञ्जनत्वमुभयसाधर्म्यम् । पुनः व्याघ्रमुखेन देशेन अधिगता ऽधिष्ठिता प्राची, नृसिंहतनुः प्रसिद्धैव, व्याघ्रस्येव मुखेन वदनेनाधिगता युक्ता, अतो व्याघ्रमुखाधिगतत्वं साधारणो धर्म उभयोः । पुनश्च—सीतेव जानकीव मिथिला = मिथिला नगरी उत्पत्तिभूः जन्मस्थानं यस्याः सीतायाः । मिथिलानां जनकानां क्षत्रियाणामुत्पत्तिभूः = उत्पत्तिस्थानं प्राची । मिथिलायाः प्राच्यां वर्त्तमानत्वात् । पुनस्तु—**अमरावतीव** = इन्द्रनगरीव कथमितिचेदुभयोः पुरन्दराधिष्ठितत्वात्, पुरन्दरेण = इन्द्रेणाधिष्ठिता अधिष्ठातृत्वेनावलम्बिता । अमरावत्याः प्राच्याश्चाधिष्ठाता इन्द्रः । "नगरी त्वमरावती" "इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत् । कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात्"—इत्यमरोक्तेः ॥

अत्र प्राचीदिग् वर्ण्यत्वेन उपमेया, ईश्वरीप्रभृतयः पञ्चदश उपमानभूताः । इवशब्दः साधर्म्यप्रतिपादकः । सर्वकर्मफलप्रदायित्वादयः पुरन्दराधिष्ठातृत्वान्ताः साधारणा धर्माः सर्वे वाच्या अतः पूर्णोपमा । एकस्याः प्राच्या अनेकोपमानदर्शनात् मालोपमा । भास्वत्करेषु ज्वलनत्वारोपो महान्धकारे कान्तारत्वारोपनिमित्तकः । एवं त्रिभुवने भवनत्वारोपो भास्वति प्रदीपारोपे निमित्तमिति परम्परितं—'रूपकम्' । आधिपत्यमिवानुभवन्तीत्यत्र—'उत्प्रेक्षा' । एवञ्च रूपकोत्प्रेक्षा पूर्णामालोपमानाम्—'**अस्ति भास्वतोऽभ्युदयभूमिः प्राचीदिग्**' इत्येतस्मिन् महावाक्येऽनुप्रवेशात् एकाश्रयानुप्रवेशः सङ्करालङ्कारः । दिग्व्यवहारस्तु—एवं बोध्यः—पश्चिमे कुरुक्षेत्रं, पूर्वस्मिन्प्रयागराजः, उत्तरस्यां हिमालयः, दक्षिणस्यां नर्मदाया उत्तरभागे पूर्वापरायतो विन्ध्यः, एतत्सीमाचतुष्टयमध्यपाती देशो मध्यदेश इत्युच्यते शास्त्रीयः । तथा च मनुः —

> हिमवद्विन्ध्ययोर्मध्यं यत्प्राग् विनशनादपि ।
> प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः ॥

इति मानवो मध्यदेशः । एवञ्च प्रयागात्पूर्वं **प्राची**, कुरुक्षेत्रात्परं **प्रतीची**, विन्ध्यपर्वतादवरम् **अवाची**, हिमालयादुत्तरमु**दीची** दिविष्ठादिका । कुरुक्षेत्रं प्रयागराजञ्च मध्ये कृत्वा दक्षिणोत्तरायता रेखा कर्त्तव्या, ततः प्राचीप्रतीच्योर्बोधः स्पष्टतरः सम्पादनीयः । एवञ्च पूर्वोक्ता देशाः पर्वता नद्यश्च प्राच्यां दिशि, वङ्गेषु कामरूपेषु ब्रह्मपुत्रेषु च बोध्याः । एकपदादयो देशा मण्डलरूपाः । **प्राचीदिक**

तस्यां च मगधेषु चार्वाकमतमिवाद्वितीयप्रमाणं, पुष्करद्वीपमिव स्वादूदकमध्यगतं, रिपुपुरमिव विशालं, साहित्यशास्त्रमिव बहुविधध्वनिविचारसहितम्, अरण्यमिवाष्टापदशालान्वितं, पुण्डरीकाक्षवक्षस्तटमिव लक्ष्मी-

---

कर्तृपदम्। अस्तीति क्रियापदम्। अकर्मकोऽस्धातुः, लटि रूपम्। प्राच्या दिशो वर्त्तमानता त्रैकालिकी। विग्रहवाक्यानि व्याकरणानुसारं लिखितानि, सूत्राणि मूलशास्त्रेभ्यो बोध्यानि।

दिग्वर्णनकुसुममिदं गद्यं मन्दारमञ्जर्याः।
विद्वन्मानसगम्यं समर्प्यते लोकपालेभ्यः॥ १॥

**तस्याश्चेति।** तस्यां प्राच्यां दिशि **मगधेषु**=गयाप्रदेशेषु पुष्पपुरन्नाम पाटलिपुत्रापरपर्य्यायं, नगरं पत्तनमासीदिति सम्बन्धः। पुष्पपुरं विशिनष्टि—**चार्वाकस्य** मतं=नास्तिकमतं—केवलप्रत्यक्षप्रमाणवादितयाऽनुमानादिद्वितीयप्रमाणरहितं, तद्वत्पुष्पपुरमपि-नास्ति द्वितीयं प्रकर्षेण मीयते=उपमीयते येन तद् यस्य तदद्वितीयप्रमाणमुपमानरहितमित्यर्थः। पुनः **पुष्करद्वीपमिव**=सप्तमद्वीपमिव—स्वादु मधुरं यदुदकं=जलं तस्य मध्यगतं पुष्करद्वीपं, स्वादूदकं मध्यगतमन्तःस्थं यस्य पुष्पपुरस्य। सप्तानां द्वीपानां क्रमशः लवणोद्-इक्षुरसोद्-सुरोद्-घृतोद्-दध्योद्-दुग्धोद्-स्वादुजलमध्यगतत्वं पुराणप्रसिद्धम्। द्वीपाश्च सप्त—जम्बूद्वीपः, प्लक्षद्वीपः, शाल्मलः, कुशद्वीपः, क्रौञ्चद्वीपः, शाकद्वीपः, पुष्करद्वीपः इति सप्तद्वीपाः क्रमात् पूर्वोक्तैः समुद्रैः परिवृताः सर्वतः। सविस्तरं गोलसूत्रे द्रष्टव्यम्। 'द्वीपोऽस्त्रियाम्'। पुनश्च—**रिपोः** शत्रोः पुरं नगरमिव विशालं विगतशालं विभग्नसदनमित्यर्थः; रिपुर्विजितः शत्रुरत्र बोध्यः। विस्तीर्णं पुष्पपुरं 'वेः शालच्छंकटचौ' इति शालच्प्रत्ययानुस्मरणात्। **साहित्यशास्त्रं** बहुविध—ध्वनि=व्यङ्ग्य-विचारेण युक्तं भवति। पुष्पपुरमपि—बहुविधा अनेकप्रकाराः ध्वनयः कूजनानि येषां वीनां पक्षिणाम्, तेषां चारैः विचरणैः सहितम्। अनेकप्रकार-कूजक-पक्षि-संचार-सहितमित्यर्थः। पुनः—**अरण्यं**=विपिनमिव, अष्टापदस्य शरभाख्यमृगस्य शालया निवासस्थानेन अन्वितमरण्यम्। अष्टापदस्य सुवर्णस्य शालाभिरापणस्थानैरन्वितं पुष्पपुरम्। 'अष्टापदी चन्द्रमल्ल्यां, शरभे, वानरे, पुमान्' इति मेदिनी। 'रुक्मं कार्त्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्'—इत्यमरः। अष्टौ धातवः पदं स्थानमस्येति विग्रहे बहुव्रीहौ समासे 'अष्टनः सञ्ज्ञायामिति' दीर्घः (६।३।१२५)। अष्टानां धातूनां पदमिति षष्ठीसमासो वा। लक्ष्म्या रमाया, राज्यलक्ष्म्याः नगरशोभायाश्च निवासस्य

निवासस्थानं,-ज्योतिस्तन्त्रेणेव सविष्कम्भेन, यमुनाह्रदेनेव वलभीव्याकुलेन, सज्जनमनसेव महोन्नतेन, साक्षादकारणेनेव द्वारभाजा, कार्मुकेणेव धृतोत्तमाङ्गेन, केनचिद्बुधवाक्येनेव सुवर्णघटितेन, केनापि वह्निविशेषेणेव ससूर्यका-

स्थितेः स्थानमाधारः अतएव पुण्डरीकाक्षमिव गोविन्द इव । पुण्डरीकं सिताम्भोजमिव अक्षिणी लोचने यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति बहुव्रीहिसमासे 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षच्प्रत्ययः । एतावता सामानाधिकरण्येन विशिष्य वैयधिकरण्येन विशेषयति–ज्योतिस्तन्त्रेणेति । सर्वेषां तृतीयान्तानां गृहगणेनेत्यनेन सम्बन्धः । तथा च—एवंविशेषणविशिष्टेन गृहगणेन–भूषितं पुष्पपुरन्नगरमासीदिति वाक्यार्थः । ज्योतिस्तन्त्रेणेव = ज्योतिःशास्त्रेणेव–सविष्कम्भेन=विष्कम्भेन प्रथम–योगेन सहितं ज्योतिःशास्त्रम् । विष्कम्भेन अर्गलेन सहितो गृहगणः, तेन विराजितं–पुष्पपुरम् । विष्कम्भः प्रीतिरायुष्मानित्यादयः स्फुट–सूर्य्याचन्द्रमसोर्योगादष्टाविंशतियोगा ज्योतिःशास्त्रप्रसिद्धाः पञ्चाङ्गेषु द्रष्टव्याः । 'कपाटमररं तुल्ये तद्विष्कम्भेऽर्गलन्न ना' इत्यमरः । कथम्भूतेन गृहगणेन, यमुनायाः कालिन्द्याः ह्रदेनेव = अगाधजलाशयेनेव । बलात् = बलभद्राद् या भीर्भीतिः तया व्याकुलो व्यग्रस्तेन, ह्रदेनेवेत्यर्थः । वलभीभिर्गोपानसीभिर्व्याकुलेन = विशेषेण आकुलेन = व्यस्तेन व्याप्तेनेत्यर्थः । पुनः कथम्भूतेन गृहगणेन ( विराजमानं पुष्पपुरम्–) महदतीव उद् = ऊर्ध्वं नतः प्रह्वः यो गृहगणः गृहसमूहः, तेन । पुनः कथम्भूतेन–साक्षादव्यवधानेन यद्वस्तु न कारणं न साधकं तद्वस्तु केनापि द्वारा = परम्परया कारणं हेतुर्भवति कार्यं प्रति अतस्तद्द्वारभाक्, तद्वद् गृहगणोपि द्वारभाग्भवति। द्वारं प्रतीहारं भजतीति विग्रहे भजो ण्विः इति ण्विप्रत्यये लुकि, अत उपधाया इति वृद्धिः । परम्पराकारणेनेव, द्वारवतेत्यर्थः । यथाहि–घटं प्रति दण्डजन्यभ्रमिजन्यभ्रमिः साक्षात्कारणं, दण्डः परम्परया = भ्रमिद्वारा; तथैव सर्वत्र बोध्यम् । पुनः कार्मुकेणेव धनुषेव धृतमुत्तमाङ्गं शिरो येन, आकर्णकर्षणदशायाम् । धृतं भृतमुत्तमाङ्गं तोरणरूपं प्रधानाङ्गं येन तेन गृहगणेन राजमानं पुष्पपुरम् । पुनः–बुधस्य पण्डितस्य वाक्यं पदसमूहस्तेनेव सुष्टु सरसाः ये वर्णा अक्षराणि तैर्घटितेन निबद्धेन, केनचिद्बुधवाक्येनेव = केनापि पण्डितवचनेनेव, सुष्ठु = सुन्दरा ये वर्णाः पीतहरितादयः, तैर्घटितेन रचनान्वितेन गृहगणेन । पुनः— ससूर्यकान्तेन=सूर्यकान्तमणिना सहितो वह्निः प्रकाशमानोपि न दाहकः, तथा सूर्यकान्तेन मणिना खचितो गृहगणः प्रकाशमानः–इति सामानाधिकरण्यं गृहगण—वह्निविशेषयोः । न च सर्वो वह्निः सूर्यकान्तसहितः सम्भ-

न्तेन, अन्येनाङ्गदेनेव तारोत्पन्नेन, अपरेण चयनस्थलेनेवेष्टकामयेन, परेणा-
सन्निकृष्टेनेव वैदूर्यसमवायिना, इतरेण प्रातःकालेनेव पद्मरागमयेन, केनचन
वीरेणेवोल्लसितमारकतेन, गृहगणेन राजमानं—कुशद्वीपेनेव विद्रुमोच्चयवता,
हरेणेव शङ्खमालायुजा, नभसेव चन्द्रयुजा, ब्रह्मलोकेनेव मुक्तावलिभृता, रा-

---

वति—इतिहेतोरुक्तम्—वह्निविशेषेणेति । नापि कश्चिदग्निभेदः प्रसिद्धः सूर्यकान्त-सहितः—इति कथितं—**केनापीति** । अनिश्चितनाम्ना इत्यर्थः । अङ्गदः खलु वानर-**स्तारा**गर्भजत्वेन तारोत्पन्नः, गृहगणस्तु **तारेण** रजतेन रचितः—इति कृत्वा तारोत्पन्नत्वमुभयोः साधर्म्यं, तथापि गृहगणोऽङ्गदाद्भिन्न इति प्रतिपादितम् **अन्येनेति**, अङ्गदभिन्नेनेत्यर्थः । **चयनस्थलम्**—'युञ्जानः प्रथमम्' इत्यारभ्य ११।१।१ यजुर्वेदे विहितं, तच्चेष्टकाखचितं भवति, गृहगणोऽपि रचित-इष्टकाभिः, **परं** चयनस्थलाद**परः** अत उक्तमपरेणेति । इष्टकामयत्वं = चयनस्थल—गृहगणयोः साधर्म्यम् । अथवा इष्टा = अभिलषिता ये काम्यन्ते इति इच्छाविषयीभूताः पदार्थाः = भक्ष्यभोज्यभोग्यादयः तान् याति, 'आतोऽनुपसर्गे कः'—इति के प्रत्यये, इष्ट-काम-यो गृहगणः, अभिलषितवस्तुविशिष्ट-इत्यर्थः । तादृशेन गृहगणेन राजमानं पुष्पपुरम् । सन्निकृष्टं=समीपस्थं, विदूरस्य भावो वैदूर्य्यम् विदूरत्वम् । **यदसन्निकृष्टं** तद्वैदूर्यसमवायि, विदूरत्वसम्बन्धि भवति । तेनेव—विदूराद्बालवायपर्वतात्प्रभवति वैदूर्यो मणिः, तस्य समवायः = समुदयो यस्य यस्मिन्वा तेन गृहगणेन विराजमानमिति पूर्ववत् । 'समुदायः समुदयः समवायश्चयो गणः' इत्यमरः । 'विदूराञ्ञ्यः' इत्यत्र "बालवायो विदूरञ्च प्रकृत्यन्तरमेव वा । न चेत्तत्रेति च ब्रूयाज्जित्वरीवदुपाचरे''दित्यादि भाष्ये टीकासु च द्रष्टव्यम् । प्रातःकालः प्रभातं पद्मानां कमलानां रागो रञ्जनं तत्प्रचुरं भवति । तद्वद् गृहगणोऽपि **पद्मराग**मणि-प्रचुरतया पद्मरागमयस्तेन राजमानमिति । **उल्ला-सिता**=प्रचारिता मारकता=मारकस्य नाशकस्य भावो येन रामादिना । **केनचन**= अद्भुतपराक्रमेण **वीरेण** = उत्साहवता पुरुषेणेव, उल्लसितं=प्रकाशितम् , मर-कतस्य मणेर्विकारो मारकतम् येन, तेन गृहगणेन=सदनसमूहेन, राजमानं शोभमानं पुष्पपुरन्नाम-नगरमासीदिति सम्बन्धः । विशिष्ट—गृहगणवत्तया कुसुमपुरं विशिष्य, विशिष्टाऽऽपणपथवत्तया विशिनष्टि—**कुशद्वीपेनेवेत्या-दिना** प्रबन्धेन । **कुशद्वीपः** प्रवालोच्चयवान् , तत्र विद्रुमाणामुत्पत्तेः । हट्ट-मार्गस्तु विद्रुमोच्चयवान् , विक्रयार्थं धृतप्रवालत्वात् । अतस्तयोरुपमानोपमे-यभावः । 'कपाली भूतेश' इत्यादिवर्णनानुसारेण **हरो** नरकपालरूपशङ्खयुक् तद्व-

शिगणेनेव सतुलेन, शब्दशास्त्रेणेव सम्पन्नबहुव्रीहिणा, पार्थिवद्रव्येणेव विजातीयगन्धवता, अग्न्याधानसमुद्यतेनेव धृतक्षौमेण, नीललोहितललाटतटेनेव ज्वलदग्निशिखेन, वानरबलेनेव श्रेष्ठचन्दनेन, रागिणेवातिवेलस्नेहेन, दुर्जनेने-

दापणपथोऽपि—शङ्खापरपर्य्यायकम्बुमालायुक्, विक्रयार्थं शङ्खानां तत्र धृतत्वात् । 'नभः खं श्रावणे नभाः' नभ आकाशं, चन्द्रेण=विधुना युज्यते–इति चन्द्रयुक्, तद्वदापणपथोऽपि चन्द्रेण कर्पूरेण युज्यत-इति चन्द्रयुक् । क्रय्यत्वात्कर्पूरस्य । **ब्रह्मलोकः** सत्यलोको मुक्तानां कर्मबन्धरहितानां जीवानामावलिं पङ्क्तिं विशेषेण= जन्मजरामरणादिदुःखराहित्येन बिभर्त्ति, तेन इव,—मुक्तानां=मुक्ताफलानाम् आवलिभृता = पङ्क्तिभाजाऽऽपणपथेन भूषितं पुष्पपुरमिति सर्वेषां तृतीयान्तानामन्वयः । मेषादिद्वादश-**राशिसमूहः** सप्तमराशि–तुलासहितत्वेन **सतुलः**, तेनेव–तोलनसाधन–तुला–सहितत्वेनाऽऽपणपथोऽपि **सतुलः**, तेन भूषितम् इति पूर्ववत् । **शब्दशास्त्रम्**–"अनेकमन्यपदार्थे, दिङ्नामान्यन्तराले, तेन सहेति-तुल्ययोगे, तत्र तेनेदमिति सरूपे, सङ्ख्ययाऽव्ययासन्ना दूराधिकसङ्ख्याः सङ्ख्येये" इति सूत्रपञ्चकविहितविविधबहुव्रीहिसमासवत्तया **सम्पन्नबहुव्रीहिः** । **आपणपथस्तु**—सम्पादिताऽनेकप्रकारकधान्यवत्तया सम्पन्नबहुव्रीहिः । **पार्थिवद्रव्यं** सुगन्धि-दुर्गन्ध-करम्भ-विस्र-गन्धवत्तया विभिन्नप्रकारकगन्धवत् । आपणपथोऽपि अशुद्ध-शुद्ध-भस्मीकृत-भेषजान्तरमिश्रित-गन्धकवत्तया विविधप्रकारगन्धवान् । 'गन्धो गन्धक आमोदे लेशे सबन्धगर्वयो'रिति विश्वकोषादन्यो वार्थः सूरिभिरूहनीयः । **अग्न्याधाने**ऽग्निहोत्रकर्मणि सम्यक् सशास्त्रनियममुद्यतः प्रवृत्तः विप्रः यथा धृतम्=परिहितं क्षौमं=क्षुमाभवं वस्त्रं येन सः धृतक्षौमो भवति तथा **आपणपथोऽपि** क्रय्यतया धृतक्षौमवस्त्रः, धृताऽतसीपटः । "अतसी स्यादुमा क्षुमा" इत्यमरः । अतसी तन्तुवस्त्राणि मिथिलादेशेऽद्यापि निर्मीयन्ते । "कार्ष्णरौरववास्तानि चर्माणि ब्रह्मचारिणः । वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च -" इति मनुना वर्णानुपूर्व्या ब्रह्मचारिणां चर्माणि वस्त्राणि च विहितानि । **नीलश्चासौ** लोहितश्चेति विग्रहे 'वर्णो वर्णेनेति' समासे नीललोहितः शिवः 'धूर्जटिर्नीललोहितः'इत्यमरात् । ललाटस्य तटम् इति विग्रहे षष्ठीसमासे पुनः षष्ठीसमास , पुनरिवेन नित्यसमासो विभक्त्यलोपश्च । हरभालप्रान्तेनेव ज्वलन्तीः दीप्यमाना अग्नेर्वह्नेः शिखा ज्वाला यस्मिन् स आपणपथः, ज्वलन्—अग्निशिखः तन्नामक-जायुर्यस्मिन् तेन । **वानराणां** कपीनां बलेनेव सैन्येनेव श्रेष्ठश्चन्दनस्तन्नामको वानरो यस्मिन् तेनेव, श्रेष्ठचन्दनं मलयजो यस्मिन्नापणे तेन भूषितम् । रञ्जनं रागः, सोऽस्यास्तीति रागी तेनेव अतिवेलमत्यन्तं भृशमित्यर्थः यः स्नेहः

वातिलघुना, यमुनाह्रदेनेव संभृतकालीयकेन, राज्ञेव सन्ततचामरेण, वैद्यकेने-
वानेकभेषजशालिना, जलधिनेव लोकावलिकल्लोलकृतकोलाहलेन, आपणपथेन
भूषितं,—द्व्यणुकमिव नित्यपार्थिवसमवेतं, प्रमेयत्वमिवासम्भवद्विपक्षबाधं,

---

प्रेमा साऽस्ति यस्य सः तेनेव, अतिवेलमत्यर्थं, स्नेहश्चतुर्विधः,—घृत-तैल-वसा-मज्जरूपो यस्मिन्नापणपथे तेन भूषितम्। दुष्टो जनो दुर्ज्जनोऽतीव लघुस्तुच्छो भवति। आपणपथोऽपि अतिशयिता लघव 'एक्का' इति प्रसिद्धा एकाश्वारथो यस्मिन् तेनाऽऽपणेनेति पूर्ववत्। यमुनायाः कालिन्द्या ह्रदेनेवागाधजलाशयेनेव सम्यक् गरुडभयराहित्येन भृतः धृतः पोषितश्च कालीयः कद्रुसुतः कृष्णसर्पो येन-तेनेव—संभृतः सञ्चितः कालीयकः कृष्णागरुर्यत्र तेन-आपणपथेनेति पूर्ववत्। सन्तता=निरन्तरा चामरा बालव्यजनानि, इतस्ततश्चाल्यमानानि यस्य तेन, राज्ञा नृपेणेव, सम्यक् तता विस्तारिता चामराः बालव्यजनानि क्रय्यत्वाद्यत्र-तेनाऽऽपणपथेनेति पूर्ववत्। वैद्यकमायुर्वेदः प्रतिपाद्यतासम्बन्धेन भेषजान्वितम्, आपणपथस्तु क्रय्यतया विपणिषु प्रसारितत्वेन संयोगसम्बन्धेन भेषजशाली तेन भूषितम्। लोकानां=जनानाम् आवलय इव पङ्क्तय इव ये कल्लोलाः=महातरङ्गास्तैः कृत उत्पादितः कोलाहलः कलकलो यस्मिन्, जलानि धीयन्तेऽस्मिन् जलधिः समुद्रस्तेनेव=तत्तुल्यं लोकानां जनानामावलय एव कल्लोला बृहत्तरङ्गाः, तैः कृतः समुत्पादितः कोलाहलः कलकलो यस्मिन्तेन, आपणस्य=निषद्यायाः पन्थाः आपणपथः=हट्टमार्गस्तेन, भूषितं=शोभितं पुष्पपुरन्नाम नगरमासीदिति सम्बन्धः। 'महत्सूल्लोलकल्लोलौ' 'कोलाहलः कलकलः' 'आपणस्तु निषद्यायामिति' चामरः। द्विवारं परम्परया पुष्पपुरं विशिष्य पुनः साक्षाद्विशिनष्टि-द्व्यणुकमिवेत्यादिना। जालान्तरगते भानौ यत्सूक्ष्मं रजो दृश्यते, तस्य षष्टितमो भागः परमाणुः, स च नित्यः। परमाणुद्वयं द्व्यणुकं, तदिव—नित्यपार्थिवसमवेतं पुष्पपुरम्। पृथिव्या इदं पार्थिवं, नित्यमनादिनिधनञ्च तत्पार्थिवं नित्यपार्थिवं=परमाणुः तत्र समवायसम्बन्धेन वर्त्तमानं समवेतमुच्यते। द्व्यणुकमवयवी, परमाणुर्निरवयवः, अवयवाऽवयविनोः यः सम्बन्धः स समवायः, यो यत्र समवायेन वर्तते स तत्र समवेतः। अतो नित्यपार्थिव—परमाणु—समवेतं द्व्यणुकम्। पुष्पपुरन्तु—नित्यमनवरतं पृथिव्या ईश्वरेण पार्थिवेन राज्ञा समवेतं=संबद्धं संयुक्तमित्यर्थः। (तस्येश्वरः, इत्यनुवृत्तौ 'सर्वभूमिपृथिवीभ्यामणञौ' इत्यञि पार्थिवशब्दसिद्धिः। पूर्वत्र तस्येदमित्यणि) प्रमेयत्वन्नाम प्रमाऽपरपर्य्याय-यथार्थज्ञानविषयत्वं, तच्च निखिलपदार्थवृत्ति, तदुक्तं न्यायकारिकावल्याम्—'सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते' इति। प्रमेयत्वस्य विपक्षः विरुद्धः

जीवन्मुक्तहृदयमिव संसरणसंकटरहितं, ज्ञानमिव नित्यविषयसंसर्गि, जलमिव सर्वतोमुखं, विष्णुपदमिव व्याप्तभूतलं–पुष्पपुरं नाम नगरमासीत् ।। २ ।।

प्रमेयत्वाभावः स च कुत्रापि नास्ति । अतः प्रमेयत्वं न सम्भवन्, विपक्षेण बाधो शत्रुदलेन व्याघातो यस्य तत् । कुसुमपुरन्तु–न सम्भवन् विपक्षेण शत्रुदलेन बाधो लोडनमाक्रणमित्यर्थः, शत्रुकृतबाधारहितमित्यर्थः । जीवन्मुक्तानां=शुकदेव—वामदेवसदृशानां ज्ञानिनां हृदयमिव चित्तमिव सम्यक् पुनःपुनः संसरणं गर्भवासादिना संसारे गमनं 'पुनरपि जननं पुनरपि मरणं, पुनरपि जननीजठरे शयनं' मित्यादिन्यायेनेत्यर्थः । तादृशसंसरणजन्यं यत्संकटं दुःखं तेन रहितं जीवन्मुक्तहृदयं, तस्य संसरणहेतुभूतानां कर्मणां भस्मीभावात्, भस्मीभूतानाञ्च प्ररोहाऽयोग्यत्वात् । 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते' इति गीतोक्तेः । पुष्पपुरन्तु—सम्यक् सरणस्य गमनस्य यत्संकटं=संबाधः संकीर्णतेत्यर्थः–तेन रहितं, नगरमार्गाणां विस्तीर्णत्वादित्यर्थः । बुद्धिर्ज्ञानम्, तदिव पुष्पपुरम्, यतो नित्यविषयसंसर्गि तदुभयम् । विषयेण=घटादिना, संसर्गः=सम्बन्धः सन्निकर्षरूपः सोऽस्यास्तीति विग्रहे—'अत इनिठनौ' इति इनिप्रत्यये, पुनः नित्यं विषयसंसर्गि इति विग्रहे समासे सुपो लुकि नित्यविषयसंसर्गि=ज्ञानं, ज्ञानेच्छाकृतीनां सविषयकत्वनियमात् । नहि निर्विषयं ज्ञानं संभवति । अयं घटः, घटमहं जानामि इत्यादीनामेव प्रतीतीनां सम्भवात् । नहि केवलं जानामि—इत्याकारिका प्रतीतिः कुत्रापि दृश्यते । अतो ज्ञानं नित्यं विषयसंबद्धम् । पुष्पपुरन्तु—घ्रातव्यैः सुगन्धपुष्पादिविषयैः, रसनीयैराम्रादिफलैः, दर्शनीयैः कुशलकारुरचितैः सदनैः, स्पर्शनीयैः कौशेयादिपटैः, श्रवणीयैः सुरनदीतरङ्गनिःस्वानैः, श्रुतिस्मृतिपुराणेतिहासपठनपाठननिनदैश्च, संगीतध्वनिभिश्च, घ्राण-रसन-लोचन-त्वक्-श्रवण-ग्राह्यैर्विषयैः, नित्यमजस्रम् सम्यक्संबन्धि, पूर्वोक्तानां विषयाणां सम्यक् सर्गो रचना यस्मिन्निति वा । नित्यविषयसंसर्गवत्त्वं, ज्ञानपुष्पपुरयोः साधर्म्यम् । जलम्=सलिलमिव सर्वतो विश्वतो मुखं प्रवाहः सलिलस्य, द्वाराणि-पुष्पपुरस्य । 'कबन्धमुदकं पाथः पुष्करं सर्वतो मुखम्'—इत्यमरः । 'सर्वतोमुख उग्रे च क्षेत्रज्ञब्रह्मणोः पुमान् । नपुंसकन्तु पानीये सुरवर्त्मन्यपि स्मृतम् ॥' विष्णुपदं=गगनमिव, व्याप्तमाच्छादितं भूतलं=भूमितलं येन, विष्णुपदस्य सर्वगतत्वात्—''कालखात्मदिशां सर्वगतत्वं परमं महदि''त्युक्तेः । पुष्पपुरस्याऽऽयामविस्तारवत्त्वात्–व्याप्तभूतलत्वं साधर्म्यम् । पुष्पपुरम्=पाटलिपुत्रं नाम नगरं पत्तनम् आसीत्=अभवत् । अस्मिन् गद्ये पूर्णोपमालङ्कृतिः ।

ननु पाटलिपुत्रापरऽनाम्नः पुष्पपुरस्याऽद्यापि सत्वात् कथमनद्यतनभूतकालिक-

यत्किल प्रमाणं काव्यविशेषाणां, प्रमेयमुत्प्रेक्षाविशेषाणां, संशयात्मकं चाक्षुषद्रव्यपरिमाणपरिच्छेदस्य, प्रयोजनं नानाकार्यार्थिनां, दृष्टान्तो महापरिमाणशालिनां, सिद्धान्तः समृद्धिकाष्ठायाः, अवयवः सुरलोकस्य, तर्क-

क्रियावाचकपदमासीदिति प्रयुक्तमितिचेदुच्यते—अनुगङ्गं वाराणसी, अनुशोणं पाटलिपुत्रम् इति—"अनुर्यत्समया" इति सूत्रे महाभाष्यप्रयोगात्—शोणभद्रनदतीरे पाटलिपुत्रमासीदिति प्रतीयते। तच्चाधुना नास्ति तदेव वर्ण्यमिति—लङ् प्रयुक्तः। अथवा तत्कालविशिष्टं तद्राज्ञादिविशिष्टं नगरं विवक्षितम् ॥ २ ॥

'सार्वपथीनास्तु कवयः'—

इति नयमनुसृत्य वर्णितं तत्कुसुमपुरं कविना पुनः प्रहर्षात्।

कविजनमनसां कुतूहलाय, चरणदृशा कथितान् मिनोति मेयान् ॥

तत्र—"प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्ताऽवयव-तर्क--निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-च्छल-जाति-निग्रहस्थानानान्तत्त्वज्ञानान्निःश्रेयसाधिगमः"—इति षोडशपदार्था न्यायशास्त्रोक्ताः। तदात्मतया—पुष्पपुरम्—उत्प्रेक्ष्यते—यत्किलेत्यादिना। यत्पुष्पपुरं, किलेत्युत्प्रेक्षावाचकं पदं प्रतिवाक्यमन्वेति। **प्रमाणं**=प्रमाकरणम्। यथार्थबोधस्य साधनमित्यर्थः। किंविषयकस्य यथार्थज्ञानस्य साधनमित्याकाङ्क्षायाम् आह—**काव्यस्य**=कविताया ये विशेषाः भेदाः दृश्यश्रव्यादयः गद्य-पद्यादयो वा ध्वनिगुणीभूतादयो वा तेषां प्रमाणं किल=प्रमितिकरणमिव। सर्वत्रैवमुत्प्रेक्षणीयम्। पुष्पपुराधिष्ठानतया तदधिष्ठातृनेतृकतया च बहुभिः कविभिः काव्यभेदानां रचितत्वात्। **उत्प्रेक्षायाः**=परात्मसंभावनायाः ये विशेषाः भेदाः=वाच्यप्रतीयमानादयः, तेषां **प्रमेयम्**=प्रमितिविषयमिव, पुष्पपुरं सर्वैरुत्प्रेक्षाभेदैरुपमेयात्मना सम्भावयितुं शक्यं किलेत्यर्थः। आत्मशरीरेन्द्रियार्थादयः द्वादशपदार्थाः उपमेयपदवाच्या न्याये। चक्षुषा=लोचनेन ग्राह्याणि चाक्षुषाणि (शैषिकोऽण्) तानि च द्रव्याणि=रत्न-धातु-धान्य-पटादीनि तेषां यत् परिमाणं=मानं-तस्य यः परिच्छेदः इयत्ताऽवधारणं, तस्य संशयात्मकं किल=तत्कर्मकसंशयविषयीभूतं किल। यत्पुष्पपुरम्—**नाना**=अनेकानि यानि कार्याणि तानि येऽर्थयन्ते तेषां-जनानां प्रयोजनं प्रयोजनमिव फलमिवेत्यर्थः। रूपकालङ्कारो वा, प्रयोजनरूपम् इत्यादि, सर्वेषान्तत्र स्वस्वकार्यसाधनात्। राजधानीस्वरूपमेवैतत्। **महापरिमाणशालिनां**—महच्च तत्परिमाणं महापरिमाणं तेन शालन्ते इति महापरिमाणशालिनः कालाकाशात्मदिशः, तेषामपि दृष्टान्त उदाहरणं किमुत महतां ग्रामनगरादीनाम्—इति। लौकिकपरीक्षकयोर्यस्मिन्बुद्धि-

समूहविषयः कविबुद्धीनां, निर्णयगोचरः परमोत्कर्षस्य, वादो महेन्द्रभवनस्य, जल्पपर्यवसानहेतुरुत्प्रेक्षकाणां, वितण्डात्मकं परपुराणां, हेत्वाभासत्वकरं स्वोपरोधोपायानां, छलहेतुः पाखण्डानां, जातिबाधकसंग्रहरूपमासुरसर्गस्य, निग्रहस्थानं विपक्षाणां चाभूत् ॥ ३ ॥

---

साम्यं स दृष्टान्तः । समृद्धेः=धनधान्यादिवृद्धेः या काष्ठा=परमावधिः, तस्याः सिद्धान्तो निर्णयः किल । सुराणां=देवानां लोकः सुरलोकस्तस्याऽवयवः प्रतीकः= खण्डः किलेत्यर्थः । तर्काणाम्=अध्याहाराणाम् (व्याप्यारोपेण व्यापकारोपाणां वा) समूहाः स्तोमाः तेषां विषयः गोचरः, कासां विषय इत्यपेक्षायाम् आह–**कवीति**। कवीनां कविताकर्त्तॄणां या बुद्धयः प्रज्ञाः तासां, तर्कसमूह—विषय-इत्यर्थः । कविबुद्धयः कुसुमपुरं सर्वथा तर्कयितुं योग्यं प्राप्नुवन्तीत्यर्थः । **परमः** सर्वोत्तमो योऽतिशयः=तस्य, निर्णयगोचरः निश्चयविषयः । महेन्द्रस्य=सुरपतेर्भवनस्य=निकेतनस्य, **वादः**=प्रतिवादरूपं, महेन्द्रभवनादपि सुन्दरत्वात्— इत्यर्थः । **उत्प्रेक्षन्ते**=परात्मतया सम्भावयन्तीति=उत्प्रेक्षकाः=उत्प्रेक्षितारः— तेषां, जल्पस्य=विजिगीषुकथायाः, पर्य्यवसानं=पर्य्यन्तरूपम् । **परेषां**=शत्रूणां पुराणि=नगराणि तेषां, वितण्डात्मकं=तत्पक्ष-विध्वंसकम् । 'स्वपक्षस्थापनहीना कथा वितण्डा' इति नैयायिकाः । **स्वस्य**=कुसुमपुरस्य उपरोधः=आवरणं तस्य ये उपायाः=साधनानि तेषां, **हेत्वाभासत्वकरं**=साधकत्वाभासत्वकरं, "मुद्राराक्षसीय-मलय-केतुसैन्य"मिवेत्यर्थः । हेतुवदाभासन्ते हेत्वाभासाः=दुष्टा हेतवः, ते च न कार्यसाधकाः, अतः ये स्वोपरोधोपायाः शत्रुकृताः ते बुद्धिमता दूषयितव्याः । कुसुमपुरन्तु तत्र कुशलम् । सव्यभिचारादयः पञ्च हेत्वाभासा न्यायशास्त्रे द्रष्टव्याः । **पाखण्डानां**=धर्मध्वजिनां, छलस्य=अर्थान्तरं प्रकल्प्य दूषणस्य हेतुः कारणं; पाखण्डनिवारकमित्यर्थः । "जातिबाधक-संग्रहरूपमासुरसर्गस्य" । असदुत्तरं=जातिः । असुरसृष्टिकृतस्याऽसदुत्तरस्य बाधकानामवरोधकानामुपायानामित्यर्थः, संग्रहरूपं=सञ्चयरूपम् । आसुर-कुचोद्य-वारकमित्यर्थः । **विपक्षाणां**=शत्रुपक्षाणां, निग्रहस्य=पराजयस्य स्थानं स्थितिरूपम् अवकाश इत्यर्थः । "वादिनः पराजयहेतुर्निग्रहस्थानम्" । यत्किल पुष्पपुरं प्रमाणादि—निग्रहस्थानपर्यन्तषोडशपदार्थरूपञ्च—अभूत्—इत्यर्थः सन्दर्भस्य । तृतीयं गद्यं न्यायदर्शनव्यवहारवत् । "प्रमाणं हेतुमर्यादा शास्त्रेयत्ताप्रमातृषु" "प्रमितौ प्रमा" "विचिकित्सा तु संशयः" "सन्देहद्वापरौ" "समौ सिद्धान्तराद्धान्तौ" "अङ्गं प्रतीकोऽवयवः" "अध्याहारस्तर्क ऊहः" "समौ निर्णयनिश्चयौ" "निग्रहस्तु निरोधः

यच्च दृष्टिभिरिव रूपोपजीविनीभिः, कविसूक्तिभिरिवालङ्कारसंस्कृताभिः,

स्या''दिति सर्वत्रामरः। अथ व्याकृतिः—प्रपूर्वान्मा–माने इत्यस्माद्भावे ल्युटि प्रमितिवाची प्रमाणशब्दः। अत्र तु करणे ल्युट्, प्रमीयतेऽनेन प्रमाणं प्रत्यक्षानुमानोपमानशब्दभेदाच्चतुर्विधम्। प्रमीयतेऽदः प्रमेयम्, 'अचो यत्'—इति कर्मणि यत् 'ईद्यति'-इति ईकारे गुणः। सं-पूर्वात्, शीङ्-स्वप्ने इत्यस्माद्भावे—'एरचि' भावप्रधानः संशयशब्दः। प्रयोज्यते कर्मणि पुरुषोऽनेन धर्मार्थादिनेति प्रपूर्वाद् युजिर् योगे इत्यस्माण्ण्यन्ताल्ल्युटि फलवाची प्रयोजनशब्दः। दृष्टो ज्ञातो लौकिकपरीक्षकैरन्तः पर्य्यवसानं यस्य स दृष्टान्तः। सिद्धः, 'पूर्वपक्षोत्तरपक्षाभ्यां निर्णीतः' अन्तः पर्य्यवसानं यस्य स सिद्धान्तः। अवयौति, संयौति, मिश्रयतीति, अवयवः। यु-मिश्रणाऽमिश्रणयोरित्यस्मादच्। तर्क्यतेऽनेनेति तर्कः, तर्कभाषार्थश्चुरादिः, अकर्तरि च कारके संज्ञायामिति घञ्। निर्णायनं निर्णयः-णीञ्-प्रापणे, इत्यस्मादेरच्। वदनं वादः। जल्पनं जल्पः। भावे घञ्। वितण्ड्यते आहन्यते स्वपक्षोऽनया वितण्डा, तडि-आघाते, 'गुरोश्च हलः' इत्यप्रत्यये टाप् वितण्डनं स्वपक्षस्याऽऽहननं वितण्डा, भावे—अप्रत्ययः; भावे इत्यनुवृत्तेः। छातं=छलम् छो-छेदने इत्यस्मात्, 'वृषादिभ्यश्च' १।१०६ इत्युणादिः कलच् प्रत्ययः। जातिः—जनी-प्रादुर्भावे इत्यस्मात् 'क्तिच्क्तौ च सञ्ज्ञायाम्' इति क्तिचि, 'तितुत्रतथसिसुसरकसेषु चे'ति निषेधादिडभावः, 'जनसनखनां सञ्झलो'-रित्यात्वम्। निग्रहणं निग्रहः, 'ग्रहवृदृनिश्चिगमश्च' इति अप्प्रत्ययः, तस्य स्थानमवकाशः-निरोधावसर—इत्यर्थः ॥ ३ ॥

'अवयवः सुरलोकस्ये'त्युत्प्रेक्षितं पुष्पपुरं—पुनः सुरलोकव्यतिरेकितया वर्णयति—**यच्च दृष्टिभिरिवेत्यादिना**। यच्च पुष्पपुरं दिवमप्युपाहसदिति वाक्यार्थः। दृष्टिभिरिव=दृग्भिरिव रूपेण शुक्लपीतादिना 'तद्वता वा' विषयेणोपजीवन्ति विषयग्राहिण्यो भवन्ति—इति ताः रूपोपजीविन्यो दृष्टयः; 'उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति' इत्याद्युक्तेः। रूपमुपजीवन्ति=साक्षात्कुर्वन्ति—इति विग्रहे 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिप्रत्यये नान्तलक्षणो ङीप् प्रत्ययः। अन्यत्र—रूपं दर्शनीयता—मुपजीवन्ति=आजीवन्ति ताः रूपोपजीविन्यो वारमुख्याः, ताभिः, अध्युषितमधिष्ठितं सत् अतएव अनेकाप्सरो विशेषबाहुल्येन दिवमप्युपाहसदिति क्रिययाऽन्वयः, एवमुत्तरत्रापि सर्वत्र। 'वारस्त्री गणिका वेश्या रूपाजीवा' इत्यमरः। **अलङ्कारैः**—कटक-कुण्डल-केयूर-काञ्चीप्रभृतिभिः, उपमा-रूपक,-दीपकोत्प्रेक्षादिभिश्च, संस्कृताभिः=मण्डिताभिरतएव कविसूक्तिभिरिव=कवि-सुभा-

ऋग्भिरिव प्रशस्तस्वराभिः, मतान्तरानुगाभिरिव द्रव्याभिन्नगुणाभिमानि-नीभिः, सिद्धमन्त्रावलिभिरिवानेकाकर्षणकुशलाभिः, प्रसन्नकविवाणीभिरिव सर्वग्राह्यरसाभिः, दुर्गाभिरिव नवविधाभिः, सद्बुद्धिभिरिवान्यविप्रलम्भनि-

षितैरिव। अलङ्कारसंस्कृतत्वं, कविसूक्ति-वारमुख्ययोः साधर्म्यमुत्प्रेक्षितम्। प्रशस्तस्वराभिः = कलकण्ठाभिः, अतएव प्रशस्तस्वराभिः = उदात्तादिस्वरयुक्ताभिः ऋग्भिरिव = मन्त्रैरिव। अन्यन्मतं मतान्तरं = नैयायिकातिरिक्तदार्शनिकमतं, तदनुसारिणीभिरिव द्रव्यात्, = पृथिवी—जल—तेजो—वायु—गगना—देरभिन्नास्तद्रूपा गुणा रूपरसगन्धादय-इत्याकारकाभिमानवन्तो मीमांसकादयः, तन्मतानुगाभिरिव—द्रव्याद्रूप्यकादेः, न भिन्नं गुणं = स्नेहादिमभिमन्यन्ते—इति—द्रव्याऽभिन्नगुणाभिमानिन्यः, ताभिः, "वित्तमात्रं समालोक्य सा रागं दर्शयेद्वहिः" 'तस्कराः पौण्ड्रकाः मूर्खाः सुखप्राप्तधनास्तथा। लिङ्गिनश्छन्नकामाद्याः-आसाम्प्रायेण वल्लभाः" इति साहित्यदर्पणे तद्व्यवहारस्य दर्शितत्वात्। नैयायिकमते गुणगुणिनोः समवायसम्बन्धः। अतो गुणानामाधेयता, आधारता द्रव्याणामित्यादि बोध्यम्। मीमांसकादिमते गुणगुणिनोस्तादात्म्यम्, अतो गुणानां द्रव्याऽभिन्नत्वमिति च स्मरणीयम्। गणिकानान्तु द्रव्यमेव सर्वस्वं न गुणाः, न कर्माणि, न जातयः—इति प्रसिद्धमेव। सिद्धाश्च ता मन्त्राऽऽवलयः=मन्त्रपङ्क्तयः ताभिरिव-अनेकेषामाकर्षणं वशीकारस्तस्मिन् कुशलाभिः चतुराभिः। समर्थाभिस्तु मन्त्रावलिभिरिव। प्रसन्नाः—प्रसादगुणयुक्तत्वेन झटितिपदार्थाऽवभासका याः-कवीनां काव्यकर्तृणां वाण्यः=सरस्वत्यः, ताभिरिव। सर्वैः = प्रविष्टैः, प्रौढैः, परिपक्वैश्च; इतरत्र—"वाप्यां स्नाति नरो विचक्षणवरो मूर्खोऽपि वर्णाऽधमः"—इति मृच्छकटिकोक्तदिशा सर्वैः ग्राह्यो बोध्योऽनुभूयमानश्च रसः = शृङ्गारादिः सम्भोगश्च-यासां ताभिः। दुःखेन गम्यन्ते बोध्यन्ते लभ्यन्ते वा दुर्गाः=शैलपुत्री, ब्रह्मचारिणी, चित्रघण्टा, कूष्माण्डा, स्कन्दमाता, कात्यायनी, कालरात्रिः, महागौरी, सिद्धिदात्री, इति नवविधाः=नवसङ्ख्याः दुर्गाः सप्तशतीपाठस्तुतिविषयीभूताः—प्रसिद्धाः, ताभिरिव, नवाः = नूतनाः, विधाः = मण्डनादि-प्रकारो यासान्ताभिः। सत्यस्तत्त्वपक्षपातिन्यः या बुद्धयः शेमुष्यः ताभिरिव, सतां—सज्जनानां बुद्धयो वा, अन्येषाम्परेषाम्, विप्रलम्भो = वञ्चनं, तस्मान्निवृत्ताभिः रहिताभिः, ताभिरिव, अन्येषां स्वपरिचितानामपि पुरुषाणां यो विप्रलम्भः वियोगात्मकं दुःखं, तस्मान्निवृत्ताभिः। अन्यविषयकविरहवेदनारहिताभिरित्यर्थः। 'न रज्यति गुणिष्वपि' इत्युक्तेः। नानुरागं विना विप्रलम्भः, शृङ्गारभेदत्वात्तस्य। अनेकैः समवायः=सम्बन्धः सोऽस्ति यासामिति मत्वर्थीयाऽच्प्रत्यये टापि भिसि रूपम्;

वृत्ताभिः, न्यायानुयायिनीभिरिवानेकसमवायाभिः, नदीभिरिव सन्ततचलरसाभिः, पृथिवीभिरिव द्रव्यान्तरसंसर्गाधीनस्नेहाभिः, निसर्गावदाताभिरिव कृत्रिमरागाभिः, विरक्ताभिरिव क्वचिदबद्धप्रणयाभिः, श्यामाभिरिवापहृतलोकलोचनाभिः, सत्कविताभिरिव प्रशस्तानेकघटनाभ्यर्हिताभिः, आख्यातपरम्पराभिरिवानेकपुरुषप्रचारयोग्याभिः, जातिभिरिवैकवृत्तित्वरहिताभिः,

---

अनेक–समवायवतीभिरित्यर्थः; अतएव–**न्यायानुयायिनीभिरिव** = न्यायशास्त्रे–नित्यसम्बन्धः समवायः स चावयवावयविनोर्गुणगुणिनोः, क्रियाक्रियावतोः, जातिव्यक्त्योः, नित्यद्रव्यविशेषयोश्च वृत्तित्वनियामकः। अतो न्यायानुयायिन्यो बुद्धयो विषयितासम्बन्धेन समवायवत्यस्ताभिरिव। न्यायमनुयान्ति=अनुसरन्ति ताः न्यायशास्त्रानुसारिण्य इत्यर्थः। **सन्ततं** = निरन्तरं चलः=चञ्चलः, रसो घनरसो यासां नदीनां सरितां ताभिरिव, सन्ततं नित्यम्, चलोऽस्थिरः रसः स्नेहो यासां ताभिः। **द्रव्यान्तरस्या**ऽन्यद्रव्यस्य, संसर्गाधीनः सम्बन्धाधीनः-स्नेहः प्रेमा यासां, ताभिः, अतएव—**पृथिवीभिरिव** 'लक्षणया' पार्थिवद्रव्यैः तिलसर्षपादिभिरिव, ते हि द्रव्यान्तरं जलं, तस्य संसर्गः=संपर्कस्तदधीनस्नेहा भवन्ति। जलं विना स्नेहनिःसरणाभावात्, स्नेहस्य जलमात्रवृत्तित्वात्। अथवा–गोधूमादिचूर्णं दृष्टान्ततया द्रष्टव्यं, तत्पिण्डीभावस्य जलाधीनत्वात्, स्नेहस्यैव च पिण्डीभावहेतुत्वात्। **निसर्गेण**=स्वभावतः अवदाताभिरिव = स्वच्छाभिरिव सिताभिरिव वा, कृत्रिमः कृत्या निष्पादितः रागो रञ्जनमनुरागश्च यासान्ताभिः। स्वभावतः शुक्ला–शाटीप्रभृतयः कृत्रिमरागवत्यः सम्पत्स्यन्ते, तद्वदित्यर्थः। **विरक्ताभिरिव** = वैराग्यवतीभिरिव, क्वचित्कस्मिंश्चित्—न बद्धः=सज्जितः प्रणयः प्रश्रयः=प्रीति-प्रार्थना याभिस्ताभिः। 'प्रश्रयप्रणयौ समौ'—इत्यमरः। **श्यामाभिरिव** = त्रियामाभिरिव, अप्रसूताङ्गनाभिरिव वा, अपहृतानि = कृतापहाराणि **लोकानां** जनानां=**लोचनानि**=नयनानि-याभिस्ताभिः, (निशासु लोचनापहारकत्वमन्धकारवत्तया, गणिकासु च कृत्रिममण्डनवत्तया इत्यर्थः)। **सत्यो**=रसवाहिन्यो याः कवितास्ताभिरिव, प्रशस्ताः=प्रशंसनीयाः, याः अनेका बहवः घटनाः=रचनाः, ताभिरभ्यर्हिताभिः=आदरणीयाभिः। उभयत्र समानम्। **आख्यातानां**=क्रियापदानाम् या परम्परा=रूपावलिः; 'पठति' 'पठसि' 'पठामि' इत्यादिस्ताभिरिव अनेकैः बहुभिः, पुरुषैः प्रथम-मध्यमोत्तमैः सः, त्वम्, अहम्, इत्यादिभिः पदैरर्थैश्च यः प्राचारः सम्बन्धस्तेन योग्याभिः=उचिताभिः। **जातिभिरिव**=गोत्व-घटत्व-पटत्वादिभिः सामान्यैरिव, एकस्यां व्यक्तौ वृत्तिर्वर्त्तनं,

अनवद्याभिः, सुभगाभिः, सुकेशाभिः, रतिलालसाभिः, सुजङ्घाभिः, सुबाहुभिः, सुवपुर्भिः, सुरसाभिः, सुसौरभाभिः, सुमुखाभिः, कुसुममिश्रकेशीभिः, विलाससहजन्यां, जितचित्रलेखां, तर्जितपुण्डरीकां, जनहृदयप्रम्लोचां, –दृष्टिं दधानाभिर्जितहेमाङ्गाभिः, सूनृतसरस्वतीमण्डितवदनाभिः, श्रीजित-

---

स्थितिरिति यावत्; तस्य भावः एकवृत्तित्वम् एकव्यक्तिस्थितिवत्त्वं तेन—रहिताभिः=हीनाभिः। एकव्यक्तिवृत्तित्वस्य जातिबाधकत्वात्—आकाशे नाऽऽकाशत्वं जातिर्वर्त्तते, अनुगत-प्रतीतेरभावात्। अनुगतावयव-सन्निवेशस्य जातिसाधकत्वात्। अतो गगनत्वमखण्डोपाधिः। वारमुख्यासु च एकस्मात्पुरुषाद् वृत्तिर्जीविका तद्वत्त्वरहितं प्रसिद्धमेव। या च वसन्तसेनेव–एकानुरक्ता तस्यां वारमुख्यात्वं बाधितमेव। तस्यां वारस्त्रीत्वाभावात्। तद्वत्ताबुद्धिं प्रति तदभाववत्ताबुद्धेः प्रतिबन्धकत्वात्। एकानुरक्तत्वज्ञानमनेकानुरक्तत्वज्ञानस्य बाधकम्। एवं वारमुख्या—उत्प्रेक्षयित्वा शुद्धविशेषणैर्विशिनष्टि—अनवद्याभिरित्यादिभिः अगर्हिताभिः, सुभगा..रित्यारभ्य-सुमुखाभिरित्यन्तानि बहुव्रीहिसमासवन्ति विशेषणानि स्फुटानि। स्वाङ्गाच्चोपसर्जनादसंयोगोपधादित्यस्य वैकल्पिकतया नादन्तेषु ङीप्। अतिशयिता लालसा यासान्ताः, ताभिः। लालसा नाम=अतिधनेच्छा तत्रापि अतिविशेषणदानेन लालसायाः पराकाष्ठा सूचिता। "कामोऽभिलाषस्तर्षश्च सोत्यर्थं लालसा द्वयोः" इत्यमरः। कुसुमैः=प्रसूनैः मिश्राः संपृक्ताः केशाः कुन्तलाः-यासान्ताः-ताभिः। अथवा कुसुमैः=पुष्पैरुपलक्षिताभिरतो मिश्रकेशीरूपाभिः। "घृताची, मेनका, रम्भा, हरिणी च तिलोत्तमा। प्रियंवदा मुञ्जकेशी सप्तैता देवनायिका" इत्यमरप्रक्षेपः। उर्वशी, सहजन्या, चित्रलेखा, पुण्डरीका, प्रम्लोचा, पूर्वचित्ति—प्रभृतयोऽपि बहवः पुराणेषु ब्राह्मणेषु च दृश्यन्ते। अथासां दृष्टिं विशिनष्टि—विलासेत्यादिना। विलासः=विलसनं सहजन्यः सोदर्य्यो यस्यास्तासाम्। विलासेन=क्रीडया सहजन्यारूपां, ("विलासो हावभेदे स्याल्लीलायामपि पुंस्ययम्" इति अमरटीका) जितस्तुच्छीकृतश्चित्रलेखो, भित्तिलिखित-चित्रदृष्टि-सौन्दर्य्यमित्यर्थः"—यया ताम्। अथवा—जिता चित्रलेखा यया ताम्। तर्जितं भर्त्सितं, पुण्डरीकं सिताम्भोजं-यया ताम्; तर्ज्जिता पुण्डरीका इति वा। जनानां हृदयानि=चित्तानि जनहृदयानि, प्रम्लोचति=मुष्णातीति प्रम्लोचा, (पचाद्यचि टाप्) पुनः षष्ठीसमासः, जनहृदयानां प्रम्लोचा=मोषिका तां जनमनोहरामित्यर्थः। युवहृदय—इतिपाठस्तूचितः। पूर्वोक्तविशेषणविशिष्टां दृष्टिं दृशं दधानाभिः=धारयन्तीभिः। पुनः स्वतन्त्रं विशिनष्टि

कमलालयाभिः, तिरस्कृतरम्भां, क्रतुस्थलायासप्राप्याम्-ऊरुतटीं बिभ्रतीभिर्वा-रमुख्याभिरध्युषितमनेकाप्सरोविशेषबाहुल्येन दिवमप्युपाहसत् ॥ ४ ॥

यत्र स्फटिकभवनांशुमण्डलेषु क्षीरोदान्तरालगत इव, नीलमणिमयूखान्तरेषु स्वर्भानुमुखकन्दरान्तरित इव, माणिक्यमरीचिमालासु सूर्य्यमण्ड-

---

**जितानि** चम्पकगौरवर्णतया हेम्नः सुवर्णस्याऽङ्गान्यवयवा याभिस्ताभिः। **जिता**—हेमाङ्गानामिका देवनायिका याभिस्ताभिरिति वार्थः। **सूनृतया**=सत्यप्रियया, **सरस्वत्या**=वाण्या, मण्डितानि=भूषितानि, वदनानि=मुखानि, यासान्ताभिः। सूनृता या सरस्वती वाग्देवी, तद्वन्मडित-वदनाभिर्वा। **श्रिया**=शोभया जिताऽधोभाविता, **कमलालया**=हरिप्रिया याभिः। **तिरस्कृता**=निर्जिता रम्भा=कदली देवनायिका च यया ताम्। **क्रतुस्थलायासप्राप्यां**-क्रतोर्यज्ञस्य स्थले मण्डपे, यः आयासः क्रियाकलापसम्पादनात्मकः प्रयासः परिश्रमः, तत्साध्या पूर्वरूप इति परमार्थः। तेन प्राप्यां लभ्यां, क्रतुस्थलयाऽपि वेद-प्रसिद्धया देवनायिकया आयासेन प्रयासेन लभ्यां, दुर्लभामित्यर्थः। **ऊरुतटीं**=सक्थितटीम्। बिभ्रतीभिर्धारयन्तीभिः वारे गणिकासमूहे मुखमिव मुख्याभिः प्रधानाभिः लोकाद्दृतरूपाजीवाभिरित्यर्थः। "वारस्त्री गणिका वेश्या रूपाजीवाथ सा जनैः। सत्कृता वारमुख्या" स्यादित्यमरः। अध्युषितमधिष्ठितम्, अतोऽनेकाप्सरसां विशेषो भेदः तस्य बाहुल्यम्=असङ्ख्येयत्वं तेन हेतुना दिवं स्वर्गमपि, उपाहसत्=अकखत्॥ दिवि-"पुञ्जिकस्थला, क्रतुस्थला, मेनका, सहजन्या, प्रम्लोचन्ती, अनुम्लोचन्ती, विश्वाची, घृताची, उर्वशी, पूर्वचित्तिः"—चेति युग्मपञ्चकस्यैव यजुषि १५-१५-१९ परिगणितत्वेन परिमिता अप्सरसः। पुष्पपुरे तु असङ्ख्या इत्यर्थः। तदेव हसनबीजम्। अस्मिन् गद्ये श्लेषानुप्राणिता—उत्प्रेक्षालङ्कृतिः। सा च काव्यलिङ्गोत्थापिका। काव्यलिङ्गञ्च व्यतिरेकं व्यनक्ति 'स्वर्गादपि पुष्पपुरं प्रशस्ततम'मिति ॥ ४ ॥

स्वतन्त्रचमत्कारवत्तया कर्तृत्वेन विशिष्य पुष्पपुरं, पुनश्चमत्काराधारवत्तया विशिनष्टि—**यत्रेति**। यस्मिन्निति यत्र, सप्तम्यास्त्रल्। यस्मिन्पुष्पपुरे-इत्यर्थः। **निशासु चन्द्रमा व्यलसदिति सम्बन्धः**। क इव व्यलसदित्यपेक्षायामाह—**स्फटिकेत्यादिना**—पञ्चोत्प्रेक्षणानि। स्फटिक-मणिमय-सदन-किरणजालेषु दुग्धसागरोदरस्थित इव व्यलसत्। स्फटिकमणेः शुक्लत्वात्तन्मयभवन-क्षीरोदयोः साधर्म्यम्। अंशुमण्डलस्य क्षीरस्य च साधर्म्यम्। नीलमणेः ये मयूखाः किरणास्तेषामन्तरेषु गर्भेषु स्वर्भानोः=राहोः वदनदरीगत इव **माणिक्यमरीचि-मालाः**

लान्तर्गत इव, स्वच्छमणिकुट्टिमेषु कृतपरपुरप्रवेश इव, प्रासादारूढकामिनी-वदनसंवलनेन कृतकायव्यूह इव, निशासु चन्द्रमा व्यलसत् ॥ ५ ॥

यत्र च पर्यन्तरत्नकुट्टिमेषु भानुमतः प्रतिबिम्बसहस्रमवलोक्य तदन्य-तमस्यापि निश्यवस्थानध्रौव्यनिश्चयान्निश्चिन्ततां संतेनुर्विमुग्धाः केलिदीर्घि-काचक्रवाकयुवतयः ॥ ६ ॥

---

सु=पद्मराग-किरण-जालेषु सूर्यमण्डलान्तर्गत-इव रवि-मण्डल-प्रविष्ट-इव, अ-मावास्यायामिति—भावः । स्वच्छ-मणि-कुट्टिमेषु = प्रसन्न-रत्न-खचित-भूमिषु, कृतपरपुर-प्रवेश-इव—जनितपरनगरप्रवेश-इव । प्रासादेति । प्रासादे = राजभवने आरूढाः कृतारोहणा याः—कामिन्यो विलासिन्यस्तासां वदनेषु=मुखेषु संवलनेन= संचलनेन, प्रतिबिम्बनेनेत्यर्थः, कृतो जनितः कायस्य व्यूहः समूहो येन स इव, निशासु निशीथिनीषु चन्द्रमाश्चन्द्रः व्यलसत्=व्यराजत् । अत्र चन्द्रमसो नाना-दशाविशिष्टतयोत्प्रेक्षणादधिकचमत्कारजनकता ऽलङ्कारस्य ॥ ५ ॥

चन्द्रद्वारा पुष्पपुरं विशिष्य सूर्यद्वारा विशिनष्टि-यत्र चेति । यत्र च पुष्पपुरे, केलिदीर्घिकाचक्रवाकयुवतयः, निश्चिन्ततां सन्तेनुरित्यन्वयार्थः । पर्यन्ते 'ये' रत्नानाम्=मणीनां कुट्टिमाः निबद्धाभूमयस्तेषु । "पर्यन्तभूः परिसरः" "कुट्टिमोऽस्त्री निबद्धाभूरि"त्युभयत्रामरः । भानवः किरणा विद्यन्ते यस्य स भानुमान्—तस्य—दिवाकरस्य, प्रतिबिम्बानां=सङ्क्रान्तमूर्त्तीनां सहस्रं=दशशतम्, अवलोक्य=दृष्ट्वा सहस्रमिति नावधारणं सहस्रश-इत्यर्थः । तेषां मध्येऽन्यतमस्याऽपि, एकस्यापि, निशि रात्रौ अवस्थानस्याऽवस्थितेः, यत् ध्रौव्यं = स्थैर्यं तस्य निश्चया-न्निर्णयात् सूर्यास्तचिन्ताराहित्याहित्यर्थः । विशेषेण मुग्धा विमुग्धा=नवयौवना इत्यर्थः केलेः क्रीडाया दीर्घिकायां=वाप्यां या चक्रवाकानां=रथाङ्गनामभाजां पक्षिणां, युवतयस्तरुण्यः ताः कर्त्र्यः, निश्चिन्ततां चिन्ताराहित्यं सन्तेनुः विस्तारयामासुः । अनेकभानुमति पुष्पपुरे सूर्य्यास्ताभावेन रात्रिजन्यवियोगकथां न चक्रुरित्यर्थः ।

वाक्यार्थहेतुकञ्चात्र काव्यलिङ्गमलङ्कृतिः ।<br>
चमत्कारः पुरस्याऽपि यत्र सूर्यसहस्रकम् ॥<br>
पुर-वर्णनकुसुममिदं नगराधिष्ठातृदेवेभ्यः ।<br>
श्रीपरमेश्वरतुष्ट्यै समर्पितं द्वारसंशुद्ध्या ॥ ६ ॥

तत्र चान्तराश्रिताऽनेकभूभृत्सहस्रविपक्षबलसागराचमनकुम्भसम्भवायमानदोःस्तम्भः, वैतानिकवीतिहोत्रनिर्गतधूमवितानवितन्यमानवितानकृताऽऽगगनमण्डपः, श्रवणाभिमुखप्रवणायमानकोदण्डमण्डलनिःसरन्मार्गणखण्डितद्विषदनीकनिर्गलत्कीलालधारासमास्वादनोन्मत्तभूरितरभूरिमायमुखकु-

---

यस्यां प्राच्यां दिशि, मगधेषु पूर्वोक्तविशेषणविशिष्टं पुष्पपुरमासीत्, यत्र पुष्पपुरे नानावस्थाविशिष्टचन्द्रमा व्यलसत्, यत्र च सूर्यबिम्बबाहुल्येन निशाऽऽगमशङ्कापि नासीत् तस्यां दिशि तत्र पुष्पपुरे कः खलु विशिष्टः पुरुषः, यः प्रकृताया मन्दारमञ्जर्या नेतृजनक—इत्याकाङ्क्षायामाह—**तत्र चेति**। तस्मिन् पुष्पपुरे च, अन्तः=अन्तरङ्गतया आश्रिताः=शरणागताः ये भूभृतो=राजानः—तेषां—यत्—सहस्रम्=असङ्ख्यं तस्य यो विपक्षबलसागरः=शत्रुपक्ष-सैन्यसागरः तत्कर्मकं यदाचमनं=प्रसृतिमात्रजलपानं तेन कारणेन कुम्भसम्भवायमानौ अगस्त्य-इवाचरन्तौ दोःस्तम्भौ भुजस्तम्भौ यस्य, "शरणागतरक्षक" इत्यर्थः प्रथमविशेषणस्य। वैतानिकः=याज्ञिकः, यः वीतिहोत्रो=धनञ्जयस्तस्मान्निर्गतो यो धूम-वितानो धूमविस्तारः, वह्निजन्यत्वे सति कज्जलजनकत्वं तेन वितन्यमानो विस्तीर्यमाणो यो वितानः=उल्लोचः, तेन करणभूतेन, कृतो जनितः—आगगनं=गगनपर्य्यन्तं मण्डपो=जनाश्रयो येन सः। "वितानो यज्ञ उल्लोचे विस्तारे पुंनपुंसकम्। क्लीबं वृत्तविशेषे स्यात्त्रिलिङ्गो मन्दतुच्छयोः" इति मेदिनी। अनेन विशेषणेन धार्मिकत्वं सूच्यते। श्रवणाभिमुखं=कर्णाभिमुखं ("लक्षणेनाऽभिप्रती आभिमुख्ये" इत्यव्ययीभावः) **प्रवणायमानान्नम्यमानात्कोदण्डमण्डलाच्चापमण्डलान्निस्सरद्भिः**=निर्गच्छद्भिर्मार्गणैर्बाणैः खण्डितेभ्यश्छिन्नेभ्यो द्विषदनीकेभ्यः शत्रुसैन्येभ्यो **निर्गलतो** निःसरतः कीलालस्य रुधिरस्य "कीलालं रुधिरे जले" इत्यमरः, **धारायाः** प्रवाहस्य **समास्वादनेन**=पानेन, **उन्मत्ताः** प्रमत्ताः **भूरितरा** बहुतरा, ये—भूरिमायाः गोमायवः शृगाला इत्यर्थः "स्त्रियां शिवा भूरिमायगोमायुमृगधूर्त्तकाः" इत्यमरः। तेषां मुखकुहरेभ्यस्तुण्डविवरेभ्यो निःसरतो निर्गच्छतः **कृशानोः**=अग्नेः **कीलावलिभिः**=ज्वालामालाभिः **नीराजिताः** कृतनीराजनाः **प्रविदारणाङ्गणस्य**=प्रधनाङ्गणस्य दशदिशां स्वामिनो देवता इन्द्रादयो येन सः। अनेन विशेषणेन महावीरत्वं सूचितम्। "जन्यमायोधनं युद्धं प्रधनं **प्रविदारणम्**"—इत्यमरः। "अग्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम्—" इत्यमरः। **पृथुरिव**=वैन्य इव आदिराज इवेत्यर्थः। किं सादृश्यमादिराज-राजशेखरयोरित्याह—**भूभृदिति**। भूभृतां=राज्ञां, पृथुपक्षे-भूभृतां=पर्वतानां समुत्सारणेन चूर्णनेन विजयेन च समी-

हरनिस्सरत्कृशानुकीलावलिनीराजितप्रविदारणाङ्गणदशदिग्देवतः, पृथुरिव भूभृत्समुत्सारणसमीकृतसमस्तमहीमण्डलः, युधिष्ठिर इव परलोकगमितशल्यः, भीम इव हतदुःशासनः, अर्जुन इव ध्वस्तरिपुसुशर्मा, नकुल इव जनितशतानीकः, सहदेव इव रक्षितसुरभीकः, भीष्म इव निपातितोग्रायुधः, कंस इव निरुद्धोग्रसेनः, नल इव पूजितवीरसेनः, वसन्तसमय

कृतं समस्तं सम्पूर्णं भूमण्डलं = भूवलयं येन सः । "चूर्णयन्स्वधनुष्कोट्या गिरिकूटानि राजराट् । भूमण्डलमिदं वैन्यः प्रायश्चक्रे समं विभुः" भा. च. स्कं. अ. १८ श्लो० २९ । युधिष्ठिर-इव=प्रथमपाण्डव इव, परलोकं = लोकान्तरं गमितः प्रापितः शल्यः=कौरवान्तिमसेनापतिर्येन, प्रकृते-परलोकेषु=शत्रुलोकेषु गमितं= प्रेषितं, शल्यं = दुःखं येन सः । शत्रुहन्तेत्यर्थः । भीम-इव = द्वितीयपाण्डव इव हतः = नाशितः, दुश्शासनो दुर्योधनानुजो येन स = भीमः । दुष्टं लोकधर्मशास्त्रविरुद्धं शासनं प्रजानियन्त्रणं येषान्ते दुःशासनाः कुनृपाः ते हता येन सः । अर्जुन इव=मध्यम पाण्डव इव, ध्वस्तो नाशितो रिपुः शत्रुः सुशर्मा महाभारतप्रसिद्धो नृपतिर्येन स इव, ध्वस्तं रिपूणां सुशर्म = सुखं येन सः । 'शर्मशातसुखानि च' इत्यमरः । नकुल इव चतुर्थपाण्डव इव जनित उत्पादितः शतानीकनामा सुतो येन स इव, जनितानि शतम् अनीकानि = सैन्यानि येन सः । सहदेव इव=पञ्चमपाण्डव इव रक्षिता सुरभयो गावो येन स इव, रक्षिता = अवरुद्धा सुराणां दिनानां भीः = भयं येन सः । 'शेषाद्विभाषा' इति—कप्-प्रत्ययः । भीष्म इव=गाङ्गेय इव निपातितं=संसितम्, उग्रं भीममायुधं प्रहरणं, सुदर्शनमित्यर्थः । 'रौद्रं तूग्र'मित्यमरः । उग्रस्य शिवस्यायुधमिति वा । कथा महाभारते द्रष्टव्या । प्रकृते—निपातितानि, उग्राणां रिपूणामायुधानि येन सः । कंस इव= कृष्णमातुल इव निरुद्धोऽवरुद्धः, कारागारे इत्यर्थः, उग्रसेनो भोजराजः येन स इव, निरुद्धा=आवृता, उग्रा भीमा सेना येन सः । नल इव=दमयन्तीपतिरिव पूजितः = सेवितो वीरसेननामा स्वपिता येन स इव, पूजिता = दानमानाभ्यामादृता सेना = पृतना येन सः । वसन्तसमय इव = चैत्रवैशाखद्वयात्मकसमय इव "मधुश्च माधवश्च वासन्तिकावृतू" इति श्रुतेः ; स्फुरन् सञ्ज्वलन् विकसन्नित्यर्थः, अतिसौरभोऽत्यन्तसुगन्धिः, प्रभावः प्रकृष्टभवनं प्रादुर्भावो यस्य स इव, स्फुरन् = प्रकाशमानो ऽतिसौरभोऽतिमनोज्ञः प्रभावः प्रतापो यस्य, 'स प्रभावः प्रतापश्च, यत्तेजः कोषदण्डयो'रित्यमरः । वसन्तपक्षे—'नामैकदेशे नामग्रहणम्'— इति न्यायेन अतिशब्देन 'अतिमुक्त'ग्रहणे विकसितवासन्ती सौरभप्रभाव इत्यर्थः । 'अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवीलते'त्यमरः । वसति सदा सर्वत्र सूक्ष्मतया

इव स्फुरदतिसौरभप्रभावः, कामिनीकटाक्ष इव तिरस्कृतकर्णः, महावराह इव हतद्विषद्धिरण्याक्षः, समन्तभद्र इव जितमनोभूः, तालकेतन इव तीक्ष्ण-

---

इति वसन्तः, वसतेरौणादिके 'झचि' 'झोन्तः'। समेति=सङ्गच्छते सूर्यपरिस्पन्दैरिति समयः पचाद्यच्, ततः कर्मधारयसमासः। अथवा षष्ठीसमासः—वसन्तस्य—सम्पत् सिद्धान्तो, नियमोऽवसर आचारो वा समय-शब्दार्थः। सुरभेरपत्यं पुमान् सौरभो वृषभः, स्फुरन् प्रदीप्तोऽतिशयितो यो वृषभस्तस्य प्रभाव इव। प्रभावः पराक्रमो यस्येति वा। 'वृषभो न भीमः' इत्यत्र श्रुतौ 'न' शब्दस्य इवार्थकतया वृषभस्येवोपमानत्वेन प्रसिद्धत्वात्। अतिशयितः कामोऽस्त्यस्याः **कामिनी**, कटं गण्डस्थलमक्ष्णोति व्याप्नोति **कटाक्षो**ऽपाङ्गदर्शनं, कामिनीकर्तृकापाङ्गदर्शनमिव, तिरस्तिर्यक्कृतः कर्णः शब्दग्रहो येन, कटाक्षस्य तिर्यक्प्रसारित्वेन तिरस्कृतकर्णत्वं, राजशेखरस्य तु दानित्वेन पराक्रमशालित्वेन च तिरस्कृतकर्णत्वं, कर्णोऽत्र महाभारतप्रसिद्धः सूर्यपुत्रः। पूर्वत्र तु—"कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः"—इत्यमरप्रसिद्धः। **महांश्चासौ** वराह=आदिवराहः स इव, कथमित्याकाङ्क्षायां साधर्म्यमाह हतेत्यादि—हतो नाशितो द्विषन् परिपन्थी हिरण्याक्षो दितिसुतो येन महावराहेण स इव, हतो नाशितो द्विषत्कर्तृको हिरण्यकर्मकोऽक्षो व्यवहारो येन सः राजशेखरः। नाशितशत्रुसुवर्णव्यवहारत्वेन, शत्रूणां प्रजाचूषकत्वं, नेतुस्तादृशेषु भृशदण्डकत्वं सूच्यते। हत इत्यादौ आदिवराहपक्षे बहुव्रीहिसमासः। उत्तरत्र तु हिरण्यस्य—अक्ष इति—कृद्योगे, कर्मषष्ठ्या समासः, पुनः द्विषतां हिरण्याक्ष—इति कर्तृषष्ठ्या समासस्ततो हत इत्यनेन बहुव्रीहिः। अत्र—'इयत्यग्रे भूमिरासीत्तामादिवराह उज्जहार' इति श्रुतिः, 'तेनैव तु द्विजश्रेष्ठ! हरिणा क्रोडरूपिणा। आदिदैत्यो हिरण्याक्षो, हत इत्यनुशुश्रुम' इति पुराणम्। 'स्वराष्ट्रे न्यायदण्डः स्याद् भृशदण्डश्च शत्रुषु' इति मनुः सानुकूलम्। 'अक्षो ज्ञानात्मशकट—व्यवहारेषु पाशके। रुद्राक्षेन्द्राभयोः सर्पे विभीतकतरावपि। चक्रे कर्षे पुमान्, क्लीबं तुत्थे सौवर्चलेन्द्रिये—' इति मेदिनी। **समन्तभद्र इव**=बुद्धदेव इव जितः स्वाधीनीकृतः पराजित इत्यर्थः, मनोभूः=मनोभवो येनेति समानमुभयत्र। जितेन्द्रिय इत्यर्थः। 'सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः। समन्तभद्रो भगवानि'त्यमरः। **तालः** केतनं पताका यस्य सः; 'तालाङ्को मुसली हली'-त्यमरः। तीक्ष्णास्तिग्मा भानवः किरणा यस्य स तपनः तस्य तनया कालिन्दी तस्या आकर्षकः हलाग्रेण स्वसमीपप्रापकः ( कथा भा० द० स्कं० अ० ६५ श्लो० २३–३१ द्रष्टव्या ) स इव, राजशेखरः, तीक्ष्णभानोः सूर्यस्य तनयः शनैश्चरस्तथाऽऽकर्षकश्शनैश्चरस्तोत्रोक्तरीत्या तत्प्रसादकः, भक्त्या देवाऽऽकर्षक इत्यर्थः। अथवा

भानुतनयाकर्षकः, वत्सेश्वर इव खण्डितचण्डमहासेनः, इन्द्रद्युम्न इव भीरु-भावभावितबुधः, हैहयाधिप इव भास्वदावर्जितशराग्निदग्धभूतलः, नृग इव

---

नदीमातृकतासिद्ध्यै कुल्या द्वारा यमुनाया एवाकर्षकः। अथवा तीक्ष्णास्तीव्रफल-दातारः भानोः वह्नेर्ये तनया एकतः, द्वितः त्रितश्चेति श्रुतिप्रसिद्धाः, तेषामाकर्षको यजनेन वशीकारकः। वस्तुतस्तु—तीक्ष्णास्तीव्रा भाः प्रतिभा येषान्ते तीक्ष्णभाः विश्वपावत्। तथा नुतः स्तुतो नयो नीतिर्येषान्ते—नुतनयाः ते च, ते, तेषां=तीव्रबुद्धिनीति—निपुणानां विदुषामाकर्षकः—इतस्तत आहूय स्वसमीपस्थापकः। अथवा तीक्ष्णभा—नुत—नयानां सचिवादीनामाकर्ष एवाऽऽकर्षको निकषोपलः परीक्षक इति भावः। ऊहनीयः प्राकरणिकः कोषादर्थः परीक्षकैः। 'नाऽऽकर्षो द्यूत इन्द्रिये' 'पाशके शारिफलके' 'कोदण्डाभ्यासवस्तुनि' 'आकर्षणेऽपि पुंसि स्याद्'—इति मेदिनी। 'भानू रश्मि—दिवाकरौ'—नानार्थेऽमरः। **खण्डितो** ध्वस्तश्चण्डमहा-सेनस्तन्नामकः स्वप्रतिपक्षो येन **स वत्सेश्वरो** वत्सराजः स इव, खण्डिता नाशिता चण्डाऽत्यन्तकोपना महती बृहती सेना चमूः ( शात्रवीत्यर्थः ) येन सः राजशेखरः। **भीरुभावेन**=विनयेन भाविताः संभाविता बुधाः कोविदा देवाश्च येन इति समानमुभयत्र, अतएव इन्द्रद्युम्नः पाण्ड्यो द्रविडेश्वरः स इव। "स वै पूर्वमभूद्राजा पाण्ड्यो द्रविडसत्तमः—इन्द्रद्युम्न इति ख्यातो विष्णुव्रतपरायणः।" इतिगजेन्द्रमोक्षणोक्तः, स एवाऽगस्त्यशापेन गजेन्द्रो जातः। **हैहयाधिपो** माहिष्मतीपतिः सहस्रार्जुनः कार्त्तवीर्यः, सूर्य्यादाराधनतुष्टादावर्जितानां लब्धानां शराणां बाणानामग्निना वह्निना दग्धभूतलः स्वशत्रुविजयाय, स इव। भास्वन्तो दीप्तिमन्तः आवर्जिता वशीकृता ये शराग्नयः शरजन्याग्नयः तैः दग्धा, भूतान् देवयोनिविशेषान् लान्ति ते भूतला=राक्षसा येनेति प्रकृते। माहिष्मती च नगरी नर्मदावेष्टिताऽधुना माण्डलेति प्रसिद्धाऽस्ति। **नृगः** खलु वैवस्वतसुताद्भिन्नो महादानी गोदानैकव्यत्ययाद्विवदमानयोर्विप्रयोः कोपात् कृकलासतां गतः सन् दामोदरचरणसंयोगात् कृकलासतां विहाय दिव्यरूपधरः श्रीकृष्णमुवाच—"यावत्यः सिकताभूमेर्यावत्यो दिवि तारकाः। यावत्यो वर्ष-धाराश्च, तावतीरददं स्म गाः॥ नृगो नाम नरेन्द्रोऽहमिक्ष्वाकुतनयः प्रभो। दानि-ष्वाख्यायमानेषु यदि ते कर्णमस्पृशम्' इति भा० द० स्कं० अ० ६४। राजशेखरोऽपि विष्टरे वृक्षराजे श्रवः कीर्त्तिर्यस्य, 'अश्वत्थः सर्ववृक्षाणामि'त्युक्तेः, तस्य विष्णोः=चरणयोः प्रथमध्येययोः पादारविन्दयोर्योगः=चिन्तनेन चित्तबन्धः, तेन हेतुना विमुक्तं त्यक्तप्रायं, सरटत्वं संसरणं पुनः संसाराऽऽगमनं यस्य, नारायणध्यानवि-मुक्तबन्धन इत्यर्थः। 'वृक्षासनयोर्विष्टरः'। 'वैकुण्ठो विष्टरश्रवाः'। सरतीति सरटः

विष्टरश्रवश्चरणयोगविमुक्तसरटत्वः, शन्तनुरिव भागीरथीजनितवसुः, अम्ब-रीष इव मुञ्जकेशिप्रसादासादितसुदर्शनः, शनैश्चर इव चरणतर्जितविपक्ष-

सृगताविल्यस्मात्—'शकादिभ्योऽटन्' इत्यौणादिकोऽटन् प्रत्ययः। 'सरटः कृक-लासः स्या'दित्यमरः। शन्तनोतीति शन्तनुः पौरवो राजा तपस्तुष्टायां भागी-रथ्याम् अवतारभूतायां वसोरवतारभूतं देवव्रतं सुतं जनयामासेति प्रसिद्धं महाभा-रतादौ। राजशेखरो राजा—भागो भाग्यमस्यास्तीति, रथाः प्रशस्ता बहवः सन्तीति, प्रशस्तभाग्यवान् प्रशस्तसेनाङ्गभूतरथादि-युक्तः, अतएव जनितं वसु=धनं येन सः। अथवा भागीरथ्या भक्तितुष्ट्या जनितमुत्पादितं वसु=औषधं भवसाग-रस्य यस्मै स भागीरथीजनितवसुः। अथवा भागीरथ्यामुत्पादितदानरत्नः। पुष्पपुरादुत्तरभागस्थिताया भागीरथ्याः पुलिने दानादेरौचित्यात्। 'वसु'र्ना' देवभेदाऽग्नि-भा-योक्त्र-बकराजसु। क्लीबं वृद्धयौषधे श्याले, रै-रत्ने मधुरे त्रिषु' इति मेदिनी। 'तस्मादेतत्त्रयं शिक्षेद्दमं, दानं, दयामिति' श्रुतेर्दानं धर्मरत्नम्, 'जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते' इत्युक्तेः। अम्बरीषो=महाभागः सार्व-भौमः सूर्यवंश्यो वासुदेवपरमभक्तो ज्ञानी प्रसिद्धः—'तस्मा अदाद्धरिश्चक्रं प्रत्यनी-कभयावहम्' इति (भा० ९ स्कन्धे ४ अ०) स 'मुञ्जकेशिप्रसादासादितसु-दर्शनः=विष्णुप्रसादलब्धसुदर्शनचक्रः। अत्र प्रकरणात् प्रसिद्धार्थकशब्दसमभि-व्याहाराच्च मुञ्जकेशिपदवाच्यो हरिः। 'ग्रन्थस्य ग्रन्थान्तरं टीके' ति न्यायेन—"भारतनिर्माणेन व्यञ्जितनिजमुञ्जकेशिभावाय" इत्यत्रापि स एव; "ततः सप्त-दशे जातः सत्यवत्यां पराशरात्-" इत्युक्तेः (भा० प्र० स्क० अ० ३)। राजशेख-रोऽपि—मुञ्जश्च केशी च मुञ्जकेशिनौ प्रधानसेनापती सहायौ वा तयोः प्रसन्नतया, आसमन्तात् सादितः सुदर्शनस्तदाख्यः शत्रुर्यस्य। मुञ्जकेशिनाम्नः कस्यचिद्गन्ध-र्वस्याऽऽराधनतुष्टस्य प्रसादेन लब्धसुरूपो वा, "रूपाऽभिकामो गन्धर्वान् यजेत"-इत्युक्तेः (भा० द्वि० स्क० अ० ३)। मुञ्जाः केशा इव सन्त्यस्य मुञ्जकेशि विपिनं तस्य प्रसादः प्रकृष्टप्राप्तिः तेनाऽऽसादिता सुदर्शना=औषधिर्येन, आसादितः सुदर्शनो जम्बूवृक्षो वा, सद्यः सन्धानकारकत्वात् समरोपयोगी। आराधितनारायण-प्रसाद प्राप्तसुमेरुस्तत्रस्थजम्बूपादपश्च येन, सुदर्शनं नन्दनं वा येनेति। 'सुदर्शनो हरेश्चक्रे मेरुजम्बुद्रुमे पुमान्। न द्वयोः शक्रनगरे प्राज्ञौषधिभिदोः स्त्रियाम्'। शनैः धीरं चरति त्रिंशता वर्षगणेन, द्वादशराशिचक्रमिति—शनैश्चरो मन्दः सूर्यसुतः—स इव चरणेन पादपद्मेन तर्जिता भर्त्सिता विपक्षाणां शत्रूणां छाया=कान्तिर्येन, चरणेन पादेन तर्जिता लत्तिता विपक्ष इवाचरन्ती छाया स्वमाता येन तादृशः शनिः। अत्रेयं कथा मार्कण्डेयपुराणे—विश्वकर्मसुता 'संज्ञा' विवस्वतस्तेजोऽसहमाना

च्छायः, किरातदुर्गापूजनविधिरिवानभिज्ञातमन्त्रः, जरासन्ध इव मागध-स्तूयमानः, शिशुपाल इवानर्घदानजनितमन्युः, नारायणनाभिरिव जनित-शतानन्दः, शंकर इव हतारिदर्पकः, गरुड इव कृतद्विजिह्ववैरः, प्रातःकाल इवोदयमानमित्रः, सूर्य इवानुगतदण्डः, वैयाकरण इव संप्रसारितवलरयो-,

---

यमं, यमुनां, वैवस्वतमनुं, प्रसूय तेषां रक्षार्थं स्वस्याः, छायां स्वानुरूपां निरूप्य पत्युः परोक्षं पितृसदनमाससाद । तदनु सावर्णिः, 'तपती'=संवरणभार्या, शनैश्चरश्चेति सन्तानत्रयमसूत, छाया । शनैश्चरः स्वजननीमपि तां कृत्रिमामेव तर्कयन् पदा ताडयत्सवित्रा पृष्टोऽकथयत्–नेयं मम मातेति। किमिति पृष्टा, भीता यथार्थं पपी-मवोचत् । तत आहूता पितुः सदनात्संज्ञा सवित्रा । अत उक्तं भागवते–८।१३–५–१० "विवस्वतश्च द्वे जाये विश्वकर्मसुते उभे । संज्ञा छाया च राजेन्द्र ये प्राग-भिहिते तव । तृतीयां वडवामेके तासां संज्ञा सुतास्त्रयः । यमो यमी श्राद्धदेवः, छायायाश्च सुतान् शृणु । सावर्णिस्तपती कन्या भार्या संवरणस्य या । शनैश्चरस्तृ-तीयोऽभूदश्विनौ वडवात्मजौ" । **किरातानां**=भिल्लानां यो दुर्गापूजनविधिः स कामरूपादौ प्रसिद्धो बीभत्सो ऽमन्त्रश्च स इव, न अभिज्ञातो मन्त्रो जप्यो गोप्य-श्च कर्त्तव्यनिश्चयो यस्य, अषडक्षीणमन्त्र इत्यर्थः । 'मन्त्रो वेदविशेषे स्याद् गुह्यवा-देऽपि पुंस्ययम्' (मेदिनी)। **जरासन्धो** बृहद्रथसुतः कंसश्वशुरः, मगधापरपर्याय-गयादेशाधीशत्वेन मागधजनस्तूयमानः 'स्वदेशे पूज्यते राजा' इति न्यायेन । पूज्य-मानः स्तुत्य इत्यर्थः, वर्ण्योऽपि मगधाधीशत्वेन मागधैः मगधवासिजनैः नृपत्वेन वैतालिकैश्च स्तूयते—इति स्तूयमानः 'स्तौतेः' कर्मणि शानचि सार्वधातुके यकि, साधुः । **शिशुपालश्चैद्यः** कृष्णद्विट् युधिष्ठिरराजसूयेऽर्घदानाभावेनोत्पन्नकोपः, प्रकृतस्तु नृपः क्रीतवस्तुमूल्यदानाभावेन जनितक्रोधोऽदातरि जने । 'मूल्ये पूजा-विधावर्घ' इत्यमरः, 'मन्युः कोपे क्रतौ युधि' इति चामरः । **नारायणस्य नाभिः** जनितः शतानन्दो रजोमूर्त्तिः पितामहो यया तादृशी, वर्ण्यस्तु—जनिताः शत-मानन्दा येन स्वस्मै परस्मै च तादृशः। 'शतानन्दो रजोमूर्त्तिः सत्यको हंसवाहनः', 'स्यादानन्दथुरानन्द' इति चामरः । **शङ्करश्चन्द्रशेखरः**, हतोऽरिः शत्रुर्दर्पको ऽनङ्गो येन तादृक् । 'कन्दर्पो दर्पकोऽनङ्गः'–'दर्पोऽवलेपोऽवष्टम्भः'–इत्युभयत्रामरः। **गरुडो**=गरुत्मान्, कृतो द्विजिह्वैः सर्पैर्वैरं विरोधो येनैतादृशः । उपमेयस्तु–कृतो भावितो द्विजिह्वैः पिशुनैर्वैरं विद्वेषो येनैवंविधः । **प्रातःकालः**=प्रभातसमयः, उदयमान उद्यन्, मित्रः सूर्यो यस्मिन्नेतादृशः। उपमेयस्तु—उदूर्द्ध्वमुन्नतिमयमानानि प्राप्नुवन्ति मित्राणि सुहृदो यस्यैवम् । 'द्युमणिस्तरणिर्मित्रः' 'अथमित्रं सखा सुहृन्' इति पुंनपुंसकभेदेनामरः । **सरत्याकाश** इति सूर्यः सविता—'राज

रचितगुणवृद्धिः—निपातितसुहृत्स्वान्तध्वान्तः—सुवंशभाक्—संनिष्ठासहितश्च, आलङ्कारिक इव स्फुटीकृतविशेषोक्तिः, साङ्ख्य इवाभ्युपगतसत्कार्यवादः,

सूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याऽव्यथ्या' इतिनिपातनात्साधुः—स सर्वजनसमक्षं गगने सरणकरणेन जगतः प्रेरकः स्वपरिस्पन्देन—अनुगतोऽनुसृतो ज्ञापितश्च जनानां दण्डो घटिकात्मकः कालो येन स्वयं यस्माच्च शास्त्रकारैः क्षणप्रक्रियया तथा सूर्य उपमानभूतः,'उपमेयस्तु—'अदण्ड्यान् दण्डयन् राजा, दण्ड्यांश्चैवातिदण्डयन्। अयशो महदाप्नोती'ति मनुवचनानुसरणादनुगतोऽनुरूपेण ज्ञातः प्रयुक्तश्च दण्डो दमो येन तथा। 'दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति' इति मनुः, 'स समीक्ष्य प्रयुक्तस्तु सर्वा रञ्जयति प्रजा' इति चेति—अनुगतदण्ड एव प्रजापालकः। व्याकरणशास्त्रवेत्ता विद्वान् वैयाकरणः, अध्येता च, स च उप्तम्, गृहीतम्, इष्टम् इत्यादौ वलयान् सम्यक् प्रसारयति—अर्द्धमात्रिकस्थाने मात्रिकान् संप्रसारणसंज्ञकान् उकारऋकारेकारान् करोति, इतिहेतोः संप्रसारितवलरय—इत्युच्यते। 'इग्यणः'संप्रसारण' मित्यनुशासनसूत्रम्। तथा—गङ्गोदकं गङ्गौव इत्यादौ रचित-गुण-वृद्धिः कृतगुणवृद्धिः। तथा 'सुहृद्दुर्हृदौ मित्राऽमित्रयोः' इत्यत्र निपातितो निपातनात्साधितसुहृत्प्रयोगो येन, 'क्षुब्धस्वान्तध्वान्त' ७।२। १८ इत्यत्र स्वान्तध्वान्तयोर्निपातनात्, निपातितसुहृत्स्वान्तध्वान्तविशेषणविशिष्टः। तथा सुपः प्रत्याहारस्य येंऽशाः स्वौजसप्रभृतयस्तान् भजति सेवते-रामः, रामौ, रामा इत्यादौ प्रकृतिप्रत्ययविभागेन प्रतिपादयतीति सुवंशभाक्। तथा—'तौ सत्' 'क्तक्तवतू निष्ठा' इति सत्संज्ञकनिष्ठासंज्ञकप्रत्ययसहितो व्याकृतिज्ञः। श्लेषे बवयोरैक्यम्। राजा तु—सम्यक् प्रसारितः बालस्य सैन्यस्य रयो वेगो येन, तथा—रचिता गुणाः शौर्यादयो वृद्धयः स्वस्य परेषाञ्चोन्नतयो धर्मार्थादीनां येन, तथा निपातितो नाशितः सुहृदां मित्राणां स्वान्तस्य मनसः ध्वान्तं मालिन्यरूपमन्धकारो येन, शिक्षाप्रबन्धेनाऽज्ञानतिमिरनाशक इत्यर्थः। सुन्दरो वंशोऽन्वयो यस्तं भजतीति सुवंशभाक्, तथा सती व्याजरहिता या निष्ठा आस्था, 'गुरुशास्त्रवाक्येषु विश्वासः, तया सहितः समन्वितश्च। अलंकाराननुप्रासोपमादीन् वेत्ति यः स आलङ्कारिकः 'उक्थादित्वाट्ठक्' ठस्येकः, यस्येति च, किति चेति सिद्धः, साहित्यज्ञः, स्फुटीकृता 'सति हेतौ फलाभावे विशेषोक्ति'रिति लक्षणेन व्यक्तीकृता विशेषोक्तिरलंकृतिर्येन तादृशः, तथैव राजा—स्फुटीकृता विशेषोक्तिर्विशेषाज्ञा 'अयमेवं करोतु त्वमेवमित्यादिरूपेण' येनैवंभूतो भवति, व्यक्तीकृतविशेषवचन इत्यर्थः। साङ्ख्यः कापिलः, "असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात्। शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम्" (सां०

प्राभाकर इव संख्यातीतगुणो नित्यवर्णश्च, हिरण्यकशिपुरिव जनितप्रह्लादः, प्रह्लाद इव प्रसूतविरोचनः, विरोचन इव प्रयत्नरक्षितबलिः, बलिरिव प्रकटितबाणः, बाण इव सौभ्रात्रप्राप्तमहासेनः, महासेन इव शक्तिभिन्नभूमीभृत्, भूमीभृदिवोत्तुङ्गनानामणिमयकटकः, कटकप्रदेश इव दन्तावलस्य

---

का० ९ ) कार्यं तैलादि तिलजन्यं, सत् कारणे तिले सूक्ष्मतया सदा वर्त्तमानम्, न तु जन्यम् असतोऽविद्यमानस्य वस्तुनस्तार्किकशिरोमणिभिरपि शिक्षितैः शिल्पिकारिभिरपि जनयितुमशक्यत्वात्सिकताभ्य इव स्नेहः इत्यादि युक्तिभिः, सत्कार्यवादमभ्युपगच्छति सोऽयमभ्युपगतसत्कार्यवादः साङ्ख्यदर्शनवेत्ता स इव, राजापि—अभ्युपगतः स्वीकृतः सत्कार्यस्य प्रशस्तकर्मणो वादः प्रतिपादनं येनैवंरुचिः । प्रभाकरमतानुयायो प्राभाकरो मीमांसकः, सङ्ख्यातीता अनन्ता गुणाः = प्रधानेतरे पदार्थाः पयोदधिघृतादयो यस्येदृक् । राजापि—रामायणोक्तदिशा "नियतात्मा महावीर्यो, द्युतिमान् कान्तिमान् वशी"त्याद्यसङ्ख्यगुणः । मीमांसादर्शने—यागहोमादयो धर्माः स्वर्गादिसाधनतया मुख्या इत्युच्यन्ते, तेषामुपकरणानि घृतादीनि द्रव्याणि अरुणादयो गुणाः प्रयाजानुयाजादयः क्रियाश्च गुणशब्देन व्यवह्रियन्ते, तन्मूलिकेयं परिभाषा गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति । सम्भारास्तु गणयितुं न शक्यन्तेऽननुगतत्वात्, ततश्च संख्यातीतगुणा मीमांसकाः । कापिलनैयायिकादयस्तु परिमितगुणाः । तथा नित्या वर्णाः ककारादयो यस्य मते तथाभूतो नित्यवर्णो मीमांसकः, नृपोऽपि 'चातुर्वर्ण्यञ्च लोकेस्मिन्स्वे स्वे धर्मे नियोक्ष्यति' इति न्यायेन वर्णाश्रमरक्षकतया नित्याः सनातना वर्णा ब्राह्मण-क्षत्रिय-वैश्य-शूद्राः प्रजात्वेन यस्य सः, नित्यरक्षितवर्ण—इत्यर्थः, शाकपार्थिवादिर्वा । अथ कविः कुतुकितया प्रकृतामुपमामालामन्तरा साधारणधर्मेण रशनयति—शोभातिशयजननाय, यथा—हिरण्यकशिपुरादिदैत्यो हिरण्याक्षभ्राता, जनितः उत्पादितः प्रह्लादः कायाधवः सुतो येन, तथा नृपो जनितः प्रह्लादः प्रकृष्ट-सुखं येन सः। पुनः प्रह्लाद इव प्रसूतो विरोचनं नामा सुतो येन सः । पुनः विरोचन इव प्रयत्नेन प्रयासेन रक्षितो बलिरिन्द्रसेनापरपर्यायस्तनयो येन स इव, प्रकटितो जनितो बाणासुरः = पुत्रो येन स इव, सुभ्रात्रोर्भावः सौभ्रात्रं सुभ्रातृभावस्तेन हेतुना प्राप्तो लब्धो महासेनः कार्त्तिकेयो येन तथाभूतो बाणासुरः, शिवानुचरत्वात्, स इव, शक्त्या भिन्नो विदारितो भूमिभृत् क्रौञ्चपर्वतो येन स इव, 'कुमारः क्रौञ्चदारणः' इत्यमरः । भूमीभृत्=पर्वतः—उत्तुङ्गा उन्नता नानाऽनेके मणिमया मणिप्रचुरा कटका नितम्बा यस्येदृशो भवति स इव, 'कटकोऽस्त्री नितम्बोऽद्रे'रित्यमरः । नृपोऽपि जनितो विरोचनो याज्ञिको वह्निररणिमन्थनेन

विगलितमदः, मदप्रवाह इव तर्पितमधुसूदनः, मधुसूदन इवाश्रितनन्दको दिक्षु प्रख्यापितप्रद्युम्नश्च, प्रद्युम्न इव शम्बरासुरविपक्षः, विपक्ष इवाऽसाध्यः, महादोषोप्यदोषः, सदलीकोप्यनलीकः, सालङ्कारोप्यनुपमः, दुर्योधनोप्य-

---

येन, ( य० सं० ६।३ ) प्रयत्नेन रक्षितो बलिर्नृपग्राह्यो भागो येन 'लब्धं रक्षेदवेक्षया' इति मनुवचनात् । प्रकटितो बाणश्शरोऽरातिजयाय येन, सुभ्रातृभावेन लब्धा महती सेना येन, शक्त्या सामर्थ्येन भिन्ना विदारिता = विद्धा, भूमीभृतो राजानो येन, उत्तुङ्गाऽनेके रत्नमया वलया यस्य, 'कटकं वलयोऽस्त्रियाम्' इति अमरः, अथ च–दन्तावलस्य दन्तिनः, कटकप्रदेश इव गण्डस्थलप्रदेश इव विशेषेण गलितः स्रुतः मदो दानजलं यस्य, विशेषेण गलितश्च्युतो रहितो मदश्चित्तविकारो यस्य नृपस्य, मदस्य प्रवाह इव, तर्पिताः सुहितीकृता मधुसूदनाः षट्पदा येन, तर्पितः पूजितो मधुसूदनो हरिर्येन, मधोरसुरस्य सूदनो नाशको वासुदेवः, स इव आश्रितोऽवलम्बितो नन्दकः=स्वखड्गो येन, आश्रितोऽवलम्बितो नन्दनं नन्दः स एव नन्दकः (घञन्तात्स्वार्थे कः) आनन्दो येन, अथ च दिक्षु दशसु ककुप्सु प्रकर्षेण ख्यापितो विज्ञापितः प्रद्युम्नः स्वात्मजो येन तादृशो मधुसूदनः कृष्णः, पार्थिवोऽपि दिक्षु प्रसिद्धीकृतं प्रकृष्टं द्युम्नं तेजो द्रविणञ्च येन तथाभूतः । पुनश्च प्रद्युम्न इव कृष्णात्मज इव शम्बराऽसुरस्य विपक्षो विरुद्धः, 'शम्बरारिर्मनसिज' इत्यमरः, शं सुखं निर्भीकमित्यर्थः, वराः श्रेष्ठा वीरा 'ये'असुराः सुरविरोधिनः—तेषां विपक्षः=प्रतिभटः प्रतिद्वन्द्वी परिपन्थीत्यर्थः, सुपक्षपातित्वान्नृपस्य ।(पर्वतो वह्निमान् , धूमवत्वात्, महानसवत्, इत्यादावनुमानप्रयोगे—पक्ष–परिग्रहे चुरादिः, पक्षयति परिगृह्णाति साध्यमिति पक्षः संदिग्धसाध्यवान् पर्वतगोष्ठादिः, सपक्षो निश्चितसाध्यवान् महानसादिः, विपक्षः साध्याभाववान् ह्रद-तटाक-वापीकूपादिः,-इति प्रथमं मननीयम् ) विपक्ष इव, ह्रदादिरिव नास्ति साध्यो वह्न्यादिर्यस्मिन्स असाध्यः साध्यरहितत्वेन तदभाववान् , जलाशयो जलाधारस्तत्रागाधजलो ह्रदः । राजापि न साधयितुं शक्यः केनापि, नास्ति साध्यः कोऽपि रिपुरवशिष्टः, साधितत्वात्सपत्नमात्रस्येति वा, विपक्ष इवाऽसाध्यो राजशेखरः । ( पुनस्तामेव महामालोपमां विरोधाभासालङ्कृत्या रञ्जयति, मौक्तिकमालामिव विद्रुमैः ) महादोष इति–महान् दोषोऽवद्यं यस्य, नास्ति दोषो दूषणं यस्येति —विरोधो, गुणस्य गुणेन, सदोषत्वनिर्दोषत्वयोर्विरुद्धधर्मयोः सामानाधिकरण्यासंभवात् सर्वत्रैवं प्रतिपादनीयम् । परिहारस्तु—'दोर्दोषा, च भुजो बाहुः–'इतिधनञ्जयकोषात्, महती दोषा बाहुर्यस्य महादोषो महाभुजः, अदोषो निरवद्यः । सदलीको विद्यमानाऽनृतः अनलीकोऽनृतरहितः,–इति विरोधः, परिहारस्तु–अलीकन्त्व-

जनितलक्ष्मणः, सलक्षणोपि विलक्षणः, रामोप्यभग्नोग्रशरासनः, सर्वज्ञोऽपि न भुजङ्गप्रियः, मदनोप्यक्षतशरीरः, अनन्तनामाप्यद्विजिह्वः, धनदोऽप्यकुबेरः, किरीट्यपि कदाप्यलब्धनपुंसकभावः, जिष्णुरपि न गोत्रद्विट्, ज्वल-

नृतेऽप्रिये, सदलीकः शुभललाटः, अनलीकोऽनृतरहितः, अलिकालीकौ भाले । सालंकारः अलङ्कारमात्रसहितः, नास्ति—उपमा उपमालंकारो यस्य, अलङ्कारमात्रसहितस्य, अलङ्कारविशेषरहितत्वेन विरोधः, परिहारस्तु—सालंकारो भूषणभूषितः, नास्ति उपमा—उपमानं यस्य । दुर्योधनो धार्त्तराष्ट्रः, जनितः लक्ष्मणो येन तथातत्सुतस्य लक्ष्मणनामधेयात्, अयन्तु दुःखेन योध्यते शत्रुभिरिति दुर्योधनोऽपि, न जनितो लक्ष्मणो येन तादृशः । सलक्षणोऽपि लक्षणेन शुभसूचकचिह्नेन तिलकादिना सहितोऽपि युक्तोऽपि, विलक्षणो विगतलक्षणः, चिह्नरहित इति विरोधः, विचित्र-इति परिहारः । रामो दाशरथिः, भग्नमुग्रस्य कपर्दिनः शरासनं धनुः सीतास्वयंवरे येन स तादृशः । अयन्तु रामोऽपि न तादृश इति विरोधः, रामोऽभिरामो रमणीयोऽपि न भग्नमुग्रं भीमं शरासनं धनुः यस्येति परीहारः। सर्वं जानाति—( आतोऽनुपसर्गे कः ) सर्वज्ञः कृशानुरेताः शिवो, भुजङ्गाः सर्पाः प्रियास्तस्य तादृशः, अयन्तु सर्वज्ञोपि—भुजङ्गा विटा प्रिया यस्य तादृशो, नास्ति, 'शिवो भुजङ्गभूषणो, नृपो भुजङ्गदूषणः, इति भावः । मदयति मदनः कामः, क्षतं शरीरमस्य क्षतशरीरोऽनङ्गः, अयन्तु मदयति हर्षयति प्रजा इति मदनोऽपि न क्षतशरीरः—इत्यादिषु व्यतिरेको व्यज्यते सर्वत्र विरोधाभासेन । अनन्तनामा शेषनागो द्विजिह्वी जिह्वाद्वयसहितः नागजिह्वाग्रस्य द्विशाखत्वात् । अयन्तु राजा अनन्तानि नामान्यस्यानन्तनामापि न द्विजिह्व—इति विरोधः, द्वे जिह्वे यस्य स द्विजिह्वः पिशुनः, स न भवतीत्यद्विजिह्वः। "मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् । मनस्यन्यद्वचस्यन्यत्कर्मण्यन्यद् दुरात्मनाम्" । धनदः=श्रीदः, कुत्सितं बेरं=शरीरमस्य कुबेरः कुत्सितकलेवरः, कुष्ठवत्वात् पादाङ्गुष्ठस्य । राजा तु—धनं ददातीति ( कः ) धनदोऽपि वित्तदोऽपि न कुत्सितबेरः, अकुबेरः । धनदत्वेन विरोधः, योगरूढ—यौगिकशब्दपरिग्रहेण परिहारः । किरीटी=अर्जुनः, गुप्तवासरक्षणपूर्वककृष्णारक्षार्थं विराटनगरे प्राप्तनपुंसकभाव आसीत् । राजापि किरीटी, परन्तु कदापि कर्हिचिदपि, न लब्धः प्राप्तो नपुंसकभावो येनेति विरोधः । किरीटं मुकुटमस्यास्ति स किरीटी=पट्टाभिषिक्तः, न तु पाण्डव इव नाममात्रेण किरीटी, अतएव कदापि भोगासक्त्यामपि न लब्धः प्राप्तो नपुंसक-भावो मदात्ययो येन तादृशः प्रजापालकस्य महाविभूतितया, धर्माऽविरुद्धकामसेवनाद्, भोगेऽपि रोगभयाऽभावात् ।

नोऽप्यकृष्णवर्त्मा, समवर्त्यप्यरुग्णचरणः, पुष्पदन्तोऽप्यप्रभञ्जनदिगाश्रितः, सार्वभौमोऽप्यनुत्तरदिग्गतः, माल्यवानपि अनालम्बितकीनाशकाष्ठः, इन्द्र-

अर्जुनस्य तु—उर्वशीशापान्नपुंसकत्वप्राप्तिर्हायनमेकम् । जिष्णुर्लेखर्षभः शक्रः, गोत्रान् पर्वतान् द्वेष्टि, राजा तु नेति विरोधः, जयतीति जिष्णुः ( ग्लाजिस्थश्च ग्स्नुः—इति ग्स्नुप्रत्ययस्य गित्वान्न गुणः) जयनशीलोऽपि, गोत्रं कुलं द्वेष्टि—इति गोत्रद्विट् कुलद्वेषी नासीत् । ज्वलनः कृपीटयोनिररण्यं दहन् येन मार्गेण प्रसरति तं कृष्णीकरोति—इति हेतोः स कृष्णवर्त्मा इत्युच्यते, राजापि दीप्तिसाम्याज्ज्वलदः परन्तु न कृष्णं मेचकं वर्त्म मार्गो यस्य सोऽकृष्णवर्त्मा इति विरोधः । ज्वलतीति ज्वलनः, ( जुचङ्क्रम्येत्यादिना ३।४।१५० युच् , युवोरनाकाविति अनादेशः ) तेजस्व्यपि न कृष्णं = कलुषितम् वर्त्म, आचरणमार्गो यस्य सः, अकृष्णवर्त्मा=अदुराचारः, (मत्ता हि नृपा दुराचारवन्तो भवन्ति नाऽयन्तथेति भावः) 'दुराचारे हुताशे च कृष्णवर्त्मा विधुन्तुदे'–इति व्याख्या सुधा। समवर्त्ती=परेतराट्, रुग्णः सरोगः पङ्गुत्वयुक्त—इत्यर्थः, चरणः पादो यस्य सः, नृपोऽपि समवर्त्ती परन्त्वरुग्णपाद इति विरोधः । समं वर्त्तते सर्वासु प्रजासु इति समवर्त्ती समानवर्त्तनशीलः न तु यम इव नाम्ना समवर्त्ती, अतो न रुग्णश्चरणः स्वशाखाऽध्ययनम् पादश्चेति । "ऐरावतः, पुण्डरीको वामनः कुमुदोऽञ्जनैः । पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः"—पुष्पदन्तो दिग्गजः समीरणदिगाश्रितः, नृपस्तु पुष्पदन्तोऽपि न तथेति विरोधः, पुष्पाणीव दन्ता अस्य कुन्द-पुष्पदन्तोऽपि, कुन्दपुष्पस्यैव दन्तावलिसादृश्यात् । प्रकर्षेण भनक्ति महीरुहानिति प्रभञ्जनः पवनस्तस्य दिक् पश्चिमोत्तरा तामाश्रितो न भवति—इति–अप्रभञ्जनदिगाश्रितः, पुष्पपुरस्य पूर्वदिगाश्रितत्वान्नृपोऽपि पूर्वाश्रितो न वायव्याश्रितः, अपि च प्रकर्षेण भञ्जनकरणरीतिः प्रभञ्जनदिक्, तामनाश्रितः । उत्खातप्रतिरोपकत्वादिति-भावः । सार्वभौमो दिग्गज उत्तरदिगाश्रितः, सार्वभौमोऽपि राजाऽनुत्तरदिगाश्रित इति चित्रम् । गजस्य कुबेरवाहनत्वेनोत्तराश्रितत्वं युक्तं, राज्ञस्तु पुष्पपुराधीशत्वेन सार्वभौमत्वेऽपि पूर्वाश्रितत्वमेव युक्तं, नोत्तरदिगाश्रितत्वं, पुष्पपुरस्य प्राच्यां वर्त्तमानत्वात् । माल्यवान् पर्वतभेदः, रावणमातामहश्च, कीनाशस्य यमस्य काष्ठा दक्षिणदिक् तामाश्रितः, माल्यवान्सन्नपि राजा न तामाश्रित इत्यहो । माला—एव माल्यं, तद्विद्यते यस्य स माल्यवान्सन्नपि नृपः कथङ्कारं क्षुद्र–कर्षकविश्वासघातकवद्व्यवहरेद्, यतो हि कीनाशानां क्षुद्रादीनां काष्ठां दिशं सरणिमित्यर्थः, आश्रितो भवति । पूर्वाश्रितत्वाद्दक्षिणदिगाश्रितो न भवति–इति सुस्पष्टं पूर्वमेव । 'कीनाशः कर्षकक्षुद्रोपांशुघातिषु वाच्यवत्'—

द्युम्नोऽप्यनधिगतमातङ्गभावः, जगत्प्राणोपि लोकलोचनपीयमानस्वरूपः, पुण्यजनोऽप्यपुरुषादः, प्रचेता अपि जलभावहीनः, चतुराननोऽप्यनष्टभुजः, नयजितकुवलयोपि नयनजितकुवलयः, स्वजनप्रियोपि निःस्वजनप्रियः, व्याज-

इति मेदिनी । 'कृतान्ते पुंसि कीनाशः क्षुद्रकर्षकयोस्त्रिषु'—इत्यमरः । इन्द्रद्युम्नो हि राजर्षिर्मातङ्गभावमधिगतवान् इति पूर्वमुक्तम् , इन्द्रद्युम्नोऽपि राजशेखरोऽनधिगतमातङ्गभाव इति विस्मयः । इन्द्रस्येव द्युम्नं धनं यस्य स इन्द्रद्युम्नो राजशेखरः, विनीतत्वेन धनमदाऽनाश्रयात्कथमिव मातङ्ग इवोन्मत्ततां व्रजेत्, कथं वा शापं विनैव गजभावमापद्येत । जगत्प्राणः समीरणो रूपरहितत्वेन लोकानां लोचनैः पीयमानस्वरूपो दृश्यमानरूपो न भवति । रूपवत एव द्रव्यस्य चाक्षुषप्रत्यक्षविषयत्वादिति, "उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति" इति नियमात्, राजशेखरस्तु—विनयाधानादिना जगतां प्राणभूतोऽपि सुरूपवत्त्वेन पार्थिवत्वेन लोकानां प्रजानां लोचनैः सतृष्णमीक्ष्यमाणः इति भिन्नमेव जगत्प्राणत्वं न चाक्षुषप्रत्यक्षप्रतिबन्धि । एवं प्रयोजकभेदः सर्वत्र ध्येयः । राक्षसाः पुण्यजनपदवाच्याः, पुरुषानदन्ति पुरुषादा भवन्ति, वा सरूपविधिना कर्मण्यण् । 'यातुधानः पुण्यजनो नैर्ऋत' इत्यमरः । राजा तु पुण्यजनपदवाच्योऽपि न पुरुषाद इति विरोधः । पुण्यात्मा जनः न केवलं नाममात्रेण पुण्यजनो राजा कथं पुरुषादः सम्भवेत्, कथं वा पुरु—षादः बहुदुःखः सम्भवेत्, दुःखस्य पापजन्यत्वात्, पुण्यात्मनः पापाऽभावात् । प्रचेता वरुणो जलस्य भावो जलत्वं सांसिद्धिकद्रवत्वं वा, तेन सहितः, राजा प्रचेता अपि न तथा इति विरोधः । प्रकृष्टं चेतो यस्य स प्रचेताः प्रकृष्टसंज्ञानवच्चित्तः कथं जडभावेन हीनो न भवेत् , डलयोरैक्यात् । वरुणस्तु जलाधिष्ठाता जलीयशरीरवानिति जलभावहीनो भवितुं न शक्नोति । ब्रह्मा=चतुराननः, अतएव अष्टभुजोऽष्टबाहुः, राजाऽपि चतुराननस्तथापि न अष्टौ भुजा बाहवो यस्य स अनष्टभुजः, अष्टबाहुरहितः इति विरोधः, चतुराननत्वस्याष्टभुजवत्वप्रयोजकत्वात् , प्रतिमुखं भुजद्वयनियमात् । चतुरं वाग्रदूकत्वेन कुशलमाननं मुखं यस्य स चतुराननः, न तु चतुर्वदनो राजा किमिति भुजाष्टकवान् भवेत्, कथं वा नष्टबाहुः स्यात् कथं वा नष्टबाहुपराक्रमः स्यात्, अत उक्तम् अनष्टभुज इति, न नष्टौ भुजौ यस्य सः पराक्रमशालीति भावः । महादोषोप्यदोष इत्यारभ्य—एतत्पर्यन्तमुपमानवाचकपदानि श्लिष्टानि प्रायः, श्लेषानुप्राणितो विरोधः पूर्वत्र परत्र च । नयेन जितः स्वायत्तीकृतः कोः पृथिव्या वलयो मण्डलं येन, सोऽपि, नयनेन लोचनेन जितो वशीकृतः कुवलयः कथमितिचेदालिङ्गयन्तां पदान्तराणि, स्यादुत्पलं कुवलयमित्यादिना कोषाश्रयेण । 'कटकं वलयोऽस्त्रिया'मिति च । नयनेन नेत्रोत्पलेन, जितं तिरस्कृतं कुवलयमुत्पलं येन ।

रहितोऽपि न व्याजरहितः, यशोभी रुचिरोऽप्ययशोभी रुचिरः, समानोऽप्यसमानः, नत्या हितोऽप्यनत्या हितः, नीतिकारकोऽप्यनीतिकारकः, अग्रणीर्गुणशालिनां, ललाम कलावतां, प्रवीरः प्रवीणानामसाधारणो धारणावद्‌बुद्धीनां, धुरीणो

स्वजनप्रियोऽपि=स्पष्टम्, निःस्वजना दरिद्रजनाः, ( दरिद्रस्यैव युज्यन्ते साधवः समदर्शनाः, इति नियमात्)। व्याजेन कपटेन रहितोऽपि व्याजेन न रहित इति विरोधः, अजनमाजः (अजगतिक्षेपयायोरिति धातोर्भावे घञ्, अजेर्व्यघञपोरित्यत्राऽघञपोरितिपर्युदासाद्‌'वी' भावो न ) नव्यानामाजः क्षेपणं प्रेरणं सामर्थ्यात्स्वारस्यान्नूतनानामूनाष्टादशवर्षाणामाजिः प्रेरणं—नव्याजपदप्रतिपाद्यं, तेन रहितः, अन्योऽप्यर्थः सुधीभिरूहनीयः। आज आजिः प्रेरणमिति स्वारस्यम्। यशोऽभिरिति विरोधः स्पष्टः, कीर्त्तिभिर्मनोज्ञोऽपि, शुभावहभाग्यशोभी, रुचिं दीप्तिं राति ददाति रुचिरः तेजस्वी प्रीतिवर्द्धकश्चेति, रुचदीप्तावभिप्रीतौ चेत्युभयार्थत्वात्। समानः समानदृष्टिः पक्षपातरहितः, न्यायशालीत्यर्थः। मानेनाऽभिमानेन सहितः समानः=सगर्वः स न भवतीति—असमानः गर्वरहित इत्यर्थः। अहोऽहं न्यायशाल्यस्मि कः खलु मादृशोन्य इत्याकारकाऽभिमानशून्यः। अथवा—'मानश्चित्तसमुन्नतिः' इत्यमरात् समान—उदारचित्तोऽपि गर्वरहित—इति स्पष्टम्। नत्या, हितोऽपि अनत्या—हित इति विरोधः। नत्या नमनेन प्रणिपातेनेत्यर्थः, हितः प्रियङ्करः, अपिः सर्वत्र विरोधद्योतकः। नास्ति अत्याहितं=महाभीतिर्यस्मात्सः, अनत्याहितोऽभयदातेत्यर्थः। नीतिः सन्धिविग्रहादिप्रयोगस्तस्याः कारकः प्रयोक्ता, अनीतिकारक इति विरोधः, पाठान्तरे—नीतिं करोतीति नीतिकरः 'कृञो—टः' अनीतिकर इति विरोधः, नञो विरोधार्थात्। न ईति करोऽनीतिकरः दुर्भिक्षहेतवः षट् ईतिपदवाच्याः। यथा—"अतिवृष्टिरनावृष्टिः शलभा मूषकाः शुकाः। प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः" धान्यादिहानिकारकत्वात्प्रजापीडाकर ईतय एताः। राज्ञः प्रजावेक्षणार्थं स्वयं भ्रमणं राजप्रत्यासत्तिः सा च राजस्वागतप्रसक्त्या-पीडाकरीतीतिः। तस्याः परिहारकः, 'चारैः पश्यन्ति राजानः' इतिनीत्यनुसरणात्। 'यागहोमादिभिः पञ्चभूतकोपः शाम्यति, अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते, आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति, 'तदेतत्सर्वं राजाधीनं, राजा कालस्य कारकः' इति। "राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः। लोकास्तमनु वर्त्तन्ते यथा राजा तथा प्रजाः"। एवं सति धार्मिको राजा नीतिकारकोऽनीतिकारकश्च भवति। अथ कविर्निर्धारणेन वर्णयति राजानं, चित्रयति गद्यभित्तिम्—अग्रणीरिति—अग्रपूर्वान्नयतेः क्विपि 'अग्रग्रामाभ्यां नयतेर्णो वाच्यः' इति णत्वम्। गुणशालिनां गुणवतां मध्ये अग्रणीः प्रथमः। नृत्य—

धीराणां, मान्यो वदान्यानां, प्रवेकभूतो विवेकवतामुदीर्य औदार्यभाजां, महनीयो महोत्साहानाम्, आचार्यो वाचोयुक्तिपटीयसां, निधानं दिशो-दण्डस्य, पश्यतो हरःपरिपन्थियशसां, कामुकः कीर्तेर्मत्सर्यसत्पथस्य, मत्तः परवधे, तृष्णक् धर्मे, क्रुद्धो दुर्विनीतेषु, मूढो दुर्नये, दिग्वधूकर्णावतं-सायमानयशःपल्लवो राजा राजशेखरो नाम रराज ॥ ७ ॥

---

गीत–वादित्रादिचतुःषष्टिकलाविज्ञानां मध्ये, ललाम=भूषणम् । प्रवीणानां वैज्ञा-निकानां मध्ये, प्रवीरः श्रेष्ठः, धारणावतीबुद्धिर्येषान्ते धारणावद्बुद्धयस्तेषां मध्येऽ-साधारणोऽसामान्यो अद्वितीय इत्यर्थः । धीराणां धैर्यशालिनां, धुरीणो धौरेयः मुख्य इत्यर्थः सर्वत्र । वदान्यानां=दानिनाम्मान्यो माननीयः । विवेचनं विवेकः सदसद्विचारस्तद्वतां प्रवेकभूतः श्रेष्ठस्वरूपः । उदारस्य भाव औदार्यं तद्भजन्ति ये तेषामौदार्यभाजामुदाराणां मध्ये उद् ऊर्ध्वं सर्वप्रथमं ईरयुतुमुचारयितुं योग्य उदीर्यः अग्रगण्य इत्यर्थः । एवं योगार्थः प्रकृतिप्रत्ययविवेकविदाऽभिधानुसारेण सर्वत्रोहनीयः । वीर–रसस्थायिभाव उद्यमापरपर्य्याय उत्साहः, महानुत्साहो ये-षान्ते महोत्साहा महोद्यमास्तेषां मध्ये मह्यते पूज्यत इति महनीयः प्रशंसनीयः, वाचः=वाण्या युक्तिः–वाचोयुक्तिः समासे षष्ठ्या अलुक् अतिशयेन पटवः पटीयांसः वाचोयुक्तौ पटीयांसः वाचोयुक्ति—पटीयांसस्तेषां मध्ये आचार्यः आचरितुं योग्यः सेव्यो गुरुः । 'मन्त्रव्याख्याकृदाचार्य' इत्यमरः । 'वाचोयुक्तिप-टुर्वाग्मी वावदूकोऽतिवक्तरि' इति चामरः । दिशोदण्डस्य—स्वराष्ट्रसंरक्षक-प्रत्यन्तसैन्यस्य, निधानं निधिस्तद्रूपः । 'दण्डो यमे मानभेदे, लगुडे दमसैन्ययोः । व्यूहभेदे प्रकाण्डेऽश्वे, कोणमन्थानयोरपि ॥ अभिमाने ग्रहे दण्डश्चण्डांशोः पारि-पार्श्वके'—इति विश्वः । परिपन्थिनां सपत्नानां यानि यशांसि कीर्त्तयस्तेषां, पश्यतस्ताननादृत्य हरतीति पश्यतो हरः शत्रुविजयेन तत्कीर्त्तिचौर इत्यर्थः, निर्धा-रणे षष्ठी, त्रिषु स्थलेषु–वाग् दिग् पश्यद्भ्यो 'युक्तिदण्डहरेषु' इति षष्ठ्या अलुक् । निर्धारणषष्ठी समासा, अथ कृद्योगषष्ठी, विषयसप्तमी च । कामयते कामुकः (लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्) कीर्त्तेः समज्ञायाः कामयिता न कोषस्य, 'मत्सरोऽन्यशुभद्वेषे'इत्यमरः, असत्यसंबन्धिशुभविषयकमत्सरवान्, असत्यद्वेषी-त्यर्थः । न तु दीनोन्नतौ मत्सरी । परस्याऽरेर्वधे मत्तः प्रमत्तः न तु स्वप्रजापीडने । तृष्णायुक्तो धर्मे न तु कामे, 'लुब्धोऽभिलाषुकस्तृष्णक्' इत्यमरः । क्रोधयुक्तो दुर्विनीतेषु न कदापि शिष्टेषु शिक्षितेषु । दुर्नये दुष्टनीतौ मूढोऽज्ञः न तु सुनीतौ । अत्र परिसंख्या,गम्यव्यवच्छेद्या । दिश एव बध्वः तासां कर्णाऽवतं-सायमानः कर्णस्थकर्णभूषणायमानः यशःपल्लवः कीर्तिकिसलयो यस्य स दिगन्त-

यस्मिन् सर्वोत्तरपुण्यचरितरत्नाकरे शासति महीं, गुणच्छेदो मृणा-
लेषु, अङ्कप्रचारो गणितागमेषु, वर्णव्यत्ययः सात्त्विकभावेषु, सङ्करोऽ-

---

विश्रान्तकीर्तिरित्यर्थः। अत्र दिशि वधूत्वारोपः, कीर्त्तौ किसलयत्वारोपश्च कर्णावतंसायमानत्वे कारणतां भजत इति परम्परित रूपकालङ्कृतिः। **राजा** भूपतिः 'कनिन्युवृषि,तक्षि,राजि,धन्वि,द्युप्रतिदिवः' इतिकनिन्नौणादिको राजतेः, राजतिरत्र रञ्जनार्थः, कृद्वृत्तौ न दीप्त्यर्थः, धातूनामनेकार्थत्वात्। कालिदासोप्यत एवाह'राजा प्रकृतिरञ्जना'दिति। राज्ञां शेखर इव, नाम्नापि **राजशेखरो** राजा=मूर्धाभिषिक्तः क्षत्रजातिः प्रजापालकः, **रराज** रेजे। यत्र पुष्पपुरे, सम्बन्धः पूर्वमुक्तः।

गद्यमिदं संपुटितं प्रथमं चरमञ्च रूपणात्कविना।
उपमालङ्कृतिभेदैर्मध्ये श्लिष्टं विरोधसंख्याभिः॥

संकरः सर्वस्मिन्गद्ये प्राधान्येन।

निर्धारयति नराणामात्मानं यो नरेन्द्ररूपेण।
नरपतिवर्णन'कुसुमं 'समर्प्यते शार्ङ्गिणे, तस्मै॥ ७॥

अथ कविर्नृपगुणपरिसंख्यानेन शासनसौभाग्यं ध्वनयति व्यपोहनेनार्थेन दोषाणाम्। **सर्वोत्तरे** सर्वश्रेष्ठा ये **पुण्यचरितः** पवित्राचरणास्तेषु मध्ये रत्नाकरः समुद्ररूपः तस्मिन्, **यस्मिन्** राजशेखरे प्रजापालके महीमवनिं **शासति**=शिक्षापूर्वकं पालयति सति "क्षत्रियस्य परो धर्मः प्रजानां परिपालनम्" इति मनुः, श्लिष्टपदप्रतिपदप्रतिपाद्या गुणच्छेदादयो व्यपोह्या दोषाः प्रजासु नासन्, मृणालादिषु तु स्वभावसिद्धा गुणच्छेदादयः समभवन्—इत्यन्वयः सर्वत्र मन्तव्यः। **मृणालेषु** पद्मादिमूलेषु गुणच्छेदस्तन्तुच्छेदः समभवत्, प्रजासु गुणानां वीर्य्यौदार्यवदान्यत्वादीनां, सन्धिविग्रहादीनां वा, छेदो विच्छेदो न समभवत् "अन्तश्छिद्राणि भूयांसि कण्टका बहवो बहिः। कथं कमलनालस्य मा भूवन् भङ्गुरा गुणाः' इति, 'मृणालं बिस'-मित्यमरः' 'उपर्युदीच्यश्रेष्ठेष्वप्युत्तरः'स्यादित्यमरः। अङ्कानामेकादिपरार्द्धपर्यन्तानां प्रगतः प्रभिन्नः प्रकृष्टः प्रयुक्तः प्रगुणः प्रकलितः प्रभूतश्चारो प्रचारो योगवियोगगुणनादिः प्रभूतप्रचारः प्रचरणं गणितागमेषु, ज्योतिःसिद्धान्तेषु, समभवदिति क्रियान्वयो न विस्मर्त्तव्यः, अङ्कस्यागसः प्रचारः प्रथनं जनेषु नासीत्, 'अङ्को, रूपक, भेदा,गश्चि'हेत्यादि मेदिनी। **वर्णस्य** रूपस्य व्यत्ययो वैवर्ण्यं सात्विका मनोविकृतिजन्याः 'स्तम्भः स्वेदोथ रोमाञ्चः स्वरभङ्गोथ वेपथुः। वैवर्ण्यमश्रुप्रलयमित्यष्टौ सात्विकाः स्मृताः'–इति साहित्यशास्त्रप्रसिद्धेषु **सात्विकभावेषु** न जनेषु, वर्णानां-

लङ्कारविचारेषु, वैषम्यं छन्दःप्रभेदेषु, रेफस्योर्ध्वगमनं शब्दसाधने, प्रत्यय-लोपो व्याकरणे, जातिनिराकरणं सौगतसिद्धान्तेषु, ईश्वरद्वेषो मीमांसकेषु,

---

'ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः,चतुर्थ''एकजातिरिति मनुः–'ब्राह्मणोऽस्य-मुख'मित्यादिवेदप्रसिद्धब्राह्मणादिषु वर्णेषु, व्यत्ययः = विरुद्धोऽत्ययो ध्वंसो व्यत्ययः प्रतिलोमसङ्करकारको व्यतिक्रमः, तस्यैव धर्मशास्त्रे निषिद्धत्वात् । 'वर्णेऽक्षरे च शुक्लादौ ब्राह्मणादौ च सङ्करः' । साङ्कर्यं परस्परमिश्रितत्वम्, अलङ्काराणामुपमादी-नामर्थालङ्काराणामनुप्रासश्लेषादीनां शब्दालङ्काराणां विचित्रश्चारो विचारो विविधः प्रयोगः पूर्वस्मिगद्ये इव, तेषु, साहित्यग्रन्थेषु च, न जनेषु वर्ण–संङ्करः 'सङ्करो नरकायैवेति'भगवदुक्तेः । छन्दसां गायत्र्यनुष्टुप्त्रिष्टुभादीनां, विषमाणां भावो वैषम्यं ''यस्य पादचतुष्केपि लक्ष्मभिन्नं परस्परम् । तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशा-रदाः''इत्युक्तलक्षणमुद्धतादिष्विव प्रचुरेषु भेदेषु विषमता समभवत्,जनेषु न, ''आस-नाऽवसथौ शय्यामनुव्रज्यामुपासनाम्। उत्तमेषूत्तमं कुर्याद्धीने हीनं समे समम् ॥ द्वेष्योऽ ऽपि सम्मतःशिष्ट'' इतिकालिदासोक्तन्यायातिक्रमो वैषम्यम्, श्रेयः–प्रतिबन्धकः पूज्यपूजाव्यतिक्रमो जनेषु नासीदिति भावः । उत्तमस्य–हीनादरः, हीनस्य महादरो, वैषम्यम्, एवं सर्वकार्येषु परस्परं योग्यसमागम ऊहनीयः; 'निशा-शशाङ्कम्, शशिनमुपगतेयम्, इत्यादिभिः पूर्वैर्वर्णितमेवेति विरम्यते । चतुर्षु. चतुर्मुखेषु, प्रार्च्छति, कृष्णर्द्धिरित्यादिशब्दानां साधने साधुत्वप्रदर्शने, रेफस्य=द्वितीयान्तःस्थस्य, ऊर्ध्वं पङ्क्त्युपरिगमनं लिपिलेखनदशायामुपरि-लेखनमित्यर्थः । (वर्णात्कारः, रादिफः, ३।३।१०८) जनेषु रेफस्य तुच्छस्य कुत्सि-तस्य ऊर्ध्वगमनमुन्नतिप्राप्तिः,न, समभवत् । 'रवर्णे पुंसि रेफः स्यात्कुत्सिते वाच्य-लिङ्गव'दित्यमरः । व्याकरणे—विशेषेण, उत्सर्गापवादन्यायेन आसमन्तात्सर्व-स्माद्वाङ्मयात् , आ ईषत्कृत्य=अनुगम्येत्यर्थः; करणं कृतिः, शासनस्य शब्दानामिति–व्याकरणं तस्मिन् शब्दशिक्षके शास्त्रे मधु, भूभृत्, अहन्, उच्चैः, इत्यादौ प्रत्ययस्य सु–ति–इत्यादेर्लोपोऽदर्शनम् सम्यक् अभवत्, जनेषु— प्रत्ययस्य विश्वासस्य लोपो विघातः न समभवत् कदापि नासीत् ''प्रतिपदपाठ-स्याऽशक्यतया, उत्सर्गापवादरूपसूत्राऽनुगतनिखिलभुवनानुगतवाङ्मयनिःसृत-साधुशब्दानुगमशिक्षणं,व्याकरणत्व''मित्यन्वर्थः। आङ्प्रश्लिष्टो बोध्यः संक्षेपार्थः= अनुगमार्थः सर्वतोभावबोधकश्चेति । सौगतानां=बौद्धानां सिद्धान्तेषुपूर्वपक्षोत्तर-पक्षाभ्यां निर्णीतेषु पदार्थेषु सत्सु जातेःसामान्यपदार्थस्य निर्गतमाकरणमाह्वानं निरूपणं, कर्मधारयःसमासः, ततो नञ्समासः, अनिरूपणमित्यर्थः, 'अतः सौगतसिद्धान्ता-नां न्यूनता, जनेषु–जात्या, गोत्रस्य, जन्मनः, धात्र्याश्च निराकरणं निरासः नासीत्,

सुहृन्निपातनं पाणिनीयेषु, अदृश्यत्वमाकाशादिपु, मिथ्योक्तिरव्ययेषु, सविकल्पकत्वं ज्ञानविशेषेषु, सत्प्रतिपक्षत्वं बाधितत्वं च हेत्वाभासविशेषे, दुःखद्वेषाऽधर्मवार्त्तागुणनिरूपणेषु, आत्मसत्त्वप्रतिपादनं सदागमेषु, द्रव्या-

---

'जातिश्छन्दसि सामान्ये मालत्यां गोत्रजन्मनोः। जातिर्जातीफले धात्र्यां चुल्ली-कम्पिल्लयोरपि'—इति विश्वः। 'सर्वज्ञः सुगतो बुद्ध' इत्यमरः। ईष्टेऽसौ 'स्थेश-भासपिसकसो वरच्' इति वरचि सिद्ध ईश्वरः परमेश्वरः, तस्य द्वेषो ऽप्रीतिः, तदनिरूपणात्,'कर्ममात्रनिरूपणव्यग्रत्वात्तेषाम्, मीमांसां विदन्ति ते मीमांसकाः जैमिनीयाः तेषु, न जनेषु ईश्वरस्य भगवतो द्वेषो भगवद्भक्तत्वात्सर्वेषाम्। नापी-श्वरस्य राज्ञो द्वेषः पालकत्वेनाऽनुरक्तत्वात्सर्वेषाम्। द्विष अप्रीतौ भावे घञ्। मामांसा शब्दात् 'तदधीते तद्वेद' इत्यनुवृत्तौ 'क्रतूक्थादिसूत्रान्ताट्ठक्' इतिठक्प्र-त्यये ठस्येकः, इति इकादशे मीमांसकः। पाणिनिना प्रोक्तं विदन्ति ते पाणिनी-यास्तेषु 'सुहृत'इत्याकारकस्य शब्दस्य निपातनम् उच्चारणमात्रेण साधुत्वप्रतिपादनं न तु केनापि शास्त्रेण कार्यविधानम्। जनेषु तु सुहृदां मित्राणां निपातनं निपातः, निपा-तनं मारणं वा निपातः, नासीत्। अत्र सुहृत् शब्दः पाणिनीयपक्षे शब्दपरः, जनपक्षेऽ-र्थपरः। पाणिनीयाः शब्दं निपातयन्ति नार्थं, अतः क्वचिदपि मित्रद्रोहो नाभूत् इति। आकाशादिषु—गगन–समय–हरिदात्ममानसेषु, द्रष्टुं योग्यानि दृश्यानि चाक्षुष-प्रत्यक्षविषयाणि पृथिव्यादीनि रूपवन्ति द्रव्याणि, तानि न भवन्तीति अदृश्यानि गगनादीनि द्रव्याणि तेषां भावोऽदृश्यत्वं, चाक्षुषप्रत्यक्षाऽविषत्वं तेषु, न जनेषु अदृश्यत्वमदर्शनीयत्वम्, सर्वे जना दर्शनीया आसन्निति भावः। मिथ्योक्तिः= वचनमुक्तिर्मिथ्योक्तिर्मिथ्याशब्दस्य पाठः—अव्ययेषु=अव्ययसंज्ञकेषु स्वरादिषु चादिषु च, जनेषु तु मिथ्योक्तिः, मिथ्याभाषणं न समभवत्। ज्ञानस्य बोधस्य विशेषा भेदा, अयं घटः अयं पटः इत्याद्याकारकाः भेदाः तेषु, सविकल्पकत्वम्=प्रकारता संसर्गता-विशेष्यता-शालिज्ञानं सविकल्पकमित्युच्यते, यथा अयं घटः इत्यत्र घटत्वप्रकारकं घटविशेष्यकं ज्ञानं सविकल्पकं तस्य भावस्तत्त्वं सविकल्प-कत्वं, पूर्वोक्ते ज्ञाने जनेषु न सविकल्पकत्वं, न सन्देहवत्त्वं, विरुद्धकल्पकत्वं विविधकल्पनावत्त्वञ्च नासीत्, सुखित्वाज्जनानां चिन्ताराहित्यं व्यज्यते, सचिन्त-स्यैव संकल्पविकल्पमयत्वात्, "तत्कर्म-संकल्पविकल्पकं मनो, बुधो निरुन्ध्या-दभयं ततः स्या"दित्युक्तेः। सव्यभिचारविरुद्धसत्प्रतिपक्षाऽसिद्धबाधिताः पञ्चहेत्वाभासाः। तत्र साध्याऽभावसाधकं हेत्वन्तरं यस्य सः सत्प्रतिपक्षः। यस्य साध्याभावः प्रमाणान्तरेण निश्चीयते स बाधितः। सन् विद्यमानप्रतिपक्षः प्रति-द्वन्द्वी हेतुर्यस्य स सत्प्रतिपक्षः तस्यभावः सत्प्रतिपक्षत्वं, शब्दो नित्यः श्रावण-

भावो बुद्धदर्शनेषु, प्रकृत्यन्यथाभावो निष्क्रियचेतनपुरुषत्वं च साङ्ख्येषु, न्यूनमनस्कत्वं वैशेषिकेषु, स्वतःप्रामाण्याभावो नैयायिकेषु, उपनयत्यागपक्षो

त्वादित्यत्र शब्दोऽनित्यः कृतकत्वाद् घटवत् इत्यत्र श्रावणत्वहेतुः कृतकत्वहेतुना प्रतिपक्षित. । वह्निरनुष्णो द्रव्यत्वादित्यत्र द्रव्यत्वहेतुः उष्णत्वप्रत्यायकेन स्पार्शन-प्रत्यक्षेण प्रबलेन प्रमाणेन बाधितः—इति **सत्प्रतिपक्षत्वं बाधितत्वञ्च** हेत्वाभा-सेषु=असद्धेतुषु, जनेषु—सत्प्रतिपक्षत्वं विद्यमानशत्रुत्वं, शत्रुसत्त्वमिति भावः; बाधितत्वं पीडितत्वं च न समभवत्, रक्षके राजनि एकवस्तुविषयकलोभस्य वैरबीजस्याऽभावात् । उच्यते हि—'एकामिषलोभो हि वैरबीज'मिति । 'पीडा बाधा व्यथा दुःखमि'त्यमर । बाधा संजाता अस्य बाधितः । 'तदस्य सञ्जातं तारका-दिभ्य—इतच्' इति इतच् प्रत्ययः । दुःखञ्च द्वेषश्चाऽधर्मश्चेति द्वन्द्वे तेषां वार्तेति—षष्ठीतत्पुरुषे वार्त्ताशब्दस्य प्रत्येकमन्वयः, द्वन्द्वान्ते श्रूयमाणत्वात् । तथा च **दुःखद्वेषाऽधर्मचर्चा**—निरूपणात्मिकावार्त्ता रूपरसादिचतुर्विंशतिगुणान्तःपाति-त्वात्तन्निरूपणावसरेषु नैयायिक-ग्रन्थेषु समभवत्, जनेषु नासीत्, तेषामभावात् । **आत्मनः** परमात्मनो जीवात्मनश्च सत्त्वस्य सत्ताया अस्तित्वस्येर्थः, प्रतिपादनं निरूपणं, सन्तश्च ते आगमाः श्रुतिस्मृतिवेदान्तदर्शनादयस्तेषु, जनेषु—आत्मनः स्वस्य यत् सत्त्वं सतः सज्जनस्य भावः, तस्य प्रतिपादनं स्वमु-खेन ख्यापनं नासीत्, 'इन्द्रोपि लघुतां याति, स्वयं प्रख्यापितैर्गुणै'रिति नीतेः । **द्रव्याणां** गुणाद्याश्रयाणां पृथिव्यादीनामभावो नास्तित्वं बुद्धस्य सुगतस्य दर्श-नेषु तदनुयायिग्रन्थेषु, "क्षणिकविज्ञानमयब्रह्माण्डवादिनां बौद्धानां मते पदार्थ-मात्रस्य विज्ञानमयत्वाद् द्रव्याऽभावो तेषां ग्रन्थेषु" । न, जनेषु द्रव्यस्याऽभावः सर्वेषां धनित्वात्, राजन्वति स्वाजीवप्राप्तेः सुलभत्वात् । **प्रकृते**ः प्रधानस्याऽन्यथा-भावो विकृतिः=परिणामो, महदहङ्कारादिना । तथा—**निष्क्रियाः** कर्तृत्वहर्तृ-त्वादिक्रियारहिता—अथ च चेतनाः चेतनावन्तः पुरुषाः जीवा यस्मिन् तस्य भावस्तत्त्वं, निष्क्रियचेतनपुरुषवत्त्वमित्यर्थः, **साङ्ख्येषु** कापिलेषुसाङ्ख्यदर्शनेषु, "साङ्ख्याः कर्तृत्वादिक्रियावत्त्वं प्रधानस्य, पुरुषाणान्तु केवलं चेतनत्वमात्रं मन्यन्ते" । जनेषु तु चेतनस्य सचेतसः पुरुषस्य क्रियाराहित्यमनुद्योगो न समभवत्, शासति राजशेखरे 'चातुर्वर्ण्यञ्च लोकेस्मिन्स्वे स्वे धर्मे नियोक्ष्यति' इति न्यायानु-सरणात्स्वधर्मकर्मव्यापृतत्वात्सर्वेषां सचेतनानाम् । **नितरामत्यन्तमूनं** यदपेक्षया ऊनं नास्ति तन्न्यूनं परमाणुरूपं मनश्चित्तं येषां निरूप्यत्वेनाऽस्ति ते न्यूनमनस्काः ('शेषाद्विभाषा' इति कप्) तेषां भावस्तत्त्वं=परमाणुरूपमन-इन्द्रियवत्त्वं, वैशेषिकेषु विशेषपदार्थमन्तृषु काणादेषु वैशेषिकदार्शनिकेषु, जनेषु लोकेषु तु

जैमिनीयानुमानेषु, निरालम्बनता नास्तिकमतविशेषे, मध्यमपुरुषदर्शनमा-
ख्यातेषु, उपसर्गयोगो धातुषु, भागहीनत्वं नित्यद्रव्येषु, परार्थहरणं समा-

न्यूनमनस्कत्वमनुदारचित्तत्वं न समभवत् 'यथा राजा तथा प्रजा'। प्रत्यक्षादिप्रमाणे प्रामाण्यं स्वतः परतो वेति विचारे, स्वतःप्रामाण्यमिति मीमांसकादयः, परतः प्रामाण्यमिति नैयायिकाः। स्वतःप्रमाणस्य प्रत्यक्षादेः—अयं घटः इत्यादौ चाक्षुष-प्रत्यक्षे, चक्षुरिन्द्रियस्य विषयिणो, घटस्य विषयस्य, संयोगरूपस्य सन्निकर्षस्य च प्रत्यक्षसंज्ञा, तत्प्रत्यक्षं प्रमाणं, स्वस्य प्रमाणत्वनिश्चयार्थं न प्रमाणान्तरमपेक्षते तत्प्रतिफलितस्य बोधस्य प्रत्यक्षप्रमाणत्वाभिमतेः-इति मीमांसकाः। नैयायिकास्तु अयं घट इत्याकारक—प्रत्यक्षे, घटः, चक्षुः, सन्निकर्षश्चेति प्रमाणत्वसाधकानीति परतः प्रामाण्यं वदन्ति। अतः **स्वतःप्रामाण्याभावो** नैयायिकेषु, जनेषु तु—स्वत आत्मना प्रामाण्यं न साक्षिप्रभृतिभिः, सर्वेषां सत्यवादित्वात्, अतो जनेषु न स्वतःप्रामाण्याभावः। परार्थाऽनुमाने नैयायिकाः 'प्रतिज्ञाहेतूदाहरणोपनय-निगमनानि' इति पञ्चाऽवयवान् स्वीकुर्वते। पर्वतो वह्निमानिति प्रतिज्ञा, धूमवत्त्वा-दिति हेतुः, यो यो धूमवान् स सोऽग्निमानिति—उदाहरणम्, तथा चाऽयमित्यु-**पनयः**, तस्मात्तथा इति निगमनम् इति पञ्चाऽवयवाः। मीमांसकास्तु—उपनयरहि-तान्—चतुरोऽवयवान् स्वीकुर्वते, अत उक्तम् **उपनयत्याग** इत्यादि। जनेषु तु उपनयस्य द्विजेषूपनयनसंस्कारस्य, अन्येषु समीपगमनस्य त्यागः परित्यागो नासी-दिति। **निरालम्बनता**=निर्गतमालम्बनमाधारो यस्मिन्तत्, तस्य भावो निराल-म्बनता निराधारता निरधिष्ठानता, जगत इत्यर्थः, नास्तिकानां परलोकाऽभाव-वादिनां मतविशेषे मतभेदे 'असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वर'मिति गीतोक्तेः। न जनेषु सहायराहित्यम्। मध्ये भवो मध्यमः ( मध्यान्मः ) नोत्कृष्टो नापकृष्टो ऽन्तरितः क्लेशभाङ् मध्यमपुरुषो भवति, अतो राजन्वति कथङ्कारं जनेषु **मध्यमपुरुषदर्शनं** सम्भवेत्, किन्तु आख्यातेषु क्रियापदेषु तद्बोधकप्रत्ययेषु च सिप्, थस्, थ, इत्यादौ। "यश्च मूढतमो लोके यश्च बुद्धेः परं गतः। ताविमौ सुखमेधेते क्लिश्यत्यन्तरितो जनः" इति। **उपसर्गस्य** प्रादेर्योगः पूर्वप्रयोगे-णोच्चारणं, धातुषु क्रियावाचकेषु शब्देषु, उपसर्गाः क्रियायोगे, ते प्राग्धातोरि-त्युक्तेः। जनेषु, उपसर्गाणामुत्पातानां योगः सम्बन्धः = तज्जन्यदुःखभोक्तृत्वमि-त्यर्थः, न समभवत्, 'अजन्यं क्लीबमुत्पात उपसर्गः समं त्रय'मित्यमरः। भागेनाऽ-वयवेन हीनानि रहितानि **भागहीनानि** परमाण्वाकाशादीनि नित्यद्रव्याणि तत्त्वं तेषु; जनेषु तु—भागेन स्वांशेन हीनत्वं राहित्यं, कथं पालके तादृशि राजनि सम्भवेत् इति। "अत्र, परमाणोर्निरवयवत्वमनवस्थाप्रसङ्गात्, गगनादीनाम—

सादिवृत्तौ, दोषोदयो वैद्यकेषु, अनुदात्तत्वं स्वरप्रभेदे, बहुवचनादर्शनं तद्राजप्रत्ययेषु, पदाभावो भसञ्ज्ञायां, विकलत्वमङ्कभेदे, अशक्तत्वमुपसर्गेषु, अङ्गहारो नाट्यकलासु, असिद्धत्वं त्रैपादिकेषु, विकरणान्वयो धातुषु,

---

खण्डत्वादिति बोध्यम् । मध्यमपरिमाणिनामेव सावयवत्वनियमात्" । परस्या-श्रूयमाणपदस्य अर्थहरणमर्थस्य स्वीकारः प्रतिपादनम्, समासादौ वृत्तौ, यथा राजपुरुष इत्यादौ संबन्धार्थकषष्ठ्या अनुच्चारणेऽपि समासवृत्त्या सम्बन्धार्थप्रतिपादनं, पीताम्बरः इत्यत्र विशेष्यप्रतिपादनम् । एवं कृत्तद्धितसनाद्यन्तैकशेषवृत्तिषु स्वयमूह्यम् । जनेषु-परार्थहरणं, परस्वहरणं न समभवत् 'अर्थोऽभिधेयरैवस्तुप्रयोजन-निवृत्तिषु'–इत्यमरः । दोषाणां वातपित्तकफानामुदयः वृद्धिः वैद्यकेषु वैद्यकग्रन्थेषु प्रतिपाद्यतया, 'वायुः पित्तं कफश्चेति शारीरो दोषसंग्रहः' इत्युक्तेश्चरकादौ प्रसिद्धत्वात् । जनेषु–दोषाणां जाड्यमान्द्यादीनामुदयः प्रादुर्भावः न समभवत्, शिक्षकत्वात् नृपस्य । स्वरस्य उदात्तादेः प्रभेदे = अनुदात्तेऽनुदात्तत्वं, न जनेषु अनुदात्तत्वम् अनुदारत्वम्, उदात्तनायके राजनि प्रजामात्रस्योदात्तत्वात् । 'स्वरो नासासमीरे स्यान्मध्यमादिस्वरत्रिके' 'उदात्तादावकारादौ, षड्जादौ च ध्वनौ पुमान्' इति विश्वमेदिन्यौ । ञ्यादयस्तद्राजाः इति, ते तद्राजाः ४।१।१७४ इति च प्रत्ययानां तद्राजसंज्ञाविहिताः, तेषां 'तद्राजस्य बहुषु तेनैवाऽस्त्रियाम्' इति लुक् विहितः । अतः बहुवचने परतः तेषामदर्शनं लोपः आङ्गः आङ्गौ अङ्गाः इत्यादौ, जनेषु बहुवचनस्य जसादेरदर्शनम् अप्रयोगो न समभवत्, शिक्षितत्वेन सर्वेषामादरार्थे बहुवचनभावित्वात् । भसञ्ज्ञायाम् यचि भम् १।४।१८ इति सूत्रविहितायां, प्रातिपदिकाधिकारविहितेषु यकारादिषु स्वरादिषु च प्रत्ययेषु परतः पदस्य 'स्वादिष्वसर्वनामस्थाने' १।४।१७ इतिसूत्रविहितपदसञ्ज्ञाया अभावः, आकडारीयत्वेन निरवकाशया भसञ्ज्ञया पदसञ्ज्ञाया बाधात्, जनेषु—तु पदस्य स्थानस्य व्यवसायस्य रक्षणस्य च अभावो राहित्यं न समभवत्, रक्षकस्य राज्ञो स्थानव्यवसायप्रबन्धकत्वात् । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः। विकलत्वं कलारहितत्वम् अङ्कभेदेऽङ्कविशेषे, यथा अद्यतनः सूर्यस्पष्टः ६ । २० । ० । ० राश्यात्मकः, तत्र कला नाम एका घटी विगता चेत् ६ । १९ । ५९ । ० । इति २० विंशत्यङ्को विकलो जात इति विकलत्वमङ्कभेदे, एवमन्यत्र अंशात्मके कलात्मके च विकलत्वं संभवति नान्यत्र वस्तुगणने इति भेद उक्तम् । शक्तं पदं भवति, परमुपसर्गरूपं पदमशक्तं भवति, 'द्योतकत्वादुपसर्गाणाम्, इत्यशक्तत्वमवाचकत्वं तेषु, 'उपसर्गास्त्वर्थविशेषस्य द्योतकाः' जनेषु तु अशक्तत्वमसमर्थत्वं न समभवत् । हरणं हारः, अङ्गानाम् अवयवानां हारो विक्षेपः,

पुंवद्भावः पारिभाषिकस्त्रीषु, सदेनादेश इति व्यपदेश इदमेतदोरन्वादेशे, शून्यवादः सौगतेषु, महापातकस्मरणं स्मृतिषु, व्यभिचारिश्रवणं रसागमेषु,

नाट्यस्य रूपकस्य कलासु—आङ्गिकाऽभिनयेषु, 'अङ्गहारोऽङ्गविक्षेपः' इत्यमरः जनेषु अङ्गानामवयवानां हारो नाशः, न समभवत्। असिद्धत्वं त्रैपादिकेषु= व्याकरणसूत्रपाठस्य ८। २। १ अष्टमाऽध्यायस्य द्वितीयपादस्य प्रथमसूत्रमारभ्य त्रिपादी-तस्यां भवं सूत्रं कार्यञ्च त्रैपादिकमित्युच्यते, तेषु त्रैपादिकेषु, असिद्धत्वं कृतेऽपि कार्येऽकृतकार्यत्वं पूर्वत्रैपादिकदृष्ट्या, सपादसप्ताध्यायी दृष्ट्या च 'विष्ण इह' इत्यादौ वलोपस्यासिद्धत्वम्। जनेषु नाऽसिद्धत्वमकृतकार्यत्वं कृतकृत्यत्वात्सर्वेषां जनानाम्। 'भूवादयो धातवः' १। ३। १। 'सनाद्यन्ता धातवः' इतिसूत्रद्वयविहितधातुसंज्ञकेभ्यः क्रियावाचिभ्यः शब्देभ्यस्तिबादि-प्रत्यये कृते, 'कर्त्तरि शप्' 'दिवादिभ्यः श्यन्' 'सार्वधातुके यक्' 'स्यतासी-लृलुटोः'—इत्यादिसूत्रविहिताः प्रकृतिप्रत्ययान्तःपातिनो विकरणप्रत्ययास्तेषा-मन्वयः संबन्धो **धातुषु**, जनेषु विध्वस्तानां करणानामिन्द्रियाणामन्वयः सम-वायो न समभवत् सुखित्वेन सर्वेषां पटुकरणत्वात्। **पुंवद्भावः** पुंसा तुल्यं पुंवत्, आनुपूर्व्या साधर्म्येण, तस्य भावो भवनम्, परिभाषिक्यो भाषितपुंस्काः याः स्त्रियः स्त्रीप्रत्ययान्ता रूपवतीप्रभृतयस्तासु, न गङ्गा-यमुनादिषु नित्यस्त्रीत्व-प्रत्यायकासु, नापि जनेषु पुंवद्भावः पुरुषायितत्वं गर्भाशयविकारकत्वात्तस्य वर्जनीयत्वात्। "चित्रगू, रूपवद्भार्यः, पुंवद्भावात्प्रसिद्ध्यतः। स्त्रियाः पुंवत्पा-णिनीये ऽभ्यस्तव्यः कोविदैः स्वयम्।" **सदेनादेशः**=संश्चासौ—एनादेशः साधुत्व-विशिष्ट एनादेशः, 'द्वितीया टौस्स्वेनः' इति विहितः, सन् विद्यमानः एनादेशो यस्य स सदेनादेश–इत्याकारको व्यपदेशो विशिष्टो व्यवहारः, इदम् शब्दस्य एतच्छब्दस्य च, अन्वादेशे=उपात्तस्य पुनरुपादाने, 'अनेन व्याकरणमधीतम्, एनं छन्दोध्यापय' इत्यादौ समभवत, न जनेषु—सदा-इनस्य नृपस्य प्रभोश्चादेश आज्ञा अद्यैवं राजकार्यं प्रजाभिः संपादनीयम् अधुना एवम्, इदानीमित्थम्, इत्यादिप्रबन्धेन कुनृपे शासति, सदा—इनादेशः—इति व्यवहारः शब्दप्रयोगो भवति जनेषु। सुनृपे राजशेखरे शासति न समभवत्। 'इनः सूर्ये प्रभौ राज्ञि' इति नानार्थः। **शून्यवादः**=प्रपञ्चस्य निरधिष्ठानप्रतिपादनं, सौगतेषु बौद्धेषु, ते हि सर्वं क्षणिकम् २, स्वलक्षणम् २, दुःखम् २, शून्यम् २, इतिभावनाचतुष्टयेन स्वसिद्धान्तं समर्थयन्तः पर्यवसाने शून्यतां व्रजन्ति, न प्राप्नुवन्ति सच्चिदानन्दं शिवं शान्तमद्वैतं ब्रह्म, अनालम्बितश्रुतिचरणत्वेन निरालम्बनाः। "ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः। महान्ति पातकान्याहुः संसर्गश्चापि तैः सह" इतिस्मृ-

मिथ्याध्यवसितिः काव्यालङ्कारेषु, क्षीयमाणता निशीथिनीनायके, तमःस्पर्शः शर्वरीषु, मूलोच्छेदस्तरङ्गिणीतीरतरुषु, कलुषान्तरत्वमिन्द्रवारुणीफलेषु,

---

तिषु प्रायश्चित्तप्रतिपादनार्थं महापातकानां स्मरणं स्मृतिपठनपाठनसमये समभवत्, न क्वचिदपि जनेषु, केनापि महापातकं कृतमिति स्मरणमपि न समभवत् कुतः करणमित्यर्थः । व्यभिचारिणाम् निर्वेदावेगदैन्यश्रममदजडतादीनां-सञ्चारिणां भावानां श्रवणं=श्रोत्रेन्द्रियेण साक्षात्करणं, रसानां काव्यरसानां शृङ्गा-रादीनामागमेषु निरूपकेषु ग्रन्थेषु काव्यप्रकाशस्य चतुर्थे-उल्लासे श्रवणम्, साहि-त्यदर्पणस्य तृतीयपरिच्छेदे निरूपणपूर्वकं श्रवणं, जनेषु तु व्यभिचारिणामपराधिनां श्रवणं श्रुतिः, न समभवत्, पालकस्य धार्मिकत्वात्प्रजासु व्यभिचाराभावः, 'राज्ञि-धर्मिणि धर्मिष्ठा' इत्युक्तेः । मिथ्याऽध्यवसितिस्तन्नामिकाऽलङ्कृतिः काव्यानां कविकृतवाङ्मयानामलङ्कारेषु—'वेश्यां वशयेत् खस्रजं वहन्'-इत्याद्युदा-हरणेषु; जनेषु-मिथ्या=असत्यरूपा, अध्यवसितिरध्यवसायो निश्चय 'इत्यर्थः' नाऽऽसीत् । असत्यभाषणविषयिणी बुद्धिर्नासीदिति परमार्थः । अध्यवसानं (संकल्पस्य) अध्यवसिति=बुद्धिः, 'अध्यवसायो बुद्धि'रित्युक्तेः । अध्यवपूर्वात्षोऽन्त-कर्मणि—इत्यस्माद् भावे क्तिनि 'द्यतिस्यतिमास्थामित्तिकिति'-इतीत्वम् । क्षीयतेऽसौ क्षीयमाणस्तस्य भावः क्षीयमाणता हीयमानत्वं, निशीथोऽस्यास्तीति निशीथिनी रात्रिस्तस्या-नायके स्वामिनि=चन्द्रमसि, चन्द्रस्य प्रतिकृष्णपक्षं हीयमानत्वात् क्षीयमाणता तस्मिन्, जनेषु क्षीयमाणता ग्लानिर्दौर्बल्यञ्च न समभवत्, सर्वेषां वर्द्धमानत्वात् वर्द्धमानत्वञ्चात्रोत्साहवत्त्वं, वृद्धानामपि तत्संभवात् । 'अर्द्धरात्रनिशीथौ द्वौ' 'निशा निशीथिनी रात्रिस्त्रियामे'त्यमरः- । तमसोऽन्धकारस्य स्पर्शः प्रवेशः शर्वरीषु रात्रिषु—जनेषु—तमःस्पर्शस्तमः-प्रवेशाख्यो मूर्च्छाप्रायो रोगः न समभवत् । 'कला तु षोडशो भागः' इत्यमरः । कलाहीनत्वं भागहीनत्वं कृष्णपक्षचन्द्रमसि ; जनेषु, कलाकौशल-राहित्यं नासीत् सर्वेषां गीतवादित्रादिकलाप्रवीणत्वात् । 'कला स्यान्मूलरैवृद्धौ शिल्पा-दावंशमात्रके' इति मेदिनी । तरङ्गाः सन्त्यस्यां तरङ्गिणी नदी, तस्यास्तीरस्थेषु तरुषु पादपेषु, मूलानां पादानामुच्छेदः-उन्मूलनं समभवत्, जनेषु मूलस्य धनस्य कार्यस्य वंशस्य सिद्धान्तस्य ग्रन्थस्य च उच्छेदो नाशो लोपो वा न सम-भवत् । मूलं शिफाऽऽद्ययोः । 'मूलवित्तेऽन्तिके ना भे'-इति मेदिनी । 'मूलमाद्ये शिफाभयो'रित्यमरः । कलुषान्तरत्वमाविलमध्यवत्वमिन्द्रवारुण्याः फलेषु, 'विशाला त्विन्द्रवारुणी'त्यमरः, जनेषु कलुषमन्तरं येषान्ते कलुषान्तरास्तेषां भाव-स्तत्त्वं कलुषचेतस्त्वं न समभवत् । 'कलुषोऽनच्छ आविलः' इत्यमरः । इन्द्र—

उन्मत्तत्वं धत्तूरेषु, ग्रन्थिबाहुल्यं त्वचिसारेषु, कलाहीनत्वं कृष्णपक्षचन्द्रमसि, उग्रत्वं पार्वतीरमणे, मन्दत्वं शनैश्चरे, हाहाशब्दो गन्धर्वसंसदि, वामनपदं दिग्दन्तिनि, दुर्दिनं वर्षासु, सोष्मत्वं निदाघे, अवग्रहो दन्तिललाटेषु, परपुष्टत्वं

मिन्द्रलुप्ताख्यं चर्मरोगं वारयति, बाहुलकात् ण्यन्तादुणादिरूनन् ङीप्। उन्मत्तत्वमुन्मत्तशब्दवाच्यत्वं धत्तूरेषु = कितवेषु, उन्मत्तत्वमुन्मादः जनेषु न समभवत्, कर्मक्तान्तात्त्वप्रत्यये भावघञन्ततुल्यता ; 'उन्मत्तः' कितवो धूर्त्तो धत्तूरः कनकाह्वयः' इत्यमरः। 'उन्मत्त उन्मादवति धत्तूरमुचकुन्दयोरि'तिमेदिनी। ग्रन्थीनां पर्व—ग्रन्थीनां बाहुल्यमाधिक्यं त्वचिसारेषु=वंशेषु, जनेषु ग्रन्थिबाहुल्यं हृदयग्रन्थिबाहुल्यं न समभवत्। सरलहृदयत्वाज्जनानाम्। 'वंशे त्वक्सारकर्मारत्वचिसारतृणध्वजाः। शतपर्वा यवफलो वेणुमस्करतेजनाः'—इत्यमरः। 'ग्रन्थिस्तु ग्रन्थिपर्णे ना बन्धेरुग्भेदपर्वणो'रित्यपि मेदिनी। उग्रत्वमुग्रशब्दवाच्यत्वं शिवत्वञ्च पार्वत्या उमाया रमणे प्रिये शिवे, जनेषु, उग्रत्वं रौद्रत्वं न समभवत्, 'उग्रः कपर्दी श्रीकण्ठः' 'रौद्रन्तूग्रमिति' चाऽमरः, पर्वतस्याऽपत्यं स्त्री पार्वती तस्याः—रम क्रीडायामित्यस्मादनुदात्तेतश्च हलादेरिति कर्त्तरि युचि,युवोरित्यनादेशे,रमतेऽसौ रमणः, तस्मिन्। मन्दस्य भावो मन्दत्वं मन्दगामित्वं तच्छब्दवाच्यत्वञ्च शनैः चरतीति शनैश्चरश्शनिः, तस्मिन्, जनेषु मन्दत्वं मूढत्वं सालस्यत्वञ्च न समभवत्। 'कोणो मन्दः सूर्यपुत्रोऽसितश्चेति' वराहमिहिरः। हाहा—इत्याकरकः शब्दप्रयोगः गन्धर्वाणां संसदि समित्यां, 'हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसाम्' जनेषु हाहाइत्यार्त्तशब्दः, न समभवत्सुखित्वात्सर्वेषाम्। हाहाशब्दो गन्धर्वविशेषेऽव्युत्पन्नः, शोके द्विरुक्तमव्ययम्। वामनपदं, दिग्दन्तिनि दक्षिणदिग्गजे, न तु जनेषु वामनाभावात् 'खर्वो ह्रस्वश्च वामनः' इत्यमरः, 'वामनः कुमुदोञ्जनः' इति पूर्वमुक्तमेव। दुर्दिनं मेघाच्छादितो दिवसः, वर्षासु=वर्षर्त्तौ। जनेषु, दुर्दिनं दुष्टं दुःखदायकं दिनं न समभवत्, 'मेघच्छन्नेऽह्नि दुर्दिनम्' अमरः। ऊष्मणा घर्मेण सहितः सोष्मा तस्य भावः सोष्मत्वं घर्मवत्त्वं निदाघे ग्रीष्मर्त्तौ, जनेषु तु न सोष्मत्वं, शान्तत्वाज्जनानां घर्मवत्त्वं साश्रुत्वञ्च नासीत्। ('ऊष्माणस्तु निदाघोष्णग्रीष्माः शषसहा अपि') अदन्तोप्ययम्, 'ऊष्णो घर्मेऽश्रूणि तथा ज्येष्ठे ऊष्मा स्त्रियां त्विषि' इति बोपालितात्। अवग्रहः अवग्रहशब्दप्रयोगो दन्तिनो गजस्य ललाटेऽलिके, न जनेषु—अवग्रहो वृष्टिप्रतिबन्धः समभवत्, अपचाराभावात्। तदुक्तं मिहिरेण, 'मनुजानामपचारादपरक्ता देवताः सृजन्त्येतानि'ति। 'अवग्रहो वृष्टिरोधे प्रतिबन्धे गजालिके' इति मेदिनी। 'अवग्रहो ललाटं स्यादिति' दन्तिनाम प्रकरणेऽमरः। 'वृष्टिवर्षं तद्विघातेऽवग्राहाऽवग्रहौ समौ'—इति च। परैः

कोकिलेषु, मधुपत्वं भ्रमरेषु, समत्सरत्वं मक्षिकापर्यायेषु, अगुरुत्वं द्रव्यविशेषे, कुटिलता कामिनीकुन्तलकलापेषु, सक्षतत्वं वरवर्णिनीबिम्बाधरेषु, बन्धस्थितिर्मोहनविलासेषु, सेतुसमुल्लङ्घनं वार्षिकजलेषु, सूचकत्वं शुभनिमित्तेषु,

काकैः पुष्टास्तेषां भावस्तत्त्वं, परभृतेषु वनप्रियेषु कोकिलेषु, न, तनयप्रियेषु जनेषु स्वयंपालकतया परपुष्टता, समभवत् । 'वनप्रियः परभृतः कोकिलः पिक–इत्यपी'त्यमरः । कोकिला–अण्डानि काकनीडे स्थापयन्ति काका मुग्धतया स्वकीयतया पालयन्ति ततश्च–'परपुष्टकुलादिवान्यपुष्टैः पृथगस्मादचिरेण भाविता तैः' इति माघरीतिः । मधुपत्वं मकरन्दपानकर्तृत्वं, भ्रमरेषु = द्विरेफेषु, न जनेषु दुग्धपानकर्तृषु मधुपत्वं मद्यपानकर्तृत्वं, निषिद्धत्वात्तस्य । 'मकरन्दस्य मद्यस्य माक्षिकस्य च वाचकः, 'अर्धर्चादिगणे पाठात्पुंनपुंसकयो'र्मधु' इतिकौमुद्यामुणादौ । 'षट्पदभ्रमराऽलयः'–इत्यमरः । ''मत्सरा मक्षिकायां स्यान्मात्सर्यक्रोधयोः पुमान् । असह्यपरसंपत्तौ कृपणे चाभिधेयवत्'—इति मेदिनी । 'मत्सरा, मशका, वर्वणा, दंशः, दंशी, सरघा, पुत्तिका इत्यादयः मक्षिकाजातिभेदाः पर्यायाः, अथवा तदर्थप्रतिपादक–शब्दान्तरं पर्य्यायः, समत्सरत्वं मत्सराशब्दवत्वं, मक्षिकाजातिपर्य्यायेषु मक्षिकाशब्दपर्य्यायेषु च, जातिषु मत्सरार्थस्य सहवासात्, शब्दपर्य्यायेषु मत्सराशब्दपाठात्, जनेषु-मत्सरेणाऽन्यशुभद्वेषेण सहितत्वं समत्सरत्वमन्यकल्याणाऽसहिष्णुत्वं, न समभवत्, 'सर्वे कुशलिनः सन्तु' इत्यनुसरणात्सर्वेषाम् । पृथिवी—जल-तेजो-वायु-व्योम-काल-दिग्-आत्ममनांसि नवद्रव्याणि प्रसिद्धानि न्यायशास्त्रे, तेषु पृथिव्यां जले च गुरुत्वम्, अन्येषु द्रव्यविशेषेषु गुरुत्वं नास्तीति न्यायसिद्धान्तः । अत उक्तम् अगुरुत्वमगौरवम्, पृथिवीजलभिन्नेषु द्रव्यभेदेषु, जनेषु तु न कुत्रापि लाघवं, किन्तु सर्वेषु गौरवमादरः इति वाऽगुरुत्वं समभवत् । कामिनीनां वामलोचनानां कुन्तल-कलापेषु केशपाशेषु धम्मिल्लेषु,–कुटिलता ऽरालता, न जनेषु वक्रता, सरलहृदयवत्वात्सर्वेषाम् । 'चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः'–इत्यमरः । सक्षतत्वं—सव्रणत्वं, वरवर्णिनीनां प्रमदानां बिम्बफल-सदृशेषु रदनच्छदेषु, तत्र दशनक्षतस्य कामशास्त्रविहितत्वात् । जनेषु सक्षतत्वं क्षतेन सहजेनाऽऽगन्तुकेन च द्विविधेन व्रणेन, नाशेन च क्षतशब्दवाच्येन सहितत्वं न समभवत् । क्षणु हिंसायामित्यस्मात् क्ते क्षतः । बन्धेषु स्थितिरवस्थानं मोहनस्य निधुवनस्य विलासाः क्रीडाः तासु, कामशास्त्रोक्तासनबन्धपूर्वकविलासे बन्धस्थितिरिति यावत् । जनेषु बन्धे कारावासे स्थितिः स्थानं न समभवत् । सेतोर्नदीबन्धादेः सम्यगुल्लङ्घनमुत्प्लवनं वर्षाभवजलेषु, जनेषु सेतोर्मर्य्यादाया

सुवर्णपरितापो भूषणविधानेषु, वारिमार्गभेदनं मत्तद्विरदेषु, विशृङ्खलगमनं तुरङ्गमेषु, मदान्धता स्तम्बेरमेषु, मलीमसत्वं कृपणेषु, विरोधासक्तिः कृपाणेषु, काठिन्यं कुरङ्गदृशां कुचकार्त्तस्वरकुम्भेषु, उद्वेगयोगस्ताम्बूलेषु,

उल्लङ्घनमतिक्रमो न समभवत् । सूचकत्वं ज्ञापकत्वं, शुभनिमित्तेषु दक्षिणाक्षिस्पन्दादिषु, न जनेषु-सूचकत्वं पिशुनत्वं समभवत् । सुवर्णस्य हेम्नः परितापः सन्तापः, भूषणानां कटककुण्डलादीनां विधानेषु रचनासु समभवत्, जनेषु सुवर्णानामुत्तमवर्णानां द्विजानां परितस्तापः परितापो दुःखं न समभवत् । वारिमार्गस्य स्वबन्धनार्गलस्य यद्भेदनं भङ्गस्तन्मत्तेषु द्विरदेषु गजेषु, न जनेषु वारिमार्गस्य जलमार्गस्य कुल्यादेर्भेदनं त्रोटनं समभवत्, परापकारविमुखत्वाजनानाम् । गजानान्तु मत्तत्वं गुणस्तत्फलं वारिमार्गभेदनं, सेनाङ्गत्वाद्वीरत्वसूचकम् । विशृङ्खलमप्रतिबन्धं यथास्यात्तथा गमनं गतिर्धावनं, तुरं शीघ्रं गच्छन्ति ते तुरङ्गमाः सैन्धवास्तेषु, जनेषु तु—विशृङ्खलमुद्धतं यथा तथा गमनं चलनं, आचारे विचारे आहारे व्यवहारे निहारे च, न, समभवत्, सर्वेषां युक्ताहारविहारित्वात् । धावनमश्वानां परमो गुणः, मर्य्यादापालनं मानवानाम् । मदेन मदच्यवनेनान्धस्य भावोन्धता मदोन्मत्तत्वं गन्धगजत्वं, स्तम्बे रमन्ते स्तम्बेरमा इभास्तेषु ( स्तम्बेकर्णयोरमिजपोः, इत्यचि, समासे तत्पुरुषे कृति बहुलमिति सप्तम्या अलुक् ) न जनेषु मद्योपयोगजनितेन मदेन चित्तविकारेणाऽन्धता विचारशून्यत्वं, समीक्ष्यकारित्वात्सर्वेषाम् । मलीमसत्वं—मलिनता, कृपणेषु=कदर्य्येषु विषयान्तरवासिषु, सौराज्ये कृपणाऽभावात्, जनेषु न समभवन्मालिन्यं मानसं वाचिकं कायिकञ्च, "वयसः कर्मणोर्थस्य श्रुतस्याऽभिजनस्य च । वेषवाग्बुद्धिसारूप्यमाचरन्विचरेदिह ॥ न जीर्णमलवद्वासा भवेच्च विभवे सति" इतिमनुवचनाभ्यां मालिन्यस्य निषिद्धत्वात् । विरोधासक्तिः–विशिष्टो रोधो विरोधः तत्कर्मिका आसमन्तात्सक्तिः सज्जनं, शत्रुशातनरूपं, कृपाणेषु खड्गेषु, न तु जनेषु विशेषस्य वैरस्यासऽऽक्तिः तत्परता समभवत्, 'संहतिः श्रेयसी पुंसा'मिति नियमानुसरणाजनानाम् । 'वैरं विरोधो विद्वेषो मन्युशोकौ तु शुक्'स्त्रियाम् । काठिन्यम्—कठोरत्वं पीनत्वं, कुरङ्गदृशां मृगलोचनानां कुचमयकनककलशेषु, जनेषु मृदुभाषित्वात् मृदुस्वभावत्वात्सर्वेषां, न कठोरत्वं तेषु । उद्वेगयोगः—उद्वेगस्य क्रमुक-फलस्य योगः संयोजनम्, ताम्बूलेषु=ताम्बूल्या अवयवास्ताम्बूलानि नागवल्लीदलानि तेषु, ( 'अवयवे च प्राण्योषधिवृक्षेभ्य' इति अण् ) जनेषु उद्वेगस्योद्भ्रमस्य योगः सम्बन्धो न समभवत्, भयाभावात् । 'क्रमुकफलमुद्वेगम्' । 'उद्वेग उद्भ्रमः' । 'ताम्बूलवल्ली ताम्बूली नागवल्ली' इति सर्वत्राऽमरः । क्षामता तनुता कृशता,

क्षामता युवतिमध्यदेशेषु, मानो मत्तकाशिनीषु, ज्याड्यं जलेषु, आश्रयाशत्वं हिरण्यरेतसि, नीचपथगमनं तरङ्गिणीषु, कण्टकवेधः केतकीदलेषु, नित्यहानिः प्रत्यनीकेषु, पङ्कसम्बन्धो जलाशयेषु, पोतविनाशः समुद्रे, कुशब्दो

---

युवतीनां तरुणीनां मध्यदेशेषु उदरेषु कटिप्रदेशेषु, 'शातोदरी युवदृशां क्षणमुत्सवोऽभूत्' 'उदरं परिमाति मुष्टिना' 'अयि कृशोदरि'–इत्यादौ तनुमध्यत्वस्य प्रशंसनीयत्वात्। न, जनेषु–क्षामता कृशता दुर्बलता, पुष्टत्वात्सर्वेषाम् । मानोऽभिमानश्चित्तवृत्तिविशेषोऽहङ्कारो वा, मत्ताः काशन्ते शोभन्ते इति मत्तकाशिन्यो मत्ताङ्गनास्तासु, न, जनेषु–मानो गर्वः, विनीतत्वात्सर्वेषां जनानां, मत्तकाशिनीनां मानः शोभाधायकतया—उचितो,ऽनुचितो जनानां शिक्षितानाम् । जाड्यं जडता जलेषु कमलेषु, 'न' जनेषु—जाड्यं मूर्खता, सुबोधत्वात्सर्वेषाम् । 'सुषीमः शिशिरो जडः' 'सलिलं कमलं जलम्' इत्यमरः (जडस्य भावो जाड्यम्, गुणवचनब्राह्मणादिभ्यःष्यञ्—इतिष्यञ्प्रत्ययो ञित्वादादिवृद्धिः । ) आश्रयं स्वाधिष्ठानं काष्ठमङ्गारं वर्त्तिकाञ्च अश्नातीति आश्रयाशस्तस्य भाव आश्रयाशता सा–हिरण्यं रेतः सारभूतं तत्त्वान्तरं यस्मादुत्पद्यते पाकवशात्पार्थिवोष्मसंयोगात्स हिरण्यरेताः हुतभुक्, तस्मिन्नाश्रयाशत्वं आधारभक्षकता, जनेषु–आश्रयं स्वाजीव्यमश्नातीत्याश्रयाशः, आश्रयघातकस्तस्य भावस्तत्त्वमुपजीव्यविरोधित्वं नैव समभवत्, कृतघ्नतापातभयात्, वह्नेस्तु स्वभावः । 'आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः'–इत्यमरः । नीचश्चासौ पन्थाः नीचपथो निम्नसरणिः, तेन गमनं वहनं स्यन्दनं, तरङ्गाः सन्त्यासु तरङ्गिण्यो नद्यो निम्नगास्तासु. 'तरङ्गिणी शैवलिनी'त्यमरः, 'न' जनेषु—नीचमार्गगमनं कुमार्गप्रवृत्तिः, नीचोच्चशब्दौ नीचैसुच्चैसव्ययाभ्यां भिन्नौ । कण्टकानां वेधो व्यधनं केतकीदलेषु केतकीपत्रेषु, तेषु कण्टका भवन्ति परस्पराघातेन परस्परवेधो भवति । जनेषु कण्टकैः पादपाऽवयवैः क्षुद्रशत्रुभिश्च कृत्वा वेधः पादादौ प्रवेशः, पीडनञ्च न समभवत्, 'क्षुद्रशत्रौ च कण्टकः'—इत्यमरः । नित्यं हानिः प्रत्यनीकेषु शत्रुषु, न जनेषु नित्यहानिः, स्पष्टम् । पङ्कस्य कर्दमस्य संबन्धः संयोगरूपः जलाशयेषु जलाधारेषु वापीकूपादिषु, जनेषु पङ्कस्य पापस्य संबन्धः समवायात्मकः न समभवत्, 'अस्त्री पङ्कं पुमान् पाप्मा पापं किल्बिषकल्मषम्' 'पङ्कोऽस्त्री शादकर्दमौ'इत्युभयत्राऽमरः । पोतस्य वहित्रस्य विनाशो ऽदर्शनम् दूरगामित्वान्न तु ध्वंसोऽमङ्गलत्वात् । समुद्रेऽब्धौ, 'सांयात्रिकस्य द्वीपान्तरगामितया पोतस्य विशिष्टमदर्शनं विनाशः स च समुद्रे मुद्रासहिते समुद्रे, समुद्रशब्दः श्लिष्टो विना मुद्रया-यात्राऽसंभवात् 'सांयात्रिकः पोतवणिक्' । 'पोतो वहित्रं प्रवहणम्' इति समुद्रयाग्नि-

भूमौ, भङ्गो ह्रदादिषु, करुणोत्पत्तिर्वनेषु, अमरकण्टकत्वं तीर्थविशेषे, आशा-
रोधकत्वं तिमिरे, साक्षिकूटता शिवविरञ्चिस्कन्देषु, पञ्चत्वं रुद्रमुखेषु,

नौकायां, जनेषु—पोतस्याऽर्भकस्य विनाशोऽकालमरणं न समभवत् । "नह्यकाल-भवो मृत्युरिक्ष्वाकुपदमस्पृश'दितिन्यायादिति भावः, 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः'इत्यमरः । 'पोतः शिशौ वहित्रे' चेति मेदिनी । कुरित्या-कारकः शब्दो वाचकः, वाचकतासम्बन्धेन भूमौ भुवि वर्त्तते, 'गोत्रा कुः पृथिवी पृथ्वी'त्यमरात् । जनेषु—कुत्सितः शब्दः कुशब्दः कुत्सासूचकः स्वनो न समभवत्, परापवादाद्वजेन्नोतिमिति नीतेः । भञ्जनमामर्दनं, प्रभञ्जनवेगविघट्टनजन्यम्, भञ्जेर्धातोर्घञि भङ्गस्तरङ्गः, स च ह्रदादिषु ह्रद–तटाक–नद–नदीसागरेषु, न जनेषु—भङ्गः परस्पराऽऽमर्दनपराजय–जन्यो विध्वंसः, सम्भूय समुत्थायित्वात्सर्वे-षाम् । 'भङ्गस्तरङ्ग ऊर्मिर्वा' इत्यमरः "भङ्गस्तरङ्गे भेदे च रुग्विशेषे पराजये" इति हैमः । करुणस्य तदाख्यतरोरुत्पत्तिरुद्भवः काननेषु, "करुणो वृक्षभेदे स्याद्रसभेदे च कथ्यते' । करुणस्य शोकस्थायिभावकस्य रसस्य, 'लक्षणया करुण-रसजनकस्य शोकस्य, उत्पत्तिरुद्गमो, न जनेषु. 'इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत्' ( साहित्यदर्पणम् ) । अमराणां देवानां कण्टकाः शत्रवस्तेषां भावोऽम-रकण्टकत्वं सुरारित्वम् जनेषु त्रिभुवनेषु न समभवत् , पालकस्य राजशेखरस्य निर्जितदानवत्वात् । किन्तु तीर्थविशेषे नर्मदोद्गमस्थाने ऽमरकण्टकपदनिष्ठ-शक्ततानिरूपित–शक्यतावच्छेदकाऽमरकण्टकत्ववत्त्वं, तत्राऽमरकण्टकशब्दस्य रूढ-त्वात् । आशानां दिशां रोधकत्वमावरकत्वमाच्छादकत्वं तिमिरे तमसि, न जनेषु आशायास्तृष्णाया, रोधकत्वं व्याघातकत्वं बाधकत्वं समभवत् । 'तमिस्रं तिमिरन्तमः'—इत्यमरः । 'आशा ककुभि तृष्णायाम्'—इति हैमः । साक्षिकू-टता—साक्षाद्द्रष्टा चाक्षुषप्रत्यक्षवान् साक्षी 'भावप्रधानः' साक्षित्वे कूटता अनृतव्यवहारः मायिकव्यवहारो वा, शिवे पार्वतीरमणे द्यूतक्रीडासु, विरञ्चौ चतुरानने शिवलिङ्गान्तदर्शने, स्कन्दे=गुहे गणेशेन सह शस्त्रप्रयोगखुरलीकरणे, कथा काशीखण्डे शिवपुराणे स्कन्दपुराणे प्रसिद्धा । न जनेषु साक्षित्वेऽनृतभाषण-मासीत् । "साक्ष्येऽनृतं वदन् पाशैर्बध्यते वारुणैर्भृशम् । सत्येन पूयते साक्षी धर्मः सत्येन वर्द्धते" इति मनुःस्मरणात् "कूटं पूर्द्वारयन्त्रयोः" । 'मायादम्भाऽद्रिश्रृ-ङ्गेषु सीराङ्गेऽनृततुच्छयोः । 'निश्चलेऽयोघने राशौ–'इति हैमः । पञ्चानां भावः पञ्चत्वं पञ्चसङ्ख्यावत्त्वं ' सङ्ख्येयवाचकशब्दानां प्रकृतिजन्यबोधे सङ्ख्याया एव प्रकारतया भासमानत्वात्" । रुद्रस्योमापतेर्मुखेषु वदनेषु, 'ध्यायेन्नित्यं महेशं रजतगिरिनिभं,⋯⋯'पञ्चवक्त्रं त्रिनेत्रमिति ध्यानात् । न जनेषु—जायन्ते

सगदत्वं मधुसूदने, परलोकासहिष्णुत्वं वीरेषु, अनिर्मुक्तत्वं भुजङ्गेषु, अभ्युदितत्वं भास्वति, निराकृतित्वं वैरिस्त्रीषु, निस्त्रिंशत्वं कृपाणेषु,

प्रादुर्भवन्ति इति जनाः = बालास्तरुणाः प्रौढाः परिणताश्च तेषु पञ्चत्वं = मरणम् अवनिसलिलाऽनलानिलगगनानामदृष्टसहकृतविलक्षण—संघातरूपशरीरस्य ध्वंस-जनकं पृथग्भवनं पञ्चत्वम्, तन्न वृद्धातिरिक्तेषु पूर्वोक्तेषु जनेषु समभवत् । अस्ति, जायते, वर्द्धते परिणमति, अपक्षीयते नश्यति—इति षड्भावानां क्रमिकत्वात्–कथङ्कारमकालमृत्युर्धार्मिके नृपे–इति भावः । गद्या=कौमोदक्या सहितः सगदस्तस्य भावः सगदत्वं गदावत्त्वं, मधुमादिममसुरं सूदयति मधुसूदनस्तस्मिन् वासुदेवे, न जनेषु—गदेन रोगेण सहिताः सगदाः सरोगास्तेषां भावः सगदत्वं, सरोगत्वं समभवत्, 'जनपदे न गदः पदमादधौ" विति न्यायात् । 'कौमोदकी गदा खड्गो', 'रोगव्याधि–गदाऽमयाः':—उभयत्रामरः । परे च ते लोकाः परलोकाः शत्रवस्तान् न सहते, तस्य भाव. शत्रुलोकाऽक्षमित्वमिति भावः, वीरेषु भटेषु विक्रान्तत्वं वीराणां व्यज्यते' जनेषु—परश्चासौ लोकः परलोको लोकान्तरं तदसहिष्णुत्वन्तदनभिमन्तृत्वं न, समभवत् सर्वेषामास्तिकत्वेन जन्मान्तरमन्तृत्वात् । न निर्मुक्तोऽनिर्मुक्तोऽनिर्मुक्तकञ्चुकस्तस्य भावस्तत्त्वम् भुजङ्गेषु सर्पेषु, "निर्मुक्तो मुक्तकञ्चुकः" ततो नञ्समासः, "भुजङ्गोऽहिर्भुजङ्गमः" । जनेषु–निर्गता मुक्ता येभ्यस्ते निर्मुक्ताः, मुक्तारहिताः, अतिशयेन निर्मुक्ताः अनिर्मुक्ताः एकान्ततो मुक्ताफलरहिता न समभवन् मौक्तिकानां भूषणेषु विद्यमानत्वात् । अथवा भक्तत्वेन सर्वेषां मुक्त्यधिकारित्वात्,—निःशेषेण मुक्ताः निर्मुक्ताः कर्मबन्धन-रहिताः, न, ते, अनिर्मुक्ता बद्धाः नाऽऽसन्निति वार्थः, सर्वेषां ज्ञानित्वात् । सर्पास्तु कदाचिन्निर्मुक्ताः कदाचिदनिर्मुक्ता इति निर्मुक्तभिन्नेष्वनिर्मुक्तत्वमस्त्येव । अभ्युदितत्वम्=उदयक्षितिजदृश्यत्वम्, अभित उदितोऽभ्युदितस्तस्य भावस्तत्त्वम्, भा = विद्यते यस्य स भास्वान्, विवस्वान्, तस्मिन्यसूर्ये, ब्राह्मणेषु जनेषु–अभ्युदितत्वं सूर्योदयकालिक-स्वापवत्वं न समभवत् तत्र स्वापस्य निषिद्धत्वात् । "सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च । अंशुमानभिनिर्मुक्ताऽभ्युदितो च यथाक्रमम्" इति मनुरमरश्च । निर्गता आकृतिरवयवसन्निवेशरूप आकारः, सौन्दर्याधायकमण्डनादिचेष्टा च यासान्ता निराकृतयस्तासां भावस्तत्त्वं वैरिणां रिपूणां स्त्रीषु योषित्सु, न स्वाध्यायनित्येषु ब्राह्मणेषु जनेषु–निराकृतित्वं स्वाध्यायरहितत्वम् । 'अस्वाध्यायो निराकृतिः"–इत्यमरः । निस्त्रिंशत्वं त्रिंशदङ्गुलिभ्यो निर्गतत्वं, कृपाणेषु=तरवारेषु, जनेषु निर्दयत्वन्न समभवत् । 'निःस्त्रिंशो निर्घृणे खड्गे' हैमः ।

मुष्टिबन्धो धनुराकर्षणेषु, गुणत्यागो मार्गणेषु, त्रपानाशः कामावस्थासु, मलिम्लुचत्वं मासभेदे, निर्ग्रन्थित्वं भिक्षुविशेषेषु, बकवृत्तित्वं तडा-

मुष्टिबन्धः=संग्राहः, धनुराकर्षणेषु, जनेषु—मुष्टिबन्धः=अदातृत्वं नासीत् । गुणस्य ज्यायास्त्यागस्त्यजनं मार्गणेषु बाणेषु न गणकेषु गुणक-गुणनत्यागः, नापि मीमांसकेषु गुणस्य प्रधानेतिकर्तव्यतासंपादकस्याङ्गस्य त्यागः, नापि वैयाकरणेषु गुणस्यादेङ्रूपस्य भवति गङ्गोदकमित्यादिसाधुत्वप्रतिपादकस्य त्यागः, नापि साङ्ख्येषु सत्त्वरजस्तमसां गुणानां त्यागः, नापि नीतिज्ञेषु सन्धिविग्रहादिगुणानां त्यागः, न ऽपि जनेषु शैर्य्यौदार्य्यादीनां गुणानां त्यागः समभवत् । एवं श्लेषकुशलैः सर्वत्र व्याख्येयम् । त्रपाया लज्जायाः नाशो नष्टिस्त्यागः कामावस्थासु मोहनेषु, 'वैयात्यं सुरतेष्विवेति' न्यायात्, नान्यावस्थासु नापि जनेषु—त्रपाया मन्दाक्षस्य नाशः समभवत्, 'मन्दाक्षं ह्रीस्त्रपा व्रीडा'—इत्यमर । 'त्रपा लज्जाकुलटयो'रिति हैमः । त्रपाशब्देन कुलटाग्रहणेऽनाश-इति च्छेदे नाशोऽदर्शनम् अनाशोऽदर्शनाभावो दर्शनरूप एव स जनेषु न समभवदित्यर्थः । त्रपायाअनाशः कुलटा-दर्शनं नासीदिति । 'राजन्वति व्यभिचाराऽभावात् कुलटा नासी'दिति भावः । मलिम्लुचत्वमिति—मलधारणे मल्यते ध्रियतेऽवस्थाप्यतेऽवशिष्टतया इति सर्वधातुभ्य इन् इति बाहुलकात्कर्मणि मलिर्धृतः कालस्तं म्लोचति चोरयति नित्यं स्वसंपादनाय सञ्चिनोति इति मलिम्लुचः पुरुषोत्तमो मासस्तस्मिन् मलिम्लुचत्वं सञ्चित(धृत) मोषकत्वं न जनेषु—स्तेनत्वं समभवत् । "मलिम्लुचो मासभेदे चौरज्वलनयोः पुमान्" इति विश्वमेदिन्यौ, पुरुषोत्तममासविषये तु-'दर्शाग्रतः सङ्क्रमकालतः प्राक् सदैव तिष्ठत्यधिमासशेषः' इत्याद्यनुसन्धेयम् । यथाऽमावास्यासमाप्त्यनन्तरं प्रतिपदि दर्शघटीष्वतीतासु संक्रमश्चेत्स दर्शानन्तरं घट्यात्मकः कालः मलिः । पुनर्मासान्तरेऽमानन्तरं प्रतिपदि ५० पञ्चाशद्दण्डेषु संक्रमः । एवं तृतीयवर्षे मलिसञ्चयादधिमासो भवति, तदुक्तं सदैव तिष्ठत्यधिमासशेष-इति । "द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोडशभिस्तथा । घटिकानां चतुष्केण पतत्यधिकमासकः" इति तु कल्पदिवसैरेतावन्तोऽधिमासाश्चेदेतावद्भिर्दिवसैरेकोऽधिमास इति त्रैराशिकपरः । निर्ग्रन्थित्वं भिक्षुविशेषेषु=निर्ग्रन्थिशब्दवाच्यत्वं, बन्धनभयराहित्याभिमानो वा भिक्षूणां बौद्धतपस्विनां भेदेषु, न तु जनेषु—निर्ग्रन्थित्वं मुक्तकच्छशिखावत्वं, तत्त्वस्य कातरत्वद्योतकत्वात् "मुक्तकच्छशिखाः केचिद्भीताःस्म इति वादिनः" इति लिङ्गात् । निर्गता ग्रन्थिरमावास्यादिपर्व यागदानादिना विनेति निर्ग्रन्थयः पर्वमानहीनास्तेषां भावस्तत्त्वं न समभवदिति वार्थः । 'ग्रन्थिस्तु ग्रन्थिपर्णे 'ना' बन्धरुग्भेदपर्वणो'रिति मेदिनी, 'गन्थिर्ना पर्वपरुषी'—इत्यमरः । बकानां वृत्तिराजीव्यं बकवृत्तिः, जलाशयस्तस्य भावो बकवृत्तित्वं बकाजीव्यत्वं,

गेषु, शूलित्वं त्रिनेत्रे, गौणार्थपरिग्रहः शब्देषु न क्रियासु, पृष्ठदर्शनं सामप्रयोगेषु न संगरेषु, नीविमोक्षः सुरतोत्सवेषु न वणिक्षु, अदृष्टपर्वत्वं

तडागेषु पद्माकरेषु, 'पद्माकरस्तडागोऽस्त्री'त्यमरः। जनेषु बकानां वृत्तिरिव वृत्तिर्वर्त्तनं यस्य स तस्य भावो बकवृत्तित्वम्, जनेषु बकवृत्तित्वं न समभवत्, 'हैतुकान् बकवृत्तींश्च वाङ्मात्रेणाऽपि नार्चयेदिति' निन्दास्मरणात्। शूलस्त्रिशूलोऽस्यास्तीति शूली तस्य भावः शूलित्वं, संयोगसम्बन्धावच्छिन्नशूलत्वावच्छिन्नस्वत्वनिरूपितस्वामित्ववत्वम्, संयोगेन शूलस्वामित्वम् इत्यर्थः, त्रीणि नेत्राणि यस्य स तस्मिन् त्रिलोचने, 'शिवः शूली महेश्वर' इत्यमराच्छूलिशब्दवाच्यत्वं त्रिनेत्रे, जनेषु तु शूल रुजायमितिधातोरिगुपधज्ञाप्रीकिरःकः इति कप्रत्यान्त 'शूल' शब्दवाच्ये, हृत्पार्श्वबस्तित्रिक-पृष्ठदेशपीडाकरो वातप्रधानो रोगः शूलः, सोऽस्यास्तीति शूली=शूलाख्यरोगवान्, न समभवत्, 'शूलोऽस्त्री रोग आयुधे' इति मेदिनी। अतः परमन्यव्यपोहः परिसङ्ख्यातः प्रत्येकवाक्येषु। "गौणार्थेति–गुण आमन्त्रणे, चुरादावदन्तस्तस्मा'दकर्त्तरि च कारके -इतिकर्मणि घञि, अचःपरस्मिन्निति णेरनिटीति कृतस्य णिलोपस्य स्थानिवद्भावेन लघूपधत्वाभावेन, गुणाऽभावेन, गुण्यत आमन्त्र्यते आकार्यते सादृश्यसम्बन्धवत्तया समानत्वेनाश्रीयते स्वाऽभिमतप्रतिपादनायेति 'गुण, आमन्त्रितोऽर्थः, न तु निजः शब्दस्य; गुण एव गौणः स्वार्थेऽण्। अथवा गुणनमामन्त्रणं 'गुणः' भावे घञ्, गुणात्सादृश्यादागतो गौणः, उभयत्र समानोऽर्थः। अर्थ उपयाच्ञायाम् इत्यस्मात्कर्मणि घञि, अर्थ्यते प्रतिपाद्यते शब्देन–इति अर्थः प्रतिपाद्यः, स च द्विधा, मुख्यो गौणश्च, साक्षात्संकेतितो मुख्यः, प्रयोगवैचित्र्यान्मुख्यार्थबाधे सादृश्यादिसंबन्धादाश्रितो गौणः, तस्यार्थं परित्यज्य स्वार्थं, ग्रहो ग्रहणं परिग्रहः स्वकीयतया स्वीकृतिः, शब्देषु वाचकेषु, बाधितवाच्यार्थेषु, न क्रियासु–कर्मसु, गौणार्थस्याऽप्रधानवस्तुनः परिग्रहः संग्रहः मुख्यार्थेन कार्यसिद्धौ सत्यां गौणार्थपरिग्रहस्याऽन्याय्यत्वात्। दर्भाणामभाव एव शरप्रस्तरणस्यानुकल्पत्वेन विधानात्। शासति सुनृपे, सुलभे गव्ये हविषि न माहिषं ग्राह्यम्। पृष्ठस्य पश्चाद्भागस्य दर्शनं प्रेक्षणं साम्नः सान्त्वस्य प्रयोगेषु प्रणमनार्थं पादपतनेषु न संग्रामेषु, पलायनाऽभात् 'संग्रामेऽप्यपलायन'मिति स्मृतिस्मरणात्। 'पृष्ठं चरममात्रे स्याद्देहस्याऽवयवान्तरे' इति मेदिनी, 'पृष्ठन्तु चरमं तनो'रित्यमरः। पृषु-सेचने इत्यस्माद् उणादौ 'थक्'प्रत्ययान्तो निपात्यते। नीव्याः स्त्रीकटीवस्त्रबन्धनस्य मोक्षो मोचनेच्छा सुरतोत्सवेषु मोहनोत्सवेषु, पणन्ति व्यवहरन्ति ते वणिजस्तेषु-नीव्या मूलधनस्य मोक्षस्त्यागो न समभवत्, मूलधनत्यागे–सर्वजगतां परमार्त्तिहन्त्या भगवत्या वार्त्तया बाधापत्तेः। 'नीवी, स्त्रीकटीवस्त्रबन्धने मूलद्रव्ये, परिपणे' इति

विशिखत्वं च सायकेषु न तत्तद्विहितक्रियापरेषु, निःश्वासाविर्भावो रतक्रीडासु न शोकोदयेषु, करग्रहणं विवाहविधिषु न ब्राह्मणेषु, दाननिवृत्तिर्दीक्षितेषु न कार्पण्यग्रस्तेषु, करपीडा सुन्दरीस्तनकोरकेषु न प्रजासु, पत्रभङ्गः कामिनीकपोलतलेषु न संग्रामाडम्बरेषु, सन्ध्यावर्जनं विपक्षेषु

हैमः ; न दृष्टं पर्वग्रन्थिर्यस्य स अदृष्टपर्वा तस्य भावस्तत्त्वं, स्यन्ति घ्नन्ति इति सायकास्तेषु, विशिष्टास्तीक्ष्णाशिखा अग्रं येषान्ते विशिखास्तेषां भावस्तीक्ष्णाग्रत्वं च सायकेष्वेव । तीव्रवेगाद्बाणेषु युक्तमदृष्टपर्वत्वं, तीक्ष्णाग्रत्वं च लक्ष्यवेधार्थम् । 'पृषत्कबाणविशिखाः' 'शिखा चूडा केशपाशी'त्युभयत्राऽमरः । तेषु पर्वसु संक्रान्त्यादिषु, स-शिखत्वादिषु चाऽधिकारिविशेषणेषु सत्सु विहिता विधिबोधकलिङादिघटितवाक्येन प्रतिपादिता, या—क्रिया = याग-होम-दान-श्राद्ध-व्रतो-पवासादिकाः ताः परा इष्टा येषान्ते तेषु, जनेषु न समभवत, तेषां ज्ञातसकलपर्वत्वात्, सशिखत्वाच्च । 'अमावास्याऽष्टमी कृष्णपौर्णमासी चतुर्दशी । पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च' । निःश्वासाविर्भावः—मुखमारुतनिर्गमनं, श्रमादित्यर्थः, ( सुष्ठुधर्माऽविरुद्धं ) रतं = रमणं, भावे क्तः, तस्याऽवयवभूताः क्रियाः क्रीडाः, चुम्बनाधरपानाद्य असङ्ख्यातास्तासु निःश्वासाऽविर्भावस्य स्वाभाविकत्वात्, शोकस्य इष्टनाशजन्यस्य दुःखस्य, उदयेषु प्रादुर्भावेषु न समभवदिति, शोकस्याऽभावात्, करस्य हस्तस्य ग्रहणं, विशिष्टो वाहः प्रापणं, पितृदत्ताया देवगुरुब्राह्मणसन्निधौ पावकसाक्षितयाऽऽत्माधर्धाङ्गित्वेन संस्कृतायाः कन्यायाः स्वगृहनयनं विवाहपदार्थः, तेषां विधयो ऽनुष्ठानानि तेषु, न ब्राह्मणेषु—करस्य राजग्राह्यस्य भागस्य ग्रहणमादानं समभवत् । 'आवृत्तानां गुरुकुलाद्विप्राणां पूजको भवे"दित्यादिना करग्रहणापवादतया पूजनविधानात्, 'वेदाऽभ्यासाद्भवेद्विप्रस्तदर्थज्ञस्तु ब्राह्मण'—इति स्मृत्यर्थः, । दानात्कर्मणो निवृत्तिरकरणं दीक्षितेषु = संजात-यज्ञदीक्षाव्रतेषु यजमानेषु, 'दीक्षितो न ददातीति' श्रुतेर्द्रव्यत्यागानन्तरं यजमानस्य दानादिनिवृत्तेः कार्पण्येन कृपणतया ग्रस्तेषु न समभवत्, राजन्वति कृपणाभावात्, 'कदर्ये कृपण' इत्यमरः । करेण करणभूतेन पीडा पीडनं सुन्दरीणां रमणीनां ये स्तनानां कुचानां कोरकाणि कुड्मलानि तेषु, स्तनमर्दनस्य कामशास्त्रविहितत्वात् । प्रजासु स्वराष्ट्रीयजनेषु—करस्य बलिग्रहणस्य पीडा करपीडा पीडनपूर्वकं करग्रहणमिति भावः, न समभवत् "सांवत्सरिकमाप्तैश्च राष्ट्रादाहारयेद् बलिम् । स्याच्चाम्नायपरो लोके, वर्तेत पितृवन्नृषु"—इति मनुवचनानुसारात्पितृवत्पालनपूर्वकं करग्रहणात् । पत्राणां तमालपत्राकाराणां तिलकानां भङ्गो रचना पत्रभङ्गः, कामिनीनां भीरूणां कपोलतलेषु गण्डस्थलेषु, न संग्रामाडम्बरेषु, पतन्त्येतैरिति पत्राणि (दाम्नीत्यादिना ष्ट्रन्)

नातिपन्नकालेषु, स्वपक्षस्थापनप्रयासः शास्त्रकथासु न व्यवहारेषु, क्षुद्रासङ्गो मधुमक्षिकानामसु न कार्येषु, उत्पातदर्शनं मल्लयुद्धप्रचारेषु नान्तरिक्षादिषु, याच्ञानिरासो मानिनीषु न दातृषु, अश्लीलभाषणमश्वमेधविधिषु रतप्रयोगेषु च न सद्गोष्ठीषु, द्विजपरीक्षणं लक्षणविचारेषु न दानेषु, श्रुतिलङ्घनं वधूनां कटाक्षेषु न जनेषु—समभवन् ॥ ८ ॥

पत्राणां वाहनानां भङ्ग आमर्दनं, समभवत् स्ववर्गे—इत्यर्थः,—शिक्षितत्वाद्वाहनानां, वाहकानाञ्च । 'पत्रन्तु वाहने पर्णे, पक्षे च शरपक्षिणो'रिति, 'पत्रं वाहनपक्षयो'रित्यमरः। भञ्जनं भङ्गः, भञ्जेर्भावे घञि कुत्वम्। सन्धेः सन्धानस्य मेलस्य, आवर्जनं सम्पादनं विपक्षेषु रिपुपक्षेषु पराजयभयात् । अतिपन्नकालेषु—अत्यन्तप्राप्तकालेषु "प्रातःसन्ध्यां जपन्तिष्ठेत्सावित्रीमार्कदर्शनात् । पश्चिमान्तु समासीनः सम्यक् ऋक्षविभावनात्"—इतिमानवोक्तेषु कालेषु सन्ध्यायाः सन्ध्योपासनस्य वर्जनं त्यागः, न समभवत् । 'नानुतिष्ठति यः पूर्वां नोपास्ते यश्च पश्चिमाम्। स शूद्रवद्बहिष्कार्य्यः सर्वस्माद् द्विजकर्मणः" इति स्मृतेः सन्ध्यावर्जने शूद्रत्वापत्तेः। स्वपक्षस्य स्वगृहीतपक्षस्य स्थापने स्थिरीकरणे प्रयासः प्रयत्नः शास्त्रसन्धिषु कथासु वादेषु तत्त्वबुभुत्सया प्रवर्त्तितासु न परार्थहरणेच्छया, प्रवर्त्तितासु, व्यवहारेषु—ऋणादानादिषु यथार्थकथनस्यैव न्याय्यत्वान्न केवलं स्वपक्षस्थापनप्रयासः समभवत् , किन्तु सत्यस्थापनप्रयासः। मधुमक्षिका अष्टविधाः सुश्रुतोक्ताः मक्षिका भ्रमर-चटर-पुत्तिका-क्षुद्रा-प्रभृतयः, तासु क्षुद्राणां सङ्गः साहचर्यं मधुनिर्मातृत्वसाजात्यात् , कार्येषु पुरुषप्रयत्नसाध्येषु कर्तव्येषु क्षुद्राणामङ्गशीलविकलानामासङ्गः सहवासः, सम्मन्त्रो वा न समभवत्। उत्पतनमुत्पात उच्छलनं, तस्य दर्शनं मल्लयुद्धस्य द्वन्द्वयुद्धस्य प्रचारेषु प्रक्रियासु नाऽन्तरिक्षे दिवि भूमौ च, तेषां दर्शनं समभवत् , त्रिविधा उत्पाताः धूम-केतुदर्शनादयो दिव्याः, विद्युदातपजा आन्तरिक्षाः, भूकम्पादयो भौमाः, बृहत्संहितायां द्रष्टव्याः । प्राणिनां शुभाऽशुभसूचकः पाञ्चभौतिको विकार उत्पातः, याचनं याच्ञा प्रार्थना प्रियकृता तस्याः, निरसनं निरासो निराकरणं, मानः कोपः प्रणयसमुद्भवः, ईर्ष्या समुद्भवो वा ऽस्ति यासान्ता मानिन्यो मानवत्यस्तासु, न दातृषु=दानमाहात्म्यज्ञातृषु धनिषु वदान्येषु, 'दानमेकं कलौ युगे' 'दानं दुरितनाशनम्' 'अतिथिर्यस्य' भग्नाशो' 'अनन्तं वेदपारगे' इत्यादि स्मृत्यनुसरणात् । श्रियं शोभां सभायोग्यां, लाति यद्वस्तु, वचनं च तच्छ्रीलम् (आतोऽनुपसर्गे कः) न श्रीलमश्लीलं (कपिलकादित्वाल्लत्वम्) त्रिविधं लज्जा दुःखाऽमङ्गलकत्वात् तस्य अश्लीलार्थस्य भाषणं व्यक्तवाचा स्फुटीकरणं मन्त्रपाठपूर्वकम्, अश्वमेधनामकयागविधायक-

यश्च भगवतो महेन्द्रस्य वयस्यतया प्रवृत्ते देवासुरसन्निपाते नारायण इव निखिलदुर्जयान्दानवेन्द्रान्कथावशेषत्वमनैषीत् ॥ ९ ॥

यस्यैकोपि प्रतापो युगपदेव देववैरिसीमन्तिनीहृदयेषु पाताले, विपक्षराजरमणीहृदयेषु भूतले प्राज्ज्वलत् ॥ १० ॥

---

विधिवचनेषु, मन्त्रेषु तदनुष्ठानेषु च, दशभिर्मन्त्रैः यजुः सं० अ० २३ म० २२–३१। न सतानां सभ्यानां गोष्ठीषु सभासु, लज्जादिजनकत्वात्। रतस्य सुरतस्य प्रयोगे चाऽश्लीलभाषणस्य विहितत्वात्समभवन्न सद्गोष्ठीषु। द्विजस्य ब्राह्मणस्य परितः तपस्यया विद्यया, कुलेन=लक्षणेन शीलेन सदाचारेण च ईक्षणं परीक्षणं परीक्षा–लक्षणानि विचार्यन्ते येषु ते लक्षणविचाराः श्राद्धकल्पादयस्तेषु, "दूरादेव परीक्षेत ब्राह्मणं वेदपारगमिति" श्राद्धप्रकरणवचनात्। दानेषु=दयाप्रयुक्तेषु दानेषु न द्विजातीनां परीक्षणं साधारणदाने सर्वेषामधिकारात्, फलभेदेपि न परीक्षणविधानं, 'सममब्राह्मणे दानं, द्विगुणं ब्राह्मणब्रुवे। प्राधीते शतसाहस्रमनन्तं वेदपारगे' इति सर्वत्र फलश्रवणात्। श्रुतेः श्रवणस्य लङ्घनमाक्रमणं वधूनां=गृहस्थाश्रमधर्मपरिपालनरूपबन्धनदात्रीणाम् सीमन्तिनीनां कटाक्षेषु=अपाङ्गदर्शनेषु, विशाललोचनत्वात्, न जनेषु–श्रुतेर्वेदस्य तत्प्रतिपादितवर्णाश्रमाचारस्य च, लङ्घनमतिक्रमणं समभवत्-इति, समभवन्—इति बहुवचनं पूर्वो-क्तानि सर्वाणि नासन्नित्यभिप्रायेण। श्लेषानुप्राणिता परिसंख्यालङ्कृतिः।

शासनसौभाग्यमयं कुसुमं धर्माधिनाथाय।
कार्त्तिकशुक्लतदीये तिथौ वितीर्णं मुदे जगताम् ॥ ८ ॥

राज्ञो गुणाः शासनसौभाग्यञ्च वर्णितम्, अधुना सहायसम्पत्तिवर्णनाय पुनः प्रतापपराक्रमौ वर्णयति–यश्चेति–देवाश्चाऽसुराश्चानयोरितरेतरयोगो देवासुराः, शाश्वतिकविरोधाऽभावान्नैकवद्भावः, तेषां सन्निपातः संघर्षस्तत्र, प्रवृत्ते जाते भगवतस्त्रिकालज्ञस्य महेन्द्रस्य दिवस्पतेः, वयस्यतया सखित्वेन, नारायण इव विष्णुरिव, निखिलैः सर्वैः सम्भूयाऽपीत्यर्थः, दुःखेन जीयन्ते इति दुर्जयास्तान्, दानवानामिन्द्राः प्रभवो वीरास्तान् कथा–इतिवृत्तमात्रमवशेषो येषान्ते कथावशेषास्तेषां भावस्तत्त्वमनैषीत् प्रापयत् ॥ ९ ॥

यस्य च एकोऽपि प्रतापः प्रभावः युगपदेव=एकवारमेव देववैरीणां या सीमन्तिन्यो नार्यस्तासां हृदयेषु चित्तेषु, पातालेऽधोभुवने, विपक्षाणां विद्विषां राज्ञां रमणीनां रामाणां हृदयेषु भूतले=भूलोके प्रकर्षेणाऽज्वलत् प्रजज्वाल। ज्वल दीप्तौ, लङ् ॥ १० ॥

तस्य च—सरस्वतीवाश्रितचतुरानना, श्रीरिव प्रोल्लसितपद्मकरा, गौरीव भूभृद्वरोत्पन्ना, देवसेनेव बहुलापत्त्यार्हा, पौलोमीवानुभूतशतमखा, लोपामुद्रेव कान्तागस्त्यानवक्षोभवा, रतिरिव पञ्चबाणसञ्चरणभूमिः, सीतेवानधिगतयोनिसङ्करा, अरुन्धतीवाविर्भूतरूपशक्तिः, लङ्केन्द्रदयितेव

प्रतापं वर्णयित्वा तदनुरूपां देवीं वर्णयति-**तस्येति**। य. पूर्वोक्तगुणसम्पन्नः-**तस्य राज्ञो राजशेखरस्य मलयवती-नाम महादेवी आसीदिति सम्बन्धः**। च-शब्दो वाक्यालङ्कारे, त्वर्थो वा, महादेवी तु—मलयवती आसीदिति। कथम्भूता सा-आश्रितोऽवलम्बितश्चतुराननो हिरण्यगर्भो यया सा आश्रितचतुरानना सरस्वती, सेव-आश्रितं चतुरं वचनकुशलमाननं मुखं यस्याः सा, 'स्वयम्भूश्चतुराननः' 'आननं लपनं मुखम्' उभयत्राऽमरः। **प्रकर्षेण** ऊर्ध्वं लसितं शोभितं पद्मं कमलं करे पाणौ यस्याः श्रियः, 'पद्ममेव पद्मकं राति, वा क्विप्', सा श्रीरिव, प्रोल्लसितं पद्ममिव करो यस्या देव्याः। **गौरीव**=उमेव, भूभृतां पर्वतानां वरः श्रेष्ठः पर्वतराजो हिमालयस्तस्मादुत्पन्ना गौरी, सेव, भूभृतां पार्थिवानां वरः श्रेष्ठो नृपस्तस्मादुत्पन्ना महादेवी राज्ञी, निर्धारणे सप्तमीसमासः कार्य्यः, भूभृत्सु वरः इति। 'राज्ञि राट्-पार्थिवक्ष्माभृत'-इत्यमरः। 'महीध्रे शिखरि क्ष्माभृत्' इति च। 'देवाद् वृते वरः श्रेष्ठे त्रिषु क्लीबे मनाक् प्रिये'। बहुलानां षण्णां कृत्तिकानामपत्यं बाहुलेयो, बहुलापत्यं तस्यार्हा योग्या, देवानां सेना वाहिनी, सा-इव, महादेवी बहुलानि बहूनि यानि अपत्यानि तेषामर्हा योग्या। पुलोम्नः अपत्यं स्त्री **पौलोमी** शची, सा अनुभूतः शतमख इन्द्रो यया तादृशी, देव्यपि—अनुभूताश्शतशो बहवो मखा यागा यया सा। 'शत-मन्युर्दिवस्पतिः' इति कोषः। **लोपामुद्रा**=कुम्भसम्भवपत्नी, कान्तः प्रियोऽगस्त्यो यस्याः सा च, आनौ=पालकौ वक्षोभवौ स्तनौ यस्याः सा च, अगस्त्यः कुम्भसंभवः, अस्यैव 'लोपामुद्रा सधर्मिणी'त्यमरः। राज्ञी तु-कान्तस्य वल्लभस्याऽऽगसाऽपराधेन मर्दनादिना स्त्यानावच्छूनौ वक्षोभवौ कुचौ यस्याः सा कान्ताऽऽगस्त्यान-वक्षोभवा, कान्तमर्दनपीनस्तनीति भावः। **रतिरिवेति**—पञ्चबाणस्य कामस्य संचरणस्य गमनस्य भूमिः स्थानं रतिः, पञ्चबाणस्य कामस्योद्दीपनपात्रं देवी, परमसौन्दर्य्यात्। "उन्मादनः स्तापनश्च, शोषणः स्तम्भनस्तथा। सम्मोहनश्च कामस्य, पञ्च बाणाः प्रकीर्तिताः॥" **सीतेव**, न अधिगतो=न प्राप्तो योनि-संसरणजन्यः सङ्करः सङ्कीर्णताक्लेशो यया, सा इव, न अधिगतो=न प्राप्तो योनिसङ्करो योनिसाङ्कर्य्यं यया, शुद्धवंशजत्वात्, सा देवी। सीताया अयोनिजत्वाद्देव्या महाकुलप्रसूतत्वात् साङ्कर्य्याऽभावः। **अरुन्धतीव**, आविर्भूतरूप उत्पन्नः शक्तिस्तन्नामकः पुत्रो यस्याः सा इव, आवि-र्भूता रूपस्य सौन्दर्य्यस्य शक्तिर्यस्याः सा देवी, आविर्भूतरूपा प्रकटीकृता शक्तिः

मन्दोदरी, तारेव प्राप्तसुग्रीवा, द्रौपदीव लब्धवेदिमध्या, रेणुकेव रामाभ्यर्हिता, सञ्ज्ञेव स्वप्रतिनिधीकृतस्त्र्यन्तरा, छायेव सञ्ज्ञानुरूपा, सत्यवतीवोल्लसितव्यासचित्राङ्गदा, अम्बालिकेवाश्रितधृतराष्ट्रा, शकुन्तलेव सदाशुभरता, देव-

सामर्थ्यं प्रभावोत्साहमन्त्रशक्तयो वा यस्या यया वा, उपासनया प्रकटीकृतदुर्गा वा, 'शक्तिरस्त्रान्तरे गौर्य्यामुत्साहादौ बले स्त्रियामि'ति मेदिनी। 'कासूसामर्थ्ययोः शक्ति'-रित्यमरः। **लङ्केन्द्रस्य**=दशाननस्य, दयिता प्रिया नाम्ना **मन्दोदरी** सेव, मन्द-मुदरं यस्याः सा मन्दोदरी महादेवी, कृशोदरीत्यर्थः। **तारा**=बालिप्रिया, बालिवधानन्तरं प्राप्तः सुग्रीवनामा वानरो यया, तथैव प्राप्ता सुग्रीवा शोभना कम्बुसमाना ग्रीवा यया सा देवी, 'कण्ठो गलोऽथ ग्रीवायां शिरोधिः कन्धरेत्यपि'—इत्यमरः। **द्रौपदीव**—लब्धं प्राप्तं जन्मस्थानतया, वेदेः परिष्कृतभूमेर्मध्यमन्तर्यया सा इव, लब्धं प्राप्तं जन्मतो यत्नतश्च वेद्या अङ्गुलिमुद्राया मध्यमिव मध्यं यया सा देवी, 'वेदिः स्यात्पण्डिते पुमान्' 'स्त्रियामङ्गुलिमुद्रायां स्यात्परिष्कृतभूतले' इति मेदिनी। **रेणुकेव**, रामेण परशुरामेणाऽभ्यर्हिता पूजिता मातृत्वात्, सेव, रामाभिस्त्रीभिरभ्यर्हिता तासु प्रशस्ता वा, रामोऽभ्यर्हितो यया वा। **सञ्ज्ञा** सूर्यपत्नी सेव, स्वस्याः प्रतिनिधीकृतं स्त्र्यन्तरमन्या स्त्री छाया यया सञ्ज्ञया सेव, (कथा पूर्वमुक्ता) देवीपक्षे-स्वस्याः प्रतिनिधीकृतानि स्त्र्यन्तराणि यया सा, अन्या याः स्त्रियः स्त्र्यन्तराणि, मयूरव्यंसकादयश्चेति समासः। मुख्यभिन्नो मुख्यसदृशः प्रतिनिधिर्भवतीति, सर्वासां मध्ये सौन्दर्य्ये देवी मुख्या इति भावः। **छाया**=सूर्यपत्नी, सेव, सा खलु च्छाया सञ्ज्ञायाः प्रतिकृतिः अतः सञ्ज्ञानुरूपा सञ्ज्ञासदृशी, तथैव देवी मलयवती सञ्ज्ञानुरूपा = मलयश्चन्दनजन्मभूमिर्नातिशीतोष्णतया सर्वर्तुसुखकरः पर्वतः सादृश्यसम्बन्धेनाऽस्ति यस्या—इति नामानुरूपा। **सत्यवती**=योजनगन्धा, उल्लसितौ उद्भूतौ व्यासश्च चित्राङ्गदश्च, पुत्रौ यस्याः सा उल्लसितव्यासचित्राङ्गदा, मलयवती च उल्लसितं शोभितं व्यासेन विस्तृतत्वेन चित्रं विचित्रम्—अद्भुतम् अङ्गदं केयूरं यस्याः सा, 'विस्तारो विग्रहो व्यासः' इत्यमरः। 'आलेख्याऽऽश्चर्ययोश्चित्रं' 'केयूरमङ्गदं तुल्ये'—इत्युभयत्राऽमरः। **अम्बालिकेव**=काशिराजमध्यमदुहितेव, आश्रितः प्रसूतः पालितः पोषितः सेवितः पुत्रतया धृतराष्ट्रो दुर्योधनादिजनको यया, सा-इव-मलयवती, आ समन्ताच्छ्रितं सेवितं, धृतं स्थिरीकृतं राष्ट्रं राज्यं यया, नीतिनिपुणतया नृपसाहाय्यदानात्। आश्रितैः सेवकैः कर्मचारिभिः, धृतं राष्ट्रं राज्यभारो यस्याः, स्वामिभक्तत्वादाश्रितानाम्, निश्चिन्तत्वं मृदुत्वं च व्यज्यते नायकयोः। आश्रितानां शरणाऽऽगतानां धृतं पोषितं (प्रत्यर्पणेनेत्यर्थः-) राष्ट्रं राज्यं यया सा—इति वा। **शकुन्तला** दुष्यन्त-

यानीव काव्यजन्मभूमिः, सन्ध्यावलीवाधिगतरुक्माङ्गदा, विनतेवारुणजनि-
रसज्ञा, रुक्मिणीव मन्मथजननी, प्रभावतीव रतिकान्तानुरक्ता, उषेव प्रिया-
निरुद्धा, सुभद्रेव जिष्णुदयिता, उत्तरेव परीक्षितिलब्धपूर्वभावा, रोहिणीव

---

महिषी, सन् सुधीः, आशुः क्षिप्रकारी "दक्षत्वस्य नेतृगुणत्वात्," भरतः सुतो यस्याः, तथैव मलयवती सदा सर्वदा शुभेषु मङ्गलेषु रता तत्परा । देवयानी ययाति-महिषी, काव्य उशनाः, जन्मन उत्पत्तेः, भूमिः सत्ताऽऽपादकः पिता यस्याः, सेव, मलयवती च—काव्यानां कवितानां जन्मभूमिरुत्पत्तिभूमिरुत्पत्ति-कारिका, काव्यरचयित्रीत्यर्थः । **सन्ध्यावलीवेति**=रुक्माङ्गदमातेव अधिगतः प्राप्तः, रुक्माङ्गदः पुत्रो यया सा, सेव, अधिगतं लब्धं परिहितं, रुक्मस्य स्वर्ण-स्याऽङ्गदं केयूरं यया सा मलयवती । **विनतेव**—विनता दक्षकन्या, अरुणस्या-ऽनूरोः सूर्यसारथेर्जनिरसज्ञा जन्मसुखानुभवकर्त्री जननीत्वात् । 'सूर्यसूतोऽरुणो ऽनूरुः, काश्यपिर्गरुडाग्रजः' । मलयवती—अरुणस्याऽव्यक्तरागस्य मञ्जिष्ठादिजन्यस्या-ऽङ्गरागस्य रसज्ञा स्वादुज्ञा सुखानुभविकेत्यर्थः । अरुणानां गुणानां जनिः शिक्ष-णेनोत्पादना तस्या रसज्ञा वा, "अरुणोऽव्यक्तरागेऽर्के, सन्ध्यारागेऽर्कसारथौ । निःशब्दे कपिले कुष्ठभेदे ना सरिति स्त्रियाम् ॥ अरुणाऽतिविषाश्यामामञ्जिष्ठात्रिवृतासु च" [मेदिनी] । **रुक्मिणी**=भीष्मकतनया कृष्णपत्नी, मन्मथस्य कामदेवांशभूतस्य प्रद्युम्ननाम्नः सुतस्य जननी प्रसूर्माता, सेव, प्रकृता देवी मन्मथजननी—मन्मथस्य मनोभवस्य जननी, मनोहरत्वात् कामोद्दीपिकेत्यर्थः । "मन्मथः कामचिन्तायां कपित्थे कुसुमाऽऽयुधे" इति भानुः । **प्रभावतीव**=मायावतीव, रत्याः कान्ते प्रद्युम्नेऽनुरक्ताऽनुरागवती, मायावती नाम्ना प्रच्छन्ना रतिरेव, मलयवती च, रतौ सुरते कान्तेऽनुरक्ता, स्वप्रियानुरागवती, कान्तं यथा स्यात्तथाऽनुरक्ता वा । **उषा**= बाणासुरतनया, प्रियः पतिरनिरुद्धः प्रद्युम्नसूनुः कृष्णपौत्रो यस्याः, सा, तथा मल-यवती च प्रियो राजशेखरोऽनिरुद्धोऽनिवारितो यया सा 'सदा प्रहृष्टया भाव्य'मिति नियमानुसरणात्कोपाऽभावेनाऽनिरुद्धप्रियकर्तृकालिङ्गनादिव्यापारेत्यर्थः । 'अनिरुद्ध उषापतिः' 'उषा बाणस्य पुत्री स्या'दित्यमराजयौ । **सुभद्रा** वसुदेवसुता, जिष्णुः पार्थो दयितो यस्याः सा, जिष्णोर्दयिता प्रियेति षष्ठीसमासो वा, मलयवती च जिष्णुर्जयनशीलो दयितो वल्लभो यस्याः सा । जिष्णुरिन्द्रो दयितो गतिः शरणमिष्टदेवत्वेन यस्याः सा इत्यादयोर्थाः—दय दानगतिरक्षणहिंसाऽऽदानेषु— इति धात्वर्थानुसारेण ऊहनीयाः । **उत्तरा**-विराटदुहिता—'स एष लोकविख्यातः परीक्षिदिति यत्प्रभुः । पूर्वदृष्टमनुध्यायन् परीक्षेत नरेष्विह' भा० प्र० स्क० १२ अ० ३१ श्लोकोक्तगुणवति स्वसुते परीक्षिति लब्धः प्राप्तः पूर्वभावः पूर्वदृष्टानु-

चन्द्रसुन्दरमुखी,–महादेवी मलयवती नामासीत् ॥ ११ ॥

तथैव च–वैयाकरणत्वादेव सन्धिविग्रहतत्त्वज्ञः, हयशास्त्रविज्ञाना-

ध्यानं यया सा, "अप्येष वंश्यान् राजर्षीन् पुण्यश्लोकान् महात्मनः । अनुवर्त्तिता-स्विद्यशसा साधुवादेन सत्तमाः" ! इति युधिष्ठिरप्रश्नानुसारं परीक्षिति लब्धः पूर्वेषां पूर्वजानां भावोऽनुवर्तनं यया सा तादृशी–उत्तरा, अथवा परितः क्षियति निवसति-परिक्षित् कर्तरि क्विप्, ह्रस्वस्य तुक्, 'परिक्षित्'–इतिप्रातिपदिकम्, अथवा परितः सर्वतः क्षितिः सर्वप्राणिनिवासगतिहेतुर्भूमिर्यस्य, स्वनिष्ठस्वामित्वनिरूपितस्वत्वसम्बन्धेन स परिक्षितिः, क्षणुहिंसायामित्यस्मात् क्तप्रत्यये नलोपे परिक्षतः । परिपूर्वादीक्षदर्शनाङ्कयोरित्यस्मात् क्तप्रत्यये सवर्णदीर्घे परीक्षितः । अस्यैव पृषोदरादित्वादन्त्याऽकारलोपे परीक्षिदिति ; सर्वेऽपि शब्दाः पुराणेषु लभ्यन्ते प्रयुज्यन्ते च काव्येषु, तथा च परिक्षितिलब्धपूर्वभावा इति पाठेऽपि स एवार्थः, "भद्राश्वं केतुमालञ्च भारतञ्चोत्तरान् कुरून् । किम्पुरुषादीनि वर्षाणि विजित्य जगृहे बलिम्"-एवमयं सार्वभौमः । देवी तु—क्षिताविति परिक्षिति सर्वस्यां भूमौ लब्धः प्राप्तः पूर्वासां पूर्वराजमहिषीणां भावो देवीपदवाच्यता यया सा–परिक्षितिलब्धपूर्वभावा, पूर्वं लब्धो लब्धपूर्वो भवनं भावो यस्या–इति वा । सर्वस्यां भूमौ प्राप्तपूर्वदेवीपदेत्यर्थः । चन्द्रार्थं सुन्दरं मुखं यस्याः सा रोहिणी चतुर्थी दाक्षायणी चन्द्रप्रिया, सेव, राज्ञी तु–चन्द्र इव सुन्दरं रुचिरं मुखं वदनं यस्याः सा । महादेवी कृताऽभिषेका पट्टाभिषिक्ता, मलयवती नाम आसीदिति । 'देवी कृताऽभिषेकाया'मित्यमरः ।

देवीगुणाऽकर—मयं कुसुमं मन्दारमञ्जर्याः ।
उपमालङ्कृतियुग्भ्यः समाऽर्पि वागादि-देवीभ्यः ॥ ११ ॥

यथा सरस्वतीप्रभृतिप्रसिद्धपुरन्ध्रीसादृश्यात् कटुम्बिनीसमुचितगुणविशिष्टा देवी मलयवत्यासीत्तथैव स्वानुरूपसन्धिविग्रहादिविज्ञत्वादिमन्त्रिसमुचितगुणविशिष्टः प्रधानमन्त्री बुद्धिनिधिसञ्ज्ञः समभूत्—इत्याह–तथैवेति । वैयाकरणत्वादेव = किमुत नीतिशास्त्रविशारदत्वात्, सन्धिश्च विग्रहश्च तयोस्तत्त्वं जानातीति सन्धिविग्रहतत्त्वज्ञः । व्याकरणे सन्धिविग्रहौ, नीतिशास्त्रेऽपि । अयं भावः—नीतिशास्त्रे बलवता रिपुणा सह किमपि निमित्तीकृत्य स्वपदरक्षणपूर्वं सत्कार्यसाधनाय, सामोपायपूर्वकं सन्धिः क्रियते, भूमिं मित्रं हिरण्यं वोद्दिश्य परेण विगृह्यते, तद् द्वयमपि वैयाकरणैः सरलतयैव ज्ञायते, सन्धिविग्रहयोर्नित्याऽभ्यासात् । तथाहि—

देव निर्णीतयानरहस्यः, नृसिंहत्वादेव प्राप्तद्वैधीभावः, योगागमबोधादेवासन-

कश्चित्सन्धिः परोपमर्देन, कश्चित्पूर्वोपमर्देन, कश्चिदुभयोपमर्देन, कश्चित्सम्भूय समुत्थानेन । पूर्वरूपं, पररूपमेकादेशः, उत्वादिकञ्चेति क्रमश उदाहरणानि । अथ च पूर्वसवर्णः, परसवर्णः, सवर्णदीर्घश्चेति नानाविधः सन्धिप्रपञ्चः । स्थानतः प्रयत्नतो गुणतोऽर्थतश्च सादृश्यम्,—कार्य्ये कर्त्तव्ये सर्वत्र नियामकं, कार्याणि च गुण-वृद्धि-दीर्घादिभिरन्वर्थशब्दैर्व्यवह्रियन्ते, कार्यफलञ्च साधुत्वं, तदेतत्सर्वमर्थदृष्ट्या नीतिशास्त्रानुकूलमेव, आन्तरतम्यादि-निमित्तस्य, वृद्धिगुणादेः कार्यस्य, साधुत्वस्य फलस्योभयत्र समानत्वात्, सन्धितत्त्वज्ञो वैयाकरणः । एवं विग्रहः क्वचित्पूर्वपदार्थस्य प्राधान्यं प्रतिपादयति, क्वचिदुभयपदार्थयोः प्राधान्यं प्रतिपादयति, क्वचिदन्यपदार्थस्य प्राधान्यं प्रतिपादयति । एवञ्च कस्य च प्राधान्यं कस्य चाऽप्राधान्यं प्रतिपादयन् परार्थहरणमेव करोति, विग्रहप्रपञ्चोऽपि सूक्ष्मदृष्ट्या समानो नीतिशास्त्रेणेति वैयाकरणो विग्रहतत्त्वज्ञः, अत उक्तम्—**वैयाकरणत्वादेवेति** । असति सामानाधिकरण्ये व्यर्थः स्यादेवशब्दः । एवमुत्तरत्र सर्वत्र नीतिशास्त्रसामानाधिकरण्यं तत्तच्छास्त्रस्योहनीयम् । हयन्ति गच्छन्ति जातिस्वभावादिति हया घोटकास्तेषां शास्त्रं = शिक्षण, वाहन, चिकित्साप्रतिपादको लक्षणग्रन्थः—पालकाव्यमश्वशास्त्रादिशब्दवाच्यः—तस्य विशेषज्ञानादेव, निर्णीतं निःशेषेण सिद्धान्ततां प्रापितं, **यानस्य** वाहनस्य, नीतिशास्त्रोक्ततृतीयगुणस्य, विजिगीषुयात्रालक्षणस्याऽपसरणरूपस्य च द्विविधस्य यानस्य ( रहसि भवं दिगादित्वाद्यति ) रहस्यम्, तत्त्वं येन, सः तथाविधः प्रधानाऽमात्यः, बुद्धिनिधिसञ्ज्ञः समभूदिति सर्वत्रान्वयः । अत्रेदं बोध्यम्—यानशब्दो भावे ल्युटि गतिवाचकः, करणे ल्युटि घोटकादिवाहनवाचकः, षाड्गुण्ये भाववाचकः, ततश्च "आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम् । गतयोमूः पञ्च धाराः" इत्युक्तगतिविशेषाणां व्यवहारो यथाऽश्वशास्त्रे तथा षाड्गुण्ये, इत्युक्तं **हयशास्त्रविज्ञानादेवेति** । सर्वत्रोभयवेदित्वं फलति । **ना चासौ** सिंहश्च नृसिंहो भगवान्, वक्षस्थलादुपरि सिंहाकारोऽधो नराकारः, अतः प्राप्तो द्वैधीभावो द्वैविध्यं येन तथाभूतः, 'स्तम्भे सभायां न मृगं न मानुषमि'ति भागवतात्, बुद्धिनिधिरपि—ना सिंह इव नृसिंहस्तस्य भावो नृसिंहत्वं, तस्माद्धेतोरेव, प्राप्तः प्रकर्षेण ज्ञातो द्वैधीभावो भेदनीतिर्येन तादृशो भेदकुशल इत्यर्थः । भेदनमेव सिंहस्य मुख्यं कर्म, तदेव सिंहस्य सिंहत्वम्, हिनस्तीति सिंह-इति व्युपत्तेरनुगुणत्वात्, तथा च नृसिंहत्वस्यापि भेदकत्वं सुतरामायातमित्युक्तं—**नृसिंहत्वादेवेति** । योजनं योगो भावार्थप्रत्यान्तः, सांसारिकेभ्यो भावेभ्यः सन्निवृत्तस्य चित्तस्य स्वीयवृत्तिविशिष्टस्य

सारकोविदः, सर्वाश्रयणीयत्वादेव लब्धाश्रयभावः, वसिष्ठ इव सम्यगुन्नीत-शक्तिः, बृहस्पतिरिव विबुधगुरुः, भार्गव इव कविपदवाच्यः, सर्वविदिव साक्षात्कृतपराभिप्रायः, उद्गातेव सामप्रयोगाभिज्ञः, वारण इव दानोत्पत्ति-

---

परमतत्त्वे संयोजनात्मको निरोधो 'योगश्चित्तवृत्तिनिरोधो देशबन्धश्चित्तस्य धारणे'त्यन्तसूत्रप्रतिपाद्यो, योगः। स च ज्ञानं, कर्म, भक्तिः, अष्टाङ्गः इतिभेदादनेकविधः, तस्याऽऽगमा अपि भिन्नाः, तेषां बोधाज्ज्ञानात्, 'स्थिरसुखमासन'मिति सूत्रसूचितपद्मस्वस्तिकादिनानाऽऽसनसन्निवेशप्रयत्नफलबोधकानां तेषां योगशास्त्राणां बोधाज्ज्ञानादेव—आसनस्य—षाड्गुण्यान्तःपातिनः, स्वदुर्गसज्जीकरणरूपस्य स्वस्थानस्थिरीकरणात्मन उपवेशनस्य, सारो बलं दृढता च, "निजसदननिविष्टः सारमेयोऽपि सिंहः" इतिलोकप्रसिद्धत्वस्य—कोविदो विद्वान्, 'आसनजयात्स्थैर्य्यलाभ' इतिसूत्रबोधितफलस्योभयत्र समानत्वात्। सर्वे ग्रामाश्रयाऽभिलाषिणामाश्रयितुं योग्यत्वादेव, लब्धः प्राप्तः आश्रयभाव आश्रयत्वं येन, तादृशः षाड्गुण्यप्रयोगचतुरो बुद्धिनिधिनामा प्रधानसचिवः समभूदिति समन्वयः। पुनर्नीतिनिर्मातृसाधर्म्यमुपपादयन् वर्णयति बुद्धिनिधिम्—**वसिष्ठ इव**=इक्ष्वाकुकुल—गुरुरिव, उन्नीत उन्नतिं गमितः शक्तिः स्वपुत्रो येन स इव, उन्नीताः शक्तयः प्रभावोत्साहमन्त्ररूपास्तिस्रः शक्तयो येन सः बुद्धिनिधिः। बृहस्पतिः सुरराजमन्त्री स किल विबुधपदवाच्यानां त्रिदशानां गुरुः, स इव, बुद्धिनिधिः विशिष्टानां बुधानां पण्डितानां बृहतां चतुर्दशानां विद्यानां च गुरुः। गृणातीति विग्रहे 'कृग्रोरुच्चे'त्युणादिसूत्रेण उप्रत्यये, उकारान्तादेशे गुरुरुपदेष्टा, शिवपुराणे तु 'गुणान् रुन्धे गुरुःप्रोक्त'इत्युक्तम्। शिष्यहृदि—इति शेषः, तन्मते पृषोदरादिः। भृगुवंशोत्पन्नो **भार्गव** उशना—कवि—पदनिष्ठवाचकतानिरूपितवाच्यतावान्, 'उशना भार्गवः कवि'रिति कोषात्, तथैव बुद्धिनिधिः कवनशिक्षाजन्यकविता—शक्तिविशिष्टत्वात्कविपदवाच्यः कविरित्यर्थः। **सर्वम्**—"अनागतमतीतञ्च, वर्त्तमानमतीन्द्रियम्। विप्रकृष्टं व्यवहितं, सम्यक् पश्यन्ति योगिनः" इति परीक्षितोक्तलक्षणं वेत्तीति **सर्ववित्**सर्वज्ञो धूर्जटिः स इव, साक्षात्कृतः प्रत्यक्षीकृतः "चारैः पश्यन्ति राजानः" इति पथा परेषामन्येषां शत्रूणामभिप्राय आशयो येन स—मन्त्री। 'यः सर्वज्ञः स सर्वविदिति'श्रुतिः। **उदुच्चैर्गायति** सामप्रयोगानिति **'उद्गाता'** सामवेदज्ञः, स खलु रथन्तरबृहद्रथन्तरादि—साम्नां गानविशेषाणां प्रयोगाणाम् अभितः ज्ञाता भवति, तथैव साम्नः सान्त्वस्य प्रथमोपायस्याऽभिज्ञः सम्यग् बोद्धा बुद्धिनिधिः। 'अध्वर्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमात्।' 'सामदाने भेददण्डावित्युपायचतुष्टयम्' 'साम सान्त्वमुभे समे' इत्यमरः।

भूः, वैशेषिक इव निर्ज्ञातभेदपरमार्थः, ग्रहपतिरिव नित्यानुगतदण्डो द्वादशमण्डलगतिश्च, साङ्ख्य इवाभ्युपगतपुरुषभेदः, द्वितीयमिव राज्ञो

वारयति परचमूमिति वारण : ('कर्त्तरि'ल्युः ३।१।१३४) करी, मदापरपर्य्यायस्य दानस्योत्पत्तेर्भवनं, स इवाऽमात्यो दानस्य वितरणस्य उत्पत्तिरुद्भवस्तस्य भूर्भूमिः दाता–इत्यर्थः। 'द्विरदो वारण. करी' इत्यमरः, 'गण्डः कटो, मदो दानम्' इत्यमरः, 'भूः स्थानमात्रे कथिता धरण्यामपि योषिति' इति मेदिनी। वैशेषिकः=विशेषपदार्थमन्ता काणादः, निश्चयेन ज्ञातो ज्ञानविषयीकृतो भेदस्याऽन्योन्याभावस्य परमोऽत्याऽवश्यकोऽर्थो ऽभिधेयः प्रयोजनञ्च येन तथाभूतः, 'अयं परमाणुरन्यपरमाणुभ्यो भिन्नो विशेषात्' इत्यादि स्थले विशेषहेतुकस्य साध्यस्य भेदस्य परस्परव्यावृत्तत्वस्य बोधस्य वैशेषिकेण निर्ज्ञातत्वात्। वैशेषिक इवामात्यो, निर्ज्ञातः निश्शेषेण बुद्धिविषयीकृतो भेदस्योपजापस्य,–भेदेन करणभूतेन-परस्य प्रकृष्टस्यापि रिपोर्मा, मा=लक्ष्मीः तस्या अर्थनं प्रार्थनमाशंसनं शत्रुसदनान्निवर्त्तनं तद्रूपोऽर्थो येन सः, निश्चितभेदद्वारकशत्रुलक्ष्मीनिवर्तक इत्यर्थः। एतदेवाऽमात्यत्वम्, अपरस्य मां लक्ष्मीं त्याजयतीति व्युत्पत्तेः, अमासह भव इति-व्युत्पत्तावपि-स एवाऽभिप्रायः, न मां 'लक्ष्मीं' त्यजति-इति विग्रहे डः। अमा भवोऽमात्यस्तु श्लिष्टः सर्वत्र। 'भेदोपजापौ' 'वैशेषिकः स्यादौलूक्ये' सर्वत्राऽमरः। ग्रहपतिः सूर्यः, नित्यमनुगतोऽनुसृतो दण्डनामा पारिपार्श्वको यस्य, तथा द्वादशसङ्ख्याकानि यानि मेषादिराशिसन्निहितवृत्तानि मण्डलानि तेषु गच्छतीति द्वादशमण्डलगः (गमेश्चेति डः) द्वादशराशिचक्रभ्रमणकर्त्ता च, गतिश्चेति पाठे द्वादशमण्डलेषु गतिर्गमनं यस्येति व्यधिकरणे बहुव्रीहिः। "माठरः पिङ्गलो दण्डश्चण्डांशोः पारिपार्श्वकाः" "मण्डलं त्रिषु" (अमरः) "दण्डोऽस्त्री लगुडे, पुमान्" "व्यूहभेदे प्रकाण्डेऽश्वे कोणमन्थानयोरपि" "सैन्ये काले मानभेदे चण्डांशोः पारिपार्श्वके" "दमे यमेऽभिमाने च, नाडीनाले व्रणान्तरे। "मण्डलं परिधौ कोठे, देशे द्वादश राजसु। क्लीबेऽर्थे निवहे बिम्बे, त्रिषु, पुंसि तु कुक्कुरे" मेदिन्युभयत्र। बुद्धिनिधिस्तु नित्यं सदाऽनुगतोऽवलम्बितो दण्डो यष्टिर्येन 'दण्डी मौली सहायवान्' इति नीतेः। तथा दण्डः प्रकाण्डोऽश्वः सैन्यं, व्यूहरचना चानुगतानि यस्य, स्वयञ्चानुसृतः कालमानं येन, तथाऽनुगतो दण्डो दमो येन सः, सचिवायत्तत्वात्सर्वकार्याणाम्। अतएव द्वादशानां राज्ञां मण्डलं चक्रं तस्य गतिर्बोधो यस्य स तादृशः, द्वादशसु देशेषु गतिरित्यादि सर्वं बोध्यम्, अथाऽपि रक्षाया, आत्मनो मुख्यत्वात् द्वादश मण्डलाः कुक्कराः, गतिः शरणं रक्षका यस्य तथाविधः सः। "बह्वाशी स्वल्पसन्तुष्टः सुनिद्रो लघुचेतनः। स्वामिभक्तश्च शूरश्च, कुक्कुरः षड्गुणान्वितः"–एतेषां रक्षणहेतुभूतानां सेवकपरमगुणानां, मनुष्येषु लोभादिना-व्य-

हृदयं, मूर्तिमानिव विश्वासः, तादात्म्यमिव नरेन्द्रस्य, आश्रयान्तरमिव राजबुद्धीनाम्, उत्पत्तिस्थानभेद इव राजाज्ञायाः, हेतुद्वैतमिव प्रतिपक्षराजभीतीनां, विषयभेद इव लोकानुरागाणाम्, अपकर्षनिरूपकावध्यन्तरमिव

भिचारसम्भवः, कुक्कुरस्तु नित्यं परमभक्तो ऽलर्कं विना, ऽलर्कस्तु त्याज्यः। शुनां परमभक्तत्वादेव सर्वरक्षाधिष्ठाता भगवान् भैरवनाथः कुक्कुरानेव सैन्यत्वेन स्वीचकार, श्रुतिश्च घोषयति "श्वभ्यश्च, श्वपतिभ्यश्च वो नमो नम" इति। मनुरपि— 'शुनाञ्च पतितानाञ्चे'त्यादिना वैश्वदेवान्ते भोजनदानमाह—हन्तेदानीं कुक्कुरमाहात्म्यं न जानन्ति कुबुद्धिनिधयः कथञ्च पालयेयुरन्यथा, कथं वा दस्यवो लुण्ठेयुरलं प्रासङ्गिकेन। स्मृतत्वे सति—उपेक्षानर्हत्वं प्रसङ्गः। साङ्ख्यः साङ्ख्यशास्त्रानुयायी, अभ्युपगतः स्वीकृतः पुरुषाणां चेतनानां जीवानां भेदोऽनन्तत्वं येन तादृशः, 'जननमरणकरणादीनां, भेदात्पुरुषाणां बहुत्वं साङ्ख्याः साधयन्ति' "जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्चे"त्यादिना। बुद्धिनिधिरपि साङ्ख्य इव अभ्युपगतः सम्यग् ज्ञातः पुरुषाणां जनानां भेदो द्वैध-विरोध इत्यर्थः, पुरुषाणां परस्परद्वैधज्ञानादेव निर्णयः कर्तुं शक्यते इति मन्त्रिणः परमावश्यकन्तत्। अभ्युपगतः सुनिश्चितः पुरुषाणां भेदो विशेषः, उपजापो विदारणं वा येन सः, 'मन्त्रित्वात्'। 'भेदो द्वैधे, विशेषे स्यादुपजापे विदारणे'—इति मेदिनी। मन्त्रिगुणान्निरूप्य राजानुकूलतान्दर्शयति **द्वितीयमिवे**त्यादिना— किम्बहुना राज्ञो राजशेखरस्य द्वितीयं द्वित्वपूरकं, हृदयं स्वान्तमिव, अतएव मूर्त्तिमान् शरीरी, विश्वास इव विश्रम्भ इव किमुच्यते नरेन्द्रस्य नृपस्य तादात्म्यमभेदः सदैव। तदभिन्नकार्य्यकरत्वेन तत्त्वोपचारः। **राज्ञो बुद्धयः**—"बुद्धिस्तात्कालिकी ज्ञेया मतिरागामिगोचरा। प्रज्ञा नवनवोन्मेषशालिनीप्रतिभा मता" इत्यादिभेदभिन्ना धियस्तासाम्, अन्य आश्रयः **आश्रयान्तरम्** आधारान्तरमिव, समानविचारशालित्वात्। आश्रीयते एरचि प्रत्यये, आश्रयः। राज्ञो नृपस्याज्ञाऽऽदेशस्तस्या उत्पत्तिस्थानस्य भेदो विशेष इव, मन्त्रिनृपाज्ञयोरभेदात्। **पक्षस्य** स्ववर्गस्य प्रतिकूलाः प्रतिपक्षाश्च ते राजानः प्रतिपक्षराजाः, तेषां कृते या भीतयस्त्रासास्तासां, **हेतुद्वैतमिव**=हेत्वोरुपादानकारणनिमित्तकारणयोर्द्वयोर्भावो द्विता, द्विता एव द्वैतं, प्रतिपक्षनिष्ठभीतिनिरूपितोभयविधकारणतावान् इव, शत्रुभीतीनामुपादानकरणं निमित्तकारणञ्चेति। **लोकानामनुरागाणां** जनानुरागाणां, विषयाणां गोचराणां, भेद इव विशेष इव, यावन्तोऽनुरागविषयास्तेभ्यो विशिष्टः कश्चिदनुरागविषयो बुद्धिनिधिरित्यर्थः। परमोऽयं पुरुषगुणः, 'जनानुरागप्रभवा

सामन्तानाम्, उद्देश्यान्तरमिव राजप्रणामानां-प्रधानामात्यो बुद्धिनिधि-सञ्ज्ञः समभूत् ॥ १२ ॥

तस्य च राज्ञो वशीकृताखिलपरिपन्थिसार्थस्य–उद्गमनशीलेव सुर-लोके, गुरुत्ववतीव पाताले, संग्रहस्वभावेव पर्वततटेषु, प्रसारिणीव भूमौ, प्लवननिसर्गेव समुद्रेषु,–न क्वचिदपि व्यहन्यत काचिदाज्ञा ॥ १३ ॥

---

हि संपदः' इत्युक्तेः। **सामन्तानां** मण्डलेश्वराणाम्, अपकर्षो न्यूनता तन्निरूपको य उत्कृष्टत्वविशिष्टोऽवधिः सम्राट् तस्माद्भिन्नोऽवधिरिव, सामन्ता यथा राज-शेखरादपकृष्टा तथा बुद्धिनिधेरपीत्यर्थः; अपकर्षस्य निरूपकं, यदवध्यन्तरमिति विग्रहः, अन्योऽवधिरवध्यन्तरम् । सामन्तनिष्ठापकर्षनिरूपितोत्कर्षोऽवधिः प्रधानामात्यो राजा चेत्युक्तम्—**अवध्यन्तरमिति**। **राज्ञः प्रणामाः** प्रणतय-स्तासाम्, उद्दिश्यते-इति-उद्देश्यं फलम्, अन्यदुद्देश्यम्-उद्देश्यान्तरं, तदिव, राजप्रणामेन यत्कार्यं सिध्यति तत्सर्वं बुद्धिनिधिप्रणामेनैव सिध्यति, अतो राज-प्रणामानामपि फलान्तरं–बुद्धिनिधिरेव तदधीनतत्कार्यमात्रस्य । बुद्धेर्मनीषाया निधिः शेवधिः, प्रधानश्चासावमात्यश्च प्रधानामात्यः समभूत । **बुद्धिनिधिरि-**त्यन्वर्था सञ्ज्ञा ॥ १२ ॥

सचिवगुणोद्देश्यमिदं कुसुमं मन्दारमञ्जर्य्याः ।
वृन्दारकसचिवेभ्यः समर्प्यते भैरवादिभ्यः ॥ १२ ॥

वीरत्ववदान्यत्वादीनन्तरङ्गगुणान्, योग्यदेवी–मन्त्रित्वादीन् बहिरङ्गगुणान् वर्णयित्वा यशोधनत्ववर्णनाय तदवतरणभूतमव्याहताज्ञत्वं वर्णयति—**तस्येति**। **तस्य च** पूर्वोक्तान्तरङ्गबहिरङ्गगुणविशिष्टस्य **राज्ञस्तु, क्वचिदपि** कुत्रापि **आज्ञा**=आदेशः **न व्यहन्यत** नाऽबाध्यत—इत्यन्वयः। वशीकृतः स्वाय-त्तीकृतोऽखिलः संपूर्णः परिपन्थिसार्थः शत्रुसमूहो येन तस्य राज्ञो राजशेखरस्य, उद् ऊर्ध्वं गमनं शीलं यस्या असौ तादृशीव अतएव सुराणां देवानां लोके, ऊर्ध्व-गमनशीलाया आज्ञाया देवलोके व्याघाताऽभावस्योचितत्वात् समुचितविशेषणम् । गुरुत्वं पतनाऽसमवायिकारणत्वं, तद्वतीव **पाताले**ऽधोभुवने नागलोके—इत्यर्थः। इदमपि योग्यं विशेषणम् । पर्वतानां शिखरिणां, तटेषु भृगुषु, **संग्रहः** सम्यग्ग्रहणं श्लेषणं लिप्तत्वमित्यर्थः तत्स्वभावः=स्वीयभावो यस्यास्तादृशीव, भूमौ पृथिव्यां प्रसरति तच्छीला **प्रसारिणीव** प्रसृत्वरेव, पृथिव्यां तिर्य्यक्प्रसरणशीलेत्यर्थः, **समुद्रेषु** सागरेषु–प्लवनं प्लुतिस्तरणं निसर्गः स्वभावो यस्याः तादृशीव समुद्रेषु, तरणस्यैव व्याघाताऽभाववत्वात्, क्वचिदपि न व्यहन्यत, आज्ञा । आज्ञापालनमेव राज्ञः प्रतापस्य परमं प्रयोजनम् ॥ १३ ॥

कार्तिककुमुदबान्धवकौमुदीवोदयगिरिशिखरेषु, चन्दनद्रवधारेव मलयवप्रेषु, सुरासुरसमान्दोलितक्षुभितक्षीरोदधिप्रवाहपरम्परेव मन्दरसानुषु, तुषारराजिरिव गिरिराजप्रस्थेषु, दुग्धाब्धिकायव्यूह इव जलनिधिषु, श्वेतद्वीपतादात्म्यमिव द्वीपान्तरेषु, प्रनृत्तहरहाससन्ततिरिव कैलासभूमिषु, जाह्नव्यभेद इव नद्यन्तरेषु, शेषभोगकान्तिप्रचय इव पाताले, कुमुददलान-

**कार्तिकेति।** तस्य च राज्ञः कीर्तिरभ्युदलसदिति सम्बन्धः प्रतिवाक्यम्। कृत्तिकानक्षत्रेण युक्ता पौर्णमासी कार्तिकी, साऽस्त्यस्यामिति कार्त्तिको मासः—शरदृतोरुत्तरो भागः, स्वच्छाकाशवत्ता प्रकाशनाय ककाराऽनुप्रासलाभाय च कार्त्तिकग्रहणम्, तत्संबन्धो यः कुमुदानां श्वेतकमलानां बन्धुरेव बान्धवः प्रकाशकः, तस्य कौमुदीव ज्योत्स्नेव। कुत्र-इत्याकाङ्क्षायामाह—**उदयेति**—'उदयः पूर्वपर्वतः' इत्यमरः, स चासौ गिरिः, ह्रस्वः क्ष्माभृत्, "गिरयश्च मे पर्वताश्च मे" इतिश्रुतौ गिरिपर्वतयोः पृथगुपादानात्, पर्वता महान्तो हिमालयादयः, उदय-पर्वतस्तु महेन्द्रः कलिङ्गे दक्षिणे च तत्रैव विषुवति सूर्योदयदर्शनात्। वस्तुतस्तु—स्वस्वक्षितिज एव उदयाचलः, तदुक्तमस्मदीये सूर्यचरिते—"क्षितितलनिलयैर्महीरुहात्मा जलनिधितीरगतैस्तरङ्गरूपः। उदयगिरिरसौ विचित्ररूपो, धरगतपुम्भिरदर्शि शैलशीलः।" तस्य शिखरेषु = कूटेषु, 'कूटोऽस्त्री शिखरं शृङ्ग'-मित्यमरः। मलयस्य समुद्रतीरस्थपर्वतस्य दर्दुरपर्वतपार्श्ववर्तिनश्चन्दनजन्मभूमेर्वप्रेषु चयेषु 'स्याच्चयो वप्रमस्त्रियाम्'इत्यमरः, चन्दनद्रवस्य चन्दनरसस्य धारेव प्रवाह इव। मन्दरस्य सुमेरोर्विष्कम्भ-पर्वतस्यान्तःसारस्याऽतएव क्षीरोदमथने कृतमन्थनदण्डस्य सानुषु प्रस्थेषु, सुराश्चाऽसुराश्च सुरासुराः, (नैतेषां शाश्वतिको विरोध इतिनैकवद्भावः "येषाञ्च विरोधः शाश्वतिक" इति) तत्कर्तृकं यत्समान्दोलितं (भावे क्तः, मन्थनं चालनं समान्दोलनं प्रक्षोभणं, तेन क्षुभितः प्रचलितः, यः क्षीरोदधिर्दुग्धाब्धिस्तस्य यो प्रवाहानां धाराणां परम्परा पर्य्यायः पङ्क्तिर्वा, सेव, "कृतस्थानविभागास्ते, एवं कश्यपनन्दनाः। ममन्थुः परमायत्ता अमृतार्थं कुरूद्वह! भा० ७।५।" **गिरिराजप्रस्थेषु** हिमालयसानुषु, **तुषारस्य** तुहिनस्य, राजिरिव श्रेणीव। जलनिधिषु समुद्रेषु, **दुग्धाब्धेः**=क्षीरोदस्य कायव्यूह इव शरीरसमूह-इव। **द्वीपान्तरेषु** श्वेतद्वीपभिन्नद्वीपेषु, **श्वेतद्वीपतादात्म्यमिव** श्वेतद्वीपाऽभेद इव। **कैलासस्य** कुबेरस्थानस्य भूमिषु स्थलेषु, प्रनृत्तो नर्त्तितुं प्रवृत्तो यो हरः शिवः तस्य हासस्य सन्ततिरिव परम्परेव। नद्यन्तरेषु गङ्गाभिन्नासु सरयू-यमुना-नर्मदा-कृष्णादिषु, **जाह्नव्यभेद इव** भागीरथी तादात्म्यमिव। **पाताले**=अधोभुवने शेषस्याऽनन्तस्य यो भोगः शरीरम् 'अहेः शरीरं भोगः

वस्थेव कुमुदाकरेषु, ऐरावतरुचीनामाश्रयव्यभिचार इवामरावत्यां, चन्द्रमसः स्ववैरनिर्यातनमिव राक्षसराजनगर्यां, जलीयरूपाद्वैतमिव वरुणलोके, त्रिनयनसारूप्यमिव राजराजराजधान्यां, रूपान्तराणां सजातीयसृष्टिविच्छेदमिवाभिभवमिव लोपमिवायोग्यतामिव सन्निकर्षप्रतिबन्धमिव साक्षात्कारसामग्रीवैकल्यमिवोपेक्षामिव विस्मृतिमिवोत्पत्तिस्वरूपायोग्यतामिव युगपत्परिवृ-

स्या'दित्यमरः, तस्य कान्तिप्रचय इव द्युतिसमूह इव । कुमुदानां सितपद्मानामाकरेषु सरस्सु, कुमुद-दलानवस्थेव सितपद्मपत्रानवस्थानमिव । अमरावत्यामिन्द्रराजधान्याम्, ऐरावतस्येन्द्रगजस्य रुचीनां कान्तीनामाश्रयस्य समवायिकारणभूतस्याधारस्य-व्यभिचरणं व्यभिचारः सर्वत्र प्रसरणेनातिक्रमणमिव, श्वेतरुचीनामैरावतसमवेतानां सर्वस्याममरावत्यां प्रसृतत्वेनाश्रयव्यभिचार इवेत्यर्थः । राक्षसानामसुराणां तमोगुणवतां-राजा प्रधानस्तमोमयोराहुस्तस्य नगर्यां राजधान्यां, तमोलोके चन्द्रमसः सुधांशोः समस्तधवलीकरणसमर्थस्य निशापतेः स्वस्य वैरं विरोधो राहुकर्तृकं कृष्णीकरणं तस्य निर्यातनं, 'कृते प्रतिकृतिं कुर्यां'दिति न्यायेन, प्रतिकरणम्—इव, ग्रहणहेतुत्वेन राहोश्चन्द्रमसा विरोधः, चन्द्रमसा ज्योत्स्नया नगरीमात्रश्वेतकरणेन वैरनिर्य्यातनमिवेति समुचितमुत्प्रेक्षणम् । एवं सर्वत्र । लङ्का वा राक्षसराजनगरी तत्र कृष्णानां राक्षसानां शुभ्रीकरणेन वैरनिर्य्यातनं चन्द्रमसः संगच्छते वैरस्य जातिविषयकत्वात् । वरुणस्य जलेशस्य, लोके भुवने जलीयरूपस्याऽभास्वरशुक्लस्य, अद्वैतमिवाऽभेदमिव । राजराजस्य कुबेरस्य राजधान्यां कैलासशिखरस्थायामलकायां, त्रिनयनस्य=प्रतिमुखं नेत्रत्रयवतः पञ्चवक्त्रस्य रजतगिरिनिभस्य शिवस्य सारूप्यमिव साम्यमिव, 'राजराजो धनाऽधिपः' 'कैलासस्थानमलकापू'रिति चामरः । किञ्च नैयायिक—सिद्धान्तशङ्कादीनां निराकरणमिव रचयन्ती कीर्त्तिरभ्युदलसदित्याह—रूपान्तराणामित्यादि । रूपान्तराणां=नीलपीतादीनां षण्णां रूपाणाम्, सजातीया [1]नील [2]पीत रक्त[3] [4]कपिश [5]कृष्ण कर्बुर[6]रूपा षोढा या सृष्टिरुत्पत्तिः प्रजापतिकर्तृका तस्या विच्छेदमिवाऽभावमिव रचयन्ती (ब्रह्माण्डमात्रस्य शुक्लीकरणादित्यर्थः) कीर्त्तिरभ्युदलसदिति सर्वत्र योजनीयम् । रूपान्तराणां—नीलादीनामभिभवमिव तिरोभावमिव, लोपमिवाऽदर्शनमिव चाक्षुषप्रत्यक्षाऽभावमिवेत्यर्थः । अयोग्यतामिव चाक्षुषप्रत्यक्षायोग्यतामिव, सन्निकर्षस्य=विषयेन्द्रियसम्बन्धस्य संयुक्तसमवायस्य प्रतिबन्धमिव प्रतिरोधमिव, शुक्लस्यैव साक्षात्कारान्नीलादेः सन्निकर्षप्रतिबन्धमिवेत्यर्थः । साक्षात्कारस्य चाक्षुषप्रत्यक्षस्य सामग्री आलोकसंयोगादिस्तस्या वैकल्यमिव विरहमिव, उपेक्षामिवोदासीनतामिव, विस्मृतिमिव स्मरणाऽभाव-

त्तिमिव, द्रव्याणां रूपान्तरनिरूपितकारणताप्रत्याख्यानमिव, शौक्ल्यस्यैक-व्यक्तिकत्वमिव, रूपत्वस्य जातित्वनिरासमिव, सर्वद्रव्याणामभेदमिव, दोषाणां पीतत्वादिभ्रमजनकत्वव्युदासमिवाश्रयप्रत्यक्षं विनैव नानासङ्ख्य-जलपरमाणुरूपचाक्षुषमिवेन्धनादिरूपस्य वह्निरूपाभिभवशक्तिप्रत्यादेशमिव,

---

मिव, उत्पत्तेर्जन्मनः स्वरूपाऽयोग्यतामिव स्वरूपयोग्यताऽभावमिव, रूपान्तराणि उत्पत्तुं नैव योग्यानीति रचयन्तीत्यर्थः। युगपद् एकपदे परिवृत्तिमिव रूपान्तराणां शुक्लत्वविनिमयमिव। रूपान्तरणामिति सर्वत्र संबध्यते। द्रव्याणामिति। वृत्तित्वं षष्ठ्या अर्थः, पृथिव्यादिद्रव्यनिष्ठा—नीलादि–षड्विधरूपनिष्ठकार्यता–निरूपिता—या कारणता–तस्याः प्रत्याख्यानमिव खण्डनमिव। शौक्ल्यस्य शुक्लत्वस्यैकव्यक्तिकत्वमिव व्यक्तेरभेदमिव, अतएव रूपत्वस्य रूपनिष्ठस्य धर्मस्य रूपपदजन्यबोधविषयीभूतप्रकारस्येत्यर्थः, जातित्वस्य धर्मस्य निरासमिव निराकरणमिव, नीलाद्यभावेन रूपत्वस्य शुक्लमात्रवृत्तित्वेनाऽनुगतत्वाऽभावात्–न जातित्वमित्यर्थः। तथाचोक्तमुदयनाचार्यैः–"व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः। रूपहानिरसम्बन्धो जातिबाधकसंग्रहः" इति। सर्वेषां द्रव्याणां शुक्लत्वेन, भेदाभावमिव। दोषाणां पित्तवातकफानां, पीतत्वादेः शङ्खे पीतत्वबुद्धिरूपभ्रमजनकत्वस्य व्युदासमिवोच्छेदमिव, 'पैत्तिकपाण्डुरोगग्रस्तः पित्तदोषाच्छङ्खं पीतं पश्यति, सर्वश्वैत्यात्तन्नाशमिवेत्यर्थः। आश्रयप्रत्यक्षं विना रूपस्य प्रत्यक्षं न भवति—इति नियमः, तद्विघटयन्नाह– आश्रयाणामाधाराणां, प्रत्यक्षं विनैव साक्षात्कारं विनैव, नानासङ्ख्यानामनेकानां जलपरमाणुनिष्ठरूपाणां, चाक्षुषमिव = चक्षुरिन्द्रियजन्यसाक्षात्कारमिव, अयं भावः–परमाणुसमवेतरूपमुद्भूतमेवाङ्गीक्रियते नैय्यायिकैस्ततश्चोद्भूरूपं नयनस्य गोचर–इतिनियमानुसारात्परमाणुरूपस्य कथन्न चाक्षुषप्रत्यक्षमिति प्रश्नस्योत्तरं–परमाणुषु महत्वाऽभावात्, षड्विधप्रत्यक्षे विषयनिष्ठस्य महत्त्वस्य कारणतया परमाणूनां प्रत्यक्षं न भवति इति, ततश्चाश्रयप्रत्यक्षं विनाऽऽश्रयिणो रूपस्य न प्रत्यक्षम्, आश्रयिप्रत्यक्षे–आश्रयप्रत्यक्षस्य कारणत्वात्, तथैव सन्निकर्षसत्त्वात्। यथा हि द्रव्यनिष्ठ-गुण-कर्मसामान्यानां प्रत्यक्षे संयुक्तसमवायः सन्निकर्षः, न खलु द्रव्याणां घटपटानां चक्षुःसंयोगं विना घटादिनिष्ठस्य रूपादेः प्रत्यक्षं सम्भवति। प्रकृते तु यशसा सर्वस्मिन्धवलीकृते प्रतीयते यत् किलेदं धावल्यमनन्तानां जलपरमाणूनामिति तत्रोत्प्रेक्षितमाश्रयप्रत्यक्षं विनैवेति। एवं सर्वत्र प्रतिपादनीयम्। इन्धनादिः काष्ठवर्तिकातैलादिः, तद्रूपस्य रक्तनीलपीतादेः, वह्निसमवेतभासुरशुक्लरूपस्याऽभिभवशक्तिस्तिरस्करणशक्तिः प्रसिद्धा लोके, काष्ठादिसंयुक्तस्य वह्नेर्ज्वलनाऽ-

कालिन्दीजलेषु श्वैत्याभावशङ्कानवकाशमिव, [1]पृथिव्याः सामान्यरूपवत्ता-निराकरणमिव विरचयन्ती कीर्तिरभ्युदलसत्॥ १४ ॥

केवलान्वयिधर्मस्येव न कोपि विपक्षतामाततान, परन्तु सपक्षतामेव, सर्वेषु गुणगणेषु त्रिभुवनवर्तिनः पदार्था उपमेयतामेवानुभवितुं योग्यतां दधुर्न पुनरुपमानताम् ॥ १५ ॥

---

वस्थायां रक्तपीतादिरूपदर्शनाद्, राजशेखरकीर्तिस्तु—तस्याः शक्तिः प्रत्यादेश-मिव रचयन्ती—अभ्युदलसत्, सर्वत्रैवमन्वयः सङ्गमनीयः । 'जलेऽभास्वरः शुक्लो वर्णः'—इति सिद्धान्ते शङ्का जायते यमुनाजले नीलत्वप्रतीत्या नीलमस्तीति, तां शङ्कां विघटन्नुत्प्रेक्षते—कालिन्द्या यमुनायाः जलेषु वारिषु, श्वैत्याऽभावस्य श्वैत्यराहित्यस्य याऽऽशङ्का सन्देहस्तस्याः अनवकाशम् अनवसरम्, यशसा ब्रह्माण्डमात्रस्य श्वेतत्वेन शङ्काऽनवकाशमिव रचयन्ती, पुनश्च—सप्तविधरूप-वत्याः पृथिव्याः सर्वसहायाः या सामान्यरूपाणां भावः सामान्यरूपवत्ता सप्तविधरूपवत्त्वं, तस्याः निराकरणमिव प्रत्याख्यानमिव, रचयन्ती कुर्वाणा यस्य राज्ञः कीर्तिः समज्ञा अभ्युदलसत् प्रचकाशे । अस्मिन् गद्ये रूपान्तराणामित्या-रभ्य—सर्वेषु वाक्येषु रचयन्ती कीर्तिरभ्युदलसदित्यन्वयः । पूर्वत्र सर्वेषु वाक्येषु कीर्तिरभ्युदलसदित्येवान्वयः ॥ १४ ॥

**केवलान्वयिधर्माः**=ज्ञेयत्व-वाच्यत्व-प्रमेयत्वादयः, तेषां न कोऽपि विपक्षः प्रतिपक्षः—तेषां पदार्थमात्रवृत्तित्वेन तद्विपक्षाणामज्ञेयत्वाऽवाच्यत्वाऽप्रमेयत्वानां धर्माणामभावात् । केवलमेकमन्वयः सम्बन्धो ऽस्तीत्यस्य केवलान्वयि=व्यति-रेकाऽभाववान्, तथा चैकजातीयसम्बन्धेन सर्वत्र विद्यमानत्वं केवलान्वयित्वमिति लक्षण-लक्षितस्य प्रमेयत्वादेर्धर्मस्यैव कोऽपि राजा मनुष्यो वा विपक्षतां प्रति-द्वन्द्वतां नाऽऽततान, परन्तु किन्तु, **सपक्षतामेव** समानवर्ग्यत्वमेवाऽऽततान प्रथयामास । **सर्वेषु** सकलेषु, गुणगणेषु गुणराशिषु विषये त्रिभुवनवर्तिनः त्रिलोकाऽवस्थिताः पदार्थाः पाञ्चभौतिका अर्थाः, **उपमेयतामेव** न्यूनगुणवत्तामे-वाऽनुभवितुं प्रतिपादयितुं योग्यतामौचितीं दधुर्धारयामासुः, उपमानतान्तु—अधिक-गुणवत्तान्तु न दधुर्न धृतवन्तः, उपमीयते वर्ण्यतेऽद उपमेयं वर्ण्यम् प्रकृतमिति पर्यायशब्दाः; एवमुपमीयतेऽनेन करणेनोपमानम्, बलेन=बुद्ध्या पराक्रमेण, कृतज्ञतया=गुणज्ञतया शौर्योदार्य्यादिना राजशेखर इव स—इति प्रयोगः सम्भवति, न तु राजशखरस्तेन केनापि तुल्य—इतीत्यर्थः ॥

---

१ पृथिव्यां नानारूपवत्त्वनिराकरणमिवेति पाठो द्वि. पु. ।

तस्यैवंजातीयकविशेषशालिनोऽपि पुत्रानुत्पत्तिकृता, हतशेषपातालपलायितदानवेन्द्रनिवर्हणविषयिणी चेति द्वयी चिन्ता चेतसि पदं बबन्ध ॥१६॥

एकदा तु–सद्वृत्तमिव स्तम्भरहितं, कुलपालिकाहृदयमिव पुरुषान्तर-प्रवेशहीनं, पण्डितमिवानिगूढपदान्तरप्रचारं, ब्रह्ममुखमिव मन्त्रोत्पत्तिस्था-

---

त्रिभुवनधवलीकरणे व्यग्रं कीर्त्तेः कुसुममिदम् ।
त्रिभुवनपूज्ये श्यामे समर्प्यते सत्त्वसंशुद्ध्यै ॥ १५ ॥

गुणिगुणवर्णनगुच्छः, प्रथमः कुसुमाष्टकाकीर्णः ।
यशसा सुरभी रजसा व्याप्तः पुष्पस्तबक इव ॥ १ ॥

अथ कविः कथानेतुर्जन्मोपक्रममुपक्षिपति—**तस्यैवमिति**। एवं प्रकारकगुणभेदाढ्यस्याऽपि तस्य राजशेखरस्य सुताऽनुत्पत्तिजनिता एका चिन्ता, हतेभ्यो ऽवशिष्टा ये पाताले ऽधोभुवने पलायिताः गता विद्रुताः प्रबलाः सुराऽरयस्तेषां निवर्हणविषयिणी नाशविषयिणी चेति द्वयी चिन्ता चित्ते स्थितिमलभत। 'प्रमापणं निवर्हण'मिति मारणपर्यायेष्वमरः ॥ १६ ॥

मन्त्रस्थानं वर्णयति–एकदेति। **एकदा तु तप्तरहसं स्थानमध्यासीनो राजा दत्ताऽवधानं बुद्धिनिधिमवदादिति सम्बन्धः**। "गिरिपृष्ठं समारुह्य प्रासादे वा रहोगतः। अरण्ये निःशलाके वा मन्त्रयेदविभावितः" इतिमनूक्तमेकान्तस्थानं विवृण्वन् विशिनष्टि **स्तम्भेति**—सतां जनानां वृत्तं चरित्रं, स्तम्भेन जडतया हीनं भवति, तदिव मन्त्रस्थानं स्तम्भैः स्थूणाभिरपि हीनं किमुताऽन्यैः। स्तम्भाः आस्थानमण्डपे भवन्ति, मन्त्रस्तु निर्जने स्वल्पे प्रकोष्ठे पूर्वोक्तेषु स्थानेषु च स्वयं स्तम्भाऽनर्हेषु, "स्तम्भौ स्थूणाजडीभावौ" इत्यमरः। कुलं पालयति रक्षति स्वचरित्ररक्षणेनेति कुलपालिकाशब्दः कुलस्त्रीवाचकः, 'कुलस्त्री कुलपालिके'त्यमरः; तस्या हृदयं, पुरुषान्तरस्याऽन्यपुरुषस्य प्रवेशेन हीनं, तदिव, एकत्र चित्ते पुरुषान्तरस्य ध्यानाभावादन्यत्राऽऽज्ञाभावादप्रवेशः। न निगूढः संवृतः पदान्तारणामन्यान्यपदान्तराणां प्रचारः प्रयोगो यस्य तादृशः सुविज्ञातपदपदार्थः **पण्डितस्त**मिव, अतिशयेन नितरां गूढो गुप्तपदान्तराणां वाक्यघटकानां सुबन्ततिङन्तादिरूपाणां प्रचारः प्रोचारः प्रकर्षेणोच्चैरुच्चारणं यस्मिन्तत्, तत् पण्डितमिव तप्तरहसं स्थानम्। ब्रह्मणश्चतुराननस्य मुखं प्रत्येकं मन्त्राणामृग्यजुःसाम्नामुत्पत्तेर्जन्मनः स्थानं, तदिव मन्त्राणां "सहायाः साधनोपाया विभागो देशकालयोः। विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते"—इत्युक्तस्य मन्त्रस्य=गोपनीयस्य कर्तव्यविचारस्योत्पत्ति-

नम् , अध्वरस्थलमिव सुघटितवेदिकं, जीवन्मुक्तमिव प्रपञ्चासक्तिमुक्तं, निशासमयमिव पतङ्गहीनं, प्रयोगविशेषमिव शब्दनिर्गमप्रतिबन्धकं, सत्काव्यमिव शीघ्रज्ञेयान्तरम् , अन्यप्रवेशानर्हतया सिंहाक्रान्तमिव-समुद्रमिव-पातालविवरमिव-तप्तरहसं स्थानमध्यासीनो राजा दत्तावधानं बुद्धिनिधिमवदत् ॥ १७ ॥

विज्ञातमप्येतदार्यस्य स्मार्यते इह किल कर्म्मणामविच्छेदेन प्रतायमाने

---

स्थानमुद्भवस्थानम् , अतएव ब्रह्मणो मुखमिव । अध्वरस्य यज्ञस्य स्थलमिव,—सुष्ठु घटिता निर्मिता वेदिः परिष्कृता भूमिर्यस्मिन् तत्, समानमुभयत्र । प्रपञ्चस्य संसारस्याऽऽसक्त्या मुक्तो रहितो जीवन्मुक्तः शुकादिस्तमिव, प्रपञ्चस्य व्यक्तीभावस्य सचिवादिविस्तारस्य वा, आसक्तिरासञ्जनन्तेन मुक्तं हीनम् । पतङ्गेन सूर्येण हीनो रहितो रात्रि-समयस्तमिव, शलभादिनाऽपि हीनं किमुत जनैरित्यर्थः । प्रयोगस्य मानसजपादेर्यो विशेषो भेदः-'उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः' इति स्मृतिविहितफलकामनासहितः प्रयोगविशेषः, शब्दस्य कण्ठताल्वादिस्थानेषु, प्रयत्नप्रेरितस्य मूलाधारोत्थितस्य मुख्यप्राणस्य स्पर्शजन्यस्य वैखरीनादस्य यो निर्गमः समीपस्थजनसाक्षात्कारयोग्यमुच्चारणं, तस्य प्रतिबन्धकोऽवरोधकस्तमिव, शब्दस्य व्यक्तध्वनेर्यो निर्गमः स्थानाद्बहिःश्रवणं तस्य प्रतिबन्धकं कपाटपिधानादिनाऽवरोधकम् । सत् =प्रसादगुण-युक्तं, काव्यं =रसात्मकं वाक्यं, शीघ्रं शब्दश्रवणाऽनन्तरमेव, ज्ञेयं ज्ञानविषयीभवद् अन्तरं तादर्थ्यं यस्य तत्तादृशं भवति, तदिव शीघ्रज्ञेयं झटिति बोध्यमन्तरमन्तर्धिर्यस्मिन् तत् तप्तरहसं स्थानम्, "अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये । छिद्रात्मीयविना बहिरवसरमध्येऽन्तरात्मनि च"-इत्यमरान्नानार्थस्याऽन्तरशब्दस्य प्रकरणसमुचितोऽन्योऽप्यर्थः कोविदैरूहनीयः । अन्येषां राजमन्त्रिभ्यां भिन्नानां प्रवेशस्य संक्रमणस्याऽनर्हतयाऽयोग्यतया हेतोः, सिंहाक्रान्तमिव मृगेन्द्राधिष्ठितमिव, अपि च समुद्रमिव सागरमिव, अथ च पातालस्य नागलोकस्य विवरमिव बिलमिव, तप्तं प्रतप्तं प्रतापवदित्यर्थः, रह एकान्तता यस्मिन् तत्, ('अन्ववतप्ताद्रहसः' इति समासान्तोऽच् प्रत्ययः) तादृशमेकान्तस्थानमवकाशम्, (अधिशीङ्स्थाऽऽसां कर्म-इति-आधारस्य कर्मसञ्ज्ञायां कर्मणि द्वितीया ) अध्यासीन उपविष्टो राजा राजशेखरो दत्तमवधानं समाधानं चित्तैकाग्रतेत्यर्थः, येन तादृशं बुद्धिनिधिमन्वर्थनामानं प्रधानामात्यमवदत्-अब्रवीत् ॥ १७ ॥

किमवददित्याकाङ्क्षायामाह—विज्ञातमिति । आर्य्यस्य मान्यस्य (भवतः) विशिष्टं मन्त्रित्वप्रयोजकं यद् ज्ञानं, तद्विषयीभूतमप्येतद्वक्ष्यमाणं स्मार्य्यते स्मृति-

संसारे जीवानां सुखदुःखान्यतरभोगाय तदनुरूपशरीरपरिग्रहः समुल्लसति, तत्र च मनुष्यभिन्नाः सर्वेऽपि प्राणिनः पूर्वोपार्जितकर्मसन्तानोपनीतसुखाद्यनुभवमात्रव्यापारिणोऽनन्तरकर्मोत्पत्तिप्रबन्धविकलाश्च, मनुष्याणां तु प्राग्भावीयकर्मभोगो विधिनिषेधाधिकारश्च; तत्रापि त्रैवर्णिकानामेव [1]स भूयो

---

विषयो-क्रियते, 'विज्ञातस्य वस्तुनः स्मृतिविषयीकरणमुचितम्, अनुभवजन्यस्य ज्ञानस्य स्मृतित्वात्'। मन्त्रिसमवेतस्मृतिं प्रति राजवचनमुद्बोधकम्। इह ब्रह्माण्डे किलेति-प्रत्यक्षानुमानागमसिद्धे निश्चये, कर्मणां पुण्याऽपुण्यविमिश्राणां पूर्वजन्मार्जितानां ज्ञानाग्न्यभर्जितानाम्, अविच्छेदेनाऽनाशेन हेतुना, प्रतायमाने प्रतन्यमाने, संसारे संसृतौ, सृष्टिचक्रे इत्यर्थः, जीवानामीश्वरभिन्नानां चेतनानां जीवात्मनामित्यर्थः, सुखञ्च दुःखञ्च सुखदुःखे, तयोरन्यतरत् 'सुखं स्वर्गिणां भोगाय = अनुभवाय, दुःखं' नारकिणां भोगाय = अनुभवाय, तदनुरूपाणां तत्तत्कर्मजन्यफलभोगयोग्यानां शरीराणां भोगायतनानां देहानां ब्रह्मादिस्तम्बपर्यन्तानां परिग्रहणं परिग्रहः धारणं, समुल्लसति=सम्यक्कर्मविपाकमनतिक्रम्य, उद्गुद्यं, लसति प्राप्नोति, 'देवत्वं सात्त्विका यान्ति, मनुष्यत्वन्तु राजसाः। तिर्यक्त्वं तामसा यान्ति त्रिविधा कर्मणां गतिः' मनुः १२।४०। तत्र च शरीरधारणेऽपि, मनोरपत्यानि मनुष्या मानुषाः तेभ्यो भिन्ना अतिरिक्ताः सर्वे विश्वे प्राणिनश्चेतनाः सात्त्विका राजसास्तामसा वा पूर्वस्मिन् जन्मनि 'उपार्जितं यत्सदसद्विमिश्रं' कर्म तस्य यः सन्तानः प्रबन्धः परम्पराक्रमः तेनोपनीत उपस्थापितो यः सुखादीनां सुखदुःखमिश्राणां फलानामनुभवो भोगस्तन्मात्रो व्यापारः कृतिर्येषामस्ति तादृशाः, अथ च अनन्तरं परतरे काले या कर्मणां शुभाऽशुभानामुत्पत्तिः प्रादुर्भावो मनसि वचसि शरीरे वा तेषां प्रतिबन्धे नियन्त्रणेऽवरोधे संयमे, विगताः कला जपतपः—पुरश्चर्यादयो येषान्ते तादृशाः भवन्ति। मनुष्यभिन्नानां कर्मकरणेऽयोग्यत्वेनाऽनधिकारित्वादित्यर्थः। मीमांसाषष्ठाध्याये द्रष्टव्यम्। मनुष्याणान्तु नराणान्तु प्राग्भावीयपूर्वजन्मसम्बन्धि यत्कर्म पूर्वजन्मकृतं कर्म, दैवमित्यर्थः, तस्य भोगोऽनुभवः, विधिः— सामान्यधर्मविषयकः "तस्मादेतत्त्रयं शिक्षेद्दमं दानं दयामि"त्यादिः, निषेधः "न ब्राह्मणं हन्यादित्यादिः" तयोरधिकारः प्रवृत्तिनिवृत्तिफलिका नियोज्यता च, "विधायकवाक्यश्रवणेऽधिकारी कर्माऽनुष्ठानाय प्रवर्त्तते। निषेधवाक्यश्रवणेऽकार्यान्निवर्त्तते, तत्फलयोः स्वर्गनरकयोरिष्टाऽनिष्टत्वात्, फलस्यैव तज्जनकत्वात्। तत्राऽपि नरेष्वपि त्रयो वर्णाः ब्राह्मण-क्षत्रिय वैश्याः, तत्र भवास्त्रैवर्णिकाः द्विजाः, तेषामेव सोऽधिकारः भूयो विषयः प्रभूतभेदभिन्न—धर्माऽनुष्ठानविषयः प्रभूत-

---

(१) बहुधर्माधिकारो इति. द्वि. पु. पाठः।

विषयकोऽन्येषान्तु प्रतिनियतकर्मस्वेव, [1]तत्र चोत्पत्तिसमय एव ऋणत्रयमनुबध्नाति । तत्र च यागस्वाध्यायादिकमसाध्यऋणद्वयापनोद इति धर्मशास्त्रविदोऽभ्युपगच्छन्ति, स तु ममापि प्रायेण सञ्जात एव, यत्तु पित्र्यं तृतीयमृणं तत्पुत्रमात्रपरिहार्यमिति तद्बद्धोऽहं सकलातिशायिनीमपि सम्पदमिमां न

भेदभिन्नो निषेध्यवर्जनविषयश्च, भूयांसो विषया यस्येति बहुव्रीहौ विभाषा कप् । "ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः । निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः" इति स्मृतेः, 'वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मना'मिति च स्मृतेः। अन्येषान्तु त्रैवर्णिकभिन्नानान्तु प्रतिनियतानि प्रातिस्विकतया विहितानि "एतया निषादस्थपतिं याजयेत्' 'एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत् । एतेषामेव वर्णानां शुश्रूषामनसूयया' इत्यादि–श्रुतिस्मृतिविहितस्थपतीष्टित्रैवर्णिकशुश्रूषाऽनुकूलशिल्पशिक्षादि-नियतकर्मस्वेवाऽधिकारः, न सर्वेषु श्रौतस्मार्तकर्मसु । तत्र च = त्रैवर्णिकेषु उत्पत्तेर्जन्मनो यः समयः क्षणात्मकः कालस्तस्मिन्नेव ऋणानां त्रयं–देवर्षिपितॄणां वृष्टि-विद्या-वंश-पतीनां–तत्पाल्य-तद्विद्य-तद्वंशीयशरीरवत्तया चाऽधमर्णभूतान् त्रैवर्णिकान्–**अनुबध्नाति**=अनुबन्धवतः करोति । "जन्महेतुः कर्मबन्धः," बद्धस्य पुनर्जन्मन्येवाऽऽसज्यमानतया ऋणत्रयमनुबन्धः । ऋणत्रयापाकरणं विना न मोक्षाधिकारः, तदुक्तं मनुना—"ऋणत्रयमपाकृत्य मनो मोक्षे निवेशयेत् । अनपाकृत्य मोक्षन्तु सेवमानो व्रजत्यधः" इति पुनः पुनः संसारेऽनुबन्धकत्वाद् अनुबन्धत्वमृणत्रयस्य, अतस्तदपाकरणमावश्यकमित्याह–तत्र **चेति** । तेषु ऋणत्रयेषु च यागा ज्योतिष्टोमादयः, स्वाध्यायः स्वशाखीय–संहिता-ब्राह्मणभागात्मकवेदपाठः, आदिशब्दादर्थज्ञानविचारप्रयोगाध्यापनानि परशाखापाठश्च, 'अधीत्य आत्मनः शाखां परशाखान्ततः पठेदि'ति स्मृतेः । 'स्वाध्यायोऽध्येतव्यः' इति श्रुतेरध्ययनार्थज्ञानविचार ( मीमांसा ) पर्यन्तव्यापारवत्त्वस्य, 'अथातो धर्मजिज्ञासा' इत्यत्र मीमांसितत्वात् । यागस्वाध्यायावादी यस्य कर्मणस्तेन कर्मणा साध्यः साधयितुं योग्यः, ऋणद्वयस्य देवर्षिसम्बन्धिनः, अपनोदः = अपाकरणं भवतीति शेषः, इति **धर्मशास्त्रविदः** मन्वादिधर्मस्मृतिविज्ञाः, अभ्युपगच्छन्ति मन्यन्ते, **स तु** = ऋणद्वयापनोदः, ममाऽपि राजशेखरस्य प्रायेण बाहुल्येन सम्यग् जातो भूत एव, स्वाध्यायस्य ब्रह्मचर्य्यदशायामेव सम्पन्नत्वाद्, यागानाञ्च विवाहानन्तरं गृहीभूत्वा कृतत्वात्—इत्यर्थः । **यत्तु**=यच्च पित्र्यं पितृसंबन्धि तृतीयं तार्तीयकं ऋणमधमर्णत्वं तत् पुत्रमात्रेण पुत्रेणैव परिहर्तुं शक्यं परिहार्य्यम् परिहरणीयम्–इतिहेतोस्तेन बद्धस्तद्बद्धोऽहं राजा, कलाभिरपेक्षितैः सर्वैरंशैः सहिता सकला,

( १ ) अत्र स इत्यधिकः पाठः द्वि. पु. ।

बहु मन्ये, सम्पदो हि चलप्रायाः कालक्रमेणाविर्भवन्ति तिरोभवन्ति च, तासां हि सद्भावे सुखविशेषो,ऽभावे तु न कश्चिदप्यनिष्टलेशः, उत्तरोत्तरोत्कर्षग्रस्ता एव हि संसारे सर्वोत्कर्षाः, तदभिज्ञातलोकतत्त्वानां कियान्सम्पत्सु बहुमानावकाशः, यत्तु स्वभावेनानिष्टजनकं तत्रैव महतामादरोपनिबन्ध उचितः,

---

तामतिशेते सकलातिशायिनी तामपि सम्पदं सम्पत्तिमिमामनुभूयमानां राजश्रियं न बहु मन्ये सबहुमानं न पश्यामि, भोक्तुरुत्तराधिकारिणोऽभावात्, शून्यमपुत्रस्य गृहमिति भावः। सम्पदामादराऽभावे हेतुमाह—सम्पदो हीति। यस्मात्कारणात्सम्पत्तयः चलन्तीति चलाः, (पचाद्यच्) चला एव चलप्रायाः मयूरव्यंसकादयश्चेति समासः। अथवा चलनं चलः, (घञर्थे कः) चलश्चलत्वं प्रायो बाहुल्यं यासान्ताश्चापल्यबहुला इत्यर्थः, अतएव कालस्य कलनात्मकस्य समयस्य, क्रमणं क्रमः, तेन, कालान्तरेणेत्यर्थः, आविर्भवन्ति आगच्छन्ति सञ्चीयन्त इत्यर्थः, तिरोभवन्ति अपगच्छन्ति दानभोगाभ्यां व्ययीभवन्तीत्यर्थः। तासां सम्पदां, सद्भावे विद्यमानतादशायां सुखस्यानुकूलवेदनीयस्य गुणस्य विशेष आधिक्यम्, अभावे ऽसत्त्वे तु कश्चिदपि स्वल्पोऽपि, अनिष्टस्याऽनभिलषितस्य पापस्य लेशो लवो न भवति, "दरिद्रो निरहंस्तम्भो मुक्तः सर्वमदैरिह। कृच्छ्रं यदृच्छयाऽऽप्नोति तद्धित्तस्य परन्तपः" इति भागवतात्प्रत्युततपःसाधनं सम्पदसत्त्वं, ननु सम्पद्भिरुत्कर्षस्ततः सुखमिति चेन्न—यतो हि—संसारे सृष्टिप्रपञ्चे, सर्वे च ते उत्कर्षा उन्नतयः, उत्तरस्मिन्नुत्तरस्मिँश्च ये उत्कर्षाः पूर्वापेक्षया अधिकोन्नतयः, तैः ग्रस्ता एव निगीर्णा एव अभिभूता इत्यर्थः, उत्तरोत्कर्षस्य व्यापकत्वादित्यर्थः, तथाहि ब्राह्मणेषु आनन्दमीमांसा—"युवा स्यात् साधु—युवा अध्यायकः (विद्वान्) आशिष्ठो द्रढिष्ठो बलिष्ठः। तस्येयं पृथिवी सर्वा वित्तस्य परिपूर्णा स्यात्, स एको मानुष आनन्दः। ये ते शतं मानुषा आनन्दाः स एको मनुष्यगन्धर्वाणामानन्दः, श्रोत्रियस्य चाऽकामहतस्य इत्यारभ्य—ये, ते, शतं प्रजापतेरानन्दाः, स एको ब्रह्मण आनन्दः, श्रोत्रियस्य चाकामहतस्य"—इत्यन्तैरेकादशभिरुत्कर्षैरकामोपहतस्य विदुष एवाऽऽनन्दप्रतिपादनात्"। तस्मादभितः सर्वतोभावेन ज्ञातं विदितं लोकानां भूरादिसत्यान्तानां तत्त्वं याथार्थ्यं, परोत्कर्षाऽसहिष्णुत्वेन दुःखित्वमित्यर्थः, यैस्तेषां विदुषां, सम्पत्सु धनेषु कियान् किं प्रमाणः बहुमानस्य अत्यादरस्याऽवकाशः स्थानं, न कियानपि। अनिष्टनिवृत्तावेवाऽत्यादरः कर्तव्य इत्याह—यत्त्विति। यद्वस्तु—कर्म वा स्वस्य भावेनाऽऽत्मीयसत्तया ('वस्तुनिष्ठोऽतिशयविशेषः स्वभावः पृथिव्या इव गन्धः') अनिष्टस्याऽशुभस्य जनकमुत्पादकं तत्रैव तन्निवृत्तावेव, अनिष्टप्रतिबन्धके शुभे कर्मणीत्यर्थः, महतां—समचित्तानां प्रशान्तानां स्वपरहितैषिणाम् आदरस्य मानस्योपनिबन्ध आग्रहः,

विजातीयानां च कर्मणां प्रतिनियतफलजननस्वभावतया एकस्योत्तमफलसत्त्वेऽन्येनापि तादृशेन भवितव्यमेवेति निर्णयस्तु न भ्रान्तेतरस्य हृदयमधिरोहति, यच्च युधि निर्जिता अपि महेन्द्रवैरिणो दानवेन्द्राः [1]पलाय्य पातालमधिवसन्ति तदपि किञ्चिदिव शल्यमनुहरति, [2]यतोऽग्निरिपुरोगाणां शेषोऽपि पुनरभिवृद्धिमासाद्य महते खेदाय कल्पत इति चिन्ताद्वयं विषयान्तरसञ्चारप्रतिबन्धपूर्वकं समुल्लसतीति;—एवमभिधाय विरतवचसि राजनि राजनीति-

उचितो योग्यः । कथं स्वभावतोऽनिष्टजनकत्वमित्याकाङ्क्षायां, कर्मवैचित्र्येणेत्याह—**विजातीयेति** । चकारो हेत्वर्थो भिन्नक्रमः । यतः विरुद्धप्रकाराणां कर्मणां शुभाऽशुभमिश्राणां प्रातिस्विकतया नियतानि यानि फलानि तेषां जननस्य उत्पादनस्य स्वभावतया नैसर्गिकत्वेन, **एकस्य** कस्यचित्—कर्मणः, उत्तमफलसत्वे=इष्टफलसत्वे, अन्येनापि कर्मणा, **तादृशेन** इष्टफलजनकेन भवितव्यमेव-इत्याकारकः सिद्धान्तस्तु भ्रमरहितस्य कर्मवैचित्र्यज्ञस्य हृदयं नाधिरोहति=मनसि पदं न लभते, तस्याऽपसिद्धान्तत्वात् । अतः पुत्रोत्पत्तिप्रतिबन्धकदुरितध्वंसाय किञ्चिदनुष्ठानं विचारयितव्यमित्यर्थः । पुत्रानुत्पत्तिविषयिणीं चिन्तां निवेद्य, वैरिनिवर्हणविषयिणीं चिन्तां निवेदयति—**यच्च युधीति** । संप्रहारे नितरां जिता अपि देवेन्द्रशत्रवः सुराऽरयः पलायनं कृत्वा पातालमधस्तनं सप्तमं लोकम् अधिवसन्ति ( 'उपान्वध्याङ्वस' इति पातालस्य कर्मत्वम् ) तदपि रिपूणां पलायनमपि किञ्चिदेव किमपि शल्यं दुःखम् अनुहरति—इव=अनुकुरुत इव, अनुवृत्त्या प्रापयतीत्यर्थः । दुःखानुहरणे हेतुमाह—यतः कारणादग्नेर्वह्नेः, रिपोः शत्रोः, रोगस्य गदस्य च शेषः निर्वाणाद्रणात्, चिकित्सायाश्चाऽवशिष्टो भागोऽपि स्फुलिङ्गादिरूपोऽपि पुनस्तृणादिसाहाय्येनाऽभिवृद्धिं पुष्टिं प्राप्य लब्ध्वा महते बृहते खेदाय कष्टाय कल्पते सम्पद्यते, ( 'क्लृपि सम्पद्यमाने च' इति चतुर्थी ) **इति** इत्याकारकं पुत्रानुत्पत्तिनिमित्तं हतशेषशत्रुनिःशेषनिर्मितिविषयकञ्चेति **चिन्ताद्वयं** चिन्तायुगलं-कर्तृ, विषयान्तरस्याऽन्यविषयस्य कार्यान्तरस्येत्यर्थः—यः संचारः बुद्धिविषयीभवनं तस्य प्रतिबन्धपूर्वकमवरोधपूर्वकं **समुल्लसति** समुद्भवति—इति चिन्ताद्वयप्रतिपादकं वचनं बुद्धिनिधिमवददिति पूर्वगद्येनान्वयः । एवं पूर्वोक्तं वचनद्वयमभिधायोक्त्वा विरतं वचो वचनं यस्य तस्मिन् राजनि तूष्णींभूते सति इत्यर्थः, राजनीत्यां मन्त्रणायां कुशलो निपुणो गुरुरिव गीष्पतिरिव बुद्धिनिधिः, अर्थादर्थ्यमानात्कार्य्यान्न अपगतानि रहितानि यानि

( १ ) अपक्रम्येति. द्वि. पु. ( २ ) यतो वै शेषोऽपि पुनरभिवर्धत इति चिन्ताद्वयम् इति. द्वि. पु. पाठः ।

कुशलो गुरुरिवार्थाऽनपेतपदप्रायमवादीत्—चिरं निरूप्यमाणेऽपि न स कश्चिदस्ति विषयो यो देवस्य बुद्धेराज्ञायाश्च गोचरतां नानुभवति, तथापि देवस्येच्छाप्रतिहतिवारणार्थमेव मम वचनपरम्परा; तथा हि—या तावदियं द्वितीया चिन्ता देवस्य हृदयेऽभ्युदयमासादयति तस्या ईषत्कर एव प्रतीकारः, नहि दानवानां दुर्जयत्वमत्र निदानं स्वर्गमपहायापक्रमणेन सर्वविदितेन दुर्ज-

पदानि तादृशपदमयं यथा स्यात्तथाऽवादीत् अगादीत् । चिरम् = सर्वेषां विषयाणां स्फूर्तिपर्यन्तं, निरूप्यमाणोऽपि विचार्य्यमाणोऽपि, ( सप्तम्यन्तपाठे तु मया विचार्य्यमाणे सत्यपि ) नास्ति कश्चित्तादृशो विषयः यः खलु देवस्य राज्ञो भवतः बुद्धेर्मनीषायाः गोचरतां विषयताम् आज्ञायाश्च विषयताम् न अनुभवति । तथापि देवस्य भवत इच्छाया 'बुद्धिनिधिर्मत्प्रश्नस्योत्तरं ददातु' इत्याकारिकाया आकाङ्क्षाया या प्रतिहतिः प्रतिघातोऽनुत्तरजन्यस्तस्या निवारणार्थम् एव न तु अज्ञातज्ञापनाय मम मन्त्रिणोऽपि वचनस्य परम्परा परिपाटी । सूचीकटाहन्यायेन प्रासङ्गिकीं द्वितीयचिन्तां निरस्यति—**तथा हीति**।देवस्य चेतसि या शत्रुनिर्बर्हणरूपा प्रस्तावे द्वित्वसङ्ख्यापूरिका चिन्ता आध्यानम्, अभ्युदयं प्रादुर्भावमासादयति प्राप्नोति, तस्याश्चिन्तायाः प्रतीकारः परिहारः ईषत् सुष्ठु कर्तुं शक्यते इति ईषत्करः सुकरः । ननु दुर्जयानामसुराणां कथं प्रतीकारः क्रियेत—इत्याशङ्कां परिहरन्नाह—**न हीति**। दनोरपत्यानि पुमांसो दानवाः असुरविशेषाः=लक्षणया असुराः, न केवलं दानवा एव महेन्द्रवैरिणः किन्तु दैत्यदानवप्रभृतयः सर्वेऽप्यसुराः; कोषेषु तु—'असुरा दैत्यदैतेयदनुजेन्द्रारिदानवाः'—इत्यादौ सामान्यविशेषाऽविवक्षया पर्य्यायत्वम्, 'सामान्यविशेषयोरभेद' इति नियमात् सुरप्रतियोगिकभेदस्य सर्ववृत्तित्वात् । न च तयोरभेद इति वाच्यम् 'दैत्यानां दानवानाञ्च प्रह्लादमकरोत्पतिम्' इति नृसिंहोपाख्याने भेदस्य स्पष्टत्वात् । तेषाम् इन्द्रारीणाम्, दुःखेन जीयन्ते इति दुर्जयास्तेषां भावो दुर्जयत्वं जेतुमशक्यत्वम्, अत्र प्रतीकारे चिन्तायाञ्च निदानं कारणं, नहि नैव, कुतः **स्वर्गं** सुरलोकमपहाय त्यक्त्वा अपक्रमणेन पलायनेन सर्वविदितेन सर्वजनप्रसिद्धेन 'शेषाः पातालमाययुः' इत्यादि स्मार्तप्रमाणपोषितेन सर्वसाक्षात्कारेण हेतुना साधितेनाऽनुमानेन दुर्जयत्वरूपस्य साध्यस्यैवाऽसिद्धत्वात्, कथं दुर्जयत्वहेतुकः प्रतीकाराऽसंभवः, कथं वा तद्धेतुका चिन्ता । अत्राऽयं प्रयोगः—दानवाः प्रतीकारानर्हाः, दुर्जयत्वात्, यो यो दुर्जयः स स प्रतीकारानर्हः, हिरण्यकशिपु—बलिप्रभृतयो दृष्टान्ताः, तेषां नराऽजेयत्वात्, द्वितीयस्तु प्रयोगो दुर्जयत्वस्याऽसिद्धत्वसाधकः, यथा—दानवा न दुर्जयाः, भवदीयरणे स्वर्गमपहायापक्रान्तत्वात्, यो यो रणाऽपक्रान्तः स स न दुर्जयः, एवमपक्रान्तत्वे

यत्वस्यैवासिद्धत्वात्, नापि तेषां पुनरुत्कर्षशङ्का, पूर्वकाल [1]एव तैस्तृणीकृताखिलोपाया[2] का नाम माया नाऽमायि, प्रबललोकालोकितोपि को वा लोको न विकलीकृतः, मोघीकृतसर्वशस्त्रं किं महदस्त्रं न स्वहस्तीकृतं, जगत्त्रयेऽपि सर्वाभ्यर्हितः को वा सुपर्वा न गर्वापहीनो विहितः, अधिजन्मभूमि को वा राजन्यः स्वजन्यभङ्गाविषयः स्थापितः, अतिचिरत्नमपि किं नाम रत्नं प्रयत्नबलान्न स्वायत्तमारचितम् । यदि चैतादृशप्रभावभूमयोपि ते देवेन पराजितास्तत्किमतः परमपि ते उत्कर्षान्तरमासादयिष्यन्ति, येन तेषां दुरुच्छेदत्वशङ्काकलङ्कसङ्करः सम्भवेत् ॥ १८ ॥

---

साध्ये सर्वजनविदितत्वं हेतुः । एवं सर्वत्रानुमानप्रयोग ऊहनीयः । ननु—इदानीं दुर्जयत्वाऽभावे सिद्धेऽपि पुनरुत्कर्षेण दुर्जया भवेयुरित्यपि नेत्याह-**नापीति** । तेषां पलायनं कृत्वा पातालमधिवसतां सुरारीणां पुनर्भूयः, उत्कर्षस्योन्नमनस्य शङ्का सम्भावनाऽपि न कार्य्या, यतः पूर्वस्मिन् समये एव तैरसुरैस्तृणीकृतास्तुच्छीकृता अखिलाः सर्वे उपायाः साधनानि यया तादृशी का नाम सा माया कपटरचना नाऽमायि नाऽकारि, अपि तु सर्वाप्यकारि । ( माति तुलयति यथार्थं पदार्थमिति माया "माछाससिभ्यो यः" इति यप्रत्यये टाप् ) 'स्यान्माया शाम्बरी' इत्यमरः । इन्द्रजालप्रभृतिर्माया । अपि च–प्रकृष्टबलवद्भिरिन्द्रादिलोकपालैरालोकितो निरीक्षितः पालितः को वा लोको भुवनं, न विकलीकृतो न व्याकुलीकृतः, अपि तु सर्वोऽपि । मोघीकृतानि विफलीकृतानि सर्वाणि शस्त्राणि येन तत् किन्नाम महदस्त्रं बृहदायुधं न स्वहस्तीकृतं न स्वायत्तीकृतं, जगत्त्रयेऽपि त्रिभुवनेऽपि सर्वैरभ्यर्हितः प्रशंसनीयः को वा कः खलु सुपर्वा सुमनाः गर्वेणाभिमानेन हीनो रहितो न कृतः, अपि तु विश्वेऽपि गर्वाऽपहीनाः कृता, जितत्वात् । जन्यमायोधनं तस्य भूमिः सङ्ग्रामस्थलं तस्मिन्निति अधिजन्यभूमि=रणभूमौ, को वा राजन्यः कः खलु क्षत्रियः स्वेन जनयितुं कर्तुं शक्यो यो भङ्ग आमर्दनं तस्याऽविषयोऽगोचरः स्थापितः, न कोऽपीत्यर्थः । अतिचिरम्भवमपि प्राचीनमपि किन्नाम तद्रत्नम्=उत्कृष्टं वस्तु यत् प्रयत्नबलात् स्वायत्तं स्वाऽधीनं 'न' आरचितं न कृतम्, अपि तु सर्वं स्वायत्तं कृतम्। **यदि चेति** । एतादृशः पूर्वोक्तोऽलौकिको यः प्रभावः सामर्थ्यं तस्य भूमयोऽपि आश्रयभूता अपि ते ऽसुरा, देवेन विजिगीषुणा दिव्यशक्तिशालिना भवता पराजिताः पराजयं प्रापिताः, तत् पराजितास्ते, अतः परमपि=पूर्वोक्तोत्कर्षादपि–अधिकम् अन्यमुत्कर्षमुत्कर्षान्तरमन्यदुन्नमनम्

---

( १ ) एतैरिति पाठो द्वि. पु. । ( २ ) तृणप्रायाखिलोपायेति द्वि. पु. पाठः ।

यदि च वीरस्वाभाव्येन तेषां सत्तामात्रमपि देवस्य मनसि नाभिरोचेत, एवञ्च तद्वधेच्छाविलम्बमात्रादेव तद्विलम्ब इति स्वकीयेच्छान्वयव्यतिरेकानुविधायिनि कार्ये को वा दौर्मनस्यस्यावसरः ॥ १९ ॥

या तु प्रथमा चिन्ता देवेनोपन्यस्ता सा त्वभ्यर्हितविषयैव, गार्हस्थ्यपरिग्रहो हि विषयोपभोगमात्रप्रयोजन इति रागिणामभ्युपगमः, परमार्थ-

---

आसादयिष्यन्ति प्राप्स्यन्ति, येनोत्कर्षेण तेषाममररिपूणाम् दुरुच्छेदत्वस्य या शङ्का सैव कलङ्को लाञ्छनं तस्य सङ्करोऽवकरः मिश्रणं वा सम्भवेत् सम्भावनामाश्रयेत, अपि तु न ॥ १८ ॥

यदि चेति। वीरस्य विक्रान्तस्य स्वभावो वैरिनिर्मूलनकर्तृत्वरूपः तस्य भावे ष्यञ्युत्तरपदवृद्धिस्तेन, तेषां सुरद्विषां, सत्ता एव सत्तामात्रम्, अपि अस्तित्वमपि देवस्य भवतो महाराजस्य चेतसि न रोचते न सम्यक् लगति, एवं च=तर्हि, तद्वधेच्छाया दानववधेच्छाया विलम्बमात्रादेव, तस्य तद्वधस्य विलम्बः समययापनम्, इति हेतोः स्वकीयाया इच्छाया योऽन्वयः शत्रुवधेच्छासत्त्वम्, व्यतिरेकः शत्रुवधेच्छाभावः, तयोरन्वयव्यतिरेकयोरनुसारिणि कर्त्तव्ये दुर्मनसो भावस्य दौर्मनस्यस्य वैचित्यस्य को वाऽवसरः कः खलु—अवकाशः। तत्सत्त्वे तत्सत्त्वमन्वयः, तदभावे तदभावो व्यतिरेकः। तत्सत्त्वे व्याप्यधूमादिसत्त्वे तत्सत्त्वं व्यापकस्य वह्न्यादेः विद्यमानत्वम् अन्वयः, भावपदार्थयोरनुगतः सम्बन्धः। पर्वतगोष्ठमहानसादौ वह्निधूमयोरन्वयः प्रसिद्धः। तदभावे वह्न्यभावे, तदभावः धूमाऽभावः व्यतिरेको,ऽभावयोरनुगमः जलाशयादौ प्रसिद्धः। भवत इच्छाचेदभविष्यत् शत्रवोऽहनिष्यत, अद्यापि न हताः शत्रवोऽतोऽनुमीयते न जाता भवतः शत्रुवधेच्छा, भविष्यति चेत्तदैव भविष्यन्ति हता इत्यर्थः। एवमन्वयव्यतिरेकौ सर्वत्र बोध्यौ ॥ १९ ॥

अवसरप्राप्तां प्राकरणिकीं प्रथमचिन्तां समाधत्ते—या तु प्रथमेति। प्रथमा चिन्ताऽपि ऋणापाकरणरूपा उपन्यस्ता प्रस्ताविता, अभ्यर्हितः प्रशंसनीयः विषयः पुत्रोत्पत्तिरूपः हिताऽनाप्तिमूलाया ध्यानापरपर्य्यायायाश्चित्तवृत्तिविशेषस्वरूपायाश्चिन्तायाः सविषयत्वमुचितमेव, ज्ञानेच्छाकृतीनां सविषयत्वात्। हि यतः गृहे धान्यादिधारणसमुचिते गेहे तिष्ठतीति गृहस्थः, ( सुपि स्थः, इतियोगविभागात् कः ) तस्य भावः, गार्हस्थ्यं, 'भावे ष्यञ्' गृहस्थाश्रमः तस्य परिग्रहः स्वीकारः 'ब्रह्मचारी भूत्वा गृही भवेदिति' वेदाज्ञासिद्धः, विषयाणां शब्दस्पर्शरूपरसगन्धानां, श्रोत्रत्वक्चक्षूरसनघ्राणानामिन्द्रियाणां क्रमशो ग्राह्याणाम् इन्द्रियार्थपदवाच्यानामुपभोगोऽनुभवस्तन्मात्रं तदेव प्रयोजनं फलं यस्य तादृशः 'इन्द्रिय-

दर्शिनां त्वपत्यमेव तस्याऽसाधारणं फलमिति, तत्र तावत्स्वरूपयोग्यता मनुष्यत्वेनैव परिच्छिद्यते, फलोत्पत्तिस्तु सामग्रीसमवधानाधीना, सामग्रीघटकं च तदनुकूलमदृष्टं प्रतिबन्धकदुरदृष्टविरहश्चायोग्यतया प्रत्यक्षानधिगम्यमेव, तत्र

---

तर्पणमात्रफल' इति भावः, **इति** एवं, रागिणां विषयिणाम् अभ्युपगमः प्रतिश्रवः अङ्गीकार इत्यर्थः; 'अङ्गीकाराभ्युपगमप्रतिश्रवसमाधय' इत्यमरः। परमुत्कृष्टं फलं मातीति ( आतोऽनुपसर्गे कः इतिसिद्धः ) परमशब्दः, अर्थ्यते इति अर्थः, अनयोः ( सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैरिति ) कर्मधारयः समासः, परमार्थमुत्कृष्टं प्रयोजनं पश्यन्ति ते **परमार्थदर्शिन**स्तेषां ( सुप्यजाताविति णिनिः ) 'पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते' 'अथ पुत्रस्य पौत्रेण ब्रध्नस्याऽप्नोति विष्टपम्' इत्यादिस्मृतिप्रतिपाद्यैहिकाऽऽमुष्मिकयाथार्थ्यदर्शिनान्तु, "'दश पूर्वान् परान्वंश्यानात्मानञ्चैकविंशकम् । ब्राह्मीपुत्रः सुकृतकृन्मोचयेदेनसः पितॄन्" इत्यादि-स्मृतिबोधितपतनप्रतिबन्धकत्वेनाऽपत्यमेव सन्तान एव, तस्य गृहस्थाश्रमपरिग्रहस्य, असाधारणम् परमाऽऽवश्यकं फलं प्रयोजनम्, **इति** इत्याकारकोऽभ्युपगमः स्वीकार इत्यनुषङ्गः; 'प्रजायै गृहमेधिना'मिति सूक्तेः । कार्यकारणभावं प्रतिपादयन्नाह—**तत्रे**ति । तत्र = फलसिद्धौ **तावत्** पूर्वार्जितपुण्यप्रभावात्, **मनुष्यत्वेनैव** मन्वपत्यत्वेनैव, मनोः प्रजापतित्वेन वंशवर्धकत्वात्, **स्वरूपयोग्यता** तद्रूपा कारणता **परिच्छिद्यते** परिचीयते बुध्यते इत्यर्थः । **फलस्य** सन्तानस्योत्पत्तिस्तु निष्पत्तिस्तु सामग्र्याः सहायकसम्भारस्य यत् समवधानं संघटनं तदधीना तदायत्ता । 'अधीनो निघ्न आयत्त' इत्यमरः । अयं भावः—घटः कार्यम्, दण्डः कारणम्, दण्डे कारणता द्विविधा—स्वरूपयोग्यतारूपा, फलोत्पत्तिरूपा चेति । स्वरूपयोग्यतारूपा कारणता अरण्यस्थदण्डेऽपि वर्तते एव, येन काष्ठेन दण्डनिर्माणयोग्येन कदापि घटो न जनितस्तत्राऽपि स्वरूपयोग्यतारूपा कारणता । फलोपधायिकारूपा तु कारणता घटोत्पादके कुलालदण्डे एव । तथैव सन्तानजननस्वरूपयोग्यता मनुष्यमात्रे वर्तते । उत्पत्तिस्तु सहकारिकारणसन्निधानेन भवति, सामग्रीसंघटनञ्च भाग्याधीनमित्याह—**सामग्रीति** । सामग्र्याः कारणकलापस्य घटकं साधकं प्रयोजकमित्यर्थः, संयोजकमिति यावत् । चकारोऽप्यर्थः, तदनुकूलं फलोत्पत्त्यनुगुणम्, अदृष्टं दैवं, प्रतिबन्धकं कार्यविघटकं यद् दुरदृष्टं दुर्भाग्यं, तस्य विरहः अभावः, चकारः समुच्चयार्थः, एतदुभयमपीत्यर्थः, अयोग्यतया चक्षुरादिग्रहणाऽयोग्यत्वात्प्रत्यक्षस्य चाक्षुषादिषड्विधप्रत्यक्षस्य न अधिगम्यम् एव, चाक्षुषादिषड्विधप्रत्यक्षप्रमाणाऽवेद्यमित्यर्थः । न खलु प्रत्यक्षप्रमाणवेद्यमित्येव शब्दार्थः, अदृष्टस्यात्मसमवेतगुणत्वेनाऽप्रत्यक्षत्वात् । नापि

देवस्य सन्त्येव दिव्यलोकसञ्चारसम्भवेन सुकरप्रार्थनाश्चिन्तामणिकल्पवृक्ष-कामधेनवः, यद्वा वृन्दारकविपक्षवृन्दनिर्दलनोद्भावितनिर्मर्यादपरितोषविशेषो भगवान्वयस्यभूतो देवराज एव, अथवा देवस्य संसदि सर्गस्थितिसंहरण-समर्थाः सर्गान्तरोपजननशक्तिमन्तोऽर्थाव्यभिचरितवचसो ब्रह्मकल्पा महर्षयः सहर्षं समवयन्ति, तैरेव तनयोत्पत्तिं मनसि कृत्य वैदिकं कर्म निर्मायं निर्मी-यताम्; श्रूयते हि राज्ञो युवनाश्वस्य वितते पुत्रीये कर्मणि संस्कारविशेषविशिष्टे पयसि प्रमादाद्यजमानेन राज्ञा पीते तत्कुक्षेरेवाप्रतिमप्रभावो मान्धाता

---

मानसप्रत्यक्षमदृष्टस्य—'मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृति'रिति तस्याऽग-णनात्। यदि दैवस्य न प्रत्यक्षं कथन्तर्हि कर्तव्यनिश्चयः स्यादित्यत आह-**तत्रेति**। तस्मिन्दैवप्रत्यक्षविषये देवस्य भवतः दिव्यलोकस्य स्वर्गस्य सञ्चारः सम्यक् सर्वत्र भ्रमणं तस्य सम्भवेन सत्तया, चिन्तामणिश्चिन्तितार्थदायको मणि-र्दिव्यरत्नं, गणेशो वा, कल्पवृक्षः सङ्कल्पिताऽभीष्टदायको देवतरुः, कामधेनुः कामनाविषयीभूताभिलषितसिद्धिकरी सुर-सुरभिः, सुकरा प्रार्थना येभ्यस्ते तादृशाः सन्त्येव विद्यन्त एव। स्वकीयाऽदृष्टविषये ते सुखेन प्रष्टुं शक्या इत्यर्थः। देव-निधिभूतानान्तेषां देवराजाधीनत्वादाह—**यद्वेति**। परम्परासंबन्धं विहाय साक्षादेव वा देवराज एव=पुरन्दर एव, सुकरप्रार्थन इति वचनविपरिणामेनान्वयः। अनाराधितो देवः कथं सुकरप्रार्थन इत्याह—**वृन्दारकविपक्षेति**। देवरिपु-समूहप्रणाशनजाताऽपरिमितसन्तोषभेदस्त्रिकालदर्शी सखिभावं प्राप्तः पाकशासनः, सम्भवति स्वकीयसम्भारसमवधाने न परकीयसहायाकाङ्क्षेत्याह—**अथवेति**। स्वकीयकृतिसाध्यकार्यकरणपक्षस्वीकारे भवतः सभायां सृष्टिस्थितिप्रलयसमर्थाः सृष्ट्यन्तरोत्पत्तिसामर्थ्यवन्तः, अर्थैः पदार्थैरव्यभिचारि व्यभिचाररहितं वचो येषा-न्ते, सत्यवाच इत्यर्थः, प्रजापतितुल्याः महान्तो मुनयः सन्तोषं सम्यक् संगच्छन्ते, तैरेव महर्षिभिर्मायारहितं यथा स्यात्तथा वैदिकं वेदविहितं कर्माऽनुष्ठानं, निर्मीयतां क्रियताम्, प्रयोजनभूतां पूर्वप्रस्तुतां सुतजनिं मनसि निधायेति फलाभिसन्धानम्। सदृष्टान्तानि पुत्रीयाऽनुष्ठानानि प्रतिपादयति—**श्रूयते हीति**। हि यतः राज्ञो युवनाश्वस्य पुत्रीये कर्मणि वितते कृते सति संस्कारविशेषेण विशिष्टे पुंसवन (पुत्रजनन) शक्तिसमन्विते पयसि कलशोदके प्रमादादनवधानतया, (रात्रौ पिपासाव्याकुलतयेति भावः) यजमानेन यागकर्त्रा पुरुषेण राज्ञा सूर्यवंश्येन युवनाश्वेन पीते कृतपाने सति तत्कुक्षेरेव युवनाश्वकुक्षेरेव अप्रतिमोऽतुल्यप्रभावः प्रतापो यस्य तादृशो मान्धाता नाम, सम्यक्=उदरविदारणपूर्वकं पितृजीवनसुख-

समभवत्,तथैव ऋष्यश्रृङ्गेण मुनिना दशरथस्य पुत्रकाम्यया तदनुरूपक्रियाविशेषे सुविहिते सति भगवन्नारायणांशसम्भूता रामप्रभृतयश्चत्वारः पुत्राः समजायन्त,पाञ्चालराजस्य च द्रुपदस्य द्रोणवधसमर्थपुत्रजननेच्छया याजोपयाजाभ्यां मुनिभ्यां यथावत्परिनिष्ठापितायां पुत्रीयायामिष्टौ धृष्टद्युम्नो द्रौपदी चेत्यपत्यद्वयमग्निमध्यादेव समुदतिष्ठदिति; अथवा सकलजगदङ्कुरबीजभूतेच्छः सर्वातिशयहेतुस्तत्तत्कर्मानुरूपभोगसम्पत्तिजनकोऽपरिच्छेद्यानुभावैकदेशो भगवान् भूतनाथ एव केनचिद् व्रतविशेषेण परितोष्यताम्—तदेवं [1]तनयोत्पत्त्यनुकूलादृष्टजनकाः प्रतिकूलतद्विध्वंसहेतवो

विशिष्टतया, अभवत् अजायत ( भागवते नवमस्कन्धे कथा द्रष्टव्या )। यथा युवनाश्वस्य पुत्रीयेष्टौ मन्त्रप्रभावो दृष्टस्तथैव दशरथस्याऽपि मननशीलेन विभाण्डकसुतेन ऋष्यश्रृङ्गेण=ऋष्यस्य मृगभेदस्येव श्रृङ्गं स्वगणप्राधान्यं यस्य स ऋष्यश्रृङ्गनामा मुनिस्तेन पुरोहितेन सता दशरथस्य सुतकामनया पुत्रोत्पत्त्यनुकूलकर्मभेदे सुष्ठु कृते सति भगवतः षडैश्वर्य्यशालिनो नारायणस्य विष्णोरंशभूताः कलात्मका राम-भरत-लक्ष्मण-शत्रुघ्न-नामानश्चत्वारः सुताः सम्यग् =अग्निकुण्डात्पायसप्राप्तिपूर्वकम् , अजायन्त अभवन्। पाञ्चालदेशाऽधिपस्य द्रुपदनाम्नो नृपस्य द्रोणाचार्य्यमारणशक्तिसमन्वितसुतोत्पत्तिवाञ्छया हेतुभूतया याजोपयाजनामकाभ्यां मुनिभ्यां विधिपूर्वकं कृतायां पुत्रजननयोग्यायामिष्टौ ( यागे ) द्रौपदीधृष्टद्युम्नश्चेति सन्तानद्वयं वह्निकुण्डमध्यादेव सम्यग् उदतिष्ठत् उदपद्यत इत्यर्थः। कथात्रयस्य—इति श्रूयते—इति सम्बन्धः। श्रौतं विधिं प्रतिपाद्य स्मार्तमनुष्ठानं दर्शयति—अथवेति। पक्षान्तरे कलाभिः सहितं सकलं, सकलञ्च तज्जगत् तदेव अङ्कुरोऽभिनवोद्भिद्—तस्य बीजभूता इच्छा "एकोऽहं बहुस्यां प्रजायेय" इत्याकारिका यस्य सः, सर्वे च ते अतिशया उत्कर्षास्तेषां हेतुः कारणं, तत्तत्कर्मानुरूपः पूर्वार्जितशुभाऽशुभकर्मानुगुणो यो भोगोऽनुभवः तत्साधिका या सम्पत्तिसामग्री तस्या जनकः फलदातृत्वेनोत्पादकः परिच्छेत्तुमशक्योऽनुभावस्य प्रभावस्य एकदेशोंऽशो यस्य तादृशो भगवान् षडैश्वर्य्यशाली भूतानां प्राणिनां नाथः स्वामी 'भूतेशः खण्डपरशु'रित्युक्तेः, अथवा भूतानामाकाशादिमहाभूतानां नाथः परिणमनसमर्थः प्रभुः शिव एव केनचित् पूर्वार्जितदुरितध्वंसनपूर्वकशुभफलदात्रा व्रतविशेषेण व्रतभेदेन प्रदोषादिव्रतेन परितोष्यताम्=प्रसाद्यतां, भवता- इति शेषः, तत् तस्मात्, एवमनेन प्रकारेण तनयानामुत्पत्त्यनुकूलं यददृष्टं पुण्यं, तज्जनकाः तदुत्पादकाः, प्रतिकूलं तनयोत्पत्तिप्रतिबन्धकं यत् तददृष्टं पापमित्यर्थः, तस्य

( १ ) तदेवंजातीया अनुकूलदृष्टजनका इति द्वि० पु० पाठः ।

बहव उपायाः सुलभा एव देवस्य तत्किमिति तत्र प्रयत्नमपहाय मनश्चिन्तास्पदं क्रियते, सन्ति च देवस्य तादृशानि चिह्नानि यैरीश्वरावतारभूता लोकोत्तरकर्मकारिणो महोत्कर्षशालिनो महात्मानस्तनयाः प्रादुर्भवन्तीत्यलमनयाऽपि चिन्तयेति। एतदाकर्ण्य परितुष्टहृदयो राजा यथाभिहितमार्येण तत्प्रमाणमित्यभिधाय तेन सहैवोत्थाय ततो निरगमत् ॥ २० ॥

अथानुरागातिशयोल्लसितबुद्धिधाराजनितसाक्षात्कारप्रचयबलेन सर्व-

यो विध्वंसो नाशस्तस्य हेतवः कारणभूताः बहव अनेके उपायाः साधनानि सुलभा एव सुप्राप्या एव, देवस्य महाराजस्य, तत् तस्मात् किमिति किमर्थं, तत्र पुत्रोत्पत्त्युपाये प्रयतनं परित्यज्य चित्तं चिन्तापात्रं क्रियते। सामुद्रिकशास्त्रं प्रमाणयति-सन्तीति। यैश्चिह्नैरीश्वरस्य भगवतोऽवतारभूता अंशावताररूपा अलौकिककार्यकारिणो महोत्कर्षशालिनः परमोन्नतियुक्ताः महोदारचित्ताः सुता उत्पत्स्यन्ते तादृशानि लक्षणानि हस्तरेखादीनि भवतः सन्ति च विद्यन्त एव,–इति हेतोरनया सुतोत्पत्तिविषयिण्या चिन्तया=आध्यानेन, अलम् आत्मा न खेदयितव्य–इत्यर्थः, सुतोत्पत्तिविषयिणी द्वितीया चिन्ता च न कार्या–इत्यर्थः। उपायानां प्रयोगेण सुतोत्पत्तेरवश्यम्भावित्वात्–इति भावः। एतत् पूर्वोक्तं बुद्धिनिधिवचनमाकर्ण्य श्रुत्वा, परितृप्तं प्रसन्नं हृदयं चित्तं यस्य स राजा राजशेखरः आर्येणाऽमात्येन भवता यथाऽभिहितं यदुक्तं, तत्तथा प्रमाणं=यथार्थं सत्यमित्येवमभिधायोक्त्वा, तेन बुद्धिनिधिना सहैव सार्धमेव–उत्थाय आसनादुत्थितो भूत्वा ततो विचारभवनान्निरगमत् प्रागच्छत्। पूर्वस्थानवियोगानुकूलमात्रव्यापारोऽत्र गमधातोरर्थः, 'अतएवाकर्मकता'; पूर्वस्थानस्य चापादानत्वं वियोगाश्रयत्वात्प्रसिद्धमेव। यत्र तु–उत्तरदेशसंयोगानुकूलो व्यापारो गमधात्वर्थस्तत्र सकर्मकत्वन्तस्य, यथा ग्रामं गच्छतीत्यादौ। तदुक्तम्—"धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्। प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया" ॥ "उपसर्गेण धात्वर्थो बलादन्यत्र नीयते। प्रहाराऽऽहारसंहारविहारपरिहारवत्" ॥

मन्त्रणकुसुमं नवमं प्रस्तावद्वयवर्णनायुक्तम्।
मन्त्रणभवनसमेतं समर्प्यते मन्त्रदेवेभ्यः ॥ २० ॥ मुखसन्धिः ॥

अथ=विचारभवनान्निर्गमानन्तरम्, आस्थानमण्डपमवाप्य तस्य मूर्धनि, स्थलविशेषस्य मध्ये, उत्तमसिचयविशेषेण निर्मितस्य वितानस्याऽधस्तात्—स्वस्यात्मनोऽधिरोहणेन=उपर्युपवेशनेन, सिंहद्वयोपलक्षितमासनं सिंहासनं, राज्यासनं. सनाथतां सस्वामिकताम्

तोभावितत्वेन वसुन्धरया बहुशो मनसि स्थापितमिवात्मानं प्रतिबिम्बस-हस्रेण वितन्वन् प्ररूढानेकदीधितिदन्तुरीकृतपद्मरागोदितानुबिम्बनत्वेन हरनयनकृपीटयोनिमध्यगत इव कुसुमबाणो, भयविशेषमुग्धदानवयूथभा-वनाबलेन सर्वतोजातस्वरूप इव प्रतिबिम्बसमुदायच्छलेन भूजठरान्तर्गतः, स्वतनयनरकासुरनिवर्हणसञ्जातसंरम्भया भूम्या स्वयमन्तर्गमित इव मीनकेतनो,ऽत्युन्नतभवभक्तिबलेन तन्मूर्तौ धरायामिव जातप्रवेशश्चरणयो-रतिमार्दवेन सुखसञ्चरणाय तत्प्रतिबिम्बमिषेण कमलसन्ततिमिव प्रकाश-

---

अनैषीत् प्रापयत् इत्यन्वय । किं कुर्वन् धरया भूम्या कर्त्र्या बहुशो बहुधा प्रतिबिम्बसहस्रेण तद्द्वारा आत्मानं स्वं मनसि स्थापितमिव धृतमिव वितन्वन् कुर्वन्, धराया मनसि स्थापने हेतुमाह–अनुरागस्य स्नेहस्य अतिशयेनाऽधि-क्येनोल्लसितया प्रकाशितया बुद्धिधारया जनितेन साक्षात्कार–प्रचयस्याऽनुभव-राशेः, बलेन साहाय्येन, सर्वतः परितः भावितत्वेन वासितत्वेन, कुट्टिमेषु प्रति-बिम्बितत्वादिति भावः । प्ररूढाः प्रोद्भूता उद्भूता या दीधितयो मरीचयस्ताभि-र्दन्तुरीकृता उन्नतदन्तवन्त इव कृताः ( किरणैः परितो व्याप्ता इत्यर्थः ) ये पद्मरागा रक्तमणयस्तेषूदितः प्रतिफलितोऽनुबिम्बः प्रतिबिम्बो यस्य तत्त्वेन, हरस्य शिवस्य नयनकृपीटयोनिर्नेत्राग्निः तस्य मध्ये गत इव स्थित इव (न तु दग्धः) कुसुमानि बाणा इव उद्दीपनविभावत्वात्,–यस्य स कुसुमबाणः कामः "हरनयना-ऽग्निमध्यस्थितः कामः कान्तिमत्पद्मरागप्रतिफलितप्रतिबिम्बस्योपमानभूतः, नान्य-स्मिन्सादृश्ये तात्पर्यम्;" पुनः–भयविशेषेण भयाधिक्येन मुग्धा विचित्ता ये दानवा असुराः तेषां यूथस्य भावना वासना 'विमर्शो भावना चैव वासना च निगद्यते,' तस्या बलेन सर्वतः परितो जातानि भूतानि स्वरूपाणि तादृश इव, प्रतिबिम्बस्य समूह-च्छलेन भुवः पृथिव्या जठरान्तर्गत उदरान्तर्गतः, दानववधायेति भावः । "यूयं प्रयात पातालम्"–इयन्तु कृपादृष्टिः, वीरस्तु रिपुशेषं न सहते । पुनः-स्वस्या भूम्या तनयः पुत्रो यो नरकासुरो भौमासुरस्तस्य निवर्हणेन नाशेन सञ्जातः संरम्भो रोषो यस्यास्तया भूम्या भुवा स्वयमात्मनाऽन्तर्गमित इवाऽन्तःप्रवेशित इव, मीनकेतनो मकरध्वजः='प्रद्युम्न–इत्यर्थः, 'प्रद्युम्नो मीनकेतन' इत्यमरः, कृते प्रतिकृतं कुर्यादिति न्यायेन स्वसुतहन्तुः कृष्णस्य सुतः स्वोदरे निवेशित–इवेत्यादि सर्वत्र क्रियोत्प्रेक्षा प्रतिबिम्बेषु । पुनश्च–अत्युन्नता अत्युत्कृष्टा या भवे शिवे भक्तिरनुरागः तस्या बलेन माहात्म्येन तस्य शिवास्याष्टमूर्तेर्मूर्तौ स्वरूपभूतायां धरायाम् इव पृथिव्यामिव जातः प्रवेशो यस्य सः, 'अत्युत्कृष्टा भक्तिस्तन्मयीकरोतीति' भावः,पुनश्च–चरणयोः पादयोरतिमार्दवेनाऽतिकोमलतया सुखेनाऽप्रयासेन सञ्चरणाय विचरणाय,

यता मणिमयकुट्टिमपथेन, क्वचिदतिप्रसृमरमरकतमयूखमालाभिरिव जात-
तिमिरसम्पर्कमन्यतः समुत्सृत्वरमाणिक्यकिरणसहस्रेण जातप्रकाशं, क्वाप्य-
तिस्थूलनीलोपलसहस्रेण सञ्जनितजाम्बवफलसंवलनं, क्वचिदरजस्काभि-
रनिमेषाभिर्दिव्यरूपाभिः, शालभञ्जिकाभिः, संपन्नसिद्धसुन्दरीसमवायं
वर्षविशेषैरिव दिव्यमानुषसञ्चारयोग्यैरलौकिकातिशयवद्भिरवान्तरमण्ड-
पविशेषैः सर्वतः परिक्षिप्तं, बहुविधरत्नघटिततया तज्जनकैरिव कृत्रिमद्रुमवि-
शेषैः साधितकल्पवृक्षान्वयं, सूर्य इव सुमेरुमास्थानमण्डपमवाप्य तस्य मूर्द्धनि
स्फटिकोपलमयाखिलावयवस्योभयतोऽभिमुखप्रसृत्त्वरकिरणसमूहसंवट्टनेनान-

---

तयोश्चरणयोः प्रतिबिम्बस्य मिषेण च्छलेन कमलानां सहस्रपत्राणां सन्ततिमिव परम्परामिव प्रकाशयताऽऽविर्भावयता मणिप्रचुरेण निबद्धभूमार्गेण, क्वचित्क-स्मिंश्चित्प्रदेशेऽतिप्रसृमराणि अतिप्रसृत्वराणि यानि मरकतानि गारुत्मतानि तेषां मालाभिः पङ्क्तिभिरिव जातस्तिमिरस्याऽन्धकारस्य संपर्कः स्पर्शो यस्मिन् तत् 'तं वाऽऽस्थानमण्डपम्' अन्यतः—अन्यस्मिन्प्रदेशे समुत्सृत्वराः प्रसरणशीला ये माणिक्यस्य किरणाः मयूखास्तेषां सहस्रेण जातः प्रकाशो यस्मिन् तत्—आस्थानमण्डपं, क्वाऽपि=कुत्राऽपि—अतिस्थूलानि=अतिपृथूनि यानि नीलोपलानि नीलमणयः, तेषां सहस्रेण संजनितमुत्पादितं जाम्बवफलानां संवलनं मिश्रणं संपर्को यस्मिन् तत् सिंहासनं, क्वचित्=कस्मिंश्चित्प्रदेशे अरजस्काभिर्धूलीरहितत्वेन स्वच्छाभिः, अनिमेषाभिः पक्ष्मव्यापाररहिताभिः, अतएव दिवि भवं दिव्यं रजोनिमेषस्वेदादिरहितं रूपं स्वरूपं यासान्ताभिः,शालभञ्जिकाभिः पुत्तलिकाभिः, सम्पन्नः सिद्धः सुरसुन्दरीणां सुराङ्गनानां समवायः समूहो यस्मिन् तत्, पुनः—वर्षविशेषैरिव इलावृतकिम्पुरुषादिभिरिव दिव्यानां देवगन्धर्वादीनां मानुषाणां मनुष्याणां च सञ्चारयोग्यैर्भ्रमणयोग्यैः, अतएव अलौकिको लोकातिक्रान्तो योऽतिशय उत्कर्षस्तद्विशिष्टैरवान्तरा व्याप्यभूता ये मण्डपा जनाश्रयास्तेषां भेदैः, सर्वतः परितः परिक्षिप्तं व्याप्तं, पुनरनेकप्रकारकमणिखचिततया, तज्जनकैरिव तदुत्पादकैरिव, अनेकप्रकारकमण्युत्पादकैरिवेत्यर्थः। कृतिनिर्वृतवृक्षभेदैः साधितः सिद्धीकृतः कल्प-वृक्षस्य सुरतरोः 'सङ्कल्पितसिद्धिदस्येत्यर्थः' अतएव विविधरत्नघटितत्वं संगच्छते, अन्वयः सम्बन्धो वंशो वा यस्य तत्—तं वा आस्थानस्य सभायाः मण्डपं जनाश्र-यम्, अवाप्य प्राप्य, क इव कमित्याकाङ्क्षायामाह—सूर्य इव। सुमेरुमिति। मध्याह्ने सूर्य्यः सुमेरुमधितिष्ठतीति पुराणप्रसिद्धिः, मिथुनकर्कटयोः सूर्यकिरणानां सुतरां सुमेरुप्रकाशकत्वात्, तस्य सभामण्डपस्य मूर्धनि=उपरितने भागे स्फटिक-

वकाशस्येव[1] विभाव्यमानस्य, मन्थनभयेनान्यत्रपलायितस्य दुग्धसिन्धुभागविशेषस्येव रावणभुजोल्लासनत्रासादपगतस्येव कैलासैकदेशस्य, राहुमुखकन्दरान्तर्गतिभीत्त्या पृथक्कृत्य स्थापितस्येव चन्द्रिकाप्रपञ्चस्य-स्थलविशेषस्य मध्ये चन्द्रलोकभ्रमेणोपगताभिरिव तारकाभिः, कन्दर्पबुद्ध्या तत्सेवनाय वसन्तेन प्रहिताभिः सिन्दुवारस्तवकपरम्पराभिरिव-मौक्तिकजालमञ्जरीभिः सञ्जनितोपान्तशोभस्य, चन्द्रकरतन्तुजालेनेव समवायिना समारब्धेनोत्तमसिचयविशेषेण निर्मितस्य ऐरावतदन्तचतुष्टय इव स्तम्भचतुष्टये विषक्तप्रान्तस्य वितानकस्याधस्तात् दानवभयाकुलतया तत्समारा-

मणिमयसमस्तभागस्य 'स्थलविशेषस्य'–इदं विशेष्यं पदम्, उभयतो मुखप्रसृत्वरा उभयतः प्रसारिणो ये किरणानां समूहाः सङ्घास्तेषां संघट्टनेन संघर्षेण अवकाशाऽभावस्येव विचार्य्यमाणस्य स्थलविशेषस्य, पुनः मन्थनस्याऽऽलोडनस्य भीत्या, अन्यत्र निर्भयस्थाने पलायितस्य विद्रुतस्य क्षीरसागरभागभेदस्येव, अमथिताऽवयवस्यवेत्यर्थः । पुनः पौलस्त्य-प्रवेष्टोत्क्षेपणसाध्वसात्–अपक्रम्य गतस्येव कैलासपर्वतैकभागस्य, पुनः–सैंहिकेयलपनदरीमध्यप्रवेशसाध्वसात्-पृथक्कृत्य,धृतस्येव ज्योत्स्नासमूहस्य,–स्थलविशेषस्य विशिष्टस्थलस्य मणिमयकुट्टिमस्येत्यर्थः मध्येऽन्तः,–मौक्तिकजालमञ्जरीभिःसञ्जनितोपान्तशोभस्य वितानस्याधस्तादित्यनेन सम्बन्ध, कथम्भूताभिस्ताभिः–पूर्वोक्तस्य स्थलविशेषस्य मध्ये चन्द्रलोकस्य सुधाकरलोकस्य भ्रमेण भ्रान्त्या, धवलत्वसाधर्म्यात्, समीपप्राप्ताभिरिव ताराभिः, तारकाणां चन्द्रपत्नीत्वात्, स्थलस्य स्फटिकमयत्वेन धवलत्वादुचितस्तासां चन्द्रलोकभ्रमः, समानधर्मावभासो हि भ्रमहेतुः । पुनः कथम्भूताभिः-कन्दर्पस्य कामस्य बुद्ध्या राजशेखरविषयिण्या–इत्यर्थः, तत्सेवनाय कन्दर्पसेवनाय, वसन्तेन कामसख्या सुरभिणा प्रहिताभिः प्रेषिताभिः–सिन्दुवारस्य निर्गुण्ड्याः स्तबकानां गुच्छानां परम्पराभिरिव श्रेणीभिरिव मौक्तिकजालानां वल्लरीभिः, सम्यक् जनिता प्रादुर्भूता उपान्तस्य=प्रान्तस्य शोभा कान्तिर्यस्य,—वितानस्येत्यनेनाऽन्वय, पुनः,—समवायिना समवायिकारणभूतेन तन्तुस्थानापन्नेन चन्द्रस्याऽऽह्लादकरस्य सुधांशोः कराःकिरणा एव तन्तवस्तेषां जालेन समूहेनेव सम्यगोतप्रोततया, आरब्धेन रचितेन उत्तमश्चासौ सिचयविशेषः सूक्ष्मपटभेदस्तेन निर्मितस्य कृतस्य, पुनः–ऐरावतस्य सुरगजस्य दन्तानां दशनानां चतुष्टये–इव चतुःसंख्याकेषु दन्तेष्विव, स्तम्भानां स्थूणानां चतुष्टये विशेषेण सक्तो बद्धः प्रकृष्टोऽन्तःप्रान्तो दशाभागो यस्य–तस्य वितानस्य उल्लोचस्य अधस्तादधःप्रदेशे स्थापितं, सिंहासनं सनाथ-

(१) अनवकाशमेवेति द्वि० पु० पाठः ।

धनार्थं समागतमिव सुमेरोरेकदेशं, मदनभ्रमेण स्वापराधतिरस्करणार्थ-मुज्झितदाहशक्तिमिव वह्निकूटं—तच्चरणसम्पर्काद्रागातिशयसमासादनार्थ-मिवागतेन पद्मरागमयेन पादपीठेन—परिष्कृतपरिसरं सिंहासनं गीर्वाण-सार्वभौम इव स्वाधिरोहणेन सनाथतामनैषीत् ॥ २१ ॥

तत्क्षण एव च तस्याऽऽस्थानमण्डपसमागमनसूचको मन्दमारुताघूर्णित-जलनिधिवीचिविक्षोभसोदरो दुन्दुभिध्वनिराविर्बभूव ॥ २२ ॥

---

तामनैषीत्, कथम्भूतम् दानवानामसुराणां तत्कर्तृकं यद्भयं साध्वसं तेन हेतु-भूतेन या व्याकुलता व्यग्रता तया, तस्य राज्ञः समाराधनार्थं सेवार्थं सम्यक्=पिण्डीभूय आगतमिवाऽऽयातमिव सुमेरोः=सुवर्णाऽऽचलस्य एकदेशमेकशकलम्, पुनः कीदृशम्-मदनस्य=मन्मथस्य भ्रमेण भ्रान्त्या राजविषयिण्या स्वस्य वह्नेरप-राधो हरकोपावसरे कामदाहः, तस्य तिरस्करणं क्षमापनं तदर्थम्—उज्झिता त्यक्ता दाहशक्तिर्भस्मीकरणसामर्थ्यं सन्तापो वा येन, तादृशमिव,—वह्नेरग्नेः—कूटं राशिरूपं, पद्मरागमयेन पादपीठेन, सोपानस्थानापन्नेन परिष्कृतः स्वच्छीकृतः परिसरः प्रान्तप्रदेशो यस्य तत्—सिंहासनम् स्वयं गीर्वाणसार्वभौम—इव स्वस्याऽधिरोहणेन हेतुना सनाथतां सश्रीकतामनैषीत् समनयत् । कीदृशेन पाद-पीठेन—तस्य राज्ञः चरणयोः पादयोः सम्पर्कात् संयोगात् कारणाद् यद् रागातिशयस्य लौहित्याधिक्यस्य समासादनं प्राप्तिः, तदर्थमिव, आगतेन=आयातेन, राजचरणयोः पद्मरागमणेरपि रागोऽधिकः प्रतीयते, येन पादपीठतां गतः पद्मरागमणिरित्यर्थः । अस्मिन् गद्ये—उत्प्रेक्षाऽलङ्कारः—"भवेत्सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना"—इति लक्षणम् । प्रकृतस्य सभामण्डपस्य स्थलविशेषस्य सिंहासनस्य च—सुमेरुदुग्धसिन्धु-भाग—वह्निकूटत्वादिभिरुत्प्रेक्षणाल्लक्षणसमन्वयः । 'सिन्धुवारेन्द्रसुरसौ निर्गुण्डीन्द्रा-णिकेत्यपि—"इत्यमरः ॥ २१ ॥

**तत्क्षण एवेति** । सिंहासनारोहणक्षण एव तस्य पूर्ववर्णितस्य आस्थानमण्डपस्य सभाभवनस्य समागमः संयोगः प्राप्तिर्नृपेश्वरस्य तस्य सूचकः बोधकः, दुन्दुभि-ध्वनिर्भेरीरवः, आविर्बभूव उदचरत् । कथं भूतः-मन्देन मन्दगतिना मारुतेन वातेन, आघूर्णितः ईषत्कम्पितः यो जलनिधिः समुद्रः, तस्य वीच्या तरङ्गस्य कर्तुः यः क्षोभः सञ्चालनं तस्य सोदरः सदृशः, ध्वनिराविर्बभूव । अत्राऽयं व्यवहारः-सिंहासनमण्डपो भिन्नः, सम्राट्—समागमार्थमागतानां मण्डलेश्वराणामुपवेशन-मण्डपो भिन्नः, आगमनमार्गावपि भिन्नौ । सिंहासनारूढ एव सम्राट् दर्शनार्थि-भिर्दृश्यते । सिंहासनमपि सनाथमेव दृश्यते ।

सिंहाऽऽसनारूढिमयं कुसुमं मन्दारमञ्जर्याः ।
अभ्युपगच्छतु कृपया, देवी सिंहासनारूढा ॥ २२ ॥

तच्छ्रवणसम्भूतसम्भ्रमाश्च युगपदुपेक्षितप्रथमप्रस्तुतवस्तुप्रसङ्गाः कुसुममयशिरःशेखरप्रचलनाभिघातोच्चलितैश्च मधुकरकुलैर्नभसि मण्डलबन्धेन शीघ्रोपसर्पणार्थमातपवारणाय वितानमिव वितन्वानैर्गुञ्जितमिषेणाविलम्बितमुपसरतेति प्रेर्यमाणा इव, मार्गस्यातिसम्बाधतया पुरस्ताद्गन्तुमसमर्थतया स्वस्वपुरःप्रस्थितराजालङ्काररत्नप्रतिफलनमिषेणेवाग्रतो जिगमिषन्तः, स्फटिकमणिकुट्टिमोदितप्रतिबिम्बकैतवेन पातालमार्गेणेव प्रथमं प्रयातुकामाः, स्वगमनप्रतिबन्धकभूपालनोदनार्थमिव तदाभरणमणिषु प्रतिच्छायाछलेन कृतकायनिकाया इव, स्वकीयालङ्करणरत्नप्रतिफलितत्वेनैव[1] पश्चात्कृताग्रिमराजकाः, प्रतिबन्धकनिराकरणेच्छयैव[2] परस्परभूषणसङ्घटितमाणिक्यमरीचिमञ्जरीभिरन्तर्हितपरस्पराः, अग्रतोगतराजनोदनोपयुक्ततयाऽगणितस्वनोदनव्यथाः, स्वशरीरस्यातिपर्याप्ताधिकदेशव्यापकत्वक्रोधादिवान्योन्यसंघ-

---

**तच्छ्रवणेति** । तस्य पूर्ववर्णितस्य दुन्दुभिध्वनेः श्रवणेन श्रवणेन्द्रियजन्येन साक्षात्कारेण सञ्जातादरास्तु—'सामन्तभूमिपालाः' जयशब्दसमुच्चारणपूर्वकं महीयसाऽऽदरेण प्रणेमुरिति गद्यार्थः । कथं भूताः—युगपदेकपदे उपेक्षितः=परित्यक्तः प्रथमप्रस्तुतः पूर्वप्रकृतो वस्तुप्रसंग—इतिवृत्तचर्चा यैस्ते तथाभूताः,—पुनः कथम्भूताः अविलम्बमुपसरत—इति—प्रेर्यमाणा—इव, कैः कथमित्याकाङ्क्षायामाह—**कुसुममयेति**—पुष्पप्रचुराः शिरोधृता ये शेखरा आपीडाः कुसुममालारचिताः किरीटास्तेषां प्रचलनेन योऽभिघात आहननं तेनोच्चलितैरुड्डीनैर्मधुकराणां भ्रमराणां कुलैः समूहैस्तु ( चकारो भिन्नक्रमस्त्वर्थः ) नभसि शिरस उपरि गगने, मण्डलस्य बिम्बस्य कदम्बकस्य बन्धेन रचनेन हेतुना त्वरितगमनार्थं घर्मनिवारणाय, उल्लोचमिव विस्तारयद्भिः, अव्यक्तनिनदच्छलेन त्वरितमुपगच्छत इत्येवं—प्रकारेण नोद्यमाना इव,—पुनः पथोऽतिसंकीर्णतया, पुरो यातुमशक्ततया, आत्मनोऽग्रतः प्रचलितनृपभूषणखचितमणि-प्रतिबिम्बनव्याजेनेव, **अग्रतो** गन्तुमिच्छन्तः—पुनः स्फटिकमणिनिबद्धभूमिप्रतिफलित-प्रतिबिम्बदम्भेन, भूविवरमार्गेणेव, पूर्वमेव यियासवः—पुनः—आत्मयान (चलन) रोधक—भूपप्रेरणार्थमिव तद्भूषण**मणिषु** प्रतिबिम्बकपटेन कृतशरीरव्यूहा इव,—पुनश्च—स्वीयाऽऽभरणमणिप्रतिबिम्बतत्वेनैव पृष्ठतः कृताऽग्रेसरनरपाः,—पुनस्तु—रोधकनिवारणाऽभिलाषयेव, इतरेतराऽलङ्कृतखचितमाणिक्य=लोहितमणिकिरणवल्लरीभिस्तिरोहितेतरेतराः—पुनरपि—पुरोगतनृपनोदनोचिततयाऽमतस्वप्रेरणपीडाः—भूयोऽपि—**स्वशरीरस्य**—अत्यन्तविस्तृत-

---

( १ ) नेव इति द्वि० पु० ( २ ) येव इति द्वि० पु०

ट्टनिपातितभूषणोत्कराः, पश्चात्तनराजप्रयुक्तनोदनरक्षार्थमिव तदलङ्कारप्रतिफलनमायया कृतान्तरालाः, परममहत्त्वस्पर्द्धयेवाणुमात्रमप्याकाशान्तरमरक्षन्तः सामन्तभूमिपालाः,-स्वस्थानाधिरूढया तदाज्ञयेव कृतनोदनां मौलिमालां शिथिलतां प्रापयन्तस्तद्गरिमविशेषाक्रान्तानीवोत्तमाङ्गानि नामयन्तो, हृदयपरिष्कारकर्मणि प्रतिबिम्बिततादृशशिरस्कत्वेन मानसमपि स्वापकर्षाभ्युपगममुद्भावयन्तो जयशब्दसमुच्चारणपूर्वकमादरेण महीयसा प्रणेमुः ॥ २३ ॥

ताँश्च सेवकभावापन्नानपि महानुभावतया राजोचितेनाचारेण संभाव्य

---

त्वेनाऽधिकाऽवकाशव्यापकताक्रोधादिवाऽन्योन्यसंघर्षणेन निःशेषेण पातितभूषणसमूहाः, पुनश्च–पृष्ठत आगच्छन्नृपकृतनोदनपरित्राणार्थमिव तेषामलङ्कारप्रतिबिम्बनकपटेन कृताऽवकाशाः,–भूयश्च—गगनवृत्तिनः **परममहत्त्वस्य** स्पर्द्धया—इव **परमाणुमात्रमपि** किञ्चिदपि–आकाशान्तरं गगनान्तरमधारयन्तः, (न शेषयन्तः) **सामन्तभूमिपालाः** विशेष्यभूता मण्डलेश्वराः शिरोधार्य्यत्वादाज्ञायाः स्थानं शिरस्तस्मिन्नारूढया तस्य राजशेखरस्याऽऽज्ञयेव निदेशेनेव, कृतप्रेरणां मौलिमालां शिरस्रजं शिथिलतां शैथिल्यं नयन्तः–पुनः किङ्कुर्वन्तः–तस्य राज्ञो गौरवेण विशेषं कृताक्रमणानीव शिरांसि प्रह्वीकुर्वन्तः,–मुहुश्च–हृदयस्य स्वान्तस्य परिष्करणं परिष्कारः ("संपरिभ्यां करोतौ भूषणे"–इति सुट् षत्वम् ) प्रसाधनक्रियायां प्रतिसङ्क्रान्तानां तादृशानां नतानां शिरसो मस्तकानां भावस्तत्त्वं तेन, मानसं चित्तमपि स्वस्य मनसो योऽपकर्षः प्रणम्यापेक्षया न्यूनत्वं तस्याऽभ्युपगमं स्वीकारमुच्चैर्भावयन्तः कुर्वन्तः जयशब्दस्य–विजयस्व देव–इत्यादे राजदर्शनसमयोचितस्य सम्यगद्गदादिस्वररहितं यदुच्चारणं कथनं तत्पूर्वकं महीयसाऽतिमहताऽऽदरेणाऽऽदृत्या प्रणेमुः प्रपतनपूर्वकं नमश्चक्रुः । "स्वनिष्ठापकृष्टत्वनिरूपितोत्कृष्टत्वविषयकबोधाऽनुकूलो व्यापारः" प्रणामः । तथा च–सामान्तभूमिपालनिष्ठं यदपकृष्टत्वं तन्निरूपितं यदुत्कृष्टत्वं–राजशेखरनिष्ठमुत्कृष्टत्वं तद्विषयको यो बोधो 'राजशेखर अस्मभ्य उत्कृष्टः'–इत्याकारको बोधस्तदनुकूलो यो व्यापारः स्वशिरोनमनादिस्तादृशो यो व्यापारः सामन्तभूपालसमवेतव्यापारः स एव प्रणामपदार्थः; एवं सर्वत्र समन्वयः कार्यः; अत्र च गद्ये विशेषणेषु तदनुकूलान्येव पदानि, अलङ्कारस्तूत्प्रेक्षा ॥ २३ ॥

**ताँश्चेति** । तांश्च संभाव्य तदनुरूपाभिः कथाभिर्यावदासाञ्चक्रे–तावदेव—विहायसि त्वरितमपसरन्तं कञ्चन रजनीचरमपश्यदिति संबन्धः । यावत्तावच्छब्दौ गद्यद्वयस्यैकवाक्यताकारकौ, यत्तदोर्नित्यसम्बन्धात् ।

तत्तदनुरूपाभिः कथाभिर्यावदासाञ्चक्रे, तावदेव विहायसि दृष्टिपातप्रकाशितसौदामनीसमुदायं जलधरखण्डमिवा,ऽकाण्डसमुन्नद्धं श्यामिकापिहितमिहिरमयूखसञ्चारं, कालायसशैलमिव स्वेच्छया सञ्चरन्तमाकाशमिव मूर्ततापन्नं, समुदायमिव जगद्वर्त्तिनीलावयवानां, भङ्गुरभ्रुकुटिभीषणभालाभोगं, जन्मभूमिमिव भयानां, कञ्चिदतित्वरितमपसरन्तं रजनीचरमपश्यत् ॥२४॥

करे च तस्य-प्रसारिणा प्रभाप्रवाहेण घुसृणरसविसरेणेव लिम्पन्तीं दिग्वि-

---

व्याप्यत्वात्सेवकभावापन्नत्वं सामन्तानां, न तु पादसंवाहनादिभिः । महानुभावाः सर्वप्रजाशिक्षकाः 'महान्तस्ते समचित्ताः प्रशान्ताः'—इत्युक्तेः, 'यद्यदाऽऽचरति श्रेष्ठस्तत्तदेवेतरो जनः'—इति न्यायमनुसृत्य राजोचितेन=अभ्युत्थानादिना व्यवहारेण तदनुरूपाभिः=स्वराष्ट्रवृत्तान्तपृच्छादिभिः, दृष्टिपातेन नेत्रोद्घाटनेन हेतुना प्रकाशितः—उद्योतितः सौदामन्या विद्युतः समुदायो येन तथाभूतं—जलधरस्य मेघस्य खण्डं शकलमिव, नीलवर्णमित्यर्थः सर्वासूत्प्रेक्षासु, पुनरुत्प्रेक्षते-अकाण्डे ऽसमये समुन्नद्धं समुद्यतं, श्यामिकया कृष्णतया पिहित आच्छादितो मिहिरमयूखानां सूर्यकिरणानां संचारः प्रचारो येन तं, पुनश्च—स्वेच्छया स्वाऽभिलापेण संचरन्तं भ्रमन्तं कालायसस्य श्यामलोहस्य शैलमिव शिलोच्चयमिव—मूर्त्ततां पिण्डीभावमापन्नं प्राप्तमाकाशमिव व्योमेव, 'मालिन्यं व्योम्नि पापे यशसि धवलते'ति समयादाकाशे मालिन्यं काव्यसंसारे । मूर्त्तत्वञ्च भूमिजलाऽनलसमीरमनस्सु पञ्चसु—'क्षितिर्जलन्तथा तेजो पवनो मन एव च । परापरत्वमूर्तत्वक्रियावेगाश्रया अमी'—इति नियमादाकाशे न मूर्तत्वम्, अत—उत्प्रेक्षितं मूर्तत्वापन्नमिति । पुनश्च—जगद्वर्तिनां सर्वेषां नीलरूपाऽवयवानां समूहमिव, तत्राऽपि-भङ्गुरा कुटिला या भ्रुकुटिर्भ्रूभङ्गस्तया भीषणो भयङ्करो भालस्य ललाटस्याऽऽभोगः विशालता यस्य, किमुच्यते—भयानां भीतीनां जन्मस्थानमिव, तथाऽपि अतिशीघ्रं धावन्तं निशाचरमलोकत । 'भ्रुकुटिर्भ्रूकुटिः स्त्रियाम्' ॥२४॥

करे च तस्य=रजनीचरस्य हस्ते तु—कामपि कन्यकां व्यलोकयदित्यन्वयः। कन्यकामलङ्करोति विशिष्टोत्प्रेक्षणैः प्रसारिणेत्यादिभिः । प्रसारिणा प्रसरणशीलेन,प्रभाप्रवाहेण कान्तिभरेण,घुसृणस्य कुङ्कुमस्य रसविसरेणेव रसप्रसरेणेव दिशां ककुभां, विभागान् स्वोड्डयनमार्गप्रदेशान् लिम्पन्तीम् उपदेहयन्तीं, 'विसरः प्रसरे व्रजे' इति मेदिनी । 'वरं तु घुसृणे किञ्चिदिष्टे' इति हैमः । अथ कुङ्कुमं—'काश्मीरजन्माऽग्निशिखं' 'वरं वाह्लीकपीतनम्'—इत्यमर-इति कोषद्वयैकवाक्यतया

---

( १ ) गोरोचनापङ्केनेव इति द्वि० पु० पा०

भागान्, अमरभुवनेऽपि दुर्लभेनाकृतिविशेषेण तडिल्लतामिव विभाव्यमानां, गगनगमनवेगशिथिलकेशबन्धां, ग्रैवेयकस्यूतैकहीरकप्ररोहसूचीशिखानिखाताञ्चलतया लम्बमानोत्तरीयसिचयां, सिद्धमार्गावगाहनजन्मना साध्वसेन दत्तहस्ततया बहुगुणीभवता तदपहरणभुवा भयेन निमीलितनयनां, श्रमप्रतिपन्नान् स्वेदबिन्दूनिव हारमौक्तिकनिवहान्यथाक्रमं विसृजन्तीं, श्वाससौरभानुसारिणीभिः सखीभिरिव गृहीतदेहान्तराभिर्मधुकरावलिभिरनुबध्यमानां, हृदयमिव महोज्ज्वलं तादृशगतिभग्नं नायकमणिं त्यजन्तीं, सरसतरान्विभ्रमविशेषानिव नयनोदबिन्दुनिवहान् मुञ्चन्तीं, भ्रमरहितेन विज्ञानविशेषेणेव श्रवणावतंसकमलेन हीयमानां, सम्बन्धसङ्क्रान्तदुःखैः सुहृद्भिरिव

---

घुसृणपर्य्यायः कुङ्कुमशब्दः। पुनश्च—देवलोकेऽपि दुष्प्रापेणाऽऽकृतिविशेषेणाऽऽकारभेदेन=अद्भुताकारेणेत्यर्थः, तडिल्लतामिव=विद्युल्लतामिव, विशेषेण भाव्यमानां ज्ञायमानां, (भवतेर्ण्यन्तात्कर्मणि शानच्) पुनस्तु नभःसरणजव-स्रस्तधम्मिल्लां, पुनरपि—ग्रीवायां भवं ग्रैवेयकं कण्ठभूषणं, सीव्यते सन्तन्यते—इति स्यूतम्=प्रोतम्, एकश्चासौ हीरकस्य प्ररोहोऽङ्कुरस्तद्रूपायाः सूच्याः सूक्ष्माग्रे निखाताञ्चलतया निहितप्रान्ततया लम्बमानोऽधःस्रस्त उत्तरीयसिचय उत्तरीयपटो यस्यास्तां, पुनः सिद्धानां कायाकाशसंबन्धसंयमिनां योगिनां मार्ग आकाशस्तस्याऽवगाहनेनाऽऽलोडनेन जन्म उत्पत्तिर्यस्य तेन साध्वसेन भयेन कर्त्रा दत्तो हस्तकरो यस्मै तस्य भावस्तत्ता तया हेतोर्बहुगुणीभवता प्रगुणीभवता तस्य राक्षसस्य कर्तुरपहरणं नयनमन्यत्र प्रापणं, तेन भवतीति तेन भयेन त्रासेन, निमीलिते मुकुलिते नयने यया ताम्, पुनः श्रमेण खेदेन प्रतिपन्नान् जातान् स्वेदस्य बिन्दून् लवान्—इव हारसंबद्धमुक्तासमूहान् यथाक्रमम् क्रमपरिपाटीमनतिक्रम्य विसृजन्तीं मुञ्चन्तीम्, पुनः—श्वासस्य मुखमारुतस्य सौरभं सौगन्ध्यं तदनुसरन्तीति ताभिः सखीभिरिवाऽऽलीभिरिव गृहीतमवलम्बितं देहान्तरमन्यदेहो याभिस्ताभिर्मधुकरावलीभिः षट्पदपङ्क्तिभिरनुबध्यमानामनुगम्यमानां, पुनश्च हृदयघृतत्वेन हेतुना हृदयमिव स्वान्तमिव महोज्ज्वलं स्वच्छं तादृश्या पूर्वोक्तया गगनाऽवगाहनरूपया गत्या गमनेन भग्नं त्रुटितं नायकमणिं मध्यमणिं त्यजन्तीं च्यावयन्तीम्, पुनस्तु—अतिशयेन सरसा सरसतरा अतिरसवन्तस्तान् विभ्रमाणां सत्त्वजालङ्काराणां विशेषानिव भाव-हाव-हेलादीन्-इव—नयनयोर्नेत्रयोः संबन्धिनामुदबिन्दूनां जलकणानां निवहान् समूहान् मुञ्चन्तीं त्यजन्तीं—रुदन्तीमित्यर्थः, पुनश्च भ्रमर-हितेन भ्रम-रहितेन च, विज्ञानभेदेनेव श्रोत्रभूषणभूतेन कमलेन सहस्रपत्रेण हीयमानां त्यज्यमानां, पुनः—संबन्धेन=

वृत्तिविमुखैरिन्द्रियैरनुगम्यमानाम्, अपर्यन्ताभिरन्तर्बाधधाराभिरिव निःश्वासपरम्पराभिरायास्यमानां, दुरितैकनिबन्धनेन भयहेतुना राक्षसान्तरेणेव कम्पेन गृहीताम्, आसादितावसरान्तरेण निधनाभिलाषेणेव वैक्लव्येन वशीकृतमानसां, रजनिचरदेहप्रभासमूहेनेव मोहान्धकारेण तिरोधीयमानां, कृतकलकलैर्यामिकैरिव वलयैरनुस्रियमाणां, क्रियाविरोधिना परममहतेव स्तम्भेन सम्भाव्यमानां, चन्द्रसुन्दरेण वदनेन दिवसेऽपि सितपक्षान्तिमप्रदोषसौभाग्यमासञ्जयन्तीं, केशकलापेन मेचकरुचेश्चामरस्य पामरभावमुद्भावयन्तीं, भालतलेन शशाङ्कशकलं कलङ्ककलुषमावेदयन्तीं, भ्रूलताभ्यां केलतीकामुककार्मुकमकर्मण्यभावमानयन्तीं, विलोचनाभ्यां नीलोत्पलपलाशमालामपलपन्तीं, श्रवणाभ्यां मदनस्य पाशवत्तामिव सम्पादयन्तीं,

---

एकावयवाऽऽरब्धत्वादिना स्वस्वामिभावादिना च मनोबन्धकेन स्नेहेन सम्यक् क्रान्तमाविष्टं दुःखं येषान्ते तैः सुहृद्भिरिव, वृत्तिविमुखैराजीविकावितृष्णैः श्रवणदर्शनादिव्यापाररहितैश्चेन्द्रियैः श्रोत्र–चक्षुरादिभिरनुगम्यमानां कृतानुसरणां, पुनः–नास्ति पर्य्यन्तोऽवसानं यासां ताभिः, अन्तर्मध्ये बाधनं बाधः पीडा तस्य धाराभिरिव प्रबन्धैरिव निःश्वासानां बाष्पानां परम्पराभिः सन्ततिभिरायास्यमानां पीड्यमानां, पुनः–दुरितमेव–एकं निबन्धनं मूलं यस्मिन् तेन, भयस्य हेतुना कारणेन, अन्यो राक्षसो राक्षसान्तरं तेनेव कम्पेन वेपथुना–गृहीतामुपात्तां कम्पमानामित्यर्थः; पुनः–आसादितंप्राप्तमवसरान्तरं समयान्तरं येन–निधनाऽभिलाषेणेव मरणाऽभिलाषेणेव वैक्लव्येन विकलतया वशीकृतं वैकल्यव्याप्तं मानसं यस्यास्तां, कृतकलकलैः कृतकोलाहलैर्यामिकैः=घण्टावादकैरिव–कटकैः अनुकृताऽनुसरणाम्, पुनः क्रियायाश्चेष्टाया विरोधिनाऽभाववता ( व्यापकत्वेन चेष्टाराहित्यात् ) परम–महताऽऽकाशाऽदिनेव स्तम्भेन चेष्टाप्रतीघातेन प्रथमसात्त्विकभावेन सम्भाव्यमानामाद्रियमाणाम्, 'स्तम्भश्चेष्टा प्रतीघात'––इति साहित्यदर्पणः, स चाऽत्र भयजनितः। चन्द्रेत्यादि स्पष्टम्। सितपक्षान्तिमः पौर्णमास्यन्तिमदण्डसहितो यः प्रदोषो रजनीमुखं, तस्य सौभाग्यं सुभगतां रमणीयतामित्यर्थः, आसञ्जयन्तीं प्रसारयन्तीम्, पूर्णषोडशकलचन्द्रसौन्दर्य्यलाभायान्तिमग्रहणम्; पुनः केशपाशेन कृष्णकान्तेन चामरस्य बालव्यजनस्य पामरभावं निकृष्टतां प्रकाशयन्तीम्, पुनः ललाटतलेन शशाङ्कस्य सुधांशोः शकलं खण्डं, कलङ्केन लाञ्छनेन कलुषमनच्छमावेदयन्तीं ज्ञपयन्तीं, पुनः भ्रूलताभ्यां केलतीकामुकस्य कामदेवस्य कार्मुकं चापमकर्मण्यभावमकिञ्चित्करत्वं नयन्तीं प्रापयन्तीम्, पुनः–विलोचनाभ्यां नेत्राभ्यां नील-

कपोलफलकेन दर्पणदर्पमपह्नुवानां, नासिकया तिलसुमनसां वैमनस्यं प्रसञ्जयन्तीं, दशनभासा दाडिमबीजानामबीजामिव कान्तिमाचक्षाणां, बिम्बाधरप्रभया पद्मरागाणां छद्मरागतामभिव्यञ्जयन्तीं, कण्ठतलेन कम्बूनामम्बुराशिप्रवेशमुपदिशन्तीं, बाहुवीरुद्भ्यां मृणालीमपि तृणालीकमानतां नयन्तीं, कुचाभ्यां कलधौतकलशयोः सकलमपि सुषमाकलापं शकलभावं प्रापयन्तीं, त्रिवलीललितेनावलग्नभागेन भागीरथीतरङ्गभङ्गुरं गगनमवगणयन्तीं, नितम्बबिम्बेन मणिशिलारामणीयकमणीयस्तया संयोजयन्तीं, चरणाभ्याम् अतिलोहितनलिनं तिरोहिताहङ्कारमाचरन्तीं, नखमयूखलेखाभिः शशाङ्कखण्डखण्डनलेखामिव लिखन्तीं, श्रियमिव दुर्वाससो सूक्तेन शापेनाकृष्यमाणां, सुधादीधितेरधिदेवतामिव तिमिरसमुदायेन गृह्यमाणां,

---

कमलदलमालां निह्नुवानाम्, पुनः श्रवणाभ्यां श्रुतिभ्यां मन्मथस्य पाशपरत्वमिव कुर्वतीम्, पुनः कपोलो गण्डस्थलमेव फलकः पटलस्तेन दर्पणस्याऽऽदर्शस्य दर्पमवलेपमपह्नुवानामपलम्पन्तीम्, 'द्वयकपोलाऽभिप्रायेणैकवचनम्', पुनः—नासिकया नासया तिलसुमनसां तिलपुष्पाणां सामुद्रिकशास्त्रप्रसिद्धानां नासिकोपमानभूतानां, विमनसां भावो वैमनस्यं विमनस्कतां प्रकर्षेण सञ्जयन्तीं प्रतिपादयन्तीम्, दशनभासा दन्तकान्त्या दाडिमबीजानां करकबीजानां कान्तिं शोभामबीजामिव निर्मूलामिवाऽऽचक्षाणां निगदन्तीम्, पुनः बिम्बसदृशाधरकान्त्या पद्मरागाणां रक्तमणीनां छद्मरागतां व्याजरागवत्तामभिव्यञ्जयन्तीं प्रकटयन्तीम्, पुनः कण्ठतलेन ग्रीवाभागेन, कम्बूनां शङ्खानामम्बुराशिप्रवेशं समुद्रब्रुडनमुपदिशन्तीं शिक्षयन्तीम्, पुनः बाहुवीरुद्भ्यां बाहुलताभ्यां मृणालीमपि बिसलतामप्यतिकोमलामित्यर्थः, तृणाऽलीकमानतां तृणवत्तुच्छमानतां नयन्तीं प्रापयन्तीम्, पुनः कुचाभ्यां स्तनाभ्यां कलधौतकलशयोः सुवर्णकलशयोः सकलमपि सम्पूर्णमपि सुषमाकलापं परमशोभासमुदायं शकलभावं खण्डतां प्रापयन्तीं नयन्तीम्, पुनः—त्रिवलीललितेन त्रिवलीरमणीयेनाऽवलग्नभागेन भागीरथ्या मन्दाकिन्या "मन्दाकिनीति दिवि" इत्युक्तेः, तरङ्गैः भङ्गैः भङ्गुरं विभज्यमानं गगनं नभो ऽवगणयन्तीं तिरस्कुर्वतीं सौक्ष्म्यादिति भावः। एवमुत्तरत्र विशेषणानि योजनीयानि। 'पश्चान्नितम्बः स्त्रीकट्याः,' रमणीयस्य भावो रामणीयकम्, अतिशयेनाऽणु—अणीयस्तस्य भावस्तयाऽणीयस्तया तनुतया, 'वा पुंसि पद्मं नलिनम्' तिरोहितोऽपह्नुतोऽहङ्कारो गर्वो यस्य तत्, नखकिरणानां राजीभिः चन्द्रखण्डस्य खण्डनार्थलेख्यान् इव, 'लेखो

---

(१) आवहन्तीमिति पा० द्वि० पु०.

विदेहराजदुहितरमिव दशाननेनापह्रियमाणां, भानुमतीमिव निकुम्भेन नीयमानां, चन्द्रकलामिव स्वर्भानुनाऽभिभूयमानां, पारिजातस्रजमिव रावणकरेण क्लिश्यमानां, देवसेनामिव केशिनाऽपवाह्यमानां, पाञ्चालीमिव जटासुरेण कृष्यमाणां, वेदत्रयीमिव मधुना विधूयमानामनन्यसामान्यकामनीयकाङ्क्षामपि कन्यकां व्यलोकयत् ॥२५॥

अथाऽऽपन्नवत्सलतया वीररसोद्रेकेण च तादृशव्यतिकरानौचित्यज्ञानेन च तद्रूपनिभालनोद्भवेनाद्भुतेन च त्वरिततरमादाय, शरासनं सन्धाय चाजिह्मगममोघं त्रिपुरवधोद्यतो भगवान्मृगाङ्कमौलिरिव संस्थानविशेषशालिना शरीरेण स्थित्वा, शिक्षावैलक्षण्येन रक्षन्नेव कन्यकां दाशरथिरिव दशास्यं, लक्ष्मण इव मेघनादं, नील इव प्रहस्तं, हनुमानिवाक्षं, शत्रुघ्न इव लवणं, कर्ण इव घटोत्कचं, भीम इव बकं, तं राक्षसापसदमवसानमनयत् ॥२६॥

---

लेख्ये सुरे, 'लेखा—लिपिराजिकयोर्मता' इति भानुः । 'लेखा अदितिनन्दनाः' 'श्रेणी लेखास्तु राजयः'—इत्यमरः । **सुधादीतिः** सुधांशुः, **अधिदेवता**=अधिष्ठातृदेवता, **विदेहराजदुहिता**=सीता, **निकुम्भः**=प्रमथो ऽसुरश्च, खण्डग्रासाऽभिप्रायेण **कला**शब्दप्रयोगः । 'तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः' । **केशी** दानवः । **पाञ्चाली**=द्रौपदी, **मधुरा**दिरसुरः । **कामपि**=अज्ञातनामगोत्राम् अनुकम्पितुं योग्या कन्या कन्यका तां, **व्यलोकयत्**=विस्मयेनाऽपश्यत् । उत्प्रेक्षा-रूपक-व्यतिरेकाणां संकरः ।

अद्भुतदर्शनमेतत्कुसुमं मन्दारमञ्जर्याः ।
प्रकरणसंबद्धतया समर्प्यते ब्रह्मचारिण्यै ॥२५॥

**अथ कन्यकादर्शनानन्तरम् आपन्नवत्सलतया त्वरिततरं शरासनमादाय, कन्यकां रक्षन्नेव, तं राक्षसापसदमवसानमनयत्—इति योजना ।** तादृशस्य कन्यकाहरणरूपस्य व्यतिकरस्य घटनाया, निभालनोद्भवेन दर्शनजन्येन, अद्भुतेन विस्मयेन, 'विस्मयोऽद्भुतमाश्चर्य'मित्यमरः, अमोघं सफलं, अजिह्मगं बाणम्—आदाय गृहीत्वा, त्रिपुरासुरवधप्रवृत्तः चन्द्रशेखर इव, संस्थानस्य विशेषो भेदः, आलीढ—इत्यर्थः, "स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम् । त्रिवितस्त्यन्तरौ पादौ तोरणं मण्डलाऽऽकृति ॥ अन्वर्थं स्यात्समपदमालीढन्तु ततोऽग्रतः । दक्षिणे वाममाकुञ्च्य, प्रत्यालीढं विपर्ययः" इति यादवः, शिक्षाया विद्याग्रहणस्य वैलक्षण्यं विलक्षणता लक्ष्यवेधनदितररक्षणरूपा । **कर्णो** राधेयः, **घटोत्कचो** हिडम्बायां भीमसेनाज्जातः । **बको** बकासुरो भागवतप्रसिद्धाद्भिन्नः । तं कन्यकाहर्तारं, **राक्षसाऽधमम्** अवसानं नाशम् अनयत्=प्रापयत् ॥२६॥

अथ तयोर्मध्ये कन्यका तत्कालोपगृहीतभूमिकान्तरेव शैलूषी, कुन्तलकलापं,जटारूपेण, चीनांशुकं कृष्णाजिनात्मना, हारवीरुधं यज्ञसूत्रस्वरूपेण, अवयवविशेषपुष्टिं तानव-तादात्म्येन, लावण्यविशेषं ब्रह्मवर्चसाभेदेन परिणतं बिभ्राणो मुनिकुमारः समपद्यत । तञ्चाम्बरतलादवतीर्य स्वाभिमुखमायान्तमवलोक्य विस्मयस्तिमितमानसो राजा दूरादेव प्रत्युत्थाय मुनिजनोचितयाप्रणामादिकया प्रतिपत्त्या विनयपूर्वकं प्रतिजग्राह । स तु दशनचन्द्रिकासमुदयेन तनयानुदयतिमिरं निर्मूलयन्निव महीभुजो मानसात्सिञ्चन्निव सुधामयेन मधुरतरेण वचसा विहितानामयानुयोगो विस्मयविशेषविज्ञाततद्वृत्ति-स्ववृत्तजिज्ञासो राजानमवादीत् ॥ २७ ॥

---

अथ (राक्षसावसानानन्तरं) तयोर्निशाचर-कन्यकयोर्मध्ये कन्यका मुनिकुमारः समपद्यत (समभूत्) इति समन्वयः। कन्यकायाः कुमारत्वपरिणामे—उपमानं ब्रूते, तत्कालं तत्क्षणमुपगृहीता स्वीकृता अन्या भूमिका अन्यनटवेषान्तरं यया सेव शैलूषी नटी, कुन्तलकलापं चिकुरनिकुरम्बं जटारूपेण सटास्वरूपेण परिणतमित्यनेनाऽन्वयस्तृतीयान्तानाम् । चीनांशुकं सूक्ष्मदुकूलं कृष्णाऽजिनात्मना कृष्णसारचर्मरूपेण—,हारवीरुधं मुक्तालतां यज्ञोपवीतरूपेण—, लावण्यविशेषं सर्वाङ्गसौन्दर्य्यजन्यं कान्तिविशेषं ब्रह्मणो तत्त्वस्य शरीरसारस्य वर्चस्तेजो ब्रह्मवर्चसं 'समासान्तोऽच्प्रत्यय'स्तदभिन्नतया परिणतं, बिभ्राणो धारयन्, यथा शैलूषी कुमारिकावेषपरिवृत्त्या मुनिकुमारवेषग्रहणेन सद्यः परिणामं दर्शयति तथा कन्यका मुनिकुमारत्वपरिणतिं प्रतिपेदे—इतिहेतोरुपमानुप्राणितः परिणामः, प्रकृते संभाषणादावुपयुक्तः कुमारः । तञ्च कुमारमम्बरतलादाकाशादवतीर्य्याऽवरुह्य आश्चर्य्यनिश्चलचित्तो नृपो दूरादेव प्रत्युत्थायोपस्थानं कृत्वा ऋषिजनयोग्यया प्रणामार्घ्यमधुपर्कप्रभृत्या प्रतिपत्त्या समादृत्य सत्कृत्य नम्रतापूर्वकं प्रतिजग्राह पादोपसंग्रहणं चक्रे, स तु कुमारस्तु दन्तकान्त्याः समूहेन नृपस्य मानसात् पुत्रस्याऽनुत्पत्तिरूपमन्धकारं निर्मूलं कुर्वन्निव, पीयूषमयेनातिमधुरेण भाषणेन सिञ्चन्निव मानसमेव विभक्तिविपरिणामः, कृताऽनामयप्रश्नः, विस्मयेनाऽऽश्चर्य्यवत्ताविशेषेण विलक्षणाश्चर्यवत्तयेत्यर्थः, विज्ञाता तद्वृत्तिर्नृपवृत्तिः स्वस्य मुनिकुमारस्य वृत्तजिज्ञासा वृत्तान्तजिज्ञासा येन तादृशः सन् राजानमवादीत् । "आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च । नेत्रवक्त्रविकारेण लक्ष्यतेऽन्तर्गतं मनः"—इति मनुः, 'अनामयं स्यादारोग्यम्' इत्यमरः । 'ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयमि'त्यादि मनुः। ब्राह्मणं कुशलशब्देनैव, क्षत्रियमनामयशब्देनैव, वैश्यं

देव ! श्रूयतामयं वृत्तान्तः—"अस्ति कैलासस्य कुक्षिदेशे कुत्रचित्कलानिधिकलालङ्कारस्य क्रीडाकाननं, यत् किल कल्पतरुकदम्बमकरन्दसीकरनिकरव्यतिकरकलितकौशलमधुकरकुलकोलाहलाकुलं शरवणमिति गायन्ति पुराणविदः, यत्र चात्रत्यः कोपि पुरुषजातीयः प्रविशति स स्त्रीत्वमविकल्पितमाकलयिष्यतीति भगवत्याः सर्वमङ्गलाया वचसा सुद्युम्नस्य राजर्षेरिलाभावः संबभूव । तस्यामेव चाऽवस्थायां बुधसमायोगादुर्वशीनयनव्यापारविश्रामास्पदं पुरूरवाः समुत्पेदे, सोऽहं बिन्दुसरसि तपस्यतो महर्षेर्गृत्समदस्य सविधे गृहीतब्रह्मचर्यस्तपोनिधिसंज्ञो बहून् वत्सरगणानवात्सम् । एकदा तु समिदाहरणाय प्रस्थितो दूरतरं कुतूहलाऽऽक्षिप्तचित्ततया भ्रमँस्तद्वनं प्रविशन्नेव स्त्रीभूतमात्मानमद्राक्षम्" ॥ २८ ॥

---

क्षेमशब्देनैव, शूद्रमारोग्यशब्देनैव कुशलं पृच्छेदिति शब्द–नियमं करोति, "नियमाऽदृष्टं परत्र, लोके व्यवहारभेदश्चेह, फलं नियमविधेः" । 'प्रश्नोऽनुयोगः पृच्छा चे'त्यमरः ॥ २७ ॥

मुनिकुमारः कथामुपक्रमते–**देव**—इत्यादिना । देव ! राजन्, भवता इति शेषः, कर्तरि तृतीयाऽनुक्तत्वात्, वृत्तान्तः कर्म तत्र प्रथमा उक्तत्वात्, श्रूयतामिति कर्मणि लोट्, तथा च "**राजन् भवताऽयं प्रयोच्यमानो वृत्तान्तः श्रूयतामिति**" वाक्यार्थः । 'वार्ता प्रवृत्तिर्वृत्तान्तः'—इत्यमरः । कैलासस्य पर्वतस्य कुक्षिदेशे काननमस्ति, यत्काननं पुराणविदः शरवणमिति गायन्ति, तद्विशिनष्टि—**कलानिधीत्यादि** । चन्द्रशेखरस्येत्यर्थः, **कदम्बः** समूहः, 'निकुरम्बं कदम्बकम्,' 'मकरन्दः पुष्परसः,' 'सीकरोऽम्बुकणाः स्मृताः,' 'स्तोमौघनिकरव्रात'—इति सर्वत्राऽमरः । **व्यतिकरो**ऽव्यामिश्रणं, कलितं रचितं, शराणां वनमिति समासे प्रनिरन्तरित्यादिना णत्वम् । **यत्र चेत्यादिना** पौराणिकीं प्रसिद्धिं दर्शयति, भागवते नवमस्कन्धे—इलोपाख्याने कथा द्रष्टव्या । **सर्वमङ्गला**, 'अपर्णा, पार्वती दुर्गे'त्यमरः । **सुद्युम्नस्य** वैवस्वतसुतस्य, बुधस्य = चन्द्रपुत्रस्य समायोगात् सङ्गमात्, उर्वश्या नेत्रव्यापारस्य चाक्षुषसाक्षात्कारस्य यो विश्रामः पर्यवसानं तस्याऽऽस्पदं प्रतिष्ठा आधारमित्यर्थः, **पुरूरवा**—आयुषः पिता, चन्द्रवंशस्य मूलपुरुष इत्यर्थः, 'उर्वश्यसि, पुरूरवा असि, आयुरसि'–इति श्रुतिः । **सोऽहमेकदा तु तद्वनं प्रविशन्नेवात्मानं स्त्रीभूतमद्राक्षमिति संबन्धः**, कस्त्वमित्याकाङ्क्षायामाह—**बिन्दुसरसीत्यादि** । **तपोनिधिरिति** ब्राह्मणस्याऽन्वर्था संज्ञा, चतुरक्षरा कृदन्तान्ता च, 'द्व्यक्षरं चतुरक्षरञ्च नाम कृतं कुर्यान्न तद्धितमिति' महाभाष्यम् ॥ २८ ॥

अथ चरमाचलताम्रचूडचूडारागपुनरुक्तपाटलिम्नि लोहितायमाने सान्धिवेले सावित्रे तेजसि, प्राप्तायामग्निहोत्रवेलायां, तपोवनाभिमुखेषु गृहीतकुशसमित्पूलकेषु प्रत्यावर्तमानेषु तापसकुमारेषु, एकेन व्यक्तिविपर्ययेण, द्वितीयेन च यथा-समयानुपगमनिबन्धनगुरुक्रोधसंभावनपावकेन दह्यमानो यावत्परावर्ते तावदेव कश्चिद् गुह्यको मानसकेतुनामा यदृच्छया गिरिपरिसरे परिभ्रन्मद्दर्शनद्विगुणितमन्मथव्यथो मामुपलोभयन् सान्त्ववाक्यैरगृहीततत्प्रार्थने मयि बलादेव रन्तुकामो दिग्गजकराकारेण करेण वेपमानां कमलिनीमिव पलाशे करे मामग्रहीत् ॥ २९ ॥

अथ मयोक्तं—'यस्मादसमये मां धर्षयितुकामोऽसि, ततो बहुतरां कालकलामभिव्याप्य स्वकर्मानुरूपं राक्षसभावमेव त्वमनुभवेति', स तु ज्ञात्वा ममार्षं सामर्थ्यं लज्जाभयोभयपराधीनचेतास्तत्कालोपनतराक्षसदशस्ततो देशादपासरत् । तत्रैवान्तरे मदभ्यागमनविलम्बकारणं पर्येषयन् भगवान् गृत्समदो मया सह वनमभ्युपेतेभ्यस्तापसकुमारकेभ्यो मम तादृशं व्यतिकरमवगम्य योगदृष्ट्या ऽवगततदुत्तरवृत्तश्चाभ्यधात्-'वत्स माण्डव्य ! लज्जया नोपसर्पत्यस्मांस्तपोनिधिस्तमुपगम्य-ब्रूहि, यदज्ञानवशात्तवेयं दशा समुत्पन्ना, अतो मया शापस्योत्तरोऽवधिर्विधीयते, योऽयं भवदीयादेव शापाद् गुह्यको निशाचरतां प्राप्तस्तेन ह्रियमाणं त्वां यदा यः कश्चिल्लोकोत्तरपौरुषस्तं हत्वा मोक्षयिष्यति तदा तव स्वरूपं प्रादुर्भविष्यति, तेनापि

---

अथ=प्राप्तायामग्निहोत्रवेलायां यावत्परावर्त्ते तावदेव मानसकेतुनामा कश्चिद् गुह्यको बलादेव मां करेऽग्रहीत्-इत्यन्वयः । सन्धिवेलायां=सायंकाले भवं सान्धिवेलं, सवितुरिदं सावित्रं, द्वयमपि तेजो विशेषणम्, गुह्यकः स्वभावेन कामी, तत्रापि यदृच्छया स्वैरित्वेन गिरिपरिसरे निर्जने प्रान्ते इत्यर्थः, परिभ्रमन् न तु कुत्राऽवस्थितिं कुर्वन् । सुगममन्यत् ॥ २९ ॥

स्वस्य ब्रह्मचर्यप्रतापं दर्शयति—अथ मयोक्तं राक्षसभावमनुभवेति । शापप्रभावान्मानसकेतो राक्षसत्वप्राप्तिमाह—स तु ततोऽपासरदिति वाक्येन । स्पष्टम् । तत्रैवान्तरे तस्मिन्नेवावसरे भगवान् गुरुः गृत्समदोऽभ्यधादिति स्पष्टम् । योगदृष्ट्या दिव्यदृष्ट्या, योगिनो द्विधा-युक्ताः युञ्जानाश्चेति, युक्तस्य (परिपक्वस्य) नित्यं सर्वज्ञता, युञ्जानस्य प्रणिधानेन भानं, गृत्समदस्तु परिपक्वः । किमभ्यधादित्याकाङ्क्षायामाह—वत्स इति । माण्डव्योऽपरो गृत्समदशिष्यः, "वत्स ! माण्डव्य

च परमार्थयोपदिश्यैव त्वयि प्रवर्तितुमीहमानेन मानसकेतुना त्वन्मोक्षसमनन्तरमेव विमुक्तराक्षसभावेन भवितव्यम् । परन्तु द्वितीयजन्मव्यवधानेन तस्य स्वरूपलाभेन भाव्यमिति' । अहन्तु तन्मुखादेतद्भगवतोऽनुग्रहवाक्यमाकर्ण्य कृतार्थमात्मानं मन्यमानो महामुनेरतस्यैवाऽऽश्रमपदादनतिदूरे पुण्यतमे वने निवसँस्तत्रत्य एव दिव्ये देवतायतने भगवतीं हैमवतीं स्त्रीस्वरूपोचितया गान्धर्वविद्यया विशिष्योपचरँश्चिरतरमासम् । तत्र च विद्याधरेन्द्रस्य चन्द्रकेतोरम्बिकाचरणोपचरणमाहात्म्यादुपन्नता कन्या **मन्दारमञ्जरीनाम** सह सखीभिर्विशिष्टगुणवद्भर्तृ-कामनया तामेव भगवतीं प्रत्यहं नियमेन सेवमाना कदाचिन्मामवलोक्य जातविश्रम्भा विदितमदीयावदाना च मामपि स्वसहचरीपदमवापयत् । बलादेव चाऽऽत्मसमेन भूषणादिना संमानयामास । स तु निशाचरो दशान्तरेऽपि पूर्वसंस्कारवशंवदतया मदुपादानव्यसनान्नैव विरराम, न शशाक च रक्षोघ्नमन्त्रकृतरक्षं मां प्रसभमपहर्तुम्; अद्य तु जातनिर्वेदतया तत्प्रयोगपराङ्मुखं मामतर्कितोपनत एवाऽऽदाय न जाने कुत्र गन्तुमिच्छति, किं वाऽग्रे चिकीर्षतीति यावद् गगनमार्गेण विहरति तावदेव देवतासदृशानुभावेन देवेनैकशरप्रहारेण तं प्रमापयता द्वावप्यावां स्वरूपान्तरादुन्मोचिताविति तदेवंविधादतिदुस्तराद्विपदुदन्वतः समुत्तारणनिमित्तस्य भवतः किञ्चिदपि स्पृहणीयमर्थमसिद्धं न पश्यामि, येन लेशतोऽपि प्रत्युपकृत्य कृतघ्नकक्षायामपाङ्क्तेयः स्याम् । तद् आत्मानमिवाऽगणेयगुणगणगरिमाणं त्रिभुवनाऽभयदानशौण्डं, शन्तनुरिव भीष्मं, सुत्रामेव धनञ्जयं, भास्वानिव कर्णं, महेन्द्रविद्विषां विमर्दनलब्धलक्ष्यमात्मजरत्नं, जलनिधिरिव जैवातृकं,– जनय जगतो जीवातुमिति ॥ ३० ॥

---

इत्यारभ्य भाव्यमित्यन्तं गृत्समदवचनम्" अहन्तु तपोनिधिस्तु–तन्मुखान्माण्डव्यमुखात् भगवतो गृत्समदस्य गुरोः, **गान्धर्वविद्यया**=संगीतेन, गानञ्च स्त्रीणां स्वाभाविकम्, **उपचरन्** सेवमानः, तत्र च देवताऽऽयतने विदितं ज्ञातं ममेदं मदीयं यदवदानं पूर्वकृतकार्यं तादृशी सती स्वसहचरीपदं स्वसखिभावमवापयद्-नयत् । पुनरपि निशाचरवृत्तान्तमाह—स तु—इति । तर्हि कथमद्य गृहीत इत्याकाङ्क्षायामाह—**अद्येति** । **द्वावप्यावां**–तपोनिधिर्मानसकेतुश्चेति, विपदुदन्वतः = आपत्सागरात् **समुत्तारणे** समुद्धारे निमित्तकारणभूतस्य भवतः

राजा त्वेवमभिहितवति महर्षौ हर्षोच्छ्वासपरवशोऽवगाढगाढसुधारसह्रद इव रसातलात्सर्वलोकोपरिष्टान्नीत इव सविनयमभिहितवान्—'इदन्तदविलोकितवलाहकं वर्षं, अविभावितविभावरीकश्चन्द्रोल्लासः, अनाकलितकलेवरान्तरं नाकलोकावलोकम्, अनधिगतविबुधास्पदं सुधासमास्वादनं, यदस्मादृशैर्मोहमिहिकापिहितदृष्टिभिः प्रत्यग्दृशां भवादृशां भगवतामवन्ध्यदर्शनानामवेक्षणं, तन्मात्रेण कृतकृत्यमात्मानंमन्यमानानां च पुनर्मनोरथपथातिवर्त्ती वरलाभः सुतरामेव विस्मयप्रमोदौ समुद्वेलयति । न कलयामि च तथाविधमात्मनः सुचरितं, येनैतावतः प्रसादोत्कर्षस्य पात्रं भवेयम् । तथाऽपि भगवतामनुपधिः परोपकारस्पृहैवात्र प्रभवति । एवमनुग्रहविषयतां नीते च मयि पुनस्तदापादनप्रार्थनमात्रन्तु तरलतानुबन्धिनि हृदयेऽनुबद्धमिति'।

---

कर्तुः स्पृहाविषयीभूतं किञ्चिदपि—तदर्थं न पश्यामि यद्भवतः सिद्धं न स्यादत आत्मजरत्नं जनय जगतो जीवातुमिति तपोनिधिवचनम् । आत्मानमिव राजशेखरमिव, 'पुत्रं लभस्वाऽऽत्मगुणाऽनुरूपमिति' सूक्तेः । सुत्रामा इन्द्रः । धनञ्जयोऽर्जुनः । जैवातृकः सोम, 'अब्जो जैवातृकःस्सोमः—' इत्यमरः ॥ ३० ॥

सुतोत्पत्त्यनुष्ठान—चिन्ताग्रस्तमानसस्य राज्ञः सिंहासनारोहणानन्तरमेव प्रासङ्गिक्याः कथायाः फलमनुरूपसुतवरदान-प्राप्तिरूपमुपवर्ण्य प्रस्तुतं राजवृत्तान्तमाह—**राजात्विति** । **नृपस्तु महर्षावेवमभिहितवति सति सविनयमभिहितवानित्यन्वयः** । हर्षस्य पुत्रोत्पत्तिवरप्राप्तिजन्यस्य संतोषस्य उच्छ्वास उद्रेकस्तदधीन इत्यर्थः, अवगाढो विलोडितगाढो बाढो सुधारसस्याऽमृतरसस्य ह्रदोऽगाधजलाशयो येन स इव, 'गाढबाढदृढानि च' 'पीयूषममृतं सुधा' 'तत्राऽगाधजलो ह्रदः' सर्वत्राऽमरः । अतर्कितोपनतं वरमतिशयोक्त्या प्रशंसति—**इदं तदिति** । तन्मनोरथसिद्धिकरम्, इदं भवद्दत्तं वरदानं भवद्दर्शनं वा, न विलोकितो दृष्टो बलाहको मेघो यस्मिन्तत्तादृशं वर्षं वृष्टिरतर्कितोपनतमित्यर्थः, 'वृष्टिर्वर्षमि'त्यमरः । न विभाविता न ज्ञाता विभावरी रात्रिर्यस्मिन् सः, तादृशश्चन्द्रस्य सुधांशोरुल्लास उदयः, 'अमृतत्रा स्वर्गो न दृश्यते' इति जनश्रुतिमनुसरति—**अनाकलितेति** । अमृताऽऽस्वादनं देवानामेवेत्याह—**अनधिगतेति** । **यदस्मादृशैर्भवादृशामवेक्षणं तदिदमिति पूर्वेणान्वयः**, 'उद्देशप्रतिनिर्देश्ययोर्नित्यसम्बन्धात् । मोहे मिहिकात्वारोपो निरङ्गः, 'प्रालेयं मिहिके'त्यमरः । प्रत्यगन्तदृग् दृष्टिर्येषान्ते तेषां, भवन्तं पश्यन्ति=तुलयन्ति ते तेषां ज्ञानिनां मुनीनामित्यर्थः; **समुद्वेलयति** वर्धयति । अत्र दर्शनवरलाभरूपेऽनुग्रहे । कृतेऽप्य-

स तु मुनिर्निशाचरग्रहमोक्षापेक्षयाऽपि क्षितिपतेरनुभावविशेषेण सुतरां प्रीयमाणोऽनुभूतकुमारजन्मोत्सवं देवं पुनरुपाध्यायसमीपोपसृतमेव द्रक्ष्याम इत्यभिधाय तत्क्षणादेवात्मानम् अन्तर्हितवान् ॥ ३१ ॥

अथ महीभुजो भावि–तनयविषयकप्रेमदर्शनादुद्बुद्धसंस्कार इव मन्दतामाश्रयति हरिदश्वे, तदीयहृद्वृत्ताविव विरज्यमानायां सन्ध्यायां, तद्विकल्पेष्विव विघटमानेषु रथाङ्गमिथुनेषु सर्वात्मना राजानमुपपन्नायाः श्रियो वियोगदिव सङ्कुचत्सु कुशेशयकुलेषु निशाचरनिवर्हणजनितरुषि, रजनिचरनिकर इव सन्निधानं दधाने तिमिरस्तोमे, एकाधिपतिकत्वसम्बन्धादिवैकीभवितुमारब्धासु हरित्सु, नृपतिरुत्थाय विसर्जितराजव्रजो वहलदीपिकालोकविलुप्यमानतमिस्रव्यामिश्रभावेनाध्वना प्रविश्यावरोधं देवीमपि विदितवृत्तान्तां व्यधात् ॥ ३२ ॥

ततःप्रभृति नरपतिरतिशयिततपोभिर्विधिवदधीतसाङ्गनिगमैर्ब्रह्मकल्पैर्ब्राह्मणैरजिह्मवृत्तिभिः कृत्तिवाससो वासवानुजस्याऽन्यासां च देवतानां परितोषपोषकाणि कर्माणि निर्मापयामास ॥ ३३ ॥

---

नुग्रहेऽनुग्रहाकाङ्क्षा हृदयस्य तरलतामूलिकेत्याह–एवमित्यादि । स तु मुनि· रात्मानमन्तर्हितवान् ॥ ३१ ॥ इति वरदानरूपं कुसुमम् ।

**अथ नृपतिरुत्थाय देवीमपि विदितवृत्तान्तां व्यधादिति सम-न्वयः ।** कदेत्याकाङ्क्षायामाह–**हरिदश्वे मन्दतामाश्रयति इति** । हरितो हरिद्वर्णा अश्वा वाहा यस्य सः 'हरितः सूर्यस्ये'ति श्रुतेः, कथं भूते तस्मिन्–मन्दतामाश्रयति सति–प्रायमिति भावः, कस्मिन्निव–उद्बुद्धसंस्कार–इव, अयं भावः-राज्ञो मुनिवराज्ञावि पुत्रविषयक स्नेहेन पूर्वोक्तः पुत्रोत्पत्तिचिन्तारूपो य उद्बुद्धः संस्कारः स मन्दीभूतस्तनयोत्पत्तेर्निश्चितत्वात्, तथैव सायं सूर्य्योऽपि मन्दीभूतः । एवं–तदीया या अन्तःकरणवृत्तिः सा विशेषेण रज्यमाना रागवती जाता, सन्ध्याऽपि । पुत्रोत्पत्तिनिश्चयेन तस्य नृपस्य विविधा विरुद्धा ये कल्पाः पक्षास्ते सर्वे विघटिता निरस्तास्तथैव चक्रवाकद्वन्द्वानि सायं विभिन्नेषु स्थानेषु घटितानि चेष्टितानि गतानीत्यर्थः । प्रदोषेऽन्धकाराऽऽवृततया प्राच्यादिविवेकाऽभावात्–उत्प्रेक्षते–**एकाऽधिपतिकत्वेत्यादि** । एकोऽद्वितीयोऽधिपतिः स्वामी यासान्ताः,–तासां भावस्तत्संबन्धादिव;–हेतूत्प्रेक्षा, 'सपत्नीभिः स्वामिसन्निधावेव स्थातव्यं न तु विप्रकृष्टस्थलेषु' इति नीतिः । स्पष्टमन्यत् । 'यस्य च भावेन भावलक्षणमि'ति सर्वत्रसप्तमी॥३२॥

**ततः प्रभृति नरपतिर्ब्राह्मणैः ( द्वारभूतैः ) कर्माणि कारयामास-**

तथाहि—केचिदग्निहोत्रभसितभासुरभालभूमयो गृहीतरुद्राक्षस्रजो विधिवद्विहितव्रताः कृतप्रत्येकमन्त्रसिद्धयो यथावदनुष्ठितविविधन्यासाः क्रमोक्तमहापयन्तो विधिमहार्यमहिमानो महारुद्रप्रयोगमयोजयन्, केचन करकलितकनककलशनिष्क्रामदविच्छिन्नधारया ब्रह्माण्डमण्डलनिर्गच्छन्मन्दाकिनीस्रोतसेव भगवन्तं त्रिलोचनमभ्यषिञ्चन्, अपरे मन्दं मन्दं विस्पन्दमानाधरपुटा दशनदीधितिव्यपदेशेनात्यन्तसवदातं मन्त्रार्थमिव विवृण्वानाः सन्तानगोपालविद्यामावर्तयाम्बभूवुः, अन्ये पदवाक्यप्रमाणेषु परां निष्ठामुपसेदिवांसो बहुवारपरिशीलितप्राज्यपुराणपारायणाः सुस्वराः सुयुक्तनिरुक्तवाचोयुक्तयोऽभिधानवेदिनो मात्रामात्रमप्यभ्रंशयन्तो हरिवंशं शशंसुः, परे जातवेदसिद्धविधौ जातवेदसि हविर्जातं यथाविहितं जुहवाम्बभूवुः, अन्ये शैवसिद्धान्तप्रसिद्धविज्ञानवैभवा अनुपजातविधिभङ्गं लिङ्गसमुदायं पर्यायेण सपर्यामासुः, कतिपये उपशमितडामरा डामराद्यागमकुशला धरामराः संभूय सहस्रादिसंख्यया चण्डीमाहात्म्यमखण्डितमाम्रेडयाञ्चक्रुः ॥ ३४ ॥

इत्येवंप्रायेषु च प्रतायमानेषु कर्मसु कदाचिदुत्फुल्लविलोलविलोचनोत्पला श्रवणावतंसभ्रमन्मधुकरगुञ्जितैस्तारतरै रहस्यं जनान्तरश्रवणाद्रक्षन्तीव

---

इत्यन्वयः। अङ्गानि शिक्षादीनि, निगमो वेदः, अजिह्मवृत्तिभिः सरलस्वभावैः, कृत्तिवासाः शिवः, वासवानुजो विष्णुः ॥ ३३ ॥

क्रियमाणानि कर्माणि दर्शयति—तथा हीति। १ केचिन्महारुद्रप्रयोगमयोजयन्, २ केचन त्रिलोचनमभ्यषिञ्चन् ३ अपरे गोपालविद्यामावर्त्तयाम्बभूवुः, ४ अन्ये हरिवंशं शशंसुः, ५ परे जातवेदसि जुहवाम्बभूवुः, ६ अन्ये (पार्थिव) लिङ्गसमुदायं पर्यायेण सपर्यामासुः, ७ कतिपये चण्डीमाहात्म्यमखण्डितं यथास्यात्तथाऽऽम्रेडयांचक्रुः। करकलितो हस्तगृहीतो यो सुवर्णकलशस्तस्मान्निष्क्रामन्ती याऽविच्छिन्ना निरन्तरा धारा तया, कया इव—ब्रह्माण्डमण्डलान्निर्गच्छन्ती निःसरन्ती या मन्दाकिनी गङ्गा तस्याः स्रोतसेव प्रवाहेणेव, सुगमः शेषोंऽशः। प्रतिमुखसन्धिः ॥३३॥

इत्येवंप्रायेषु कर्मसु प्रतायमानेषु कदाचिद्देव्या धात्रेयिका चन्द्रिकानाम विदितदोहदलक्षणां देवीं राजानमभ्युपेत्य सविनयं निवेदयाम्बभूवेत्यन्वयः। इत्येवंप्रायेषु पूर्वोक्तेषु महारुद्रप्रयोगादिषु—अन्येषु च तत्सदृशेषु कर्मस्वनुष्ठानेषु, प्रतायमानेषु=क्रियमाणेषु, उत्फुल्ले—विकसिते विलोले चञ्चले विलोचनोत्पले नेत्रकमले यस्याः सा, श्रवणावतंसे कर्णभूषणरूपे पुष्पे सम्भ्रमन्तो

पुरस्तात्प्रसरता रदनकौमुदीसमुदायेनावदाततमां वाग्देवतामिव विपदयन्ती देव्या धात्रेयिका चन्द्रिका नाम रहसि राजानमभ्युपेत्यान्तःपुरजरतीभिरभियुक्ताभिः सर्वैकवाक्यतया विदितदोहदलक्षणां देवीं सविनयं निवेदयाम्बभूव ॥ ३५ ॥

ततो नरपतिरगृहीतप्रामाण्यकेनापि विषयविशेषवैभवादन्तःकरणोल्लासकारिणा किम्पुनरसम्भाव्यमानार्थव्यभिचारस्य महर्षिवचसः संवादादुपजातप्रामाण्यनिश्चयेन तेन तथाविधेन तद्वचसा निरन्तरमसृतावगाहनेनेव बहिरिवान्तरपि शिशिरायमाणसर्वावयवः, प्ररूढकण्टकदन्तुरतया निर्गमयितुमिष्यमाणमपि किञ्चिदिव विलम्बेन निर्गतं करेणादाय लोहितकांशुजालजटिलमङ्गुलीयकं तस्या वसन्तमास इव रक्ताशोकशाखायाः कुङ्कुमारुणं कोरकं प्रसादमकरोत् ॥ ३६ ॥

---

ये मधुकरास्तेषां गुञ्जितैः-शब्दैः, तारतरैः=उच्चैस्तरैः, जनान्तरश्रवणात्-मनुष्यान्तरश्रवणात् रहस्यं गोप्यं, रक्षन्तीव=पालयन्तीव, अग्रतः गच्छता दन्तज्योत्स्नासमुदायेन स्वच्छतमां 'सरस्वतीमिव' विपदयन्ती प्रकाशयन्ती–देव्या=मलयवत्याः, धात्रेयिका उपमातापुत्री–'चन्द्रिकेत्यादि' स्पष्टम्; अभियुक्ताभिः विश्वासपात्राभिः, अन्तःपुरवृद्धाभिः, सर्वासाम् एकवाक्यतया निश्चयरूपेण विदितं ज्ञातं दोहदस्य गर्भस्य लक्षणं चिह्नं यस्याः सा, तां=देवीं=मलयवतीं राजानमभ्युपेत्य सप्रश्रयं निवेदयामास ॥ ३५ ॥

**ततो नरपतिः (राजशेखरः) अङ्गुलीयकं प्रसाद–(पारितोषिक-) मकरोत्–इत्यन्वयः।** ततः=चन्द्रिकानिवेदनानन्तरं, राजा,–न गृहीतं प्रामाण्यं प्रमाणत्वं यस्य (कप्) तेनाऽपि, विषयविशेषस्य विषयभेदस्य वैभवात्=सामर्थ्यात् अन्तःकरणस्य=अन्तरिन्द्रियस्य उल्लासकारिणा=विकासकारिणा, किन्तु, पुनर्भूयः न सम्भाव्यमानः=नालोच्यमानः अर्थस्य व्यभिचारो यस्य तस्य महर्षेस्तपोनिधेः वाक्यस्य, संवादात्सम्मेलनात्–उपजातः उद्भूतः प्रामाण्यस्य निश्चयो यस्मिंस्तेन तथाविधेन पूर्वोक्तप्रकारेण दोहदलक्षणप्रतिपादकेन, तद्वचसा=चन्द्रिकावचसा, निरन्तरं–निरवच्छिन्नम्, असृतावगाहेन इव=अमृतकुण्डमज्जेन इव बहिरिव=त्वगिन्द्रिय इव, अन्तरपि अभ्यन्तरेऽपि शिशिरायमाणाः शीतलायमानाः सर्वे अवयवा यस्य तादृशः सन्, प्ररूढा उद्गता ये कण्टकाः रोमाञ्चाः तैः दन्तुरतया उन्नततया निर्गमयितुं बहिर्यापयितुमिष्यमाणमपि=इच्छाविषयीभूतमपि, किञ्चित्सम्भयव्यापनेन इव निर्गतं, लोहितकाः रक्ता ये अंशुजालाः किरणसमूहास्तैर्जटिलं

सा तु सादरं परिगृह्य मकरन्दान्तरप्रतिबिम्बितबालमिहिरमण्डललोहितनलिनलीलाललितेन पाणिना भूमिस्पर्शपूर्वकमनेकवारान् प्रणमन्ती चरणादुत्तमाङ्गपर्यन्तमलातचक्ररेखावदखण्डदण्डायमानेन तत्कान्तिसन्तानेन समारोपितशिञ्जिनीगुणा, कुसुमविशिखशरासनलतेव लक्ष्यमाणा, पुरुषाङ्गुलिग्रहणयोग्यतयाऽभ्यधिकपरिमाणमपि, प्रचुरमरीचिकरम्बितत्वेन सम्यग्मिलितमिव दृश्यमानमङ्गुलीयकमीषदाकुञ्चितशिखया करशाखया धृत्वा पूर्ववदेव प्रणम्य, राजसन्देशेनेव करवृत्तिना तेन देवीमानन्दयितुमन्तःपुरमेव प्रत्ययासीत् ॥ ३७ ॥

राजा तु तत्कालोपनतममात्यवर्यं बुद्धिनिधिं विलक्षणेन मुखोल्लासेन हेत्वन्तरबाधसहकारेणानुमिततद्वृत्तान्तमपि प्रत्यक्षिततद्वार्तमात्मानमिव

---

खचितमङ्गुलीयकं=मुद्रिकां हस्तेनादाय, वसन्तमास इव=चैत्रमास इव, रक्ताशोकस्य या शाखा तस्याः कृते, कुङ्कुमवत् केसरवत् अरुणं रक्तं कोरकं-कलिकां ( 'कलिका कोरकः पुमान्' इत्यमरः ) तस्याः चन्द्रिकायाः कृते प्रसादमकरोत्= पारितोषिकमदादित्यर्थः ॥ ३६ ॥

**सा तु सादरं परिगृह्य अनेकवारान् प्रणमन्ती देवीमानन्दयितुम् अन्तःपुरमेव प्रत्ययासीदिति सम्बन्धः।** चन्द्रिका तु मकरन्दान्तरे पुष्परसान्तरे प्रतिबिम्बितः सञ्जातप्रतिबिम्बः, यो बाल-मिहिरमण्डलः बालसूर्यबिम्बस्तद्वत् लोहितं रक्तं यन्नलिनं कमलं तस्य या लीला शोभा तद्वल्ललितेन=रमणीयेन करेण आदरेण सहितं स्वीकृत्य अङ्गुलीयकमित्यनुषङ्गः, पृथ्वीस्पर्शपूर्वकं भूयोभूयो नमन्ती, पादान्मस्तकपर्यन्तम् ज्वलदुल्मुक-चक्ररेखावदविच्छिन्नेन अङ्गुलीयकद्युतिपरम्परया, सम्यगारोपितः शिञ्जिनीगुणः शिञ्जिनीसूत्रं यया सा, कुसुमविशिखस्य= कामदेवस्य शरासनलतेव चापलतेव दृश्यमाना—पुरुषस्य नरस्य अङ्गुलिग्रहणयोग्यतया हेतुना विस्तीर्णपरिमाणमपि प्रचुराः अधिका या मरीचयः=किरणाः तैः करम्बित्वेन मिश्रितत्वेन सम्यक् सुतरां मिलितमिव सङ्गतमिव दृश्यमानं लक्ष्यमाणं अङ्गुलीयकमूर्मिकां किञ्चित्सङ्कुचिताग्रया करशाखया=अङ्गुल्या सन्धार्य, मुहुः प्रणम्य, **करवृत्तिना**–हस्तस्थितेन, राजवाचिकेनेव, **तेन**=अङ्गुलीयकेन **मलयवतीं हर्षयितुं शुद्धान्तमिव** प्रत्यगच्छदिति ॥ ३७ ॥

**राजा तु तत्कालोपनतं बुद्धिनिधिं विदितवृत्तिं कृत्वा तत्रैव विश्रम्योदतिष्ठदिति योजना।** राजशेखरस्तु तत्समयप्राप्तं सचिववरं बुद्धिनिधिं विचित्रेण वदनविकासेन, हेत्वन्तरस्य सुतोत्पत्तिरूपहेतुभिन्नस्य यो **बाधः** असद्भावस्तत्साहाय्येनानुमितस्य राज्ञो वृत्तान्तो वार्ता देवीदोहदलक्षणरूपो येन तादृश-

मनोरथनिबन्धनेनाभ्यासेन पुनरपि शब्देन विदितवृत्तिं कृत्वा, तेन सममावश्यकानि राजकार्याणि च कृत्वा, चिन्तयित्वा श्रुत्वा च पूर्वोपक्रान्तानां कार्याणां बह्वीरवस्थाश्चिरन्तत्रैव विश्रम्योदतिष्ठत् ॥ ३८ ॥

अथैकदा चरमाचलचूडातडागकृतक्रीडेन काननकुञ्जरकुलेन रक्तोत्पलैः सह मिश्रिते तद्भ्रमादिव करपुष्करव्यापारेण भग्ने मिहिरमण्डले मित्रवियोगापन्नवैराग्येन दिवसेन भूर्जत्वचीव परिगृह्यमाणायां सन्ध्यायां, तदभिवन्दनपरेण सिद्धजनेनाञ्जलिविक्षिप्तासु कुन्दकुसुमपङ्क्तिष्विव दृश्यमानासु तारकासु धूर्जटिनृत्योत्क्षिप्तायां गजत्वचीव चुम्बिताम्बरायां तिमिरलेखायां, कृतोचितक्रियो नृपतिरुदिते पूर्वदिगङ्गनाचन्दनाङ्गरागभाजने कुमुदबान्धवे, –शयनोचितायां वेलायां, चन्द्रकिरणप्रसङ्गप्रवृत्तनिस्यन्दस्य स्फटिकपर्वतस्येव

---

मपि,–मनोरथनिबन्धेन मनोरथमूलकेनाभ्यासेन आवृत्त्या भूयोऽपि आत्मानमिव=स्वमिव, शब्देन हेतुना, प्रत्यक्षिता प्रत्यक्षीकृता तद्वार्ता देवीवार्ता येन तं बुद्धिनिधिं ज्ञातवृत्तान्तं कृत्वा, अमात्येन सह अवश्यकार्याणि राजकृत्यानि कृत्वा=दृष्ट्वा, पूर्वोपक्रान्तानां=प्रथममारब्धानां कार्याणां—कृत्यानां, बह्वीः=भूयसीः अवस्थाः दशाः श्रुत्वा चिन्तयित्वा च, बहुकालपर्यन्तं विश्रामं कृत्वा **उदतिष्ठत्** उत्थितवान् ॥ ३८ ॥

**अथैकदा नृपतिः शयनोचितायां वेलायां सुखमस्वपत्**—इति **सम्बन्धः** । अथ=दोहदलक्षणानान्तरम्, एकदा=एकस्मिन्समये, चरमाचलस्यास्ताचलस्य चूडायां शिखरे यस्तडागो जलाशयस्तस्मिन्कृता क्रीडा जलविहारो येन तादृशेन वनगजयूथेन, शोणोत्पलैः सह **मिश्रिते** सम्भिन्ने, **तद्भ्रमादिव** रक्तोत्पलभ्रमादिव, **करपुष्करव्यापारेण** शुण्डाग्रव्यापारेण ('पुष्करं करिशुण्डाग्रे' इत्यमरः) कृतभङ्गे सति सूर्यमण्डले, मित्रस्य=सुहृदः सूर्यस्य च वियोगेन विप्रलम्भेनाऽऽपन्नं प्राप्तं यद् वैराग्यं विशिष्टरागवत्ता अनास्था च तेन-दिवसेन वासरेण, भूर्जपत्र इव ज्ञायमानायां सन्ध्यायां, **तदभिवन्दनतत्परेण**=सन्ध्यावन्दनतत्परेण सिद्धलोकेन अञ्जलिविक्षिप्तासु–करपुटधृतासु माघ्यपुष्पश्रेणीष्विव विलोक्यमानासु, तारकासु=तारासु, धूर्जटेर्नीललोहितस्य यन्नृत्यं ताण्डवं तस्मिन्नुत्क्षिप्तायां उच्छ्रितायां गजचर्मणीव चुम्बितं स्पृष्टमम्बरं व्योम यया सा, तस्यां—तिमिरेखायां सत्यां, कृता उचिता क्रिया=सन्ध्यावन्दनादिर्येन तादृशः नृपतिः, पूर्वदिगेवाङ्गना स्त्री-तस्या यश्चन्दनाङ्गरागश्चन्दनाङ्गलेपस्तस्य भाजने पात्रे, कुमुदानां चन्द्रकमलानां बान्धवे प्रकाशके=चन्द्रे **उदिते** सति, शयनोचितायां वेलायां=स्वाप-

चन्द्रिकापुनरुक्तसुधालेपस्य प्रासादस्योपरितनाट्टचन्द्रशालायामवयव इव श्वेतद्वीपस्य, एकदेश इवेन्दुभवनस्य, भागविशेष इव शेषनागस्य, अंशाऽवतार इव दुग्धोदन्वतो, भागभेद इव गङ्गापुलिनस्य,—शयनीये, सकलभुवनविजय-विश्रान्तो विश्रामकामुक इव मीनकेतनोऽभितो दीप्यमानैः प्रतापदहनप्ररो-हैरिव प्रदीपैः परिवृतो, वास-वलभीगवाक्षविवरप्रविष्टैरिन्दुकरैर्धवलबालव्य-जनैरिव वीज्यमानो, जगद्विजयवैजयन्तीभिरिव वितानक-लम्बमानमौक्तिक-जालमञ्जरीभिरुपास्यमानो, यामिकैरिव दूरतरनिलीनवृत्तिकैरिन्द्रियैरमुच्य-मानो, मनोभवरूपाभिमानखण्डनकुपितेनेव मनसाऽभ्यन्तरनाडीविशेषप्रवे-शान्निलीयमानेन प्रपञ्चान्तरभोगसाहायकसम्पादनोद्यताभ्यामिव वहिर्विष-

---

योग्यसमये,—द्वितीयप्रहरारम्भे इत्यर्थः, चन्द्रकिरणानां प्रसङ्गेन प्रसक्त्या प्रवृत्त-निस्यन्दस्य=प्रवृत्तद्रवस्य स्फटिकाचलस्येव, चन्द्रिकाभिः ज्योत्स्नाभिः पुनरुक्तो द्विगु-णितः सुधालेपश्चूर्णलेपः पीयूषलेपश्च यस्य तस्य प्रासादस्य=नृपभवनस्य उपरितना उपरिभवा या अट्टास्थिता=अट्टालिकास्थिता चन्द्रशाला शिरोगृहं तस्यां, श्वेतद्वी-पस्य श्वेतान्तरीपस्य अवयवे-इव=खण्डे इव, इन्दोर्भुवनस्य=चन्द्रलोकस्य एक-देशे इव=एकांशे इव, शेषनागस्य अनन्तस्य भागविशेषे इव = अवयवविशेषे इव, दुग्धोदन्वतः=क्षीरसागरस्य अंशावतरे इव=भागावतारे इव, गङ्गापु-लिनस्य=भागीरथीजलसन्निहिततीरस्य-भागभेदे इव=अंशविशेषे इव—शय-नीये—शय्यायां—सकलस्य भुवनस्य विजयेन पराजयेन विश्रान्तो ग्लानः श्रम अत-एव विश्रामकामुकः विश्रामाभिलाषी इव मीनकेतनः कामदेवः, उभयतो ज्वलद्भिः प्रतापदहनप्ररोहैरिव=प्रतापज्वलनाङ्कुरैरिव दीपैः परिवृतः परिवेदितः, वासस्य निवासस्थानस्य या वलभी गोपानसी तत्र ये गवाक्षा वातायनानि तेषां विवरप्रविष्टै-रन्तःसङ्क्रान्तैः इन्दुकरैश्चन्द्रकिरणैः, धवलबालव्यजनैरिव श्वेतचामरैरिव वीज्यमानः सेव्यमानः, संसारविजयपताकाभिरिव—वितानके उल्लोचे लम्बमाना स्रंसमाना या मौक्तिकजालानां मौक्तिकसमूहानां मञ्जर्यो वल्लर्यस्ताभिः ( वल्लरिर्म-ञ्जरिः स्त्रियौ इत्यमरः ) उपास्यमानः कृतोपासनः, यामिकैरिव प्रहरसूचकैरिव दूरतरम् अत्यन्तं निलीना गुप्ता वृत्तिर्दर्शनादिव्यापारो येषान्तैः इन्द्रियैश्चक्षुरादिभिः अमुच्यमानः अत्यज्यमानः, मनोभवस्य कामस्य यो रूपाभिमानः दर्शनीयाभि-मानस्तस्य खण्डनेन कुपितेनेव क्रुद्धेनेव—अभ्यन्तरस्य अन्तः मध्ये यो नाडीविशेषः पुरीतद्रूपा नाडी तस्यां प्रवेशात् संक्रमात् निलीयमानेन गुप्तेन मनसा चेतसा प्रपञ्चान्तरस्य स्वप्नप्रपञ्चस्य यो भोगोऽनुभवस्तस्य यत् साहायकं साहाय्यं तस्य सम्पादने साधने उद्यताभ्यामिव प्रवृत्ताभ्यामिव अतएव बहिर्विषयविमुखा-

यविमुखाभ्यां लोचनाभ्यां निमीलिताभ्यां बहिरिन्द्रियनिरोधदौःसाधिकैरिव मुहुर्गतागतबद्धावधानैः श्वासमारुतैर्विजयलक्ष्मीनिर्भरपरिरम्भशिथिलितैरिवावयवैः सुखमस्वपत् ॥ ३९ ॥

अथ समास्फालितशेफालिकाकुसुमपरिमलोपनायिनि गृहीतावश्यायशीकरे कुमुदकमलपलाशानामन्योन्यसंमुखविमुखक्रियाजनके निर्भरनिधुवनानुबन्धखिन्नयुवतिजनगात्राह्लादकारिणि प्रवातुमुपक्रान्ते वैभातिके नभस्वति, चक्रवाकविरहाभिचारमन्त्रमिव जपत्सु मुखरायमाणेषु कुशेशयकोरकान्तरगर्भितेषु मधुकरेषु, विजातीयतत्तदनेकद्रव्यसमवेतरूपसम्बन्धादिव विच्छायतामुपगच्छन्त्यां चन्द्रिकायां, मन्दाकिनीपुलिनकोकमिथुनमुक्तवि-

---

भ्यां=रूपादिसाक्षात्कारपराङ्मुखाभ्यां निमीलिताभ्यां मुकुलिताभ्यां नेत्राभ्यां बहिरिन्द्रियाणां चक्षुरादीनां यो निरोधो व्यावृत्तिस्तस्य दौःसाधिकैरिव बाधकैरिव अतएव मुहुः पुनः गतागते श्वासप्रश्वासे बद्धावधानैः कृतसमाधानैः श्वासमारुतैः प्राणवायुभिः, विजयलक्ष्म्याः यो निर्भरं गाढं परिरम्भ आश्लेपः तेन शिथिलितैरिव स्रस्तैरिव एतादृशैः अवयवैः करचरणादिभिः—उपलक्षितः सन् सुखं यथास्यात्तथा अस्वपत्—अशयिष्ट [ लोचनाभ्यामित्यादौ 'प्रकृत्यादिभ्य उपसंख्यानमि'त्यनेन उपलक्षणे तृतीया ] ॥ ३९ ॥

**अथ स्वप्नदशाभ्यन्तरे ( नृपतिः ) प्रभातकल्पायां क्षपायाम् अहिममण्डलान्निर्गम्य महत्तरं महो महादेवीवदनपद्यया तदुत्तरदेशं प्रविशद्विलोकयां-बभूवेत्यन्वयः** । पुत्रोत्पत्त्यनुकूलं स्वप्नं दर्शयति—अथेति । अथ=स्वापानन्तरं, सम्यगास्फालितानि कम्पितानि यानि शेफालिकाकुसुमानि सुवहापुष्पाणि तेषां परिमलोपनायिनि जनमनोहरसुगन्धप्रापके स्वीकृततुषाराम्बुकणे, कुमुदानां कमलानां च यानि पलाशानि पत्राणि तेषामन्योन्यं परस्परं या सम्मुखविमुखक्रिया=व्यापारस्तस्या जनके उत्पादके, निर्भरमत्यन्तं यन्निधुवनं रतं तस्य योऽनुबन्धः प्रबन्धस्तेन खिन्ना ग्लाना ये युवतिजनास्तेषां गात्राणामाह्लादकारिणि सुखजनके प्रवातुं प्रचलितुमुपक्रान्ते प्रवृत्ते प्राभातिके **नभस्वति** पवने सति, पुनः कुशेशयानां शतपत्राणां कोरकान्तरगर्भितेषु=कलिकामध्यगतेषु अतएव—**मुखरायमाणेषु** शब्दायमानेषु, अतएव चक्रवाकानां रथाङ्गनामभाजां यो विरहो वियोगस्तस्य योऽभिचारमन्त्र उच्चाटनमन्त्रस्तमिव जपत्सु मधुकरेषु=भ्रमरेषु सत्सु, विजातीयं भिन्नप्रकारं यत्तत्तदनेकद्रव्यं तस्मिन्समवेतं समवायसम्बन्धेन वर्तमानं यद्रूपं तस्य सम्बन्धादिव संसर्गादिव **विच्छायतां** कान्तिराहित्यम् उप-

रहानलोष्णनिःश्वासपक्वतयेव धूसरायमाणे चरमाचलशबरसुन्दरीकर्णावतंसकेतककिसलयाकारे लम्बमाने हरिणलाञ्छनबिम्बे, चक्रवाकविरहदहनविस्फुलिङ्गकणिकास्विव विरलायमानासु कतिपयावशिष्टासु तारकासु, जरदनोकहकोटरप्रवेशव्यासक्ते कौशिककुले, मन्दस्नेहतया निर्वाणाभिमुखेषु यतिजनात्मस्विव प्रदीपेषु, विरहितसङ्केतनिकुञ्जकेतनासु स्वभवनाभिमुखीष्वभिसारिकासु, कमलप्रबोधमङ्गलपाठकेष्विव विरुवत्सु तटतरुविहगेषु, तिमिरस्तोमेष्विव भगवता भास्वता सह कलहायमानेषु मन्देहवृन्देषु, तद्गात्रनिर्गलदसृग्धाराभिरिव लोहितायमानायां पुरुहूतहरिति प्रवर्तमाने

---

गच्छन्त्यां प्राप्नुवन्त्यां कौमुद्यां सत्यां, पुनश्च मन्दाकिन्याः स्वर्गङ्गायाः पुलिने जलासन्नतीरे यत्कोकमिथुनं चक्रवाकमिथुनं तेन मुक्तस्त्यक्तो यो विरहाग्निस्तेन उष्णो घर्मो यो निःश्वासो मुखमारुतस्तत्पक्वतयेव=तज्जनितपाकवत्तयेव **धूसरायमाणे** धूसरवर्णतां याते-चरमाचले अस्ताचले या शबरसुन्दर्यो भिल्लाङ्गनास्तासां कर्णावतंसभूतं कर्णभूषणभूतं यत्केतकीकिसलयं केतकीपल्लवस्तदाकारे तद्वर्णे स्रंसमाने हरिणलाञ्छनस्य चन्द्रस्य बिम्बे मण्डले सति, पुनः—चक्रवाकानां विरहदहनस्य विरहानलस्य या विस्फुलिङ्गकणिका अग्निकणास्तास्विव—**विरलायमानासु** विरलतां गच्छत्सु **स्वल्पावशिष्टासु** तारकासु=नक्षत्रेषु सत्सु, पुनः जरन्तो जीर्णा ये अनोकहा वृक्षास्तेषां ये कोटरा गर्भास्तेषु यः प्रवेशः वासस्तस्मिन्व्यासक्ते प्रवृत्ते—कौशिककुले घूकसमूहे सति, पुनश्च—प्रदीपेषु न्यूनतैलतया, अन्यत्र विषयानुरागराहित्येन यतिजनानां योगिजनानामात्मसु जीवात्मसु इव निर्वाणाभिमुखेषु=समाप्तप्रायेषु, अन्यत्र मोक्षाभिमुखेषु सत्सु, पुनश्च—विरहितं त्यक्तं सङ्केतनिकुञ्जरूपं केतनं भवनं याभिस्तासु, अतएव स्वस्यात्मनः यद् भवनं गृहं तदभिमुखीषु तदुन्मुखासु—**अभिसारिकासु** सतीषु, अभिसारिकालक्षणं तु—"अभिसारयते कान्तं या मन्मथवशंवदा। स्वयं वाऽभिसरत्येषा धीरैरुक्ताभिसारिका" इति साहित्यदर्पणे उक्तम्; पुनश्च—तटतरुषु स्थिता ये विहगाः पक्षिणस्तेषु कमलानां प्रबोधो जागरणं विकासश्च तस्य मङ्गलपाठकेष्विव वैतालिकेष्विव **विरुवत्सु** शब्दायमानेषु सत्सु, पुनश्च—भगवता त्रिकालत्रिलोकप्रकाशकेन प्रकृष्टा भाः विद्यते यस्य तेन विवस्वता साकं तिमिरस्यान्धकारस्य स्तोमेष्विव निकरेष्विव मन्देहनाम्नां राक्षसानां वृन्देषु समूहेषु कलहायन्ते इति कलहायमानास्तेषु कलहं कुर्वत्सु सत्सु, मन्देहा नाम राक्षसा उदयसमये सूर्यरथाऽभिमुखं धावन्ति रोद्धुमिति श्रुति-पुराण प्रसिद्धिः; अथ च तेषां कलहायमानानां राक्षसानां शरीरनिःसृतरुधिरधाराभिरिव पुरुहूतस्य पुरन्दरस्य

पापहारिणि स्वाध्यायकोलाहले त्रयीवधूश्रवणावतंसपल्लवप्रायासूद्भिद्यमानासु अग्निहोत्रपावकधूमलेखासु, प्रभातकल्पायां क्षपायां, स्वप्नदशाभ्यन्तरे प्रभाभरोद्भासितभुवनाभोगभागं, मुनिसमूहेन प्रणम्यमानमुदयदहिममयूखमण्डलान्निर्गम्य महत्तरं महो महादेवीवदनपद्यया तदुत्तरदेशं प्रविशद्विलोकयाम्बभूव ॥ ४० ॥

तावदेव प्राभातिकातोद्यनिनादेन नवघनस्तनितानुकारिणा जयशब्दमिश्रेण च वैतालिकानां प्रबोधमङ्गलेन तत्प्राप्तिशंसिनेव निद्रामजहात् ।

---

हरिति दिशि प्राच्यामित्यर्थः—न लोहिता लोहिता सम्पद्यमाना जाता लोहितायमाना तस्यां सत्याम् (लोहितादिडाज्भ्यःक्यष्, इति च्व्यर्थे क्यष्) अरुणरागान्वितायां सत्यामित्यर्थः, पापं कलुषं हरति तच्छीले स्वकीयाध्येतव्यस्य (स्वशाखायाः पाठस्य) कलकले प्रवर्त्तते इति प्रवर्त्तमानस्तस्मिन्नारब्धे सति-ब्राह्मे मुहूर्ते छात्राणामध्ययने श्रूयमाणे सतीत्यर्थः, ऋग्यजुःसामरूपा या त्रयी सैव वधूः,-तस्याः कर्णभूषणभूतकिसलयप्रायासु, अग्निहोत्रस्य सायंप्रातःक्रियमाणस्य वैदिकस्य कर्मणः सबन्धी यो वैश्वानरस्तज्जनितो यो धूमस्तस्य पङ्क्तिषु—उद्भिद्यमानासु= उद्गतासु सतीषु, पुनः क्षपायां त्रियामायां—'त्रियामा क्षणदा क्षपा' इत्यमरः,—ईषदून-प्रभातायां सत्यां, स्वप्नाऽवस्थायाः मध्ये प्रभायाः कान्त्या भरेण समूहेन उद्भासिताः प्रकाशिता भुवनस्य जगतः, आभोगस्य विस्तारस्य भागोंऽशो येन तत् तादृशं महस्तेजः प्रविशद्विलोकयाम्बभूवेत्यनेन संबन्धः । कथम्भूतं मह इत्याह—**मुनीति**। उद्यन्तं सवितारं बालखिल्या मुनयः स्तुवन्ति प्रणमन्ति चेति श्रुतिपुराणप्रसिद्धिः। कुत-इत्याकाङ्क्षां पूरयति **उदयदिति** । इट किट कटीत्यत्र प्रश्लिष्टस्य इधातोर्भौवादिकस्य शत्रन्तम् । उद्यन् यो ऽहिमकिरणस्तस्य बिम्बात् निःसृत्य अतिशयेन महत् महस्तेजःपुञ्जं महादेव्या महिष्या मलयवत्या मुखरूपया सरण्या 'ओष्ठादारभ्य गलघण्टिकापर्यन्तं वदनं' तद्रूपेण मार्गेणेत्यर्थः, तस्याः पद्यायाः सकाशाद्यो गमनापेक्षया उत्तरो देशः गलबिलाधःप्रदेशस्तं तदुदरमित्यर्थः, प्रविशत्प्रवेशं कुर्वत् सन्ददर्श । 'प्राभातिकः स्वप्नः शुभसूचको भवति', "दृष्ट्वा स्वप्नं शोभनं नैव सुप्यात्पश्चाद् दृष्टो यः सपाकं विधत्ते" इति स्वाप्निकाः । 'स्वप्नो निद्रामुपेतस्य विषयाऽनुभवश्चयः' इति-साहित्ये स्वप्नलक्षणम् ॥ ४० ॥

स्वप्नस्य शुभसूचकत्वं द्रढयति—**तावदेवेति** । **यावदेव स्वप्नदर्शनं समाप्तं तावदेव निद्रामजहादिति सम्बन्धः** । **नवा** नूतना ये घना मेघास्तेषां स्तनितं गर्जितमनुकरोति तच्छीलेन प्रभातकालिकवादित्रध्वनिना कारणभूतेन, वीणा-मुरज-वंश-कांस्यतालरूपं-चतुर्विधं वादनं,—वाद्यं, वादित्रम्, आतोद्यमिति

अचिन्तयच्च चेतसा किमिदमीक्षितं मया स्वप्नप्रामाण्यमात्रेण फलोपधान-निश्चयस्तावद्विडम्बनमेव भुवनेषु भवति । स्वप्नश्चायं तात्कालिकभावना-मूलकत्वसम्भावनायामपि मुनिवचनसंवादितया न केवलमप्रामाण्यकुक्षावेव निक्षेप्तुमर्हः, सन्ति च तादृशानि कानिचित्सुकृतदुष्कृतानि यानि स्वप्नमा-त्रभोग्यमेव फलं प्रसुवत इत्यपि श्रूयन्त आगमप्रवादाः । वेला चेयं प्रभात-प्राया, यस्यां स्वप्नदर्शनं फलं न व्यभिचरतीत्याचक्षते विसंवादहीनवचस इत्यादि विकल्पयन्नेवोत्कटस्वप्नफलोपधानकोटिकज्ञानस्तिमितमानसो यथा-विहितमहर्मुखकार्यमन्वतिष्ठत् ॥ ४१ ॥

देवी तु ततःप्रभृति वृद्धैरुपदिष्टान् धर्मानन्वतिष्ठत् । तथाहि—प्राभाति-

---

नामत्रयवाच्यम्, तदुक्तममरेण,—'चतुर्विधमिदं वाद्यवादित्रातोद्यनामकम्', तस्य स्वप्नसूचितस्य शुभफलस्य प्राप्तिसूचकेनेव जयध्वनिसहितेन च वैतालिकानां बोध-कानां प्रबोधार्थं मङ्गलोच्चारणेन च निद्रां चेतःसम्मीलनात्मिकां वृत्तिम्—अजहा-त्तत्याज, न केवलं निद्रामजहात् किन्तु स्वप्नस्य प्रामाण्यमप्रामाण्यं वेत्यादिकञ्च विचार-यामासेत्याह—**अचिन्तयदिति** । चकारः क्रियासमुच्चायकः । चेतसा संज्ञानात्मकेन चित्तेन मया राजशेखरेण इदं पूर्ववर्णितं किं दृष्टम्, प्रत्यक्षादिप्रमाणेषु स्वप्नस्याऽप-रिगणितत्वेनाह—**स्वप्नप्रामाण्येत्यादि** । आप्तोपदेशादेः स्वप्नेतरस्य प्रमाणस्याऽ-सत्वे केवलं स्वप्नस्य प्रमाणत्वाभिमननेन फलप्राप्तिनिर्णयस्तु लोकेषु वञ्चनैव भवति—इति प्रथमाकोटिः स्वप्नविषये । तात्कालिका तत्समयकृता या भावना चिन्ता तद्-हेतुकत्वस्य सम्भावनायामपि **मुनिवचनस्य**=तपोनिधिवचनस्य संवादितया समानार्थकतया अयं पूर्वोक्तः स्वप्नः केवलम् अप्रामाण्यकोटौ एव निक्षेप्तुं गणयितुं नार्हः नोचितः—किन्तु प्रामाण्यसम्भावनायामपि गणयितुमुचितः इति द्वितीया कोटिः । तृतीयां कोटिमुपन्यस्यति—**सन्तीति** । कानिचित् पुण्यपापानि तादृशानि च सन्ति यानि स्वप्नमात्रभोग्यमेव फलं जनयन्ति इत्यपि शास्त्रवचनानि श्रूयन्ते इति स्पष्टार्थः । चतुर्थीं कोटिमुपपादयति—**वेलेति** । इयं स्वप्नसामयिकी **वेला**=नाडी सञ्जातप्रभातप्राया, यस्यां वेलायां स्वप्नदर्शनं फलं नातिवर्तत इति यथार्थवचस ऋषयः कथयन्ति—इत्यादि विविधान्कल्पान् कुर्वन्नेव—उत्कट उत्कृष्टो यः स्वप्नस्तस्य फलोपधानं फलप्राप्तिस्तत्कोटिकं तद्विषयकं यज्ज्ञानं तेन स्तिमितं निश्चलं मानसं चित्तं यस्य तथाविधः सन् शास्त्रविहितं प्रातःकृत्यं दन्तधावनसन्ध्योपसनादि चकारेत्यर्थः । "प्रत्यूषोऽहर्मुखं कल्यः" इत्यमरः ॥ १४ ॥

गर्भवतीनियमान् प्रतिपादयति—**देवीत्विति** । ततः **प्रभृति**=दोहदचिह्न-

कतरुच्छायेव न वृक्षमूलमाश्रयत्, चक्रवाकीव सन्ध्यासमये विमुक्ताहारा समभवत्, कृष्णलमयीव नोलूखलमुसलसंयोगं लेभे, स्थलकमलिनीव न जलाशयं जगाहे, विभातवेलेव न निर्जनं निशान्तमाससाद, पूगलतेव नोद्वेगमभजत्, बालाकुचस्थलीव न करजरसान्वयमसहिष्ट, पद्मिनीव न दिवसमशयिष्ट, शिशिरनिशीथिनीव न व्यायाममतनोत्, रेवतीव नोल्मुकमधश्चकार, द्वेषरहितेव न कुल्यमाचक्राम, विनीतेव न भूतौ विश्रममाततान, कलिभिन्नेव न तुषमाललम्बे, दमयन्तीव न कलिं सेहे, नैयायिकीव नाव-

---

दर्शनान्तरं राज्ञः स्वप्नदर्शनानन्तरं च **मलयवती** तु शास्त्रज्ञैर्लौकिकज्ञैश्च प्रतिपादितान् नियमानकरोदिति । धर्मानेव दर्शयति—**तथा हीति**। यथा प्राभातकालिकी वृक्षच्छाया स्वमूलं नाश्रयति तथा मलयवती वृक्षमूलं नाश्रयत्, गर्भवत्या वृक्षमूलाश्रयणस्य निषेधात्। यथा **चक्रवाकी** सन्ध्यासमये आहाररहिता भवति तथा राज्यपि सन्ध्यायां निराहारा, चक्रवाकीपक्षे **विशेषतो मौक्तिकानि** आहारो भोजनं यस्या इत्यपि ऊह्यम्। **कृष्णलमयीव**=गुञ्जामयीव, उलूखलमुशलयोर्गर्भवत्या संस्पर्शनिषेधात्, यागे कृष्णलचरौ व्रीहीमवहन्ति इत्यादिवचनप्राप्तस्योलूखलसंयोगस्यायोग्यत्वेन प्राप्त्या उलूखलमुशलसंयोगाभावः, अत उक्तं **नोलूखलेति** । स्थलकमलिन्याः स्थलोत्पन्नत्वाज्जलाशयानवगाहनं स्वतःसिद्धम्, गर्भिण्यास्तु जलाशयावगाहनं निषिद्धम् । विभातवेला यथा निर्जनं भवनं प्राप्नोति तथा मलयवती निर्जनं भवनं नागच्छदिति व्यतिरेकदृष्टान्तः। **पूगलता**=क्रमुकलता यथा उद्वेगं स्वकीयं फलं भजति तथैव सा **उद्वेगं** क्षोभं नाभजदिति व्यतिरेकः। **बालाकुचस्थलीत्यादि** स्पष्टं समानार्थकम् । पद्मिन्याः सूर्यदर्शनाद्विकसितत्वादाह—**पद्मिनीति** । दिवास्वापस्य गर्भिण्या निषेधात् । **शिशिरनिशीथिनी** यथा विस्तारं तनोति तथैव सा व्यायामं कन्दुकक्रीडादिकं नातनोत् । यथा **रेवती**नक्षत्रमुल्मुकं स्रंसमानं तारकं नाधः पातयति तथैव देव्यपि ज्वलदङ्गारं न पदा स्पृशदिति । **द्वेषरहितायाः** कुलीनाक्रमणस्य प्रयोजनाभावः, देव्याः कुल्याक्रमणस्य निषेधः । **विनीतायाः** ऐश्वर्येऽपि विश्रमाभावः, उत्तरोत्तरैश्वर्यस्याकाङ्क्षितत्वात्, राज्यास्तु **भूतौ** भस्मनि विश्रमस्य स्थितेर्निषेधः । **कलिभिन्ना** या काचित् तुषं धान्यत्वचं नाधितिष्ठति तथैव देवी तुषं नाधितस्थौ "न कपालास्थि न तुषं दीर्घमायुर्जिजीविषुः" इति निषेधात् । **दमयन्ती** कलियुगं न सोढवती, तस्याः कलियुगमायाविमोहनाभावात्, देवी तु कलिं=कलहं न चकारेत्यर्थः । **नैयायिकी** यथा अवयवस्य परमाणोर्भङ्गं नाशं नाकरोत्तथैव देवी अवयवानां करचरणानां भङ्गं

यवभङ्गमङ्गीचकार, देवयानीव न मुक्तकचा क्षणमप्यासां चक्रे, निदाघकालकलेव नाशुचित्वमाशिश्रिये, चन्द्रकलेव न निरावरा तस्थौ, परुषावृत्तिरिव शयनवेलायां सरसपदा नासीत्, भूमिरिव नामङ्गलां गिरमुच्चारयामास, मुग्धेव न धीरं जहास, तारेव गुरुशुश्रूषायामवधानं बबन्ध, अपि च सर्वौषधिमिश्रेण पवित्रेण वारिणा स्नाति स्म, मङ्गल्यतरा ओषधीर्मणींश्चाङ्गेषु दधार, अहरहर्महान्ति वस्तूनि श्रोत्रियेभ्यो विश्राणयामास, तृतीयासु व्रतेन भगवतीं कुमारजननीं परितोषयाञ्चकार ॥ ४२ ॥

राजापि गर्भवैगुण्यभयेन तदभिप्रायवेदिनीभिरान्तःपुरिकीभिर्निवेद्यमानमर्थजातं प्रतिदिनमपरिहीयमानमाहारयाम्बभूव ॥ ४३ ॥

अथ देव्याः प्रवहत्यनेहसि निःश्वाससौरभानुसारिमधुकरनिकुरम्बकै-

---

मर्दनं नाङ्गीचकार । देवयानी शुक्रदुहिता यथा मुक्तकचा त्यक्तबृहस्पतिपुत्राऽऽसाञ्चक्रे तथा देवी मुक्तकचा विकीर्णकेशा क्षणमपि नासाञ्चक्रे । बृहस्पतिपुत्रः कचः कामपि विद्यामध्येतुं शुक्राचार्यमाससाद, तत्समये देवयानी कचं विवाहार्थं प्रार्थयाञ्चक्रे, गुरुपुत्रीत्वेन कचो न स्वीचकार, अतो मुक्तकचा देवयानी । ग्रीष्मकालः अशुचिरनाषाढो न भवति, देवी अशुचित्वम् अपवित्रत्वम् नाश्रयतिस्म । चन्द्रकलाया अम्बरसंश्रितत्वं प्रसिद्धं, देवी अम्बरेण वस्त्रेण रहिता न तस्थौ । परुषावृत्तिः गौड्यादिवृत्तिः सरसपदा न भवति तस्या आडम्बरबन्धात्मकत्वात्, देवी तु शयनवेलायां सरसपदा आर्द्रचरणा नासीत् 'नार्द्रपादस्तु संविशेत्' इति निषेधात् । भूमिः पृथ्वी मङ्गलाभाववतीं वाणीं नोच्चारयति पुत्रत्वान्मङ्गलस्य, सा तु कल्याण भाववतीं गिरं नोच्चारयामास, गालिदानादेर्गर्भिण्या विशेषतो निषेधात् । मुग्धा यथा धीरं न हसति तथैव सा धीरमपि न जहास किमुत उच्चैः,—'स्मितं कुलनतभ्रुवामधर एव विश्राम्यति' इत्युक्तेः, गर्भिण्यास्तु हासे विकृतिसम्भावनान्निषेधः । तारा बृहस्पतिपत्नी । अन्यदुभयत्र समानम् । सर्वौषधयश्च—'मुरा मांसी वचा कुष्ठं शैलेयं रजनिद्वयम् । शठी चम्पकमुस्ता च सर्वौषधिगणः स्मृतः ॥ स्पष्टमन्यत् । श्रोत्रियेभ्यः वेदपाठिभ्यः । तृतीयाया गौर्यधिष्ठातृत्वात्तद्व्रतानां तस्यां विहितत्वात् । कुमारजननीं स्कन्दमातरमिति ॥ ४२ ॥

गर्भिणीपतिकर्तृकं दौहृदसम्पादनं प्रतिपादयति—राजाऽपीति । स्पष्टमन्यत् ॥ ४३ ॥

दोहदलक्षणानि दर्शयति—अथेति । अनेहसि=समये गच्छति सति मलयवत्या निःश्वासस्य मुखमारुतस्य यत्सौरभं तदनुसारि तदनुशरणशीलं यद्

तवेन चूचुकच्छलेन च तदन्तर्गतविवस्वदंशप्रसरदंशुजालनिरस्तं तिमिरमिव निरगात्; तत्सन्निधाननिर्वृत्तं चक्रवाकमिथुनमिव पयोधरयुगं पीनतोपचयमापेदे; विकसितमुखकमलाम्भोजिनीवाजृम्भत; राजकरग्रहयोग्या कुमुदिनीव कलेवरलता मन्दतामापेदे, सन्निहिततदुदया पौरन्दरीहरिदिवावदाता बभूव, तन्मरीचिनिचयकञ्चुकिताद्यौरिव विभूषणनक्षत्रनिवहमजहात्, तत्समाधिसमाहितमानसा तपस्विसंसदिव न वचनानि विरचयामास ॥ ४४ ॥

तदानीं च नृपतिस्त्रिविक्रमलीलामिव वलिविलयशालिनीं, कुनृपतिसंपदमिव परिजनकरग्रहणमात्रसंचारिणीम्, असत्कवितामिव मन्दायमानपदन्यासां, पवनगतिमिव निसर्गादूर्ध्वगमनासमर्थां, भ्रमानुमितिमिव विरहितप्रसाधनग्रहां, मीमांसामिव प्रकरणदुर्बलक्रमां, सरसीमिव सुगुरुतरोदरां,

---

भ्रमरकदम्बकं तस्य छलेन चूचुकव्याजेन इव, तस्या देव्या अन्तर्गतो यो विवस्वतः सूर्यस्यांशो भागस्तस्य प्रसरत्प्रसरणशीलं यत्किरणजालं तेन दूरीकृतं अन्धकारं निरगात् बहिर्जगाम । तस्य सूर्यांशस्य सन्निधानेन सन्निकर्षेण आनन्दितं— चक्रवाकयुगलमिव कुचयुगं, पीनतया वृद्धिमापेदे । अजृम्भत=गात्रविनामं चकार । राज्ञः चन्द्रस्य नृपस्य च, करैः=किरणैः हस्तैश्च, ग्रहस्य=ग्रहणस्य, योग्या, चन्द्रकमलिनीव, शरीरलता मान्द्यं प्राप । सन्निहिता सन्निकृष्टा तस्य सूर्यस्य उदयो यस्यां सा पौरन्दरी हरिदिव प्राचीदिगिव धवला आसीत्; तस्य सूर्यस्य किरणसमूहेन कृताच्छादना द्यौरिव विभूषणरूपो यो नक्षत्रनिवहो नक्षत्रसमूहस्तमजहात्—विभूषणानि तत्याजेत्यर्थः—तस्मिन् विवस्वति यः समाधिः कल्पनाहीनं स्वरूपग्रहणं तस्मिन्समाहितमेकाग्रं मानसं चित्तं यस्यास्तादृशी तपस्विसभेव वाक्यानि नोच्चरयामास ॥ ४४ ॥

तदानीं च नृपतिः देवीं मलयवतीम् आकलयन् सकलानां श्वोवसीयानां [ कल्याणानां ] निलयभूतः समपद्यतेत्यन्वयः । देवीं विशिनष्टि- त्रिविक्रमलीलामित्यादिना । बलेः विरोचनसुतस्य विलयशालिनीं=भ्रंशवतीं त्रिविक्रमस्य वामनस्य लीलामिव, राज्ञीपक्षे बलीनां त्रिवलीनां विलयशालिनीं = निरासशालिनीम्, कुनृपतीति—स्पष्टम्, राज्ञीपक्षे परिजनानां सेविकानां करग्रहणमात्रेण हस्तालम्बनमात्रेण सञ्चारिणीं गमनवतीम्, असत्कवितायां पदन्यासा मन्दायमानाः, तस्यास्तु चरणन्यासाः, पवनगतिर्निसर्गात्तिर्यग्गमनवती अत ऊर्ध्वगमनाऽसमर्था, देव्यपि गर्भभरालसतया ऊर्ध्वगमनासमर्था । भ्रमजन्यानुमितिस्त्यक्तप्रकृष्टहेतुज्ञाना भवति, बिले मूषकपुच्छदर्शनात्सर्पानुमितिवत्, सा तु विरहितः

मन्दाकिनीमिवान्तःसन्दानितकुमारां, कैकेयीमिव जातमन्थरोल्लासां, कुन्तीमिव धृतपाण्डुभावां, रुक्मिणीमिव कृष्णाकलितकुचाग्राम्, आस्तिकबुद्धिमिव निरालम्बनस्थितिमसहमानां, हिमवत्सानुभुवमिव निबद्धविविधसिद्धौषधिं, वेलामिव ग्रहापहारिमणिगणप्रसाधितां, नीतिमिव कृतमन्त्ररक्षां, गोपालबालकेलिमिव विहितपूतनानिरासोपायां,–देवीं मलयवतीमाकलयन्निलयभूतः सकलानां श्वोवसीयानां समपद्यत ॥ ४५ ॥

सा च निर्गमनसमसमयमेव कुमारमालिङ्गितुकामायाः कीर्त्तेः कान्त्येव, जगद्विजयश्रियः स्मितरुचेव, भूमेः कर्णावतंसकेतकपरागेणेव, सरस्वत्या गात्रविच्छुरितघनसाररजसेव, धृतिवध्वाः कुचचन्दनद्रवेणेव, औदार्यचन्द्रमसश्चन्दनचन्द्रिकयेव, धैर्योदधेः फेनपटलेनेव, माधुर्यमन्दारस्य कुसुमसमूहे-

---

त्यक्तः **प्रसाधनस्य** मण्डनस्य ग्रहः आग्रहो यया सा ताम्। मीमांसायां प्रकरणप्रमाणापेक्षया क्रमप्रमाणं दुर्बलं "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षात्," 'उभयाकाङ्क्षा प्रकरणम्' 'क्रमः स्थानम्,' अन्यत्र प्रकृष्टकार्यकरणे दुर्वलः हीनः क्रमः परिपाटी यस्यास्ताम् । **सरसीत्यादि** स्पष्टम्। **मन्दाकिनी** वियद्गङ्गा तामिव अन्तर्मध्ये सन्दानितो बद्धः [स्थापित इत्यर्थः] कुमारः स्कन्दो यस्यास्ताम्, अन्यत्र **कुमारो** बालकः। कैकेयीपक्षे **मन्थरा** राक्षसी, अन्यत्र मन्दगतिः। **पाण्डौ**=स्ववल्लभे, राज्ञीपक्षे–**पाण्डुभावो**=धूसरता। रुक्मिणीपक्षे कृष्णः प्रसिद्धः, अन्यत्र मेचकवर्णः। **आस्तिकेति** स्पष्टम्। हिमाचलप्रस्थभूमिमिव निबद्धा उत्पन्ना विविधा नानाप्रकारा दिव्यौषधयो यस्यां, राज्ञीपक्षे **निबद्धा** कृतग्रन्थिबन्धना। **वेलामिव**=समुद्रतटमिव, ग्रहेण ग्रहणेन अपहारिणोऽपहरणयोग्या ये मणिगणास्तैः प्रसारितां भूषिताम्, अन्यत्र **ग्रहाणां** बालग्रहाणां स्कन्दापस्मारादीनामपहारिणो दूरीकरणसमर्था ये मणिगणा रत्नजातयस्तैर्भूषितामित्यर्थः। नीतिपक्षे मन्त्री गोप्यः, अन्यत्र जप्यः। गोपालबालपक्षे **पूतना** प्रसिद्धा, राज्ञीपक्षे **पूतना** बालग्रहविशेषः–एतादृशीं **मलयवतीं** पश्यन्; क्रियासम्बन्धः पूर्वमुक्तः ॥ ४५ ॥

**सा च** धवलतामङ्गीचकारेत्यन्वयः। धवलतासम्पादकान्युत्प्रेक्षते—**निर्गमनेत्यादिना** । **निर्गमनसमसमयमेव**=उत्पत्तितुल्यकालमेव **कुमारं** बालकमाश्लेष्टुकामायाः **कीर्तेः** समज्ञायाः कान्त्या इव–'धवलतामङ्गीचकार' इत्यनेनान्वयः। एवमुत्तरत्र। भुवनविजयलक्ष्म्या ईषद्धासकान्त्येव,–भुवः कर्णभूषणभूतकेतकपुष्परजसेव,–**सरस्वत्या** वाण्या गात्रसम्बद्धकर्पूरधूल्येव,–**धृतिवध्वाः** तुष्टिवध्वाः स्तनसम्पृक्तचन्दनकर्दमेनेव,—औदार्यरूपस्य चन्द्रस्य चन्दनरूपया

नेव, स्वप्नकाले कवलीकृतस्य कुमुदबन्धोः कौमुदीसमुदयेनेव, अवगाह्यमानानन्ददुग्धोदन्वदुत्कलिकाकलापेनेव, दुह्यमानकेसरिकामिनीपयोरसेनेव, परितुष्टानां कुलप्रसूतिदेवानां, प्रसादावदाताभिरपाङ्गभङ्गिभिरिव धवलतामङ्गीचकार ॥ ४६ ॥

अथाप्ततमेष्वनेकशःकृतकुमारभृत्याकर्मसु सन्निकर्षमाकलयत्स्वगदङ्कारेषु, अधिकबद्धावधानासु वृद्धधात्रीषु, प्राप्ते वैजनने मासि, शङ्कुयन्त्रादिभिरविसंवादिभिरुपायैराकलितायां कालकलायां, ग्रहगतिगणितागमाग्रगण्यैर्गणकगणैर्भागशो गृहीते लग्ने, सार्वभौमाविर्भावयोग्यायां वेलायां समुपकल्पिते कुमारजन्मोपयोगिन्युपकरणजाते, मन्दंमन्दमनुभूयमानायां प्रसववेदनाया-

---

ज्योत्स्नयेव,–धैर्यरूपस्य समुद्रस्य हिण्डीरसमूहेनेव,–माधुर्यरूपस्य मन्दारस्य देववृक्षस्य पुष्पवृन्देनेव,–स्वप्नदशायां ग्रासीकृतस्य चन्द्रस्य ज्योत्स्नासमूहेनेव,— **अवगाह्यमान** आलोड्यमानो य आनन्ददुग्धस्य उदन्वान् समुद्रस्तस्य उत्कलिकातरङ्गसमूहेनेव,–**दुह्यमाना** या केसरिकामिनी–सिंही तस्याः पयोरसेनेव,–**परितुष्टानां** प्रसन्नानां कुलदेवतानां **प्रसादेन** प्रसन्नतया अवदाताभिः धवलाभिः **अपाङ्गभङ्गिभिरिव** नेत्रान्तरचनाभिरिव–धावल्यम् **अङ्गीचकार**=स्वीचकार । धवलताप्राप्तिः गर्भिण्याः स्वभावः ॥

दोहदलक्षणरूपं कुसुमं मन्दारमञ्जर्याः ।
गर्भे भर्गकरेभ्यः समर्प्यते सर्गदेवेभ्यः ॥ ४६ ॥

**अथ वैजनने मासि प्राप्ते महादेवी मलयवती सकलजलधिवलयवसुन्धरासुत्रामतार्हं सुतमसूतेति योजना। अथ**=दोहदचिह्नधारणानन्तरं, **जनने मासि** दशममासे प्राप्ते, आप्ततमेषु यथार्थकारिषु–**अनेकशः** अनेकप्रकारेण कृतं कुमारभृत्यायाः कुमाररक्षायाः कर्म यैस्ते तेषु—**अगदङ्कारेषु**= वैद्येषु सन्निकर्षं सान्निध्यम् आकलयत्सु सत्सु, ( 'रोगहार्यगदङ्कारो भिषग्वैद्यौ चिकित्सके' इत्यमरः ) पुनः **धात्रीषु**–अधिकं बद्धमवधानं प्रणिधानं याभिस्तासु सतीषु, वै निश्चये, **अविसंवादिभिः** विप्रलम्भरहितैः **शङ्कुयन्त्रादिभिः**=घटीयन्त्रादिभिरुपायैः साधनैः **कालकलायां** समयविभागे आकलितायां निश्चितायां, ग्रहगतिविषयको गणितागमो गणितशास्त्रं तस्मिन्नग्रगण्यैः प्रधानैः **गणकगणैः** ज्योतिर्विद्वृन्दैः भागशो नवमांशादिभागविशिष्टतया लग्ने राशीनामुदये गृहीते ज्ञाते सति–सर्वस्या भूम्या ईश्वरः सार्वभौमस्तस्याविर्भावस्य जननस्य योग्यायां वेलायां, कुमारस्य जन्मोपयोगिनि उपकरणजाते सामग्रीसमूहे उपकल्पिते सम्पादिते सति, प्रसववेदनायां प्रसूतिपीडायां मन्दं-मन्दं शनैः शनैः अनुभूयमानायां

मौत्सुक्याकलितेषु सकलान्तःपुरलोकेषु, मन्दाकिनीव स्कन्दं, रेणुकेव रामं, कौशल्येव दशास्यशासनं, रोहिणीव रेवतीरमणं, देवकीव दानवसूदनं, पुलोमजेव जयन्तं,[1] शकुन्तलेव भरतं, कुन्तिभोजसुतेव धनञ्जयं,—महादेवी मलयवती सकलजलधिवलयवसुन्धरासुत्रामतार्हं सुतमसूत ॥ ४७ ॥

ततः ससंभ्रमचलदवरोधसुन्दरीजनमुक्तावलीगलितमुक्ताजालकैर्लाजसुमनोभिश्च प्रकीर्यमाणावरोधाङ्गणः, समुन्मिषद्भिर्माणिक्यमयूखैः सिन्दूरपरागैश्च स्थगितगगनाभोगः, वादित्रसांराविणैर्लोककोलाहलैश्च समाक्रम्यमाणदिक्चक्रः, श्रोत्रियैर्धात्रीभिश्च समाधीयमानबालग्रहः, राज्ञो हृदयेन विग्रहेण च क्रियमाणरसावगाहनः, पुरोधसा वारवधूकरतालिकाभिश्च संप्रीयमाणशिखिमण्डलः, द्विजगणैः प्रियश्रोतृभिश्च यथास्पृह गृह्यमाणमहाधनपूर्णपात्रः,

---

सत्यां, सर्वेषु अन्तःपुरवासिषु औत्सुक्येनोत्कण्ठया आकलितेपु पूरितेषु सत्सु—गङ्गा कार्तिकेयमिव। **रामं** परशुरामम्। **रेवतीरमणं** बलरामम्। कुन्तिभोजसुता=कुन्ती **धनञ्जयम्** अर्जुनमिव—इत्याद्युपमानविशिष्टं, पुनः सकला जलधयो वलयः कटका यस्यास्तस्या 'वसुन्धराया' धरित्र्याः,—सुष्ठु त्रायते इति सुत्रामा तस्य भावः सुत्रामता तदर्हं तद्योग्यम् इन्द्रत्वयोग्यमित्यर्थः, इन्द्रसदृशमिति भावः, **सुतं** पुत्रं **प्रसूत**=सुषुवे ॥ ४७ ॥

**ततः कुमारजननोत्सवः प्रावर्ततेत्यन्वयः**। कथम्भूतः कुमारजननोत्सव इत्याकाङ्क्षायामाह—**ससम्भ्रमचलदित्यादि**। ससम्भ्रमं सादरं चलन्तो ये अवरोधसुन्दरीजना अन्तःपुराङ्गनाजनास्तेषां मुक्तावलीभ्यो मुक्ताहारेभ्यो गलितानि स्रस्तानि मुक्ताजालकानि तैः, **लाजसुमनोभिः** लाजरूपैः पुष्पैः लाजसहितैः पुष्पैश्च प्रकीर्यमाणमवाकीर्यमाणमवरोधाङ्गणमन्तःपुराजिरं यस्मिंस्तादृशः, पुनश्च समुन्मिषद्भिः उन्नमद्भिः माणिक्यमयूखैः रक्तमणिकिरणैः सिन्दूररजोभिश्च स्थगितः संवृतो गगनस्य नभस आभोगो विशालता येन तादृशः—पुनश्च **वादित्रसांराविणैः**=वाद्यध्वनिभिः जनकलकलैश्च सम्यक् आक्रम्यमाणमापूर्यमाणं दिशां चक्रं वृन्दं यस्मिन् तादृशः, पुनश्च छान्दसैरुपमातृभिश्च **समाधीयमानाः** संशम्यमानाः बालग्रहाः स्कन्दपूतनादयो यस्मिन्—तादृशः, पुनश्च **राज्ञो** राजशेखरस्य चित्तेन शरीरेण **च** क्रियमाणं वितन्यमानं रसे आह्लादे अवगाहनमालोडनं यस्मिन् सः, पुनश्च—पुरोहितेन वारवधूनां वाराङ्गनानां करतालिकाभिर्हस्तध्वनिभिश्च सम्यक् प्रीयमाणः प्रसाद्यमानः शिखिनामग्नीनां मयूराणां च मण्डलः समूहो यस्मिंस्तथाभूतः, पुनश्च—ब्राह्मणैः **प्रियश्रोतृभिः**=राजसुतोत्पत्तिरूपप्रियकथाश्रोतृभिश्च यथा-

---

(१) उपदानवीव दुष्कन्दम् इत्यधिकं द्वि० पु०

कारानिरुद्धैर्जनानन्दैश्च विमुच्यमानश्रृङ्खलः, भूषणगणैर्जनसमाजैश्च कञ्चुकिताङ्गनः, समर इव विलुण्ठ्यमानरथ्यः, ग्रहग्रास इव वाच्यावाच्यविवेकविकलः, वसन्तोत्सव इव गीयमानवहलाश्लीलपदकः, कलिकाल इवानवबुध्यमानकुलयुवतिवेश्याविशेषः, वेतालावेश इवोन्मादितजनः, जलधिरिव सर्वतोमुखदानतर्पितवाडवः, म्लेच्छदेश इव सञ्जायमानानेकमातङ्गब्राह्मणसम्बन्धः, सूर्योदय इव समन्ताद्विश्राण्यमानांशुकः, अविवेक इवाविशेषदृश्यमानसुवर्णदुर्वर्णः, अश्वमेधप्रयोग इव पुँश्चलीविधीयमानब्रह्मचारिस-

स्पृहं यथेच्छं गृह्यमाणं स्त्रीक्रियमाणं महाधनसहितं पूर्णपात्रं यस्मिन् तादृशः, कर्मान्तदेयं पूर्णपात्रं द्विजपक्षे, उपहारतया देयं प्रियश्रोतृपक्षे, पुनश्च कारानिरुद्धैः संयतैः जनानामानन्दा आनन्दथवस्तैश्च विमुच्यमानानि श्रृङ्खलानि लोहरज्जवो बन्धनानि च यस्मिन्नेतादृशः, जनानन्दपक्षे विमुच्यमानश्रृङ्खलं नाम आनन्दस्य निरवधित्वम्; 'श्रृङ्खलं पुंस्कटीकाञ्च्यां लोहरज्जौ च बन्धने' इति हैमः, पुनश्च अलङ्कारसमूहैर्लोकसमूहैश्च कञ्चुकितं सञ्जातकञ्चुकमङ्गनं चत्वरं यस्मिंस्तादृशः, 'अङ्गनं चत्वराजिरे' इत्यमरः, अङ्गणमिति पाठे पृषोदरादित्वाण्णत्वम्; पुनश्च सङ्ग्राम इव विलुण्ठ्यमाना रथ्या प्रतोली यस्मिन् सः, पुनश्च ग्रहस्य राहोः कर्त्तुर्ग्रासो ग्रसनमुपराग इत्यर्थः, वाच्यावाच्ययोर्विवेके विकलोऽसमर्थः, राहुकर्तृको ग्रासो नाम गलबिलाधःसंयोगानुकूलो व्यापारः, स च राहोर्न सम्भवति शिरोमात्रत्वात्तस्य-इति वाच्यविकलत्वम्, उपरागजनकता त्वस्ति इति अवाच्यविकलत्वम्, उत्सवस्तु नानाप्रकाराणां शब्दानां श्रूयमाणत्वाद्वाच्यावाच्यविकलः, पुनश्च वसन्तोत्सव इव होलोत्सव इव गीयमानानि बहलानि बहूनि अश्लीलपदानि लज्जाजनकानि पदानि यस्मिन् सः, पुनश्च—कलिसमय इव अनवबुध्यमानः अनवगम्यमानः कुलयुवत्या वेश्यायाश्च विशेषो भेदो यस्मिन्नेतादृशः—पुनश्च—भूतावेश इव उन्मादिता उन्मादवन्तः कृता जना यस्मिंस्तादृशः, पुनश्च—समुद्र इव सर्वतोमुखस्य जलस्य दानेन तर्पितो वाडवो वडवानलो येनेतादृशः समुद्रः, सर्वतोमुखं यद्दानं विश्राणनं तेन तर्पिता वाडवा ब्राह्मणा यस्मिन् तादृश उत्सवः,.पुनश्च म्लेच्छदेश इव प्रत्यन्तदेश इव सम्यक् जायमानः अनेकेषां मातङ्गानां चाण्डलानां ब्राह्मणानां च सम्बन्धः संस्पर्शो यस्मिन् तादृशः, पुनश्च—सूर्योदयपक्षे—अंशव एव अंशुकाः किरणाः, उत्सवपक्षे समन्तात् सर्वतो विश्राण्यमाणानि अंशुकानि वस्त्राणि यस्मिन्सः; पुनश्च-अविवेकपक्षे अभेदेन दृश्यमानं सुवर्णं हेम दुर्वर्णं रजतं यस्मिन्—उत्सवपक्षे सुवर्णा ब्राह्मणादयो दुर्वर्णा अधमजातयो यस्मिन् सः; पुनश्च-पुंश्चल्या क्रियमाणो ब्रह्मचारिणो वर्णिनः समाक्रोशः निन्दा

माक्रोशः, पवनप्रचार इवानिवारितबाह्याभ्यन्तरप्रवेशः, वृत्तसंघ इव माणवकक्रीडिताकुलः, नभस्यनदीपूर इव निर्मर्यादवृद्धः, वसुदेवोद्वाहविधिरिव दीयमानरोहिणीलक्षः, अद्भुतोदय इव दृश्यमानद्विजराजभूमिसंसर्गः, अष्टावक्रसंवाद इव महीयमानवन्द्युपशोभितः, रामायणसङ्ग्राम इव क्रियमाणयातुधानप्रतिकूलप्रयोगः, नाटकारम्भ इवानुष्ठीयमाननान्दीप्रयोगः, वैयाकरणविषयविशेष इवान्तरङ्गबहिरङ्गविचारहीनः, शर्यातियाग इव प्रमोदोच्चलदस्रः, समुद्रकुक्षिदेश इवान्तर्गतानेकमहीभृत्प्रियः, यवक्रीत-

---

यस्मिंस्तादृश अश्वमेधप्रयोगः, स इव **उत्सवोऽपि** (अश्वमेधप्रयोगस्तु यजुःसंहितायां २३ अध्याये द्रष्टव्यः); पुनश्च—पवनस्य वायोः प्रचारो गतिः—न निवारितो बाह्याभ्यन्तरप्रवेशो यस्मिंस्तादृश **उत्सवोऽपि**; पुनश्च **वृत्तानां** पद्यानां संघः समूहो माणवकक्रीडितनाम्ना वृत्तेनाऽऽकुलो व्याप्तो भवति—तथैवोत्सवोऽपि **माणवकानां** बालकानां क्रीडितेन विहारेणाऽऽकुलः संकुलो भवति; पुनश्च **नभस्यस्य** भाद्रमासस्य नदीनां पूरः प्रवाह इव,—उत्सवोऽपि निर्मर्यादं निरवधि वृद्धः परिपूर्णः; पुनश्च—**वसुदेवस्य** शूरसुतस्य उद्वाहविधिर्विवाहविधिः—दीयमाना विश्राण्यमाणा **रोहिणी** बलदेवमाता लक्षं लक्ष्यं यस्मिन् तादृशः, उत्सवपक्षे तु दीयमाना वितीर्यमाणा या रोहिण्यो गावो लक्षाणि दशायुतानि यस्मिन् तादृशः, पुनश्च—**अद्भुतोदयः** उदयकालप्रवृत्तपौर्णमासीचन्द्रोदयः दृश्यमानो द्विजराजस्य सुधांशोर्भूमिसंसर्गः क्षितिजसंबन्धो यस्मिंस्तादृशः, स इव उत्सवोऽपि दृश्यमानः **द्विजानां** ब्राह्मणानां राजभूमिसंसर्गो राजभवनप्रवेशरूपः सम्बन्धो यस्मिन् तादृशः; पुनश्च—अष्टावक्रनाम्नः ऋषेः संवादः **महीयमानः** आद्रियमाणो यो वन्दी तेनोपशोभितः, उत्सवे वन्दी=वैतालिकः, पुनश्च-रामायणसङ्ग्रामः क्रियमाणो विधीयमानो यातुधानानां रक्षसां प्रतिकूलः प्रतिलोमः प्रयोगोऽनुष्ठानं यस्मिंस्तादृशः—उत्सवप्रयोगोऽपि तथाविधः 'अपक्रामन्तु भूतानि' इत्यादि तथा रक्षोहणमन्त्रजातैश्च यातुधानापक्रमस्य विधीयमानत्वात्,नाटकपक्षे **नान्दी** मङ्गलाचरणम्,उत्सवे नान्दीमुखपूजनम्, पुनश्च—वैयाकरणानां विषयविशेषोऽजानन्तर्यादिः 'अधीत्य' 'प्रेत्य' इत्याद्युदाहरणविषये अन्तरङ्गबहिरङ्गविचारेण हीनो भवति'नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः' इति निषेधात्, तथैवोत्सवोऽपि अन्तरङ्ग आत्मीयो बहिरङ्गो बाह्यो जनस्तस्य विवेकेन हीनो भवति; पुनश्च—शर्यातेर्वैवस्वततृतीयपुत्रस्य यागः, प्रमोदेन उच्चलावागतौ दस्रौ नासत्यौ यस्मिन् तादृशः, स इव उत्सवोऽपि प्रमोदेन हर्षेणोच्चलन्ति अस्राणि आनन्दाश्रूणि यस्मिन् तादृशः; पुनश्च—समुद्रस्य **कुक्षिदेश** इव उदर-

कथाबन्ध इवार्चावसुपरितोषितदेवपितृकः, जैमिनीयप्रयोग इव दुर्लभदृष्टान्तोपनयः, अमृतमथनसमय इव विभाव्यमानलक्ष्मीस्वरूपः, वेदान्तनिबन्ध इवापरित्यक्तात्ममात्रसत्ताकः, दमयन्तीपरिणय इव दृष्टविधयानादृतदिक्पालः, त्रिपुरदाह इव महासंभ्रममयः, राजसूय इव क्षत्त्रस्य धृतिमिष्टिं दधानः, सौभवध इव निहतप्रतिरूपानकदुन्दुभिः, निवातक-

प्रदेश इव अनेके महीभृतां पर्वतानां प्रियाः पुत्रादयो मेनाकादयो यस्मिन्, उत्सवोऽन्तर्गता अनेकेषां महीभृतां राज्ञां प्रियाः मित्राणि यस्मिन् तादृशः; पुनश्च—यवक्रीतस्य कथाप्रबन्धः अर्चावसुनाम्ना मुनिना परितोषिता देवाः पितरश्च यस्मिन् तादृशः ( बहुव्रीहौ 'नद्यृतश्चेति'कप् ) उत्सवस्तु अर्चाभिः पूजाभिः, वसुभिः दीयमानैर्धनैः परितोषिता देवाः पितरश्चेति पूर्ववत्; पुनश्च—जैमिनीयानां मीमांसकानां प्रयोगोऽनुमानप्रयोगः दुर्लभौ दृष्टान्तोपनयौ यस्मिन् तादृशः; उत्सवस्तु दुर्लभो दुष्प्राप्यो दृष्टान्तस्य सदृशस्य उत्सवान्तरस्य उपनयः प्राप्तिर्यस्मिन्सः, पुनश्च—अमृतमथनसमयो—विभाव्यमानं ज्ञायमानं लक्ष्म्याः स्वरूपं यस्मिन् तादृशः, उत्सवोऽपि तथैव; पुनश्च—वेदान्तस्याऽध्यात्मविद्याया निबन्धो विवेचनात्मको ग्रन्थः, न परित्यक्ता हापिता आत्ममात्रस्य चैतन्यमात्रस्य सत्ता विद्यमानता यस्मिन् तादृशः, 'ब्रह्मसत्यं जगन्मिथ्या जीवो ब्रह्मैव नाऽपरः' इति तत्सिद्धान्तात्, स इव उत्सवोऽपि न परितः कुत्रापि त्यक्ता आत्मनः स्वस्य मात्राया अंशस्य सत्ता भवनं येन सः, तदानीं सर्वत्र नृपसुतोत्सवस्य क्रियमाणत्वात्, दमयन्त्या भैम्या विवाहः न दृष्टस्य प्रत्यक्षस्य विधा निर्निमेषत्वनीरजस्कत्वादिदर्शनरूपः प्रकारः, तया आदृता दिक्पाला इन्द्रादयश्चत्वारो यस्मिंस्तादृक्, स इव उत्सवोऽपि दृष्टस्य प्रत्यक्षपूजनादिकस्य विधया पूर्वादिदिक्स्थानरूपया न अनादृता 'सह सुपेति समासः' द्वौ निषेधार्थकौ प्रकृतार्थदार्ढ्यकरौ इति नियमादवश्यपूजिता दिक्पाला इन्द्रादयो दशलोकपाला यस्मिन्सः, त्रिपुरस्याऽसुरस्य दाहस्त्रिपुरारिकृतः, महान् संभ्रमः साध्वसं यस्मिंस्तादृशः, स इव उत्सवोपि महान् संभ्रम आदरो यस्मिंस्तादृशः 'संभ्रमः साध्वसेऽपि स्यात्संवेगादरयोरपि' इति मेदिनी, पुनश्च—राजसूयो यागः क्षत्रस्य क्षत्रियस्य धृतिं धैर्यतोषदायिकां धृतिनामिकां च इष्टिं यागाङ्गं दधानो धारणकर्ता भवति, स इव उत्सवः क्षत्रस्य इष्टिम् अभिलषितां धृतिं धैर्यं दधानः कुर्वन्, तादृशोत्सवे क्षत्रियस्य रक्षकत्वात्; पुनश्च—सौभस्य शाल्वविमानस्य **वध इव** नाश इव—सौभवधोपाख्यानमिवेत्यर्थः, निहतो नाशितः प्रतिरूपः कृत्रिमोऽनकदुन्दुभिर्वसुदेवो यस्मिन् तादृशः, उत्सवोऽपि निहतास्ताडिताः प्रतिरूपा अनुरूपाः आनकाः पटहा दुन्दुभयो भेर्यश्च यस्मिन्सः; पुनश्च—निवातकवचसमञ्ज-

वचनिवर्हणदिवस इव पुरुहूतसूताभिनन्द्यमानविजयः कुमारजननोत्सवः प्रावर्त्तत ॥ ४८ ॥

यत्र स्वतन्त्रीकृतगतयश्चित्ररथाग्रेसरा गन्धर्वा दिवि गायन्तो भुवि च दीयमाना अदृश्यन्त। लक्ष्यतिलका वहिर्मुखदृश्याश्चाप्सरोगणा अन्तरिक्षे नृत्यन्तः क्षितौ च प्रवहन्तोऽलक्ष्यन्त। यत्र च सुमथ्यमानमहार्णवसमुद्गीर्णकोलाहलाशङ्कया मन्दरकन्दराभ्यन्तरनिवासिना केसरिकुलेन, कैटभान्तकप्रयुक्तसुदर्शनोन्मुक्तदानवीजनगर्भस्रावनिदानप्रचण्डाट्टहासविभ्रमेण बलिनिलयालयेन दानवगणेन, समसुप्तिसमयसमुदितपुष्करावर्तकप्रभृतिपयोधर-

कानामसुराणां निवर्हणदिवस इव नाशदिवस इव पुरुहूतसूतेन मातलिनाऽभिनन्द्यमानः विजयोऽर्जुनो यस्मिन्, उत्सवोऽपि पुरुहूताः सर्वत आकारिता ये सूता वन्दिनस्तैरभिनन्द्यमानः अनुमोद्यमानो विशिष्टो जय उत्कर्षप्राप्तिर्यस्मिन्सः,—कुमारस्य जननोत्सवः प्रववृते ॥ ४८ ॥

कुमारजननोत्सवे वाद्यं वर्णयति–यत्रेति। यत्र=यस्मिन्नुत्सवे स्वतन्त्रीकृताः स्वायत्तीकृता गतयो मार्गा यैस्ते, चित्ररथोऽग्रेसरः पुरस्सरो येषान्ते गन्धर्वा देवयोनिविशेषाः दिवि अन्तरिक्षे, गानं कुर्वन्तः,-अदृश्यन्ताऽवालोक्यन्त; भुवि च= भूमौ चित्राणां विचित्राणां रथानामग्रेसरा अग्रगामिनो गन्धर्वा वाजिनः दीयमाना वितीर्यमाणा अदृश्यन्तेत्यन्वयः। 'चित्राङ्गदश्चित्ररथः प्रियंवदसुदर्शनः' 'हाहा हूहूश्चैवमाद्या गन्धर्वाः' इत्यमरः। 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' इति वाजिपर्यायेप्यमरः। यत्रेत्यनुषङ्गः। लक्ष्यं तिलकं तमालपत्रं यासान्तादृश्यो बहिरवगुण्ठनाद् मुखं यासान्ता अत एव दृश्या अप्सरस्समूहा गगने नृत्यं कुर्वन्तः, भूमौ च राजालयं चलन्तोऽदृश्यन्तेत्यर्थः। यत्र च=(उत्सवे) महतामातोद्यानां निनादः समुल्लसितवानित्यन्वयः। कैः कथं श्रूयमाण इत्याह—सुरासुरेत्यादि। मन्दरस्य कन्दराभ्यन्तरे दर्यभ्यन्तरे निवसता केसरिसमूहेन सुरासुरैर्देवासुरैर्मथ्यमानो योऽर्णवस्तेन समुद्गीर्णः लक्षणया प्रकाशितः, उच्चरितः यः कोलाहलस्तस्य शङ्कया सन्देहेन श्रूयमाणः, बलिनिलयालयेन पातालवासिना दानवगणेन असुरसमूहेन कर्त्रा कैटभान्तकेन मधुसूदनेन प्रयुक्तं यत्सुदर्शनं चक्रं तेनोन्मुक्ताः स्रस्ता ये दानवीजनानां=बलिविरुद्धानां ( बलेर्भावीन्द्रत्वाद्देवभावं गमिष्यमाणत्वात्) गर्भा भ्रूणास्तेषां स्रावस्य निदानेन कारणेन यः प्रचण्डाट्टहासस्त-

(१) लक्ष्यतिलका वहिर्मुखाश्चाप्सरोगणा इति द्वि० पु० पाठः।

स्तनितप्रतिपत्त्या दिग्वारणनिवहेन, हिरण्यपुरमथनप्रवृत्तपार्थप्रयुक्तपाशुपतप्रहरणप्रकाशितविश्रृङ्खलप्रणादबुद्ध्या पारावारोदरवृत्तिभिर्जरत्तरग्राहैः, ओषधीसमाहरणोद्यतहनुमत्सिंहनादभ्रान्त्या लङ्कानिलयेन निशाचरनिचयेन, दाशरथिभुजसमाकर्षणभज्यमानधूर्जटिधनुर्ध्वानधिया महेन्द्राद्रिबद्धसमाधिना भगवता भार्गवेण, खण्डपरशुचरणाङ्गुष्ठपीडितदशवदननिष्ठ्यूतनिष्ठुरनिनादमनीषया कैलासवासिना प्रमथयूथेन श्रूयमाणो महतामातोद्यानां निनादः समुल्लसितवान् ॥ ४९ ॥

यत्र च सविलासबाहुवल्लिसमुद्वेलनविधासु चम्पकदोलामयमिव, विलोचनावर्तितेषु नीलोत्पलमयमिवाऽऽकाशं दर्शयन्त्यो; मञ्जीरशिञ्जितेषु चरणभूमितलाभिहतिवेदनामिवावेदयन्त्यो, निःश्वासमारुतामोदसमावर्जितमधु-

---

स्य विभ्रमेण सम्भ्रमेण श्रूयमाणः, एवं सर्वत्र तृतीयान्तानां 'श्रूयमाण' इत्यनेनान्वयः, पुनः—**दिग्वारणनिवहेन** दिग्गजसमूहेन समेषां सर्वेषां सुप्तिसमये समुदिताः पुष्करावर्तकप्रभृतयो ये पयोधरास्तेषां स्तनितस्य गर्जितस्य प्रतिपत्त्या ज्ञानेन,—पुनः **पारावारोदरवृत्तिभिः**=समुद्रोदरवासिभिः अतिवृद्धग्राहैः हिरण्यपुरस्य तन्नाम्नोऽसुरस्य मथने नाशने प्रवृत्तो यः पार्थस्तेन प्रयुक्तं यत्पाशुपतप्रहरणं तन्नामकास्त्रं तेन प्रकाशितो यो विश्रृङ्खलप्रणादः महाध्वनिस्तस्य बुद्ध्या,—पुनः **लङ्कानिलयेन**=लङ्कावासिना राक्षससमूहेन **ओषध्याः** सञ्जीविन्याः सम्यगाहरणे उद्यतः प्रवृत्तो यो हनुमान् तत्कर्तृको यः सिंहनादस्तस्य भ्रान्त्या,-पुनः **महेन्द्राद्रौ** बद्धः कृतः समाधिश्चित्तैकाग्रता येन **भगवता** परशुरामेण दाशरथेः रामस्य भुजाभ्यां समाकर्षणेन भज्यमानं यद्धूर्जटिधनुस्तस्य ध्वानः शब्दस्तस्य धिया ( 'ध्वनिध्वानरवस्वनाः' इत्यमरः )—**कैलासवासिना** तत्र स्थितेन **प्रमथसमूहेन** खण्डपरशोः शिवस्य चरणाङ्गुष्ठेन निपीडितो मर्दितो यो दशवदनः रावणस्तस्य निष्ठ्यूतस्य ष्ठीवनस्य यो निष्ठुरः कठोरो निनादो ध्वनिस्तस्य मनीषया-श्रूयमाणः **महतां** बृहतामातोद्यानां वादित्राणां निनादः शब्दः समुल्लसितवान् प्रकाशितवान् ॥४९॥

**यत्र च वारवर्णिन्यः समनृत्यन्—इति योजना।** सविलासं यथास्यात्तथा यद् बाहुवल्लीनां समुद्वेलनं चालनं तस्य विधासु प्रकारेषु, चम्पकपुष्पस्य दोलामयमिव प्रेङ्खामयमिव आकाशं दर्शयन्त्यो, विलोचनानां नेत्राणामावर्तितेषु परावर्तितेषु आकाशं नीलोत्पलमिव दर्शयन्त्यो—'**वारवर्णिन्यः समनृत्यन्**' इत्यनेनान्वयः सर्वत्र, पुनः—**मञ्जीरशिञ्जितेषु**=नूपुरध्वनिषु चरणैर्या भूमितलस्याभिहतिस्ताडनं तज्जनितां पीडामिवावेदयन्त्यः,—पुनः—निःश्वासमारुतस्य

करकुलगरुदुदयदनरुन्तुदमरुद्विधीयमानस्वेदवारिबिन्दुप्रतिक्रियास्तद्भयमूलास्विव भ्रमणलीलासु निपतितकर्णावतंसकेतकीकिसलयैर्यूनां मनांसि करपत्त्रैरिव दारयन्त्यो, भ्रमिविभ्रमेष्वपि कर्णोत्पलकबरीकुसुममिलनेनानवाप्तमुखवियोगदुःखभ्रमरा रभसभग्नहारमौक्तिकजालकैः सामाजिकानां मनोनिवासिनं मकरकेतनं कुसुमाञ्जलिभिरिवार्चयन्त्यो, वलयावलीकलकलैः सहस्रदीधितिमिलनवाञ्छयेवोपरि प्रतिष्ठासमानामम्बरकोकनदानामुद्गमननान्दीमिव विभावयन्त्यो वारवरवर्णिन्यः समनृत्यन् ॥ ५० ॥

अथ प्रमदपरवशो नरपतिराहितस्नानो विशदाम्बरसंवीतस्सौरभेयीरपरिमेयास्तपनीयं चागणनीयं श्रोत्रियेभ्यो विश्राण्य, बुद्धिनिधिना सार्द्धमन्तः

य आमोदः अत्यन्तमनोहरः परिमलस्तेन समावर्जितानि वशीकृतानि यानि मधुकरकुलानि तेषां गरुद्भिः पत्त्रैरुदयदुद्यन्—अथ च अनरुन्तुदो मृदुर्यो मरुद्वायुस्तेन विधीयमानाः स्वेदवारिबिन्दूनां प्रतिक्रियाः यासान्ता 'वारवरवर्णिन्यः', तद्भयमूलास्विव मधुकरकुलभयमूलास्विव मण्डलाकारनर्तनेपु निपतिता, याः कर्णावतंसकेतक्यस्तासां किसलयैः पल्लवैस्तरुणानां चेतांसि आराभिरिव विदारयन्त्यो,—भ्रमीणां विभ्रमेषु हावेषु अपि ('विषमे दुर्गसञ्चारे 'विभ्रमो' भ्रान्तिहावयोः' इति मेदिनी) कर्णोत्पलानां कबरीकुसुमानां च मिलनेन सङ्गमेन न अवाप्तं मुखवियोगदुःखं यैस्ते तादृशा भ्रमराः यासान्ताः,—पुनः रभसेन वेगेन भग्नानि यानि हारमौक्तिकानां जालकानि तैः करणभूतैः सामाजिकानां सभ्यानां मनसि निवसन्तं मनोभवं पुष्पाञ्जलिभिरिवार्चयन्त्यः,—पुनः वलयावलीनां कटकपङ्क्तीनां कोलाहलैः सहस्रकिरणमिलनेच्छयेव उपरि ऊर्ध्वं प्रतिष्ठया स्थित्या समानां तुल्यानामम्बरकोकनदानां गगनारविन्दानामुद्गमननान्दीमिव प्रादुर्भावस्वस्तिवाचनमिव विभावयन्त्यो बोधयन्त्यो वाराणां गणानां वरवर्णिन्यो विलासिन्यः सम्यक् नृत्यशास्त्रमनतिक्रम्य नृत्यमकुर्वन्नित्यर्थः ॥

"सुतजननोत्सवरूपं, कुसुमं मन्दारमञ्जर्याः ।
सन्तानवर्द्धकेभ्यः समर्प्यते पितृदेवेभ्यः" ॥ ५० ॥

**अथ प्रमदपरवशो नरपतिः विश्राण्यान्तःप्रविश्य ससन्तानां देवीं तदङ्कवर्तिनं कुमारं चाकलयन् चक्षुषि विरहानन्दबाष्पाभ्यां चेतसि कन्दलवताऽऽनन्देन वचसि गद्गदिकया वपुषि वेपथुना च युगपत्पर्यगृह्यतेति समन्वयः ।** अथ = पुत्रजन्मोत्सवानन्तरं सन्तोषाधीनो राजशेखरः कृतसचैलस्नानः, विशदं स्वच्छं यदम्बरं संवीतं परिहितं येन तादृशः सन्-अपरिमिताः सौरभेयीः गाः अगणनीयम् असङ्ख्यं तपनीयं सुवर्णं वेदविद्भ्यो

प्रविश्य, प्रसवपीडया परिक्षामशिथिलावयवां, प्रभायाः प्रभावस्य चातिशयशालिभिर्मणिगणैर्मङ्गलप्रदीपप्रतिबिम्बैरिव शोभमानां, समुद्रान्तर्भूमिमिवोत्पादितपीयूषाम्, इन्दुकलामिव विभावितप्रकाशां, वीरुधमिव स्फुटीकृतफलां, बुद्धिमिव विहितानुव्यवसायां, सुरभिसहकारवल्लीमिवानुभूतप्रसवोदयावस्थां, सुमेरुमूर्तिमिव धात्रीमध्यवृत्तिं, नन्दनभुवमिव संगतसन्तानां देवीं, तदङ्कवर्तिनमेकीभूतमिव स्वानुरागसमुदायं, प्रसादवशात्प्रत्यासन्नमिव विभातविवस्वन्तं, तदौदार्यावर्जितमिव कल्पपादपपल्लवं, न्यग्रोधदलशयनलीलाकालिकमिव बालवेषमादिपुरुषं, त्रिदशमोहनाय गृहीतार्भकभावमिव नीललोहितं, तिरोहितमुखान्तरमिव कार्तिकेयं- कुमारञ्चाकलयँश्चक्षुषि निमेषविरहानन्दबाष्पाभ्यां, चेतसि कन्दलवताऽऽनन्देन, वचसि गद्गदिकया, वपुषि वेपथुना च युगपत्पर्यगृह्यत ॥ ५१ ॥

---

ब्राह्मणेभ्यो विश्राण्य दत्त्वा, प्रधानसचिवेन सह अन्तःपुरं गत्वा, **प्रसवपीडया**=प्रसूतिबाधया परिक्षामा कृशा चासौ शिथिलावयवा च तां,—प्रभायाः कान्त्याः तेजसश्चातिशयवद्भिः मङ्गलार्थं ये प्रदीपास्तेषां प्रतिबिम्बैः रत्नसमूहैरिव शोभमानाम्; उत्पादितं पीयूषममृतं यया तां समुद्रस्य मध्यभूमिमिव, विभावितः सम्भावितः प्रकाशो यया तां चन्द्रकलामिव, स्फुटीकृतानि फलानि यया तां **वीरुधं** लतामिव, विहितोऽनुव्यवसायः प्रत्यभिज्ञा यया तां **बुद्धिमिव**, अनुभूता प्रसवोदयस्यावस्था दशा यया तां सुरभेर्वसन्तसमयस्य या सहकारस्यातिसुगन्धस्याम्रस्य वल्ली तामिव, धात्र्याः पृथिव्या मध्ये वृत्तिर्यस्य तं **सुमेरोः** सुवर्णाचलस्य मूर्तिमिव, देवीपक्षे धात्र्य उपमातरः, संगताः सन्तानाः देवतरवो यस्यां तां **नन्दनभूमिमिव**, देवीपक्षे सन्तानः पुत्रस्तेन संगतां **देवीं** मलयवतीं;—तस्या देव्या अङ्कवर्तिनं (कुमारमित्यनेनान्वयः) स्वानुरागस्य **समुदायं** समूहमेकीभूतमिव पिण्डीभूतमिव, **प्रसाद-वशात्** प्रसन्नताधीनत्वात् प्रत्यासन्नमिव समीपस्थितमिव प्रातःकालस्य सूर्यमिव, तस्या देव्या यदौदार्यं तेनाऽऽवर्जितं वशीकृतं कल्पपादपस्य कल्पतरोः किसलयमिव,—न्यग्रोधदले वटपत्रे यच्छयनं तस्य या लीला तत्कालिकं तत्सामयिकं बालवेशं बालमुकुन्दरूपधारिणमादिपुरुषमिव विष्णुमिव,—**त्रिदशमोहनाय** देवमोहनाय गृहीतोऽर्भकभावो बालकावस्था येन तादृशं नीललोहितमिव शिवमिव,-तिरोहितान्यन्तर्हितानि मुखान्तराणि पञ्चमुखानि यस्य तादृशं कार्तिकेयं स्कन्दमिव-**कुमारं च**=बालकं च पश्यन्, **चक्षुषि** नेत्रे, निमेषविरहश्च आनन्दबाष्पश्च ताभ्यां—(निमेषाऽभावाऽऽनन्दाश्रुभ्यामित्यर्थः) चेतसि

ततो बुद्धिनिधिः सानन्दं राजानमभ्यधत्त—"देव ! दृश्यतामस्य कुमारस्य जननाव्यवहितोत्तरमेव कुमारस्येव सर्वाभिभावी महाननुभावविशेषः। तथाहि—प्रभातप्रभाकरस्येव प्रसर्पन्ती प्रभा प्रदीपानां प्रकाशमपकर्षमापादयति; अस्फुटकण्ठस्यापि रुदितध्वनिर्बालकेसरिगर्जितमनुहरति; गम्भीरतया लोचनानन्दजनकोऽपि तेजोविशेषो विशेषेणाभिलक्ष्यमाणश्चक्षुषोः परिक्षोभमिव प्रसूते; कौस्तुभमणिरिव नारायणवक्षःस्थलम्—अहर्मुखमिहिर इव गगनतलं प्रभया वासभवनान्तरमभितः समुद्भासयति; इमेऽस्यान्धकाराङ्कुराहङ्कारतिरोधानकुशलाः कुञ्चिताः केशाः; इदञ्च चक्रवाकचञ्चुदलितमृणालसम्बन्धिकतिपयसूत्रसमुदायचिह्नं पद्माकरप्रतिबिम्बितं शशलाञ्छनशकलमिवास्य विभात्यूर्णारमणीयं भालतलम्; इयञ्च तनीयसी नीलमणिमरीचिशलाकेव विभ्राजतेऽस्य भ्रूलेखा; इदमस्यावदातीकरोति गर्भनिकेतनं विकचकेतकीकुसुमकिसलयानुकारि लोचनयुगम्; एषाऽस्य नासा ऽनासादि-

---

मनसि कन्दलवताऽङ्कुरवताऽऽनन्देन, वचसि वाण्यां गद्गदिकया, शरीरे कम्पेन च युगपदेकपदे पर्यगृह्यत व्याप्तो बभूव ॥ ५१ ॥

ततो जातकर्मानन्तरं प्रधानामात्यो आनन्दसहितं राजानमूचे—देव ! राजन् ! कुमारस्यैव कार्तिकेयस्यैवास्य बालकस्य जन्माव्यवहितोत्तरकालमेव सर्वाभिभावी सर्वानभिभवति तच्छीलः बृहत्प्रतापविशेषो दृश्यताम्। 'तथाहीति' निदर्शने। प्रभातसूर्यस्येव अस्य प्रभा प्रदीपानां प्रकाशं न्यूनतामापादयति। अनुहरति अनुकरोति। परिक्षोभमिव=सञ्चलनमिव। यथा कौस्तुभमणिः प्रभया नारायणस्य वक्षःस्थलं, प्रातःकालसूर्यः प्रभया गगनतलं, तथैवायं बालकः प्रभया वासभवनान्तरमभितः प्रकाशयति। अन्धकारस्य योऽहङ्कारः कृष्णत्वाभिमानस्तस्य तिरोधानेऽन्तर्धाने कुशलाः समर्थाः अधिककृष्णा इत्यर्थः; कुञ्चिताः ईषत्कुटिलाः केशाः 'दृश्यन्ता'मिति वचनविपरिणामेनान्वयः। इदञ्चास्य भालतलं विभाति; कीदृशमित्याकाङ्क्षायामाह—चक्रवाकेत्यादि। चक्रवाकस्य चञ्च्वा दलितानि यानि मृणालानि तत्सम्बन्धिनां कतिपयसूत्रसमुदायस्य चिह्नं लक्षणं, पद्माकरे तटाके प्रतिबिम्बितं यच्छशाङ्कलाञ्छनस्य चन्द्रस्य शकलं खण्डं तदिव=अष्टमीचन्द्रमिवेत्यर्थः; ऊर्णारमणीयं सूक्ष्मरोमरमणीयं भालतलं ललाटतलं शोभते। इयञ्चास्यातिशयेन तन्वी नीलमणिकिरणशलाका इव भ्रूलेखा=भ्रूराजी विभ्राजते शोभते। विकचं प्रफुल्लितं यत् केतक्याः कुसुमं तस्य यानि किसलयानि दलानि तदनुकारि तदनुकरणशीलं नेत्रयुगलं, गर्भनिकेतनं सूतिकागृहमवदातीकरोति

तातिदीर्घह्रस्वभावा स्वभावादेव भावुकमुद्भावयति; एतदस्यानतिचिरसमा-स्वादितस्तन्यरससीकरकरम्बितं रदनव्यतिरेकेऽपि स्मितच्छायाच्छुरितमिव विलसति विन्यस्तमौक्तिकपद्मरागरुचकरुचिरमधरबिम्बम्; इदमस्य बाल-रूपस्य भगवतो विश्वरूपस्य शयनानुरूपतया संक्षिप्तशेषभोगसमानाभोगं भाति भुजद्वयम्; इदञ्चास्य कुलिशलाञ्छितं कौशिकस्येव, कुशेशयमधुरं मधुरिपोरिव, प्रशस्तलेखं स्वरिव, स्फुरति,–मीनसङ्गतं कमलमिव, पुरस्ताद-त्यन्तनिरवकाशतया भीतयेव बद्धमुष्टितया परिगृहीतं करयुगलम्; इमेऽस्य करतलमिलिताङ्गुलीदलतया तत्सङ्गता नखमयूखा हस्तसरोरुहकेसरप्रसरा इव प्रसर्पन्ति; इदमस्य साम्प्रतिकपरिणाहानुसारेणानुमेयभाविपरिणाहमाल-क्ष्यते वक्षःस्थलम्;एतदस्याचिरविनाकृतनालं नारायणीयमिव नाभिमण्डलम्; इदं च कोकनदकोमलमूर्ध्वरेखावैजयन्तीशतकोटिच्छत्रलाञ्छनं राजसमाज-शेखरकुसुमकेसरकदम्बपुनरुक्तियोग्यनखमयूखनिकुरम्बकं चरणद्वयम्;इदञ्च

---

विषदीकरोति। न आसादितः प्राप्तः दीर्घह्रस्वभावो यया तादृशी अस्य एषा नासिका स्वभावादेव कुशलमुद्भावयति प्रकाशयति; ( 'भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम्' इत्यमरः ) । **एतदस्याधरबिम्बं विलसतीत्यन्वयः**; तद्विशि-नष्टि—अनतिचिरं शीघ्रं समास्वादितो यो स्तन्यरसस्तस्य सीकरैः कणैः करबिम्बं मिश्रितं-**रदनानां** दन्तानां व्यतिरेकेप्यभावेऽपि ईषद्धासकान्त्या मिश्रितमिव,-विन्यस्तानि खचितानि मौक्तिकानि यस्मिन् तादृशं **पद्मरागस्य** लोहितमणेः रुचकवत् कटकवत् रुचिरं सुन्दरमधरबिम्बं विलसति । **इदमस्य भुजद्वयं भाति; संक्षिप्तो** यो शेषभोगस्तेन समान आभोगः परिणाहो यस्य तत्। **इदमस्य करयुगलं स्फुरति**–इति योजना; तदुपमिनोति–इन्द्रस्येव कुलिशेन वज्रेण वज्ररेखया च लाञ्छितं चिह्नितं, विष्णोरिव कमलवत् कोमलं, स्वर्गमिव प्रशस्ता लेखा अदिति-नन्दना रेखाश्च यस्मिन्तत्, पद्ममिव मीनैः मत्स्यरेखाभिश्च संगतं, पुरस्तादग्रतोऽ-त्यन्तमवकाशाऽभावेन भीतयेव बद्धा मुष्टिर्येन स तस्य भावस्तया परिगृहीतं स्वीकृतं ( बद्धमुष्टि इत्यर्थः )–हस्तद्वयम् स्फुलति । **इमेऽस्य नखमयूखाः प्रस-र्पन्तीत्यन्वयः** । स्पष्टम् । इदमस्य साम्प्रतिको वर्तमानकालिको यः परिणाहो विशालता तदनुसारेणानुमेयोऽनुमातुं योग्यो यो **भावि** भविष्यन् परिणाहो विशा-लता यस्य तत् तादृशं वक्षःस्थलमा**लक्ष्यते** दृश्यते । अचिरं शीघ्रं विनाकृतं छिन्नं नालं यस्य तादृशं नाभिमण्डलं नारायणीयनाभिमण्डलमिव दृश्यते । **इदमस्य चरणयुगलं** कोकनदवत् रक्तोत्पलवत् कोमलम्, ऊर्ध्वरेखाया उपरिरेखाया

सुन्दरीवदनमिव सिन्दूरबिन्दुना, गिरिगुहागृहमिव केसरिकिशोरकेण, धूर्जटिजटामण्डलमिव कलामात्रेण प्रालेयभानुना, शरवणमिव स्कन्देन, नन्दगोपमन्दिरमिवारविन्दनयनेन स्तनन्धयेनाप्यधिष्ठितमनेन धाम समधिकं मधुरत्वमधृष्यभावं च दधाति; अयञ्च कर्ण इवात्यर्जुनदृष्टिः; अर्जुन इव निर्जितपरिणतमहिमहिरण्यपुरः, भीष्म इव वाहिनीपतिमहिषीसम्प्रसूतः, नल इव निरस्तद्वापरसहायतेजोविशेषः, भरत इव बाल्य एवाधिगतसर्वदमनभावः, हरिश्चन्द्र इव विश्वामित्रपरितोषणयोग्यः, प्रद्युम्न इव शम्बराऽऽजिकरः, हनुमानिवार्भकभावेऽपि भास्वत्पराभवाभिमानः, स्कन्द इवाव-

वैजयन्त्याः मालायाः शतकोटेर्वज्रस्य छत्रस्यातपत्रस्य लाञ्छनं चिह्नं यस्मिंस्तादृशम्, राजसमाजस्य नृपसमूहस्य शेखरकुसुमानां मुकुटपुष्पाणां यानि केसरकदम्बानि केसरसमूहानि तेषां पुनरुक्तियोग्यानां नखमयूखानां नखकिरणानां निकुरम्बकं वृन्दं यस्मिंस्तादृशम् । इदञ्च धाम ( सूतिकागृहं ) स्तनन्धयेनाप्यनेनाधिष्ठितं समधिकमधुरत्वमधृष्यभावं च दधातीत्यन्वयः। केन किमिवेत्याकाङ्क्षायामुभयोपमानानि मालोपमया प्रतिपादयति—सुन्दरीवदनेत्यादिभिः । प्रालेयभानुना चन्द्रेण; अरविन्दनयनेन=पुण्डरीकाक्षेण; अधृष्यभावम् अभर्त्सनीयताम्। अयञ्च कुमारः प्रतिभातीत्यन्वयः। क इव प्रतिभातीत्यपेक्षां मालोपमया परिहरति—कर्ण इवेत्यादिभिः । अर्जुनं पार्थमतिक्रान्ताऽत्यर्जुना दृष्टिर्यस्य तादृशः कर्णो राधेयः, बालकपक्षेऽत्यर्जुनदृष्टिर्धवलदृष्टिः; 'बलक्षो धवलोऽर्जुनः' इत्यमरः। निर्जितं परिणतं प्राचीनं महिम बृहद्धिरण्यपुरं येन तादृशोऽर्जुनः; निर्जितं वर्णेन तिरस्कृतं बृहत्सुवर्णनगरं येनेति बालकपक्षे । वाहिनीनां नदीनां पतिर्गङ्गा एव या शन्तनुमहिषी तस्मात्सम्प्रसूतो भीष्मो देवव्रतः, बालकपक्षे वाहिनीपती राजा ( वाहिनी 'पृतना चमूः' 'स्रवन्त्यामपि वाहिनी' इत्युभयत्रामरः ) । निरस्तो द्वापरसहायस्य कलेस्तेजोविशेषः प्रतापविशेषो येन तादृशो नलो वैरसेनिः, स इव बालकोऽपि । भरत इव दौष्यन्तिरिव बाल्यावस्थायामेवाधिगतः प्राप्तः सर्वदमनभावः, अन्वर्था सर्वदमनसञ्ज्ञा, येन तादृशो बालकोऽपि। हरिश्चन्द्रपक्षे विश्वामित्र ऋषिः, बालकपक्षे विश्वस्य अमित्राः पीडकाः कण्टकास्तेषां परितोषणं विनयाधानं तस्य योग्यः । प्रद्युम्नः कृष्णसुतः शम्बरेणासुरेणाऽऽजिकरः संग्रामकरः प्रसिद्धः, बालकपक्षे शम्बरो मृगविशेषः, अजनमाजिः, मृगया ( 'शम्बरं सलिले पुंसि मृगदैत्यविशेषयोः' इति मेदिनी ) । हनूमान् इव—बाल्यावस्थायामपि भास्वतः सूर्यस्य पराभवे तिरस्कारेऽ-

ज्ञातवज्राङ्गसंभवः प्रतिभाति कुमारः; दुग्धसिन्धुसधर्मा धन्योऽयमन्ववायो, यतः सुधादीधितिरिव महेश्वरशिरोमहितोऽयं[1] प्रादुर्भूतः; पुण्यवती चेयं वसुन्धरा, यत्रायं बाललीलावहेलितमहेन्द्रानुभावो भगवान्कैटभारातिरिवावतीर्णः; सुकृतविशेषशालीनि च लोकलोचनानि, यानि दर्शनमात्रापकृष्टमदनं मृगाङ्कमौलिमिवैनमनन्तरायमाकलयिष्यन्तीति" ॥ ५२ ॥

राजा तु 'नन्ववन्ध्यप्रसादास्तपोधना' इत्यभिधाय काञ्चित्कालकलां विश्रम्य ततो निरगात् ॥ ५३ ॥

अथ च पञ्चमाव्यवहितोत्तरवृत्तौ समुपागते दिवस उत्सववशात्स्वर्लोकेऽपि दीप्यमानासु दीपिकास्विव तारकासु, खचिततारकावराटकावयवायामतिरोहितगोमयमूर्त्तौ साक्षात्षष्ठीदेव्यामिव प्रकाशमानायां प्रदोषसन्ध्यायां, प्रत्यूहकारिषु निशाचरेष्विव दीपप्रकाशेन निराक्रियमाणेषु ति-

---

भिमानो यस्य सामर्थ्यात्;—बालकोऽपि प्रतापशालित्वात्तादृशः । स्कन्दः कार्तिकेयोऽवज्ञातस्तिरस्कृतो वज्राङ्गस्य कुलिशावयवस्य सम्भवो सम्भावना येन तादृशो दृढाङ्ग इत्यर्थः ( अस्मिन्नाद्ये बहवो विशेषणानि सम्भावितानि ) । क्षीरसागरसमानोऽयं वंशो धन्यो यतो वंशात्सुधांशुरिव चन्द्रशेखरशिरःपूज्योऽयं बालकः प्रादुर्भूतः । बाललीलयाऽवलेहितस्तिरस्कृत इन्द्रप्रतापो येन,—भगवान् मधुसूदन इवावतीर्णो, यस्यां धरायाम्, अत इयं धरा पुण्यवती । जननेत्राणि च पुण्यविशेषवन्ति, यानि दर्शनमात्रेण तिरस्कृतकामदेवं चन्द्रचूडमिव एनं बालकं निर्विघ्नं द्रक्ष्यन्ति—इति 'वृद्धिनिधिरभ्यधत्तेति' पूर्वेणान्वयः ॥ ५२ ॥

**राजा तु ततो निरगादिति स्पष्टम्**। ततः=अन्तःपुरात् ॥ ५३ ॥

**अथ च पञ्चमाव्यवहितोत्तरवृत्तौ समुपागते साक्षात्षष्ठीदेव्यामिव प्रकाशमानायां सन्ध्यायां सुमहानुत्सवः प्रववृते**—इति योजना । पञ्चानां पूरणः पञ्चमस्तस्याव्यवहितोत्तरा व्यवधानरहिता वृत्तिर्वर्तनं यस्य तस्मिन्दिवसे षष्ठे समुपागते प्राप्ते, **उत्सववशात्** कौतुकवशात् स्वर्गेऽपि दीपिकास्विव तारकासु प्रज्वलन्तीषु, खचिताः सम्बद्धास्तारका इव वराटकाः कपर्दिकास्तद्रूपा अवयवा यस्यास्तस्यामत एवाऽतिरोहिता गोमयमूर्तिर्यस्यास्तस्यां साक्षात्षष्ठीदेव्यामिव प्रदोषवेलायां प्रकाशमानायां सत्यां, विघ्नकारिषु रात्रिचरेषु इव प्रदीपोज्ज्वलनेनापक्रियमाणेषु अन्धकारसमूहेषु सत्सु-परितुष्टा या बालस्य मातृका तस्या हासकान्ताविव

---

( १ ) शिरोद्धृतपदोऽयमि पा० द्वि० पु० ।

मिरनिकुरम्बकेषु परितुष्टबालमातृकाहासभासीव ककुभि पूर्वस्यां दृश्यमानायां कुमुदबान्धवज्योत्स्नायां, सन्निहितषण्मुखेष्विव परितोषान्नृत्यत्सु वादित्रनादश्राविषु कलापिकुलेषु, स्वलक्ष्मीविलुण्ठनभयादिव दत्तमुद्रेष्वरविन्देषु, शब्दागम इवासमासपूज्यमानषष्ठीकः, तारकवधसमय इवाभ्यर्च्यमानबाहुलेयः, मायावतीप्रयत्न इव महीयमानप्रद्युम्नः, ज्वलनप्रयाणसमय इव विजृम्भमाणमहाच्छागशब्दः, साहित्यप्रपञ्च इव दीपकाविर्भावभव्यः, समर इव दृश्यमानप्रचुरतरोपदः, हलधरनिवास इव सन्निहितमुशलः, लिङ्गागम इव श्रूयमाणानेकस्त्रीपुंनपुंसकशब्दः, विद्वत्प्रसङ्ग इव विधीयमानविविधपदार्थप्रतिपादनः, देव्या वाससि वेश्मनि च विलोक्यमानवरवर्णि-

---

पूर्वस्यां दिशि चन्द्रचन्द्रिकायां दृश्यमानायां सत्यां, सन्निहितानि प्राप्तानि षण्मुखानि येषान्तेषु इव परितोषात्सन्तोषान्नृत्यत्सु वादित्रध्वनिश्रावकेषु मयूरेषु सत्सु, ( षष्ठीमहोत्सवे स्कन्दसन्निधानं शास्त्रप्रसिद्धम् ) **अरविन्देषु** कमलेषु स्वलक्ष्म्या विलुण्ठनस्य यद् भयं तस्मादिव दत्ता मुद्रा पिधानं यैस्ते तेषु=सङ्कुचितेषु सत्सु,–**शब्दागम** इव शब्दानुशासनमिव असमासा समासाभाववती पूज्यमाना षष्ठी यस्मिन् ( क्तेन च पूजायामिति निषेधात् राज्ञां पूजित इत्यादौ समासाभावात् ) शब्दागमे, **असमासेन** विस्तरेण पूज्यमाना षष्ठीमहोत्सवाधिष्ठात्री देवी यस्मिन् ( नद्यृतश्चेति कप् ) इति–महोत्सवपक्षे, तारकस्य असुरस्य वधसमये इव अभ्यर्च्यमानः प्रशंसनीयः पूज्यमानश्च बाहुलेयस्तारकजित् यस्मिन्, **मायावत्या** रत्याः प्रयत्न इव महीयमानः पूज्यमानः प्रद्युम्नः कृष्णात्मजो यस्मिन्, उभयत्र समानम्, ज्वलनस्य वह्नेः प्रयाणसमय इव निर्वाणसमय इव विजृम्भमाण उच्चैः श्रूयमाणः महतश्छागस्याजस्य शब्दो ध्वनिर्यस्मिन् उभयत्र समानम्, ( वह्निनिर्वाणेऽपि शब्द उत्पद्यते ) छागस्य ज्वलनोत्पन्नत्वात् तत्प्रयाणसमये तस्य रोदनादिध्वनिः सम्पद्यते, ज्वलनोत्पन्नत्वं च छागस्य 'अजो ह्यग्नेरजनिष्ट शोकात्' इत्यादिश्रुतिप्रसिद्धम्; साहित्यविस्तारः दीपकालङ्कारस्याऽऽविर्भावेन भव्यः सुन्दरः, उत्सवः दीपानामाविर्भावेन प्रकाशेन रमणीयः, **समर** इव सङ्ग्राम इव दृश्यमानाः प्रचुरतरा उपदा उपहारा यस्मिन्, समरे विजितैरुत्सवे निमन्त्रितैरुपदा दीयन्ते,—इति उभयत्र समानम्; **हलधरस्य** बलभद्रस्य निवासो भवनं सन्निहितमुशलो मुशलायितत्वात्तस्य, उत्सवे तु मुशल उपकरणत्वेन विहितः;—**लिङ्गागम** इव लिङ्गानुशासनमिव श्रूयमाणा अनेके स्त्रीपुंनपुंसकशब्दा यस्मिन्नुभयत्र समानम्; विदुषां प्रसङ्गो **विद्वत्प्रसङ्गः** स इव विधीयमानं विविधपदार्थानां नानापदार्थानां प्रतिपादनं विवेचनं यस्मिंस्तादृशः,–देव्याः षष्ठीदेव्या

नीमयभावः, सूतिकागृहे जनहृदये च दृश्यमानारिष्टसिद्धार्थसद्भावः, कोषागारैर्लोकलोचनैश्च विमुक्तमुद्रः, स्वरूपतः प्रतिकृतौ चावेक्ष्यमाणकुमारसहायदेवीकः, श्रौत्रियैर्लोकैश्च कल्प्यमानागमकोलाहलः, ब्राह्मणैर्वादकैश्च समुद्घुष्यमाणमुरजाभिधानसहस्रः, पुरोहितैर्मल्लजनैश्च क्रियमाणदोषाभिघातः सुमहानुत्सवः प्रववृते ॥ ५४ ॥

ततोऽतिक्रान्ते दशमेऽहनि शोभनायां वेलायाङ्कर्मणि परां निष्ठामासेदुषा ब्राह्मणजनेन सम्पादितेषु यथायोग्येषु कर्मसु, कुलाचारकुशलाभिश्चाविच्छिन्नसंप्रदायाभिर्जरतीभिरनुष्ठितेषु लौकिकाचरणेषु, राजा नानाजाती-

---

वासिसि मन्दिरे, वेश्मनि राजभवने च विलोक्यमानो दृश्यमानो **वरवर्णिनीमयभावः** लाक्षारोचनामयभाव उत्तमाङ्गनामयभावश्च ('उत्तमा वरवर्णिनी' इत्यमरः, 'वरवर्णिनी तु लाक्षाहरिद्रारोचनासु च' इति मेदिनी); **सूतिकागृहे** दृश्यमानो विलोक्यमानोऽरिष्टस्याऽऽसवस्य सूतिकापानार्थं, सिद्धार्थस्य सर्षपस्य बालग्रहापनयनार्थं सद्भावो विद्यमानता यस्मिंस्तादृशः, **जनहृदये च** लोकानां मनसि दृश्यमानोऽरिष्टस्य शुभकामनायाः सिद्धार्थस्य सिद्धकार्यस्य सद्भावो विद्यमानता यस्मिन्, 'अरिष्टो लशुने निम्बे फेनिले काककङ्कयोः । अरिष्टमशुभे तक्रे सूतिकागार आसवे ॥ शुभे मरणचिह्ने चादिष्टमादेशिते त्रिषु' इति मेदिनी, **कोषागारैः** कोषग्रहैः विशेषेण मुक्तास्त्यक्ताः मुद्राः सुवर्णरूप्यकादीनि यस्मिन्, **लोकलोचनैश्च** विमुक्ता पक्ष्मपातरूपा मुद्रा यस्मिन्; **स्वरूपतः** सूतिकागृहे अवेक्ष्यमाणा दृश्यमाना **कुमारसहाया** बालकद्वितीया देवी मलयवती यस्मिन्, **प्रतिकृतौ** मूर्तौ च अवेक्ष्यमाणा कुमारसहाया कार्तिकेयसहिता देवी षष्ठी यस्मिन्—उत्सवे, श्रोत्रियैर्वैदिकैः कल्प्यमानः क्रियमाण आगमस्य मन्त्रपाठस्य कोलाहल उच्चैर्ध्वनिर्यस्मिन्, लोकैश्च कल्प्यमान आगमस्य आगमनस्य कोलाहलः कलकलो यस्मिन्; वादकैः **सम्यगुद्घुष्यमाणं** ताड्यमानं मुरजाभिधानानां मुरजनामकानां वाद्यानां यस्मिंस्तादृशः, ब्राह्मणैश्च समुद्घुष्यमाणं सम्यगुच्चार्यमाणं मुरं जयतीति **मुरजो** मुरारिस्तस्याभिधानसहस्रं यस्मिंस्तादृशः ('अन्येष्वपि दृश्यते' इत्यनेन कर्तरि डः); **पुरोहितैः** पुरोधाभिः क्रियमाणो दोषाणां विघ्नानामभिघातो निवारणं यस्मिन्, **मल्लजनैश्च** भटैश्च क्रियमाणो दोषाभिघातो भुजास्फोटनं यस्मिंस्तादृशः सुतरां **महानुत्सवः** प्रवृत्तो बभूव ॥ ५४ ॥

**ततो राजा दशमेऽनि अतिक्रान्ते तनुजस्य चित्रभानुरिति नाम**

यमर्थसार्थं सार्थवेदाध्यायिभ्यो ब्राह्मणेभ्यः प्रतिपाद्य चित्रभानुरिति स्वयमनुरूपं नाम तनुजस्य व्यतनुत ॥ ५५ ॥

स्तन्यपानदशायाञ्च मिलिताग्रं तदधरबिम्बं मधुकरचुम्बितं बन्धुजीवकुसुममिव रराज। ततः क्रमेण प्रावृषमिव दृश्यनीरदां तस्य तामवस्थां पश्यन्तौ पितरौ चातकाविव सन्तापमुज्झाञ्चभूवतुः। रक्षासूत्रैर्मृणालगुणैरिव तत्करसरोरुहमराजत्। तेन चोपमृद्यमानं महादेवीकलेवरं वीरसेनतनयेन कुसुमदामेव समधिकं मधुरभावमेव धारयाञ्चकार। कदाचिन्मातृपयोधरविन्यस्तहस्तपल्लवं कनककमलकोरकोपरि परिकीर्णमयूखमण्डलो बालभास्कर इव व्यलसत्। जातुचिज्जननीविभूषणमणिकिरणगणान्तरितो मञ्जूषामध्यवर्ती कर्ण इव व्यरोचिष्ट। कदापि पिपासया मातुर्वक्षोरुहं करेण सविलासमुदस्यन् गोवर्द्धनोद्धरणबद्धकक्षः पुण्डरीकाक्ष इवालक्ष्यत। कदाचिन्मातृदशनदीधितिवृन्दान्तरितः केसरिणीसटान्तरालवर्ती बालमृगराज इव रराज। जातुचित्पितुरङ्गुलिं वदने विन्यस्य पिबन् विबुधपतिकरशाखामास्वादयन्मान्धातेवानुसन्धीयतेस्म। एकदा पद्मरागमरीचिविच्छुरितो निर्गच्छन्नाशुशुक्षणिकुक्षेर्धृष्टद्युम्न इव व्यद्योतिष्ट। अन्यदा करेण मातुर्मुक्तावलीमवलम्बमानो मन्दाकिनीमनुसरन्भीष्म इवारोचिष्ट। कदाचिदम्बिकाक्रोडवर्ती तत्स्तनमण्डलमणिषु प्रतिबिम्बिततया बहुलीभूताननो वितितान बाहुलेयलीलाम्। कदाचिज्जिष्णुना तातेनोपलालितोऽभिमन्युरिव मन्यतेस्म।

---

स्वयमतनुतेत्यन्वयः। **सार्थवेदाध्यायिभ्य** इत्यनेन विशेषणेन ब्राह्मणानां विशिष्टदानपात्रत्वं दर्शितम्। स्पष्टं सर्वं गद्यम् ॥

**स्तन्यपानदशायामित्यारभ्य परीक्षिदिवैधि** इत्यन्तेन गद्येन मालोपमया बालं वर्णयति। दुग्धपानदशायां चूचुकेन मिलिताग्रभागं बालकाधरबिम्बं भ्रमरसम्बद्धं बन्धूकपुष्पमिव रराज। **वीरसेनतनयेन** नलेन मृद्यमानं कुसुमदाम म्लानं न भवति, तस्य तादृशवरमाहात्म्यात्;—महादेवीकलेवरं तु तनयेन मृद्यमानमपि मधुरभावमेव धारयाञ्चकार, हर्षजनकत्वान्मातुः। कदाचित् सुवर्णवर्णकमलकलिकोपरि व्याप्तकिरणो बालभास्कर इव जननीस्तनधृतकरकिसलयो व्यलसत्। **मान्धाता** सूर्यवंश्यः प्रसिद्धः। **आशुशुक्षणिकुक्षेः** अग्निकुण्डात्। **धृष्टद्युम्नो** द्रौपदीभ्राता। **मन्दाकिनी** गङ्गा भीष्ममाता। बहुलीभूतं व्याकुलीभूतमाननं

(१) वावलोक्यतेस्मेति पा० द्वि० पु०।

कदाचिच्छूरसुतया जनन्या सविशेषस्नेहं निरूप्यमाणो धनञ्जय इव रराज । जातुचिदुदीक्ष्यमाणैकदन्ताङ्कुरो हेरम्बं विडम्बयामास । कदाचन सङ्क्रन्दनाभिमुखो जयन्तमनुचकार । कदापि सुमित्रोत्सङ्गगतो लक्ष्मण इवालक्षि। एकदा महागदाभिरक्षितः परीक्षिदिवैक्षि ॥ ५६ ॥

अथ समयक्रमवशाद्राजा धात्रीसविधे क्रीडमानं प्रसारितकरसरोजया जनन्या सनामग्रहमाहूयमानं जानुभ्याञ्चङ्क्रम्यमाणं तन्मुखनिहितस्नेह-विकासित-तरल-तारकं मुग्धस्मितदृश्यमान-कुन्दकुड्मल-कोमलकतिपयरदन-प्ररोहमन्तरिव बहिरपि सुवर्णान्सिद्धार्थान्भालेन धारयन्तं, मध्यमणिभूमिषु स्वकीय एव प्रतिबिम्बे सजातीयान्तरभ्रमेण कल्लोल्लापप्रसङ्गेन विलम्बमानं, वसन्तावतारमिव शुकतुण्डकिंशुकमुकुलरमणीयकरचरणं, स्कन्दमिव पञ्चाननखराभिलक्ष्यमाणं, प्रभाततपनमिव प्रत्यग्रकराक्रान्तभूतलं तमालोकयन् सर्वलोकानामुपरि वर्तमानमात्मानं मेने ॥ ५७ ॥

---

यस्य अत एव बाहुलेयलीलाम् कार्तिकेयलीलाम् । जिष्णुना अर्जुनेन । शूरसुतया कुन्त्या । धनञ्जयोऽर्जुनः । हेरम्बं=गजाननम् । सङ्क्रन्दनाभिमुखो रोदनाभिमुखो दुश्च्यवनाभिमुखश्च । सुमित्रोत्सङ्गगतः शोभनमित्राङ्कस्थितः बालपक्षे । महागदया अभिरक्षितः परीक्षित्, महता अगदेन वैद्येन रक्षितो बालः ॥ ५६ ॥

अथ राजा समयक्रमवशात् धात्रीसविधे क्रीडमानं तमालोकयन् आत्मानं सर्वलोकानामुपरि वर्तमानं मेने—इति सम्बन्धः । तस्या मातुः मुखनिहितो यः स्नेहस्तेन विकासिता तरला चञ्चला तारका कनीनिका येन तं, मुग्धं सुन्दरं यत् स्मितमीषद्धासस्तेन दृश्यमाना कुन्दानां माघ्यानां कुड्मलवत् मुकुलवत् कोमलाः कतिपयरदनानां दन्तानां प्ररोहा अङ्कुरा यस्य तं,—अन्तरिव मध्ये इव सुष्ठु वर्णा अक्षराणि येषान्ते तान्, सिद्धाश्च तेऽर्थाः पदार्थास्तानिव भालेन ललाटेन बहिरपि सुष्ठुवर्णो रूपं येषान्ते तान् सिद्धार्थान् सर्षपान् धारयन्तं दधतं, मध्यस्था या मणिखचिता भूमयस्तासु आत्मीये एव प्रतिबिम्बे सजातीयबालकान्तरभ्रमेण कल्लोल्लापप्रसङ्गेन=अव्यक्तध्वनिप्रसङ्गेन (कल्लनं कल्लः,—कल्ल अव्यक्ते शब्दे इत्यस्माद् भावे घञ्, कल्लश्चासावुल्लापश्च तस्य प्रसङ्गेन ) विलम्बं कुर्वन्तं,—वसन्तप्रादुर्भावमिव—शुकतुण्डं च किंशुकमुकुलश्च तद्वत् रमणीयं 'करचणं' यस्य तं,—पञ्चाननस्य सिंहस्य नखरैः नखैः कण्ठावलम्बिभिः अभिलक्ष्यमाणम् अभिरक्ष्यमाणं [ रलयोरैक्यात् ]—बालकपक्षे, स्कन्दपक्षे

क्रमाच्च सञ्जातनवीनपदन्यासं धृतालङ्कारं सत्काव्यमिव प्रचरदवस्थं, गूढवाक्यमिव किञ्चित्संवृतवस्तुसङ्केतग्रहं, प्रथमचित्रमिव व्यक्ताव्यक्तवर्णविन्यासं, वैशेषिकमिवानुमानगम्यशब्दार्थं, कर्णमिव कुण्डलरमणीयं, कर्णाभरणमरकतमरीचिरेखया कपोलतलावलग्नया कृतशिखण्डकावतंसं बालगोपालमिव समालक्ष्यमाणं, मञ्जीरशिञ्जितानुसारिभिर्भवनकलहंसकैर्भाग्यैरिवाऽत्यन्तमवदातैरनुगम्यमानं, कुमुदमिव ग्रहणप्रणयेन प्रसार्यमाणराजकरनिकरं, ग्रैवेयकपद्मरागरुचिशलाकया दीपिकयेव नातिचिरादाग-

---

स्पष्टम्; प्रभातसूर्यो नूतनकिरणैराक्रान्तभूतलो, बालकस्तु नूतनैर्हस्तैराक्रान्तभूतलः, जानुकरचलनवत्वात्, एतादृशं तं बालकमालोकयन् सर्वेषां लोकानामुपरिष्टात् स्थितं स्वमबुध्यत ॥ ५७ ॥

**क्रमाच्च सञ्जातपदन्यासं तं निभालयमानो देवस्त्रिदिवालयसुखमपि न गणयाम्बभूवेति योजना।** क्रमात्=क्रमशः, सञ्जातो=भूतः नवीनः नूतनः पदयोश्चरणयोर्न्यासो न्यसनं यस्य तं,—काव्यपक्षे पदन्यासः स्पष्टः, धृतालङ्कारं धृतकटकादिभूषणं, काव्यपक्षे स्पष्टम्, प्रचरन्त्योऽवस्था नयनप्रीत्यादयः स्वाधीनभर्तृकत्वादयश्च यस्मिन् तादृशं सत्काव्यमिव प्रचरन्ती वर्धमाना अवस्था बाल्यावस्था यस्य तमित्यनेनान्वयः। किञ्चित्किमपि संवृतो गुप्तो वस्तुसङ्केतस्य पदार्थसंकेतस्य ग्रहो ग्रहणं यस्मिन्,—**गूढवाक्यमिव** व्यङ्ग्यवाक्यमिवोभयत्र समानम्, व्यक्तश्चाव्यक्तश्च वर्णानां नीलपीतादीनां न्यासो न्यसनं लेखनं यस्मिन् तादृशं **प्रथमचित्रमिव** लेखनार्थमारब्धं चित्रमिव, व्यक्ताव्यक्तो वर्णानामक्षराणां विन्यासो यस्य तं बालकम्; अनुमानेन गम्यो बोध्यः शब्दार्थः शब्दप्रमाणवेद्योऽर्थो यस्य तं **वैशेषिकमिव** अनुमानेन गम्यो शब्दार्थः पित्राद्युच्चारितशब्दार्थो यस्य तं—(वैशेषिकानां शब्दप्रमाणस्यानुमानेऽन्तर्भावात् बालकस्य शक्तिग्रहोपायभूतव्यवहारप्रवृत्तत्वात्); सूर्यदत्त-कुण्डलाभ्यां रमणीयं **कर्णमिव** कर्णभूषणाभ्यां रमणीयं तं; कपोलतले गण्डस्थले संलग्नया कर्णाभरणस्थया मरकतमरीचेः रेखया कृत-शिखण्डकावतंसं कृतकाकपक्षभूषणं **बालगोपालमिव** दृश्यमानं तं, भाग्यैरिव मञ्जीरशिञ्जितानुसारिभिः नूपुरनादानुसारिभिः अत्यन्तमवदातैः स्वच्छैः भवनकलहंसकैर्गृहकादम्बकैरनुगम्यमानं तं, **ग्रहणप्रणयेन** स्वीकारप्रश्रयेण प्रसार्यमाणो विस्तार्यमाणो राजकराणां चन्द्रकिरणानां निकरः समूहो येन तं कुमुदमिव कैरवमिव राजकराणां राज्ञां सेवार्थमागमानां मण्डलेश्वराणां करनिकरः करसमूहो येन तं, दीपिकया इव ग्रैवेयकस्य कण्ठभूषणस्य यः पद्मरागस्तस्य रुचेः प्रभायाः शलाकया

मिष्यतो गुणगणस्यानुरोधेन विधीयमानमहाप्रकाशं, भूषणमणिमयूखसूत्रैस्तिर्यगूर्ध्वमधस्ताच्च भाविस्वपरिणाहमिव सूत्रयन्तम् आस्थानमण्डपं मण्डयन्तं तं निभालयमानो देवस्त्रिदिवालयसुखमपि न गणयाम्बभूव ॥५८॥

तत उपदेशग्रहणार्हेऽनेहसि यथानुरूपं पितुरन्येभ्यश्चाचार्यवर्येभ्यस्तास्ता विद्या अनायासादुपगृह्णानः स्वाभाविकानामागन्तुकानाञ्च गुणानां परमं प्रकर्षमापेदे ॥ ५९ ॥

तथाहि—भीमसेन इव महाप्राणतायां, लक्ष्मण इव मेघनादाभिभवे, बलिरिवोदारतायां, कोकिल इव प्रियालापे, मदन इव सौन्दर्ये, सरस्वानिव गम्भीरतायां, सुधादीधितिरिव माधुर्ये, हरिदश्व इव तेजस्वितायां, पुरूरवा इव सौम्यजन्मतायाम् , आकाश इव शब्दागमे, चित्रगुप्त इव कर्ममीमां-

---

नातिचिराच्छीघ्रमागमिष्यत आगामिनो गुणसमूहस्यानुरोधेनानुसरणेन विधीयमानः क्रियमाणः महान् प्रकाशो यस्य तं, भूषणखचितमणिकिरणरूपसूत्रैस्**तिर्यगूर्ध्वमधस्ताच्च** सर्वत इत्यर्थः,—भावी यः स्वस्य परिणाहो विशालता तमिव **सूत्रयन्तं** सूचयन्तम् आस्थानस्य समाभवनस्य मण्डपं जनाश्रयं भूषयन्तं **निभालयमानो**ऽवलोकयमानो राजा **त्रिदिवालयसुखमपि** स्वर्गभवनसुखमपि **न गणयाम्बभूव** किमपि नामन्यत ॥

माणवकाक्रीडमिदं कुसुमं मन्दारमञ्जर्याः ।
वटदलक्रीडनकलिने कलये डिम्भाय चित्राय ॥ ५८ ॥

विनयाधानं प्रस्तौति—**तत** इति । उपदेशग्रहणयोग्ये काले यथायोग्यं पितू राज्ञः अपरेभ्यश्च श्रेष्ठाचार्येभ्यः आयासं विना तास्ता विद्याः स्वीकुर्वन् नैसर्गिकानामाधेयानां च विनयादीनां गुणानां अत्यन्तमाधिक्यं प्रापेत्यर्थः ॥५९॥

तानेव गुणान् दर्शयति **तथाहीति** । बलवत्तायां **भीम** इव । **मेघनादस्य** रावणसुतस्याभिभवे तिरस्कारे **लक्ष्मण** इव = रामानुज इव, मेघस्य घनस्य नादाभिभवे ध्वनितिरस्कारे। दातृत्वे **बलिरिव** । **सौम्यस्य** बुधस्य जन्मतायां जन्मत्वे, पक्षे सौम्यं च तज्जन्म सौम्यजम तस्य भावस्तस्यां शोभनजन्मत्वे ( इत्यर्थः ), **पुरूरवा इव** प्रतिष्ठानपतिरिव । ध्वन्यात्मकस्य वर्णात्मकस्य च शब्दस्यागमे प्रादुर्भावे, पक्षे व्याकरणे च—**आकाश इव** । कर्मणः पूर्वार्जितस्य शुभाशुभस्य मीमांसायां विचारे **चित्रगुप्त** इव ललाटाक्षरपङ्क्तिलेखक इव । पक्षे **कर्ममीमांसायां** पूर्वमीमांसायाम् । **आत्मविद्यायाम्** अध्यात्मविद्यायाम् अध्यात्मज्ञाने ।

सायां, हृदयमिवात्मविद्यायां, आत्मेव प्रमाणोत्कर्षे[1], भगदत्त इव गजपृष्ठे, नकुल इव हयाधिरोहणे, नल इवाश्वाभिप्रायज्ञाने, ऋतुपर्ण इवाक्षहृदयबोधे, शरदारम्भ इव ज्योतिषामागमे, वार्ष्णेय इव रथचर्यायां, द्रोण इव धनुर्विद्यायां, कार्त्तवीर्य इव शरोत्सर्गयौगपद्ये, मधुसूदन इव चक्रप्रचारे, त्र्यम्बक इव शूलोत्सर्गे, हलधर इव मुशलमोक्षे, नरान्तक इव प्रासमोक्षे, निकुम्भ इव परिघाभिघाते, रावण इव चन्द्रहासप्रहारे, दुर्योधन इव गदासंप्रयोगे, भीष्म इवोग्रायुधनिपाते, कर्ण इव महास्त्रशिक्षायाम्[2], अश्वत्थामेव युधिष्ठिरबलोपमर्दे, राम इव निशाचरोज्जासने, भरत इव शैलूषसुततिरस्कारे, शत्रुघ्न इव कुम्भीनसीसुतमदापहारे, शुक्र इव कवित्वे, वामदेव इव सकलाक्षरविद्यायां, ब्रह्मदत्त इव तिर्यग्रुतज्ञाने, गणेश इव लेखनाभ्यासे, स्कन्द इव सर्वदेशभाषाविज्ञाने, बृहस्पतिरिव सुमनोऽनुशासने, मधुकर इव गन्धतत्त्वज्ञाने, हनुमानिव जलराशितरणे, गरुत्मानिवोद्गमने, किं बहुना राकासुधानिधिरिव सकलास्वपि कलास्वासीत् ॥ ६० ॥

---

प्रमाणानां प्रत्यक्षादीनामुत्कर्षे आधिक्ये प्रामाण्ये वा, **आत्मा इव**=चैतन्यमिव। **भगदत्तो** महाभारतप्रसिद्धो गजपृष्ठारोहणे अतीव कुशल आसीत्-अत आह—**भगदत्तेति**। **ऋतुपर्णः** अयोध्यापतिः **अक्षहृदयबोधे** पाशकतत्त्वज्ञाने। **ज्योतिषां** नक्षत्राणामागमे प्रादुर्भावे, पक्षे ज्यौतिषशास्त्रे च **शरदारम्भ** इव। **वार्ष्णेयः** कृष्णः, **रथचर्यायां** सारथिकर्मणि। **शराणां** बाणानामुत्**सर्गयौगपद्ये** त्यागयौगपद्ये सहस्रार्जुन इव। **नरान्तको** यमः। **निकुम्भो** रावणमन्त्री। **चन्द्रहासः** खड्गः। **युधिष्ठिरस्य** धर्मराजस्य बलोपमर्दे सैन्यनाशे, पक्षे युधि संग्रामे स्थिरस्य बलोपमर्दे बलदमने **अश्वत्थामा** द्रौणिरिव। **उज्जासने** नाशे। **शैलूषसुतः** नटः। **कुम्भीनसीसुतः** लवणासुरः। **अक्षरविद्यायाम्** अक्षरतत्त्वज्ञाने। **तिर्यग्रुतज्ञाने** पशुपक्ष्यादिशब्दज्ञाने **ब्रह्मदत्त** नृप इव। **सुमनसां** देवानां पुष्पाणाञ्चानुशासने विद्यायाम्। **सकलास्वपि** सम्पूर्णासु चतुःषष्टिकलासु, चन्द्रपक्षे षोडशकलासु **राकासुधानिधिरिव** पौर्णमासीचन्द्रमा इव आसीत् ॥

विद्याध्ययनविधानं कुसुमं मन्दारमञ्जर्याः।
वाचस्पतये साक्षात् समर्पये वाग्मितासिद्ध्यै ॥ ६० ॥

---

(१) त्रयीरूपमूलमिव नवसंख्यायामित्यधिकं द्वि. पु.।

(२) महासुरतनयोपादाने, राम इव निशाचरोज्जासन इति पा० द्वि० पु०।

तं कदाचिद्रहसि सविनयमासीनं सप्रणयबहुमानं बुद्धिनिधिरवोचत्-"कुमार! निष्णात एवासि नीतिशास्त्रेषु, परिचितान्येव धर्मशास्त्रमर्माणि, विधेयीकृतान्येवेन्द्रियाणि, निगृहीतमेव हृदयं, बद्धमेवावधानम्, आश्रित एव प्रश्रयः, आहित एवोत्साहः; तथापि-चापलं, स्नेहो वा, राजादेशो वा, स्वामिभक्तिर्वा, स्वाधिकारो वाऽत्राऽपराध्यति, अतो न मामनभिधेयाभिधायितया ग्रहीतुमर्हसि"। श्रूयतां महात्मनां महीभुजां वृत्तं,-"ते हि जगज्जीवभूता अपि नाल्पक्षणमात्रावस्थायिनीं संविदं संविदधति; मृणालमृदुहृदया अपि भङ्गुरान्गुणान्नाङ्गीकुर्वन्ति; न्यायाऽनुसारिणोऽपि न मनसि क्षुद्रभावमुपगच्छन्ति; साङ्ख्ये संख्यावन्तोऽपि न प्रधानभावानुरोधेन जल्पन्ति; शब्दानुशासनशीला अपि नासमर्थस्य वृत्तिमपहरन्ति; मीमांसका अपि नित्यकृतिं न विद्विषन्ति; विभुत्वभाजोऽपि नाभ्यर्हितं कर्म विरहयन्ति; स्थूललक्ष्या

---

अधीतसर्वशास्त्रं शिक्षितसकल-कलं कुमारं प्रधानसचिवो बुद्धिनिधिः शिक्षयतीति प्रस्तौति-तं कदाचिदित्यादिना। निष्णातः पारङ्गतः। विधेयीकृतानि वशीकृतानि। निगृहीतं स्वायत्तीकृतम्। अवधानं प्रणिधानम्। अनभिधेयाभिधायितया अशिक्षणीयशिक्षकत्वेन ग्रहीतुं ज्ञातुं न योग्योऽसि। स्ववक्तव्यं प्रतिपादयन्नभिमुखीकरोति-श्रूयतामिति। वृत्तं सच्चरित्रम्। ते हि महात्मानो नृपाः जगतः संसारस्य जीवभूता अपि जन्तुभूता अपीति विरोधः,-जीवभूताः प्राणभूता अल्पसमयावस्थायिनीं संविदं ज्ञानं न धारयन्ति अपि तु अधिकसमयावस्थायिनीं संविदं दधति। बिसवत्कोमलहृदया अपि भज्यमानान्गुणान् न स्वीकुर्वन्ति। न्यायानुसारिणोऽपि न्यायकारिणोऽपि न्यायशास्त्रानुसारिणश्च मनसि चेतसि क्षुद्रभावम् अनुदारतां परमाणुरूपतां च न उपगच्छन्ति न स्वीकुर्वते। साङ्ख्ये=युद्धे साङ्ख्यशास्त्रे च संख्यावन्तोऽपि निपुणा अपि प्रधानस्य स्वामिनो भावानुरोधेन भावप्रतिबन्धकत्वेन न जल्पन्ति, अन्यत्र प्रधानभावानुरोधेन प्रकृत्यनुरोधेन। शब्दानुशासनशीला वैयाकरणा असमर्थस्य पदस्य वृत्तिं समासादिवृत्तिमपहरन्ति न प्रतिपादयन्ति, महान्तस्तु तादृशा अपि असमर्थस्य दीनस्य वृत्तिमाजीविकां नापहरन्ति। मीमांसका नित्यकर्म फलराहित्येन विद्विषन्ति, महान्तस्तु विचारशीला अपि नित्यकर्म न, "नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्" इत्यादिप्रामाण्याद् दुरितक्षयरूपफलस्य सत्त्वात्। विभुत्वभाजो व्यापकाः कालाकाशादयः, कर्म क्रियां विरहयन्ति=व्यापकत्वात्क्रियारहिता भवन्तीत्यर्थः, महान्तस्तु-विभुत्वभाजोऽपि स्वामिनोऽपि प्रशस्तं कर्म न त्यजन्ति।

अपि सूक्ष्मदर्शितां न मुञ्चन्ति; महापुरुषा अपि नोदारतां त्यजन्ति; नरेन्द्रा अपि न भूतनिग्रहं कुर्वन्ति; विग्रहप्रीतयोऽपि यशस्येवानुरज्यन्ते; महिषीसमुद्भवा अपि वृषभावमवलम्बन्ते; गुणस्वभावा अपि न द्रव्यमात्राभिनिवेशिनो भवन्ति; नदीप्रवाहवद्विश्रृङ्खलसर्वतोमुखसम्पदोऽपि न सेतुं भिन्दन्ति; त्रेतावद्दृश्यराघवचरित्रा अपि न कृतघ्नभावं भजन्ते; कृष्णवत्परिपालितगोकुला अपि न निहतपूतनाका भवन्ति; सङ्कर्षणवत्पूजितरोहिणीका अपि न निरस्तधेनुकाः संपद्यन्ते; ऋतुपर्णवत्पुरस्कृतबाहुका अपि न कोशलेशत्वं प्रतिपद्यन्ते; परीक्षिद्वद्धृतोत्तरोदया अपि न व्यालगृहीतजीवना भवन्ति; जनमेजयवद्विहितभुजङ्गोज्जासना अपि न वपुष्टमारतयो

स्थूललक्ष्या अपि महालक्ष्या अपि सूक्ष्मदर्शितां सूक्ष्मदृष्टिमिति विरोधः, विचारशालितामिति परिहारः। महान्तश्च ते अपुरुषा अतिनिन्दिताः पुरुषा उदारतां त्यजन्ति महात्मानस्तु न। **नरेन्द्रा** ऐन्द्रजालिका भूतानां प्राणिनां निग्रहं कुर्वन्ति महान्तो नराणामिन्द्रा अपि न। **विग्रहः** शरीरं युद्धं च। **महिषी** कृताभिषेका राज्ञी, **वृषभावं** प्राधान्यम्। **गुणानां** रूपादीनां **स्वभाव** इव **स्वभावो** येषामिति विग्रहे द्रव्यमात्राभिनिवेशित्वं महात्मस्वापतति गुणानां द्रव्यमात्रवृत्तित्वात्, गुणवत्स्वभावा अपि **द्रव्यमात्राभिनिवेशिनः** धनग्रहणमात्रे आग्रहवन्तो न भवन्ति–गुणग्राहित्वान्महात्मनाम्। **विश्रृङ्खला** अप्रतिबन्धा सर्वतोमुखी सम्पत् येषां तादृशा अपि **सेतुं** मर्यादां न उल्लङ्घयन्ति। त्रेतायुगं प्रत्यक्षीभूतरामचरित्रमपि **कृतं** कृतयुगं हन्तीति कृतघ्नस्तस्य भावं भजते, त्रेतायुगारम्भानन्तरं सत्ययुगस्य नष्टत्वात्, महात्मानस्तु दृश्यमानं प्रत्यक्षीक्रियमाणं राघवस्येव रामस्येव चरित्रं वृत्तं येषु ते तादृशा अपि कृतघ्नतां न भजन्ते। निरस्तो धेनुको धेनुकासुरो येन तादृशः **सङ्कर्षणो** बलदेवः, पक्षे पूजिता **रोहिणी** रक्ता गौर्यैस्ते निरस्ता धेनुर्नवप्रसूतिका गायैस्ते तादृशा न। ऋतुपर्णपक्षे **कोशलेशत्वम्** अयोध्याधीशत्वमन्यत्र कोशस्य मूलधनस्य लेशत्वमल्पत्वम्, **बाहुको** गुप्तो नलः अश्वसेवकः,—अन्यत्र मल्लः। परीक्षिद्राजा धृत उत्तरायाः स्वमातुरुदयो वृद्धिर्येन तादृशः सन्नपि **व्यालेन** तक्षकेन गृहीतं जीवनं यस्य तादृशः, अन्यत्र धृत उत्तर उदर्क उदय उन्नतिर्यैस्ते तादृशा अपि न व्यालगृहीतजीवनाः। **जनमेजयः** परीक्षित्पुत्रः, भुजङ्गानामुज्जासनो नाशकः सर्पयागकर्तृत्वात्, वपुष्टमा तत्पत्नी तस्यां रतिर्यस्य तादृशः; तद्वत् **भुजङ्गानां** विटादिकण्टकानाम् उज्जासना निरासका अपि—

(१) सदा सौनन्दकरा अपि इति पा० द्वि० पु०।

वर्तन्ते; नलवद्वीरसेनोद्भूतयोऽपि नाक्षाधीनप्रवृत्तिका भवन्ति; हनुमद्व-त्कृतसागरोल्लङ्घनयशसोऽपि न कापेयवृत्तयो भवन्ति; अम्बरविशेषवद्धरा-मुपभुञ्जाना अपि न रजसा संसृज्यन्ते; सूर्यवद्गृहीतसहस्रकरा अपि न मन्दं जनयन्ति; चन्द्रवत्कलानिधयोऽपि न कलङ्कसङ्करं लभन्ते; भौमवन्मङ्गल-स्वभावा अपि न निजकुले ऽङ्गारका भवन्ति; बुधवद्गृहीतसौम्यभावा अपि न परिगृहीतामिलां मुञ्चन्ति; बृहस्पतिवद्गृहीतविबुधगुरुभावा अपि नाङ्गिर-सत्वं वहन्ति; शुक्रवत्काव्याभिधेया अपि उदयारभ्य वार्द्धकावधि धर्मकार्यं न प्रतिबध्नन्ति; इन्द्रवच्छतमखा अपि न यथारुचि प्रवर्तन्ते; दहनवत्का-ष्ठान्वयवर्द्धमानतेजसोऽपि न कृष्णवर्त्मानो भवन्ति; यमवद्धर्माधर्मविचारका अपि नान्तकत्वं वहन्ति; निर्ऋतिवन्महाशरपक्षपातिनोऽपि न कर्बुरवृत्तयो

---

अतिशयितं यद् वपुस्तस्मिन्नासमन्ताद्रतिः प्रीतिर्येषां तादृशा महात्मानो न वर्तन्ते, न केवलं स्वशरीरमात्रपोषकाः, अपि तु परोपकारका इत्यर्थः। वीरसेनादुद्भूति-र्जन्म यस्य तादृशो नलः, वीराणां सेनायाः सकाशादुद्भूतिः सम्पत्तिर्येषान्ते महात्मानः। हनूमान् सागरोल्लङ्घनेन कृतयशाः, समानमुभयत्र। रघ्वादयो दृष्टान्ताः 'उदधीन्प्रतीर्णमि'ति सूक्तेः। अम्बरविशेषवद् ऊर्णादिवस्त्रविशेषवद् धरा-काशवद्वा, रजसा रजोगुणेन पांसुना च। सहस्रकराः सहस्रांशवः, राजग्राह्या भागाश्च। मन्दं शनैश्चरं सूर्यपक्षे। कलङ्कसङ्करः लाञ्छनसंयोगं दोषमिश्रणं च। 'अङ्गारकः कुजेऽपि स्याद् दग्धकाष्ठे' इति मेदिनी, 'कुलदाहकाः' इत्यर्थः, स्वकु-लापकारका न भवन्तीति भावः। सौम्यभावः सोमजन्मत्वं शोभनभावश्च। इलां पुरूरवोमातरं पृथ्वीं च। बृहस्पतिः गृहीतदेवगुरुभावः, महात्मानस्तु गृहीतविद्वद्-गौरवाः, अङ्गिरसोऽपत्यमाङ्गिरसो बृहस्पतिः, अङ्गी चासौ रसः अङ्गिरसः प्रधानो रसस्तत्त्वं न वहन्ति किन्तु राजत्वम्। काव्यनामभाक् शुक्रः, काव्यम् अभिधेयं पाठ्यम् येषान्ते महात्मानः; शुक्रो बालो वृद्धोऽस्तगतश्च धर्मकार्यं प्रतिबध्नाति 'वृद्धत्वा-स्तशिशुत्व इज्यसितयोर्न्यूनाधिमासे तथा' इति निषेधात्, राजानस्तु शैशवादारभ्य वृद्धावस्थापर्यन्तं धर्मकार्यं कुर्वन्त्येव। इन्द्रः शतमखो नाम्ना कर्मणा च, महात्मा-नस्तु शतमखकर्तारः, इन्द्रस्य यथारुचिप्रवृत्तिर्देवत्वात्, महात्मनां यथारुचि न प्रवृत्तिः शास्त्रानुसारित्वात्। वह्निरिन्धनसम्बन्धेन वर्धमानप्रतापः, महात्मानस्तु काष्ठासु दिशासु ये अन्वया राजवंशास्तेषु वर्धमानं तेजः प्रतापो येषां तादृशा अपि कृष्णं कलुषितं वर्त्म मार्गो येषां ते न भवन्ति। अन्तकत्वं नाशकत्वम्। महा-

---

(१) न प्रभञ्जनजन्मानो इति० द्वि० पु० पा०

भवन्ति; वरुणवच्चतुःसमुद्राधिपतयोऽपि न जडेश्वरतां[1] कलयन्ति; पवनवत्सा-ङ्कुशा अपि न तिर्यग्वृत्तयो भवन्ति; कुबेरवद्धनेश्वरा अपि न द्रव्यप्राप्ति-प्रतिबन्धकानुचरवन्तो भवन्ति[2]; ब्रह्मवत्प्रजासर्गकारिणोऽपि नावदातपक्ष-वृत्तितां श्रयन्ते; मदनवद्रूपशालिनोऽपि न यौवनवशविश्रृङ्खलप्रवृत्तयो भवन्ति; चक्षुर्वत्तेजस्विप्रकृतयोऽपि न रूपमात्रमाद्रियन्ते; बुद्धवत्सर्वज्ञा अपि न क्षणिकभावाः सम्पद्यन्ते; स्फटिकवद्विशदान्तररागा अपि न जवा-न्वितं रागमुद्वहन्ति; शब्दवच्छक्तिमन्तोऽपि न स्वार्थमात्रपरतां भजन्ते; वेदान्तिवदात्मवेदिनोऽपि न मिथ्याभावमुरीकुर्वन्ति; सरोवद्गम्भीरा अपि न पङ्ककलुषाशया भवन्ति; पद्मवत् श्रीवसतयोऽपि न द्विजराजदर्शनेन बद्धकोशतामाप्नुवन्ति; दक्षवत्प्रजापतयोऽपि न परशिवद्रोहिणो भवन्ति; परशुरामवद् बद्धयुद्धादरा अपि नाकृतव्रणशरीरे प्रणयं कुर्वन्ति; आत्मवच्चैत-न्यभाजोपि न परार्थतां परिहरन्ति; अर्जुनवत्सदा [3]समरविजयिनोऽपि न

---

शरपक्षपातित्वं निर्ऋतौ महात्मसु च समानम् । कर्बुरवृत्तित्वं राक्षसभावः । जडेश्वरतां मूर्खाधिपत्यं जलाधिपत्यं च डलयोरैक्यात् । द्रव्यप्राप्तेः प्रतिबन्धका ये अनुचराः गुह्यकास्तद्वान् कुबेरो यक्षाधीशत्वाद्, यक्षाणां च धनरक्षकत्वात्, महात्मानस्तु न तथा । ब्रह्मा प्रजासृष्टिकारी अवदातपक्षवृत्तिः हंसपक्षवृत्तिः, 'हंसास्तु श्वेतगरुत' इत्यमरः, महात्मानस्तु प्रजानां जनानां सन्ततेश्च सर्गकारिणो दानकारिणो जननकारिणश्च न तथा । विश्रृङ्खलवृत्तयः स्वेच्छाचारिणः । चक्षुरि-न्द्रियं रूपमात्रग्राहि, महात्मानो रसादिकमपि आद्रियन्ते । क्षणिकाः क्षणवृत्तयो भावाः पदार्था यस्य तादृशो बुद्धः, महात्मानस्तु न । जवान्वितं प्रतिबिम्बितं सङ्क्रान्तं रागं गृह्णाति स्फटिकः, वेगवन्तं रागं न गृह्णन्ति महात्मानः । सङ्केतसम्बन्धेन स्वार्थप्रतिपादकरूपशक्तिमन्तः शब्दाः पदरूपाः, 'शक्तं पदमिति' लक्षणात्, प्रभूत्साह–मन्त्र-शक्तिमन्तो महात्मानो नृपाः; शब्दः स्वशक्त्या स्वार्थमात्रं प्रति-पादयति, महात्मानो नृपाश्च स्वकार्यं परकार्यं च प्रतिपादयन्ति, अतो न स्वार्थेति । 'पङ्कोऽस्त्री कर्दमे पापे' इति मेदिनी । द्विजराजः = चन्द्रमा ब्राह्मणश्च । परश्चासौ शिवः परशिवः सदाशिवः, परेषामन्येषां शिवं कल्याणम् । परशुरामोऽकृतव्रण-शरीरे क्षत्रियभिन्ने ब्राह्मणादौ, एते तु अकृतव्रणशरीरे कातरे । आत्मा चैतन्य-भागपि परार्थतां परात्मप्रत्यक्षं परिहरति प्रत्यक्षं न कुरुते किन्त्वनुमानेन परात्मानं जानाति, महात्मानो नृपास्तु परार्थतां परकार्यसाधकत्वं न परिहरन्ति ।

---

(१) नाधोगतित्वं प्रतिपद्यन्ते इति द्वि० पु० पा० । (२) शिववदीश्वरा अपि नोग्रभावं लभन्ते; अनन्तवद्धृतधरातला अपि न जिह्मगतयो भवन्ति; इत्यधिकं द्वि. पु. । (३) विजित-महाकालकेयदानवकुञ्जरा अपि इति द्वि. पु. पा. ।

कदाचित्क्लीबतां प्रतिपद्यन्ते; गरुडवत्पुराणपुरुषानुचरा अपि न सत्यपध्यानेन पक्षहानिमनुभवन्ति ; समयवत्सर्वाश्रया अपि न विशेषगुणराहित्यमभ्युपयन्ति; समुद्रवत्सरस्वतीनिलया अपि न मार्गणक्षोभं गणयन्ति; पर्वतवदुन्नता अपि न बलभिदभियोगं लभन्ते; कोकिलवद्रागिदृष्टयोऽपि न मलिनदर्शना भवन्ति; नृगवद्दत्तानेकसुरभयोऽपि न गोव्यत्ययादसदवस्थां प्रपद्यन्ते; उशनोवद्विहितविबुधविपक्षानुशासना अपि न धिषणावमोहप्रकारा भवन्ति; कर्णवद्धृतराष्ट्रोदयानुकूलवृत्तयोऽपि न विजयं विरुन्धन्ति; इक्ष्वाकुवन्मन्वनुसारिणोऽपि नानुचितवृत्तिं दण्डं जनयन्ति; गजवद्दानस्पृशोऽपि न करव्यापारोद्वेजितसमाश्रितालयो भवन्ति; विष्णुवद्बलिनिग्रहवि-

---

**पुराणपुरुषस्यानुचरः** सेवको गरुडः, वाहनत्वात्, अन्ये भक्तत्वात्, सत्याः सतीकर्तृकं यदपध्यानं विरुद्धानुध्यानं तेन हेतुना पक्षाणां पत्राणां हानिमनुभूतवान् गरुडः, महात्मानस्तु **सतीनां** पतिव्रतानामपध्यानेन दुरेषणया पक्षहानिं स्ववर्गहानिं नानुभवन्ति, धर्मरक्षकत्वात्; । **समयवत्** कालवत्–**जगदाधारा अपि** सर्वाश्रया अपि, विशेषाश्च ते गुणाः शौर्यौदार्यादयस्तद्राहित्यं नोपगच्छन्ति महात्मानः, समयस्तु सर्वाश्रयोऽपि 'जगतामाश्रयो मतः' इत्युक्तेः; "बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः । अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः" इति न्यायशास्त्रोक्त–विशेषगुणराहित्यमभ्युपैति। समुद्रः सरस्वत्या नद्या **निलयः** सरित्पतित्वात्तस्य, अन्ये **सरस्वत्या** वाण्या निलयाः । **मार्गणक्षोभं** परशुरामलक्ष्मणादित्यक्तबाणक्षोभम्, अन्यत्र **मार्गणा** याचकाः, ( 'मार्गणो याचके शरे' इति मेदिनी)। **बलभिदिन्द्रः**, अन्यत्र बलं भिन्दन्ति ते बलभिदः शत्रवः। **रागिणी** रक्ता दृष्टिर्यस्येति कोकिलपक्षे, रागवती अनुरागवती दृष्टिर्यस्येत्यन्यत्र, मलिनं कृष्णं रूपं यस्येति कोकिलपक्षे, अन्यत्र दोषदृष्टयः । **नृगः** वैवस्वतद्वितीयपुत्रः; **सुरभयो** गावः, **गोव्यत्ययात्** एकसुरभिविपर्यासात्,अन्यत्र चक्षुरादीन्द्रियव्यत्ययात्, **असदवस्थां** कृकलासत्वमन्यत्र बाधिर्यादित्वम् । **अनुशासनं** शिक्षणं दण्डश्च, 'गीष्पतिर्धिषणो गुरुः' 'बुद्धिर्मनीषा धिषणा' इत्युभयत्रामरः । धृतराष्ट्रो दुर्योधनपिता, अन्यत्र धृतं च तद्राष्ट्रं राज्यं तस्य उदयेत्यादि स्पष्टम् , **विजयोऽर्जुनः** जयश्च । अनुचितोऽयोग्यस्तद्वृत्तिर्यो दण्डः शासनं तज्जनक इक्ष्वाकुरादिमानवराजत्वात्, तदारभ्य एव दण्ड्यदण्डविधानात्, महात्मानो नृपास्तु अनुचिता अयोग्या वृत्तिर्वर्तनं यस्य तादृशं **दण्डं** शासनं न जनयन्ति, अदण्ड्यदण्डनस्य निषेधात्, मन्वनुसारित्वं समानम् । **दानं** मदो वितरणं च, **करः** शुण्डा राजग्राह्यो भागश्च,

धायिनोऽपि न विषमक्रमा भवन्ति। अपि च चापवत्सद्वंशा गुणप्रसङ्गादेव समाकृष्यन्ते; प्रातिपदिकवदर्थवन्तः सुप्रत्ययप्रकृतयो भवन्ति; शुकवत्स्वपक्ष-हरितो रक्तलपना भवन्ति; समुद्रवद्रत्नाकरा अहार्यपक्षरक्षिणः सम्पद्यन्ते; साङ्ख्यवत्प्रकृतिजनितबुद्धयः पुरुषान्तरमुरीकुर्वन्ति; जातिवत्सर्वसामान्याः स्वयमसामान्या भवन्ति। किञ्च तेषां समविषमावगाहिनी बुद्धिरेव विजयं जनयति,-मनीषितविलासमात्रमनीकिन्यः; सर्वदा सर्वदिग्व्यापी गुणगण एव जनान्वशयति,–प्रपञ्च एव परिच्छिन्नवृत्तिः परिजनः; लोकोत्तरप्रकाशजनकानि शास्त्राण्येव विग्रहं विभूषयन्ति,–विलोचनचमत्कारचतुराण्याभरणानि; दिग्वारणाभिभावी बाहुरेव दानजलं विसृजति,–बुद्धिबन्धनमात्रं सिन्धुराः; लोकलोचनातिलङ्घनजङ्घालस्तेजोविशेष एव जनानुपगन्तुं न ददाति,–साध-

---

अलयो भ्रमराः, आलयः श्रेण्यः शिल्पिसंहतय इत्यर्थः। विषमश्चित्वसंख्याविशिष्टः क्रमः क्रमणं विष्णौ, विषमक्रमाः न्यूनाधिकभावाः। वंशो वेणुः कुलं च, गुणः शिञ्जिनी, शौर्यौदार्यादिश्च। सुप्रत्ययस्य प्रकृतिभूतं प्रातिपदिकम्, सुप्रत्ययप्रकृतयः शोभनप्रतीतिस्वभावा महात्मानो राजानः। शुकाः स्वपत्त्रेषु धृतहरिद्वर्णाः, राजानः स्ववर्गे धृतदिशः,–दिग्विजयिन इत्यर्थः, 'हरिद् दिशि स्त्रियां पुंसि हयवर्णविशेषयोः' इति मेदिनी, रक्तं शोणमनुरक्तं च, लपनं मुखं भाषणं च। अहार्यपक्षरक्षिणः स्वीकार्यवर्गरक्षकाः। साङ्ख्यशास्त्रे प्रकृत्या प्रधानेन जनिता बुद्धिर्महत्तत्त्वं यस्मिन्–तत्–तादृशं पुरुषं जीवात्मानं स्वीकरोति, तद्वत् प्रकृत्या स्वभावेन बुद्धिः सद्बुद्धिर्येषान्ते तादृशा महात्मानोऽन्यं पुरुषं शरणागतं स्वीकुर्वन्ति। जातिः सर्वासु व्यक्तिषु सामान्या समानवृत्तिर्भवति, गोत्वघटत्वादेः सर्वव्यक्तिषु सामान्यतः प्रतीतेः, स्वयं जातिर्नास्ति सामान्यसाधेयतया यस्यां तादृशी, तद्वत् महात्मानो राजानः सर्वेषु जनेषु समानदृष्टयोऽपि स्वयमसामान्याः सर्वलोकाधिका भवन्ति। किञ्च तेषामिति प्रतिवाक्यमनुवर्तते; तेषां महात्मनां नृपाणाम् उच्चावचविषयिणी मनीषा एव उत्कर्षमुत्पादयति, अनीकिन्यो वाहिन्यः–अभिलषितविलासमात्रम्। नित्यं सर्वदिग्व्यापी गुणसमूह एव जनान्वशीकरोति,–परिच्छिन्ना परिमिता वृत्तिर्वर्तनं यस्य तादृशः परिजनः प्रपञ्च एव विस्तार एव। अलौकिकप्रकाशकारकाणि शास्त्राण्येव शरीरं मण्डयन्ति, भूषणानि तु नेत्राह्लादकुशलान्येव। दिग्गजाभिभावी भुज एव दानजलं त्यजति, सिन्धुराः गजाः बुद्ध्यवलम्बनमात्रम्; गजाः सन्त्यस्माकमित्याकारकबुद्धिविषयीभूता इत्यर्थः। जननयनातिक्रमणजाङ्घिकः प्रतापविशेष

नसम्पत्तिमात्रं प्रतिहाराः; अवदाततममौदार्यमेव जगत्प्राणजनकं,—बालबुद्धिव्यामोहनमात्रं बालव्यजनानि; सुगृहीतशलाकं नीतितन्त्रमेव सन्तापवारणकारणं,-प्रभुत्वप्रकाशकमात्रमातपत्रं; सरसीकरणलब्धधुर्यभावं माधुर्यमेव पदे प्रतिष्ठापयति,-परिभाषामात्रमभिषेकः; सुवर्णमयी भाग्यलिपिरेव फलानुमेया भालं विभूषयति,-खलावधीरणोपायो वीरपट्टिका; अनेकशिखं सच्चरित्रमेवोच्चैःशिरस्कतां सम्पादयति,—कूटमेव मुकुटम्; दिगन्तरव्यापी समुत्सृष्टगन्धसिन्धुरमधुकरध्वनिरेव यशो विशदयति,—स्वजीविकामात्राभिनन्दिनो वन्दिनः; अविच्छिन्नोऽध्वरदहनधूमसन्तान एव दिङ्मुखानि समावृणोति, —पुनरुक्तिमात्रमक्षौहिणीक्षतक्षितितलोत्प्रेक्षितः क्षोदः; अविच्छिन्नज्वलनः प्रताप एव प्रकाशमापादयति,—अनुवादमात्रं दीपिकासमुदायः; शरच्चन्द्रिकाभासुरो यशोराशिरेव धावल्यं विभावयति,—प्रकारमात्रं हाराः; भयपलायितो वैरिवरवर्णिनीविसर एव दिगन्तपर्वतानधरयति,—आवृत्तिमात्रं वाहसमूहः;

---

एव लोकानुपगन्तुं रुणद्धि, **प्रतिहाराः** द्वारपालाः उपकरणविभूतिमात्रम्। **अवदाततम**तिस्वच्छतमा उदारता एव जगतां प्राणस्य जीवनस्य समीरणस्य च जनिका, **बालव्यजनानि** चामराणि तु बालानामज्ञानां बुद्धिमोहजनकमात्रम्। सुगृहीता शलाका दण्डविधानं यस्य तत् नीतितन्त्रमेव दुःखवारणकारणं, **सुगृहीतशलाकं** सुगृहीतदण्डम् आतपत्रं तु प्रभुत्वस्य प्रभावस्य प्रकाशनमात्रम्। सरसीकरणेनाऽऽर्द्रीकरणेन लब्धो धुर्यभावो मुख्यत्वं येन तादृशं **माधुर्यमेव** मधुरभाषित्वमेव **पदे** राज्यारोहणे प्रतिष्ठापयति स्थिरीकरोति, **अभिषेको** राज्याभिषेकस्तु परिभाषामात्रं गौण एव। **सुवर्णमयी** स्वक्षरवती हेममयी च, **वीरपट्टिका** वीरत्वसूचकं मुकुटं वर्म च, अवधीरणम् अनादरः। **अनेकशिख**मनेकप्रकारं त्रैवर्गिकमित्यर्थः, सच्चरित्रमेव सद्वृत्तमेव, **मुकुटं** किरीटम्। दिशामन्तरं तद्व्यापी, समुत्सृष्टास्त्यक्ता ये **गन्धसिन्धुरा** गन्धगजास्त एव मधुकरास्तेषां ध्वनिरेव रव एव कीर्तिं प्रकाशयति, वन्दिनस्तु स्वजीविकामात्रमभिनन्दन्ति तच्छीलाः। **अविच्छिन्नो**ऽखण्डितः यागवह्निधूमप्रबन्ध एव दिङ्मुखानि सम्यगाच्छादयति, अक्षौहिण्याः सेनाभेदेन क्षुण्णं यत् क्षितितलं भूतलं तस्मादुत्प्रेक्षित उद्धूतः, **क्षोदः** =रेणुः पुनरुक्तिमात्रम्। निरन्तरप्रदीप्तः प्रभाव एव **प्रकाशं** विकाशं करोति; दीपिकानां समूहः अनुवाद एव। शरत्कालिकज्योत्स्नावत् भास्वरः कीर्तिसमूह एव शुभ्रत्वं जनयति, **हारा** मुक्ताहाराः प्रकारान्तरमात्रम्। भयेन पलायितो रिपुरमणीव्रात एव दिगन्तानां ये पर्वतास्तानधरयति तिरस्करोति, **वाहसमूहः** पुनरुक्तिमात्र-

शरदम्बरभासुरः स्वकरवर्त्ती महाऽसिरेव विपक्षान्क्षपयति,-उपकरणमात्रं सुभटकरवालमण्डलम्;अनेकमन्त्रसाध्याः क्रतुक्रिया एव हव्यवाहं तर्पयन्ति,-वीप्सामात्रसम्पादिका वैरिनगर्यः; अतिक्रूरा निर्घातसधर्माणो धनुर्निर्घोषा एव विरोधिवारणमदवाहिनीः शोषयन्ति,—अन्यथासिद्धा विजयदुन्दुभिनादाः; वीररसप्राया विपक्षा एव गिरिगुहागृहान्तगर्ताः शौर्योष्माणं प्रमाणयन्ति,-संस्तवमात्रं कविजनाभिलापाः ; प्रत्यक्षग्राह्यो विनय एवाभिजाततामाचष्टे,-उपायान्तरमेव पुराविदुक्ताः शब्दसन्दर्भाः; अर्थगौरवशाली वचनोपन्यास एवान्तर्वृत्तिमौदार्यविशेषं विशदयति,-उपचारमात्रं बाह्योपचारः; सर्वकालिक्यसद्वृत्तनिवृत्तिरेवास्तिकताङ्कमयति,-संवादापेक्षा यागादिक्रिया; सकटका अनेकजनपदवृत्तयो यूपा एव दिग्विजयमाचक्षते,-कण्टकशुद्धिमात्रफलका अधिकारिणः ॥ ६१ ॥

असन्तस्तु भीमस्वभावा अपि न धर्मोद्भवमपेक्षन्ते; दुःशासना अपि

---

मेव । शरत्कालिक-गगनवत् स्वच्छः स्वहस्तस्थितः खड्ग एव शत्रून् नाशयति, **सुभटानां** खड्गसमूहः सामग्रीमात्रमेव । **हव्यवाहं** वह्निम्, **वीप्सा** पौनःपुन्यम् । अतिकठोरा वाताघातजन्या महाध्वनिर्निर्घातस्तत्सधर्माणस्तत्सदृशा धनुर्ध्वनय एव रिपुगजमदनदीः शुष्कतां नयन्ति, विजयदुन्दुभिध्वनयोऽन्य**थासिद्धाः** पुनरुक्ताः । **वीररसप्राया** वीररसस्वरूपा रिपव एव पर्वतगुहाभवनमध्यगता वीरदर्पं प्रमाणयन्ति, कविजनानामालापाः स्तुतिमात्रम्, परिचयमात्रं वा ( 'संस्तवः स्यात्परिचयः' इत्यमरः )। **प्रत्यक्षग्राह्यः** संयुक्तसमवायसम्बन्धेन चाक्षुषप्रत्यक्षवेद्यः, राजसमवेतो विनयो विनमनं तदेव कुलीनतामाचष्टे, '**अभिजातः** कुलीनः स्यादि' त्यमरः, **पुराविदुक्ताः** इतिहासज्ञोक्ताः **सन्दर्भा** वंशवर्णनरूपाः प्रबन्धा अन्योपाय एव । **अन्तर्वृत्तिम्**=अन्तःकरणस्थितम्, **औदार्यविशेषम्** उदारताभेदम् । **सर्वकालिकी**=नित्या दुश्चरितनिवृत्तिरेव आस्तिकभावं बोधयति, यागदानहोमादिका क्रिया कर्म संवादं सम्मेलम् अपेक्षते तत्स्वरूपा । **सकटकाः** सचषाला ('चषालो यूपकटकः' इत्यमरः ) नानादेशस्थिता यूपा यज्ञस्तम्भा एव दिग्वशीकारं कथयन्ति; **अधिकारिणः** आधिकरणिकाः समाहर्त्रादयः **कण्टकानां** लुण्ठकादीनां शुद्धिर्निराकरणं तन्मात्रं फलं प्रयोजनं येषां तादृशाः ॥ ६१ ॥

असतो राज्ञो निन्दति—**असन्तस्त्विति** । **भीमो** भीमसेनो धर्मस्य युधिष्ठिरस्य उद्भवमुदयमपेक्षते, असन्तो नृपास्तु भीमो घोरः स्वभावो निसर्गो येषान्तादृशा अपि धर्मस्य पुण्यस्य उद्भवमुत्पत्तिं नापेक्षन्ते ; 'घोरं भीमं भयानकमि'त्य-

न नकुलं विद्विषन्ति; जातिमन्तो निर्गुणा अपि न गुणशब्दमर्हन्ति; समरभीरवोऽपि विग्रहप्रिया भवन्ति; पदवन्तोऽपि न गतिं लभन्ते; गुरुत्वहीना अपि पार्थिवा इत्युच्यन्ते; अस्नेहा अपि जडा भवन्ति; निसर्गनिष्ठुरा अपि दहनत्वं वहन्ति; नयनग्राह्या अपि पवनप्रकृतिका भवन्ति; परलोकादविभ्यतोऽपि विपक्षमाश्रयन्ते; अलीकबाह्यार्थवादिनोऽपि न योगाचारतां धारयन्ति; परममहत्त्वशालिनोऽपि न श्रोत्रमनोग्राह्यविशेषगुणा भवन्ति; कालस्वभावा अपि नातीतानागतवर्तमानप्रत्ययान्निर्वाहयन्ति;

---

मरः। दुःशासनो नकुलं पाण्डवं विद्वेष्टि; असन्तस्तु नृपा दुष्टं शासनमाज्ञा येषान्ते तादृशा अपि नास्ति कुलं यस्य स नकुलस्तं ('सह सुपा' इति नशब्देन समासः) न विद्विषन्ति। **जातिमन्तो निर्गुणा** रूपरसादयः—गुणशब्दं स्वनामधेयत्वेनाद्रियन्ते, ते तु क्षत्रियत्वजातिमन्तोऽपि शौर्यौदार्यादिगुणरहिता गुणशब्दवाच्यतां न पूजयन्ति, गुणशब्दवाच्यतायोग्या न भवन्ति वा। संग्रामभीरवोऽपि—**विग्रहः** देहः प्रियो येषान्ते तादृशा भवन्ति, न तु समरप्रियाः। चरणवन्तो गमनं लभन्ते, असन्तो राजानस्तु सम्राडित्यादि **पदवन्तोऽपि गतिं** ज्ञानं न लभन्ते। गुरुत्वहीनं किमपि वस्तु पृथिव्या विकारो न भवति, एते तु गौरवेण हीनाः पृथिव्या ईश्वरा इत्युच्यन्ते। जलम्—अस्नेहं न भवति, ते तु अस्नेहा अपि **जडा** भवन्ति (डलयोरैक्यात्)। दहनः स्वभावतो निष्ठुरो नाम घनो न भवति किन्तु तरलः, एते तु कठोरा अपि दहनभावो **दहनत्वं** सन्तापकारित्वं **वहन्ति** धारयन्ति। **नयनग्राह्या**श्चक्षुरिन्द्रियसाक्षात्कारविषतीभूता रूपादयो न पवनप्रकृतिका भवन्ति—इति विरोधः, नयनग्राह्या मनोहरा इति परिहारः, पवनप्रकृतिकाश्चपलाः। **योगाचारो** बौद्धभेदः-अलीका मिथ्याभूता बाह्यार्था घटपटादयस्तान् वदति तच्छीलः, विज्ञानवादित्वात्, असन्तस्तु बाह्यश्चासावर्थो बाह्यार्थः सर्वजनविदितोऽर्थस्तद्विषयासत्यवादिनोऽपि असत्यभाषिणोऽपीत्यर्थः, **योगाचारतां** योगश्चाचारश्च योगाचारौ तयोर्भावस्तां चित्तसमाधानसदाचारभावं न धारयन्ति। **परममहत्त्वशालिनौ** आकाशात्मानौ; तौ यथासंख्यं श्रोत्रमनोग्राह्य—शब्दसुखादिविशेषगुणवन्तौ, असन्तस्तु तादृशा अपि श्रोत्रं च मनश्च श्रोत्रमनसी ताभ्यां ग्राह्या विशेषगुणाः कृतज्ञत्वकवित्वादयो येषां तादृशा न भवन्ति, विशेषगुणग्राहका न भवन्तीत्यर्थः। **कालो** भूतभविष्यद्वर्तमानप्रतीतेरसाधारणं कारणम्, एते तु **कालस्वभावा** यमस्वभावा अपि भूतभविष्यद्वर्तमानविश्वासान्न पालयन्ति, अविश्वस्तत्वात्।

---

(१) जलपदार्थतां भजन्ति इति० द्वि० पु० पा०।

परोपतापिनोऽपि न प्रौढप्रतापा भवन्ति; मितम्पचा अपि न स्तोकमूष्मा-यन्ते; महाविटपा अपि नाश्रयणीयच्छायतामायान्ति; असितकर्माणोऽपि न शिष्टपरिग्रहमर्हन्ति; अप्रसक्तोत्सर्गा अपि अपवादविषया भवन्ति; दग्ध-वंशा अपि न स्तब्धतां मुञ्चन्ति; अहमित्यवगच्छन्तोऽपि नात्मानं जानन्ति; अतिक्षुद्रा अपि न विशेषं धारयन्ति; द्रव्यात्मका अपि न संख्यां लभन्ते; सत्त्वरहिता अपि न द्वेषं रहयन्ति; साकाङ्क्षा अपि नान्वयानुकूला भवन्ति; असद्धेतुकपरामर्शा अपि न साध्यभ्रमं जनयन्ति; अहङ्कारोत्पादका अपि

---

परान् शत्रूनन्यांश्च जनानुपतापयन्ति दुःखयन्ति तच्छीला अपि-प्रौढः प्रतापः प्रभावो येषां तादृशा न भवन्ति। यो मितम्पचः परिमिततापः स स्तोकमूष्माणमुद्गच्छति, एते तु परिमितपाका अपि स्वल्पामपि कान्तिं न धारयन्ति; 'ऊष्णो घर्मेऽश्रुणि तथा ज्येष्ठे, ऊष्मा स्त्रियां त्विषि' इति बोपालितः। महान्तो विटपा विस्तारा येषां ते—तरव=इत्यर्थः, आश्रयणीया छाया अनातपो तेषां तादृशा भवन्ति, एते तु महान्तश्च ते विटास्तान् पान्तीति (क्विप्) तादृशा अपि आश्रयितुं योग्या छाया पङ्क्तिर्येषां तत्तां न प्राप्नुवन्ति; 'छाया स्यादातपाऽभावे प्रतिबिम्बार्कयोषितोः। पालनोत्कोचयोर्दीप्तिसच्छोभापङ्क्तिषु स्त्रियाम्' इति मेदिनी। असितकर्मा कृष्ण-वर्त्मा वह्निः—भुक्तस्याङ्गारकारकत्वात्, शिष्टपरिग्रहयोग्यो भूमिपुरोहितत्वात्, असन्तस्तु—असितं कर्म येषां तादृशाः पापकारिणोऽपि शिष्टपरिग्रहं शिष्टस्वीकारयोग्यतां न लभन्ते। प्रसक्ताः प्राप्ता उत्सर्गाः सामान्या येषान्ते श्रीश इत्यादयः प्रयोगा अप-वादस्य सवर्णदीर्घादेर्विषया भवन्ति, एते तु न प्रसक्ता उत्सर्गा उपद्रवा येषां तादृशा अपि अपवादस्य परिवादस्य विषया भवन्ति। यो दग्धवंशः स स्तब्धत्वम् औन्नत्यं मुञ्चति, एते तु दग्धकुला अपि स्तब्धतां स्तम्भं न मुञ्चन्ति। योऽहमिति प्रत्येति स आत्मज्ञानी, एते तु अहङ्कारवन्तोऽपि नात्मरूपं जानन्ति। योऽतिक्षुद्रः परमाणुः स विशेषं विशेषपदार्थं धारयति, विशेषस्य नित्यवृत्तित्वात्, एते तु अतिनीचा अपीति परिहारः। यो द्रव्यात्मकः पृथिव्यादि—पदार्थः, स एकत्वादिकां संख्यां प्राप्नोति, संख्याया गुणत्वात्, गुणस्य च द्रव्यवृत्तित्वात्; एते तु संख्याम्=प्रतिष्ठां न लभन्ते। यः सत्त्वेन बलेन रहितः स द्वेषं रहयति त्यजति, एते तु सत्त्वगुणेन रहिता अपि तादृशा न। साकाङ्क्षत्वम् अन्वयस्य संसर्गस्यानुकूलत्वं च 'देवदत्तः पठति' इत्यादिप्रयोगे क्रियाकरकयोः परस्पराकाङ्क्षत्वात्; एते तु स्वयं साभिलाषा अपि अन्वयस्य वंशस्य संसर्गस्य च अनुकूलाः सुखजनका न भवन्ति। योऽसद्धेतुकः परामर्शः=व्याप्तिविशिष्टपक्षधर्मताबोधः—स साध्यविषयकं भ्रमं प्रमां जनयति, एते तु असत्कारणकविचारा अपि साध्ये कार्ये भ्रमं न जनयन्ति,

न महत्त्वं सहन्ते; अपि च नहुषवत्परकलत्रजिघृक्षवोऽपि न सौम्यान्वया भवन्ति; शब्दविशेषवत्परार्थग्राहिणोऽपि न कृतलक्षणत्वं भजन्ते; दुर्योधनवज्जनितलक्ष्मणा अपि न सवितृतनयहितत्वं वहन्ति; विरोचनवत्संवर्धितबलयोऽपि न प्रह्लादोद्भवा भवन्ति; शम्बरवन्मायाविदोऽपि न दानवशताश्रया भवन्ति; गृध्रवत्प्रियामिषा अपि न दूरदर्शना भवन्ति, शैलूषवद्वेषग्राहिणोऽपि न स्वयं सच्चरिता भवन्ति; पर्वतवद्गह्वरबहुला अपि नाचलत्वमिव प्रपद्यन्ते, जलवन्नीचगतयोऽपि न शीततामनुमन्यन्ते; तेजोवन्नीरसा अपि न किञ्चिदपि प्रकाशयन्ति; वायुवदनीक्षणीया अपि न नवगुणा भवन्ति; शब्दवद्विहायसीयां वृत्तिं वहन्तोऽपि न श्रुतिग्राह्यतामापद्यन्ते; इक्षुवद्ग्रन्थिला अपि न माधुर्यमुद्वहन्ति, कीचकवदन्तःशून्या अपि न मरुद्योगेन शब्दायन्ते; तालवत्तृणराजा अपि न महत्फलं दर्शयन्ति; कदलीवदसारा अपि न सदा-

---

किन्तु कार्यं कुर्वन्त्येव, अविचार्यकारित्वात् । अहङ्कारस्योत्पादको महान् स महत्त्वं सहते, विशेष्यज्ञाने विशेषणज्ञानस्य कारणत्वात्, स्ववृत्तिधर्मस्यैव भावप्रत्ययवाच्यत्वात्; एते तु अभिमानस्योत्पादका अपि माहात्म्यं न लभन्ते। **नहुषः**=पुरूरवसः पौत्रः सोमवंश्यः सन् इन्द्रासनमारूढः शचीजिघृक्षुरासीत्, **सौम्यान्वयाः** शुभवंश्याः । **शब्दविशेषः**=कृतसमासः शब्दः पीताम्बर इत्यादिः, अन्यपदार्थादिग्राही भवति, **कृतलक्षणत्वं** साधुत्वं च भजति; एते तु परधनग्राहिणोऽपि न तथा । दुर्योधनपुत्रो **लक्ष्मणः**, सवितृतनयः **कर्णो** दुर्योधनसुहृद्; एते तु **जनितं लक्ष्मणं** चिह्नं परार्थग्राहित्वादि यैस्ते तादृशा अपि न तथा, सवितृतनयस्यासन्निहितत्वात् । **विरोचनः** प्रह्लादपुत्रः, बलिस्तत्पुत्रः; **बलिः** करः, प्रह्लाद आह्लादोऽन्यत्र । **शम्बरो** मायाज्ञः दानवशतानामाश्रयश्च, एते तु मायिनोऽपि न **दान-वशताया** राजाधीनताया आश्रयाः । **आमिषं** मांसं भोग्यवस्तु च । **शैलूषो** नटः । **गह्वरं** गुहा । **शीततां** मृदुतामन्यत्र । **रसो** रसनाग्राह्यस्तेजःपक्षे, अन्यत्र शुष्कः । वायुः-रूपरहितत्वान्न चाक्षुषप्रत्यक्षविषयस्तथा स्पर्शादिनवगुणवान् 'स्पर्शादयोऽष्टौ वेगाख्यः संस्कारो मरुतो गुणाः' इत्युक्तेः, एते तु न नूतनगुणवन्तः । **शब्दो** नभोवृत्तिः श्रोत्रग्राह्यश्च, एते तु **विहायसीयां** शकुनिसम्बन्धिनीं वृत्तिमाचरणं वहन्तोऽपि **श्रुतिग्राह्यतां** श्रवणयोग्यतां न प्राप्नुवन्ति, अव्यवस्थितत्वात् । **कीचका** वंशविशेषाः सविवराः मरुद्योगेन स्वनन्ति,एते तु **अन्तःशून्याः** शून्यहृदया अपि **मरुद्योगेन** देवसम्बन्धेन न किमपि भाषन्ते । तृण इव राजानस्तृणराजा अन्यत्र । कदली सदा-

रम्भा भवन्ति; कैतकवत्कण्टकप्राया अपि नोज्ज्वलत्वं लभन्ते; कुमुदवत्त्रयीमूर्तिविरोधिनोऽपि न विधावादरं बध्नन्ति; अश्वत्थवन्मन्दमात्रसेव्या अपि न सत्कुञ्जरैरुपजीव्यन्ते; कमलवद्बहुवराटका अपि न भास्वद्वल्लभा भवन्ति; किंशुकवत्पलाशवृत्तयोऽपि न सुरभिसमुल्लासित्वं भजन्ते; रसालवन्माकन्दभूता अपि न प्रमदवनानुकूलतां कलयन्ति; कुन्दवदीश्वरानादृता अपि न तपसा युज्यन्ते; सप्तच्छदवत्सम्पन्नशरद्वृद्धयोऽपि न दानगन्धेन संसृज्यन्ते; परमात्मवद्धर्मरहिता अपि न शुद्धिं भजन्ति; जीववदविद्याविषया अपि न तात्त्विकं ब्रह्मभावं लभन्ते; शुक्तिरूप्यवत्प्रातिभासिकसद्भावा अपि

---

**रम्भा** रम्भाशब्दवाच्या, एते तु सन् आरम्भः कार्यं येषां ते तादृशा न भवन्ति। केतकीपुष्पं कण्टकबहुलं तथाप्युज्ज्वलम्, एते तु कण्टकप्राया दुःखदा अपि न तथा। **कुमुदवत्** चन्द्रकमलवत्, **त्रयीमूर्तिः** सूर्यः, **विधौ** चन्द्रे; एते **त्रयीमूर्तिविरोधिनोऽपि** वेदस्वरूपविरोधिनोऽपि न तथा। **अश्वत्थः** पिप्पलः, **मन्दः** शनिः, **सत्कुञ्जरैः** सद्गजैः, सत्सु श्रेष्ठैरन्यत्र, विद्वद्भिरित्यर्थः। **कमलवत्** =सूर्यकमलवत्, **बहुवराटका अपि** बहुबीजकोशा अपि, कपर्दिकावन्तश्चान्यत्र। **भास्वान्** सूर्यो, दीप्तिमान् पुरुषश्च। किंशुके **पलाशवृत्तित्वं** पलाशशब्दवाच्यत्वमन्यत्र मांसाहारित्वम्; **सुरभिर्वसन्तो** मनोज्ञश्च 'पलाशे किंशुकः पर्ण' इत्यमरः, 'पलमुन्मानमांसयोः' इति मेदिनी। **रसाल** आम्रो माकन्दापरपर्यायः प्रमदवनस्यान्तःपुरोचितवनस्यानुकूल्यं धारयति, एते तु मायाः लक्ष्म्याः कन्दभूता अपि समूहभूता अपि प्रमदवनस्य सन्तोषसमूहस्य अनुकूलतां न वहन्ति। यथा **कुन्दम्** माघपुष्पम् ईश्वरानादृतं=भगवदनादृतं, तपसा माघेन युज्यते पुष्यति, तथा एते ईश्वरैः समर्थैरनादृता अपि **तपसा** तपस्यया न युज्यन्ते; 'माघ्यं कुन्द'मित्यमरः। **सप्तच्छदः** सप्तपर्णः, सम्पन्ना या शरद् तस्यां वृद्धिः पुष्पसम्पत्तिर्यस्य तादृशो दानवन्मदजलवद् गन्धेन संसृज्यते युज्यते, एते तु सम्पन्ना परिपूर्णा शरद्वृद्धिर्जन्मवर्षपूर्तिग्रन्थिर्येषान्तादृशा अपि दानस्य वितरणस्य गन्धेन लेशेन न **संसृज्यन्ते** न युज्यन्ते, किमपि न ददतीत्यर्थः। **परमात्मा** केनापि धर्मेण रहितः 'अग्राह्यमगोत्रमवरण'मित्यादिश्रुतेः शुद्धिं भजति, शुद्ध-बुद्ध-मुक्तस्वरूपत्वात्, एते तु आचारादिधर्मेण रहिता अपि शुद्धिं न भजन्ते, व्यवहारदशायां धर्मरहितानां शुद्ध्यभावात्। **जीवो** जीवात्मा **अविद्याया** मायाया विषयोऽपि **तात्त्विकं** पारमार्थिकं **ब्रह्मभावं** ब्रह्मत्वं लभते, मायाराहित्ये ब्रह्मभावस्य समानत्वात्; अविद्याया विद्याऽभावस्य मूर्खताया इत्यर्थोऽन्यत्र। **शुक्तिरूप्यं** मुक्तास्फोटरूप्यं प्रातिभासिकं **सद्भावो**

न व्यवहारविसंवादं कुर्वन्ति; चित्रवच्चारुचक्षुषोऽपि न किञ्चिद्विवेचयन्ति; सिंहवत्प्रसह्यकारिणोऽपि नानेकपवित्रासनयोग्यतां प्रतिपद्यन्ते; शुकवन्मृषा प्रियवादिनोऽपि न हरिद्गरुतो भवन्ति; बालकवत्पूर्वापरानुसन्धानरहिता अपि न मातर्यनुरज्यन्ते; प्रदोषवद्रागं दर्शयन्तोऽपि न सन्तापमपहरन्ति; तिलकवदलीकवृत्तयोऽपि न विशेषका भवन्ति; हारवद्धृदयं प्रसाधयन्तोऽपि न तरलभावं वहन्ति; खड्गवद्दृढमुष्टयोऽपि न सदसि पदवीं लभन्ते; शरवत्तीक्ष्णमुखा अपि नाजिह्मगत्वं भजन्ते; मधुवत्क्षुद्रानुषङ्गिणोऽपि न कटुभावं त्यजन्ति; मिबादिवदाख्यातान्तवृत्तयोऽपि नोत्तमपुरुषगणनामर्हन्ति; शकारादिवद्धृतोष्मभावा अपि न महाप्राणा भवन्ति; वैशेषिकवत्सकणभुगनुचरा अपि न सद्दर्शनेषु संख्यायन्ते । अपि च निभालनीयो वैभवस्य स्वभावः, येन ज्ञानवतोऽप्यात्मनो द्वेषोऽधर्मो महामानत्वं चेति त्रयमुद्भवति । विभाव-

---

विद्यमानता यस्य तादृशं भवति, व्यवहारे विसंवादं च करोति; एते तु तथाऽपि व्यवहारे विप्रलम्भं न कुर्वन्ति । रमणीयचक्षुषि चित्रे, ऽसत्सु चाऽविवेचकत्वं समानम् । अनेकपानां द्विपानां वित्रासनयोग्यता सिंहे, अनेकानि यानि पवित्रासनानि तेषां योग्यता नासत्सु । मृषा मिथ्या, 'गरुत्पक्षच्छदाः पत्रं पतत्रं च तनूरुहम्' इत्यमरः । प्रदोषो रजनीमुखम् । तिलकं भालवृत्ति विशेषकापरपर्यायं च, एते तु अलीका असत्या वृत्तिर्व्यवहारो येषां तादृशा अपि, विशेषा एव विशेषकाः= विशिष्टा न । हारो मुक्ताहारः, 'तरलो' हारमध्यगः' इत्यमरः । सदसि सभायां; पक्षे सँश्चासौ असिः खड्गस्तस्य पदवीम् । अजिह्मगत्वं सरलगामित्वम्, 'जिह्मस्तु कुटिले मन्दे क्लीबं तगरपादपे' इति मेदिनी । क्षुद्रा मधुमक्षिका, क्षुद्रो नीचः । मिब्–वस्–मसः, आख्यातस्य=क्रियापदस्यान्ते वृत्तिर्वर्तनं येषां तादृशा उत्तमपुरुषगणनां 'तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः' इति सूत्रात् लभन्ते, अन्यत्राख्यानमाख्यातं ( भावे क्तः )=ख्यातिस्तस्यान्ते नाशे वृत्तिः प्रवृत्तिर्येषां तादृशा अतएव उत्तमपुरुषेषु गणनां न लभन्ते । शषसहा ऊष्माणो महाप्राणप्रयत्नवन्तः, ऊष्मभावं तेजीयस्त्वम्, महाप्राणा महाबला अन्यत्र । वैशेषिकं दर्शनं कणभुजः कणादस्य अनुचरैरनुयायिभिः सहितं सद्दर्शनेषु षट्स्वास्तिकदर्शनेषु संख्यायते गण्यते, एते तु कणं भुञ्जन्ति ते कणभुजो दीनास्ते चानुचराः सेवकास्तैः सहिता अपि सतां सज्जनानां दर्शनेषु विचारेषु न संख्यां लभन्ते । न केवलं सद्वृत्तासद्वृत्तज्ञानेन कृतार्थता इत्याकाङ्क्षायामाह—अपि चेति । निभालनीयः विचारणीयः परीक्षणीयो वा । येन वैभवेन, धनमदादात्मद्वेषोऽधर्मो

नीयश्च यौवनीमयपि स्वरूपम्; तत्र हि—दशाविशेषवति वाससीव चेतसि प्रविशन्ती वरवर्णिनी रागमुद्भावयति, स्नेहातिशयशालिन्यां मनोवृत्तिवर्तिकायां प्रदीप इव ज्वलत्यहङ्कारः, अपगच्छति बालभावबलाहकाऽऽवरणे बहुविधाः स्पष्टीभवन्त्याशाः, आविर्भवन्त्यां सरस्यामिव सरसतायां गुरूपदेशास्तृणवद्बहिरेव परिप्लवन्ते, समुन्मिषदुज्ज्वलभावे चाभिनिवेशनिसर्गकठिने हृदयदर्पणे प्रतिबिम्बितमपि शास्त्रचित्रं नान्तःप्रवेशावकाशं लभते, दीप्यमाने च सन्तापकारिणि जीवनव्याप्याश्रये विषयाभिलाषचित्रभानौ समुल्लसन्महामोहधूमसमूहो विवेकदर्शनान्यकिञ्चित्कराणि समाचरति, द्रव्यभेदसमाश्रये च मनसि प्रतीयमानापि संख्या न साक्षात्सम्बन्धेनावतिष्ठते, अविच्छिन्न-

---

महाभिमानश्चेति संभवतीति भावः, "यौवनं धनसम्पत्तिः प्रभुत्वमविवेकता। एकैकमप्यनर्थाय किमु यत्र चतुष्टयम्" इति नीतेः। 'दशावस्थादीपवर्त्योर्वस्त्रान्ते भूम्नि योषिति' इति मेदिनी, 'वरवर्णिनी तु लाक्षाहरिद्रारोचनासु च। स्त्रीरत्ने च फलिन्यां च साधीयस्यामपि स्त्रिया'मित्यपि मेदिनी; दशाविशेषवति वाससि प्रविशन्ती लाक्षादिका, रागं रक्तत्वं;—चेतसि प्रविशन्ती उत्तमाङ्गना रागमनुरागम् —उद्भावयति प्रकाशयति। स्नेहस्य प्रेम्णो योऽतिशयस्तेन शलते तस्यां चित्तवृत्तिरूपायां वर्तिकायां अहङ्कारोऽभिमानः प्रदीप इव दीप्यते। बालभावो बाल्यावस्था एव बलाहको मेघस्तद्रूपे-आवरणे अपगच्छति अपयाति सति नानाप्रकारा आशास्तृष्णा दिशश्चान्यत्र, स्पष्टीभवन्ति 'आशा तृष्णादिशोः स्त्रियाम्' इति मेदिनी। यथा सरस्यां तृणानि बहिरेव प्लवन्ते=तरन्ति न तु मध्ये, तथा सरसतायामनुरक्तौ आविर्भवन्त्यां प्रकटीभवन्त्यां,गुरूणामुपदेशा बहिरेव तिष्ठन्ति नत्वन्तः करणे। समुन्मिषन्प्रकाशीभवन्नुज्ज्वलभावः स्वच्छता यस्मिँस्तादृशेऽपि (अप्यर्थश्चकारः) अभिनिवेशेनाग्रहेण निसर्गेण स्वभावतः कठिने हृदयरूप—आदर्शे सङ्क्रान्तमपि शास्त्रचित्रमन्तःकरणप्रवेशं न प्राप्नोति। सन्तापजनके जीवनस्य आयुः—कालस्य व्याप्याश्रये व्याप्तिविशिष्टाश्रये विषयाभिलाषरूपे वह्नौ दीप्यमाने तु (चकारस्त्वर्थः) समुल्लसन् प्रादुर्भवन् यो महामोहरूपी धूमसङ्घः स विवेकदर्शनानि सदसद्विचाराणि तुच्छानि समाचरति करोति; यौवनं पक्षः, विषयाभिलाषचित्रभानुः साध्यः, महामोहधूमसमूहो हेतुः, विवेकदर्शनानि हेत्वाभासरूपाणीत्यर्थः। द्रव्यस्य धनस्य भेदानां सुवर्णादीनामाश्रये विषये चित्ते प्रतीतिविषयीभवन्ती संख्या एकत्वादिका साक्षात्सम्बन्धेन इयत्तासम्बन्धेन न स्थिरीभवति। न्यायरीत्या द्रव्याणां पृथिव्यादीनां भेद अवान्तरभेदो 'मनः

मदप्रवाहं च कुञ्जरकपोलतलमिव मनो मलिनपक्षा भ्रमरा इव पुमांसः समाकुलयन्ति । अपि च यौवनोदयो हि बहुरागपल्लवोऽशोकतरुरिव मलिनानि फलानि प्रसूते, महामानसो धनददिग्विभाग इव सुमेरुमपि स्वात्मनि स्थापयितुमीहते, मांसलस्कन्धबन्धो महामातङ्ग इव मन्दतामुद्भावयति, मकरकेतनसहायो वसन्तसमय इव जातिप्रतिकूलमाचरति, सुविहितार्यमतापसारो निदाघदिवस इव तृष्णामुद्भावयति, विभाविताद्भ्रविभ्रमो दोष इव व्याकुलयति विवेकम्, सुलभरोपोदयो दुर्वासा इव सुमनसां धुर्यम-

---

पृथिव्यादिकं न' इत्याकारकस्तस्य समाश्रये आधारभूते मनसि, प्रतीतिविषयीभवन्ती संख्या नवत्वसंख्या साक्षात्सम्बन्धेन न वर्तते किन्तु–अपेक्षाबुद्ध्या । अयं भावः–यथा गन्धादिकं नियतवृत्ति तथा मनोनिष्ठा नवत्वसंख्या न नियता, नवत्वस्यापेक्षाबुद्धिजन्यत्वात्, अपेक्षाबुद्धेश्च गणनाधीनत्वात्, गणनायाश्च क्रमाधीनत्वात्, क्रमस्य विवक्षाधीनत्वात्, विवक्षायाश्च वक्त्रधीनत्वादतः पृथिव्यादिक्रमेण मनसि नवत्वं व्युत्क्रमेण तु न ('अवतिष्ठते' इत्यत्र 'समवप्रविभ्यः स्थः' इति आत्मनेपदम् ) । न विच्छिन्नो विच्छेदप्राप्तो मदस्य दानस्य प्रवाहो धारा यस्य तत्, कुञ्जरस्य गजस्य कपोलतलमिव **मनश्चित्तं** कर्मभूतं **मलिनपक्षाः** कृष्णपतत्रा भ्रमरा इव मलिनवर्गाः पुमांसः पुरुषाः सम्यगाकुलं कुर्वन्ति । **अपि च** अन्यदपि युवावस्थायाः प्रादुर्भावो बहुरागा अतिरक्ताः पल्लवाः किसलयानि यस्य तादृशः अशोकशाखेव मलिनानि मलीमसानि कविभिरनादृतानि च **फलानि** प्रसवान् कार्याणि च **प्रसूते** जनयति, कविभिरनादृतत्वं चाशोकफलानां 'नाप्यशोके फलं स्या'दिति कविसिद्धान्तात् । **महन्मानसं** सरो यस्मिन्–तादृशो धनदस्य कुबेरस्य दिग्भाग उत्तरा–दिक् स यथा सुमेरुं स्वात्मनि स्थापयति, तथा महच्चित्तो यौवनोदयः सुमेरुमपि स्वात्मनि स्थापयितुमीहते किमन्यत् । मांसलः पुष्टः स्कन्धबन्धोंऽसः–यस्य तादृशो यौवनोदयो महागज इव मन्दत्वं प्रकाशयति । कामोद्दीपको वसन्तऋतुः–यथा **जातिप्रतिकूलं** मालतीप्रतिकूलमाचरति, पुष्पाणामविकासनात्; तथा यौवनोदयः जातेः स्वजातेः प्रतिकूलमाचरति । **निदाघदिवसः**—अतिकृतसूर्यतापबलः, यौवनोदयस्तु अतीवकृतसूर्यवत्तापतत्त्वः, अतः पिपासामिव **तृष्णामाशां** प्रकटयति । **विभावितः** कृतः-अनभ्रविभ्रमोऽत्यन्तभ्रमो येन तादृशो वातादिदोष इव यौवनोदयो विवेकं विचारं व्याकुलयति । सुलभः सुप्रापो रोषस्य कोपस्योदयो यस्य तादृशो **दुर्वासा** इव यौवनोदयः सुमनसां देवानां धुर्यम् इन्द्रमपि तिरस्कुरुते किमुता-

त्याक्षिपति, कृतक्ष्माभृत्स्तम्भोऽगस्त्य इव न सरस्वत्यनुगुणमाचरति, विस्तारितोरुदण्डो दुरीश्वर इव जनानुद्वेजयति, गम्भीरतापन्ननिर्घोषो घन इव चपलोल्लासमुज्जीवयति, सम्पूर्णावयवो राकेन्दुरिवान्तर्मालिन्यमुल्लासयति, प्रसारितनेत्रो जवनिकाविन्यास इव दर्शनं विरुणद्धि, विहितबाहुवृद्धिर्गोत्रप्रत्यय इव स्वान्तस्योदात्तत्वमापादयति। अवधार्यतां च लक्ष्मीः; इयं हि—दुर्वासोदत्तशापानलकवलितेव जडेष्वेव पदमादधाति, पुण्डरीकाक्षवक्षःस्थलावस्थायिनी तत्कण्ठवासि—सरस्वतीसमक्षमनुभूतभृगुचरणप्रहाराभिभवेव ततो लज्जमाना दूरादेव परिहरति विद्वांसम्, कमलवननिवासजाताभ्यासेव न परिहरति पङ्कसंसर्गम्, कुशेशयपरागदूषितेक्षणेव न पुरुषाणां गुणदोषान् गणयति, महावीरकृपाणसञ्चारसंस्कारादिव बद्धमुष्टिषु नितान्तमनुरज्यते, हिरण्यकशिपुवक्षोविश्रामावसरे तत्कररुहाङ्कुशैः कृतभेदेव द्वेषा-

---

न्यम्। कृतः क्ष्माभृतो विन्ध्यस्य स्तम्भोऽवरोधनं येन तादृशोऽगस्त्यः सरस्वत्या नद्या अनुगुणमनूकूलं नाचरति न गच्छति, गोदावरीतीरवासित्वात्, स एव कृतः क्ष्माभृतां राज्ञां स्तम्भोऽवरोधो येन तादृशो यौवनोदयः सरस्वत्या वाग्देवताया अनुगुणं गुणानुरूपमाचरणं न करोति, इन्दिरामदमत्तत्वात्। विस्तारित ऊरुर्महान् दण्डो यष्टिः सैन्यं च येन तादृशो दुर्नृप इव यौवनोदयो जनानुद्वेजयति क्षोभयति। गम्भीरतया आपन्नः प्राप्तो निर्घोषो गर्जनं येन तादृशो मेघश्चपलाया विद्युत उल्लासं प्रकाशं दर्शयति, तथैव यौवनोदयो गम्भीरतया प्राप्तो यो निर्घोष उच्चैर्ध्वनिस्तेन तादृशश्चपलोल्लासं चपलचेष्टां प्रकाशयति। **सम्पूर्णावयवः** पूर्णकलोऽन्यत्र पूर्णाङ्गः, अन्तर्मालिन्यमन्तर्लाञ्छनम् अन्तःकरणकालुष्यं च, कामाक्रान्तत्वात्। **नेत्रं** बन्धनरज्जुर्लोचनं च, **दर्शनं** दृक् धर्मश्च; 'दर्शनं नयनस्वप्नबुद्धिधर्मोपलब्धिषु' इति मेदिनी। यथा गोत्रविहितप्रत्ययो गोत्रप्रत्यय इञादिः, विहिता बाहुशब्दे वृद्धि (बाहविरित्यत्र) येन तादृशः स्वान्तस्येकारस्योदात्तत्वं स्वरत्वं प्रतिपादयति, प्रत्ययस्वरस्योदात्तत्वात्, तथैव यौवनोदयः कृतभुजवृद्धिः सन् हृदयस्य उदात्तत्वमुन्नतत्वं प्रतिपादयति। राज्यलक्ष्मीस्वभावं वर्णयति—**अवधार्यतामिति**। लक्ष्मीस्वरूपं ज्ञायतामित्यर्थः। **जडेषु** जलेषु मूर्खेषु च। लक्ष्म्या विद्वत्परिहारं वर्णयन्नुत्प्रेक्षते—**पुण्डरीकाक्षेत्यादि**। **पङ्कसंसर्गम्** कर्दमसम्बन्धं पापसम्पर्कं च। 'शतपत्रं **कुशेशयम्**' '**परागः** सुमनोरजः' इत्युभयत्रामरः। **महावीरा** महाभटाः। **बद्धमुष्टिषु** गृहीतखड्गेषु कृपणेषु च। हिरण्यकशिपोः प्रह्लादपितुः वक्षसि यो **विश्रामः** राज्यलक्ष्मीरूपेण स्थिति-

न्नृसिंहेषु न स्थितिं बध्नाति, वनमालासाहचर्यपर्याप्तपरिचयेव भृङ्गेषु सज्जते, जानकीजन्मनि निष्कारणनिराकरणकुपितेव निरस्तदूषणे पुंसि नादरमादत्ते, रुक्मिणीदशायां जातविद्वेषेव न श्रुतश्रवोभुवि तिष्ठति, पितृपक्षपातिनी कुम्भसम्भवविभ्रमविदिव सर्वसहाधरनिरोधिनं विरोधिनं गणयति, आतपत्रच्छायावलम्बिनी सततमपरिचितातपेव तेजस्विना न संयुज्यते, बालव्यजनपवनवीजनव्यसनसम्पन्नतरलमात्रपरिचयस्वभावेव स्थिरप्रकृतिषु लवमपि नावतिष्ठते, पुराणपुरुषमनोनिवासव्यसनितया समधिगतक्षुद्रस्थितिनियमेव महामानवत्सु न पदमपि न्यस्यति; सरस्वदवच्छिन्नेन सामानाधिकरण्येनैरावतादिव मदं, पारिजातादिवाविवेकम्, उच्चैःश्रवस इव सदावेगजनकत्वं, चन्द्रादिव कलङ्कं, कालकूटादिव प्राणहरणं, मदिराया इवासम्बद्धभाषाम्, अप्सरोभ्य इव अलीक[1]पुरुषानुरागितां, कौस्तुभादिव प्रग्रहजालं, मैनाकादिव पक्षप्रावण्यं, दानवेभ्य इव मायां, ग्राहेभ्य इव निर्दयत्वं

स्तस्यावसरे तस्मिन्राज्यं कुर्वति सतीत्यर्थः, **तत्कररुहाङ्कुशैः** नृसिंहनखराङ्कुशैः **कृतभेदा इव** विदीर्णा इव द्वेषादप्रीतेर्नृसिंहेषु श्रेष्ठपुरुषेषु स्थिरतां न बध्नाति । आपादलम्बिनी माला **वनमालेति** कीर्तिता, **भृङ्गेषु** भ्रमरेषु षिङ्गेषु च । **निराकरणं** परित्यागः, दूषणो राक्षसः दोषश्च । **श्रुतश्रवोभूः** शिशुपालः पण्डितपुत्रश्च । लक्ष्म्याः **पिता** समुद्रस्तस्य पक्षपातिनी तद्वर्गस्नेहवती, पितृपक्षपातित्वं स्त्रीणां स्वभावः, कुम्भसंभवस्यागस्त्यस्य विभ्रमविदिव विलासज्ञात्रीव, **सर्वसहाधरनिरोधिनं** महीधरनिरोधिनं नृपरोधिनं च । आतपत्रस्य राज्यच्छत्रस्य छायामवलम्बते तच्छीला अतएव अज्ञाततापा अतएव **तेजस्विना** प्रतापशालिना न संयुज्यते । बालव्यजनस्य चामरस्य पवनेन यद् वीजनं तस्य यद् व्यसनं तेन सम्पन्नो यस्तरलमात्रपरिचयश्चपलमात्रपरिचयस्तादृशः स्वभावो यस्याः सेव धैर्यवत्सु लेशमपि अवस्थानं न लभते । पुराणपुरुषस्य विष्णोर्मनोनिवासव्यसनितया चित्तनिवासशालितया प्राप्तक्षुद्रनिवासनियमा इव **महामानवत्सु** उदारचित्तेषु चरणमपि न न्यस्यति किमुत स्थितिम्; अयं भावः—मनसोऽणुरूपत्वात्तत्रापि पुराणपुरुषस्य मनोनिवासवत्त्वेन लक्ष्म्याः क्षुद्रस्थितिनियमवत्त्वमुत्प्रेक्षितम् । '**सरस्वान्** सागरोऽर्णवः'—सागरावच्छिन्नेन सामानाधिकरण्येन सोदरत्वरूपेण साजात्येन ऐरावतात्पुरन्दरगजादिव **मदं** चित्तविकारं दानं च । पारिजातत्वस्याविवेकत्वं भक्तमात्रपक्षपातित्वं, 'हय **उच्चैःश्रवाः**' इत्यमरः । लक्ष्म्याः सदावेगजनकत्वं

(१) अलीकानुरागाभिव्यञ्जकत्वम् इति द्वि० पु० पा० ।

वाडवादिवातिदाहकत्वं, भुजङ्गेभ्य इव जिह्मगामित्वं, शङ्खेभ्य इवान्तः-कौटिल्यं, शुक्तिभ्य इव पृष्ठतोऽनच्छत्वं, नदीभ्य इव नीचाभिमुखत्वं, विद्रुमेभ्य इवातिरागित्वं, मौक्तिकेभ्य इव स्वच्छत्वविशिष्टं काठिन्यं गृहीतं स्वाश्रये प्रकटयति। अपि च भीरुत्वादेव न सदा सौजन्यमनुमन्यते, स्त्रीत्वादेव नोदारसंसर्गासक्ता भवति, कमलालयत्वादेव न कलानिधावनुरागमेति, सामान्यत्वादेव न जातिङ्गणयति, चन्द्रसहजत्वादेव न नालीकेषु रज्यते, मिथ्यावादप्रियत्वादेव न्यायविदो नानुसरति, असाधुसंसर्गादेव शब्दशास्त्रविदः परित्यजति, बुद्धितत्त्वविरोधादेव साङ्ख्यविदो नाश्रयति, विशेषानभिज्ञत्वादेव वैशेषिकान्मुञ्चति, सञ्ज्ञापहारादेव मीमांसकेभ्यो बीभत्सते, दोषवदात्मकत्वादेव वैयासविद्यिकान्परिहरति, अहृदयभावादेव काव्यासक्तान्परिहरति। किञ्चेयं तुषारवृष्टिर्बुद्धिकमलिनीनाम्, भुजङ्गी

---

राज्यस्य कुलान्तरगामितया। प्रग्रहजालं नियमजालं सूत्रजालं च। मैनाको हिमवत्पुत्रः, प्रावण्यं=प्रवणत्वम्। 'वाडवो वडवाऽनलः' इत्यमरः। 'कलुषोऽनच्छ आविलः' इत्यमरः। विद्रुमेभ्यः प्रवालेभ्यः। मौक्तिकेभ्यो मुक्ताफलेभ्य इव स्वच्छत्वविशिष्टं विशदत्वसहितं कठोरत्वगृहीतं सरस्वाश्रये लक्ष्मीवति पुरुषे प्रकाशयति। एषु पूर्वोक्तेषु वाक्येषु 'सरस्वदवच्छिन्नसामानाधिकरण्येनेति सम्बध्यते। सहवासशिक्षितगुणवत्त्वं वर्णयित्वा नैसर्गिकान् गुणान् वर्णयति—अपि चेत्यादिना। कमलालयत्वादेव पद्मालयत्वादेव चन्द्रे नानुरज्यते, कमलानां चन्द्रोदये संकुचितत्वाल्लक्ष्म्या अपि संकोचः सहवासात्। 'सामान्यपरिहीनास्तु सर्वे जात्यादयो मताः' इत्यनुसृत्य कथयति-सामान्यत्वादिति। नालीकेषु अब्जसमूहेषु न रज्यते नानुरागं बध्नाति, चन्द्रसाहचर्याद्भ्रातावित्यर्थः। न्यायविदः नैयायिकान्, तेषां यथार्थज्ञानस्य प्रमाणत्वात्। असाधुरसज्जनोऽपशब्दश्च, शब्दशास्त्रविदां साधुशब्दप्रतिपादकत्वात्। बुद्धितत्त्वस्य विरोधिनी लक्ष्मीः, बुद्धितत्त्वस्य महत्तत्वस्य प्रतिपादकाः सांख्याः। विशेषस्य भेदस्य पञ्चमपदार्थस्य चाभिज्ञा वैशेषिकाः। मीमांसकानां मन्त्रमयदेवतात्वात् संज्ञापहारः, बीभत्सते जुगुप्सते। व्यासस्य विद्या व्यासविद्या तामधीयते वैयासविद्यिका वेदान्तिनः, दोषवान् ज्ञानवानात्मा जीवो येषां तेषां भावस्तत्त्वं तस्मात्। साहित्यज्ञाः सहृदयाः, अहृदयज्ञा लक्ष्मीः। लक्ष्म्या दुर्गुणान् रूपकालङ्कारेण वर्णयति—किञ्चेयमिति। इयं प्रकृता लक्ष्मीः। बुद्धय एव कमलिन्यस्तासां तुषारस्य तुहिनस्य वृष्टिर्वर्षणम्, लक्ष्मीप्राप्तौ बुद्धिमान्द्यात्। व्यवहारहालाहलानां कठोरोक्तिकालकूटानां

---

(१) विषमजिह्मत्वम् इति द्वि० पु० पा०।

परुषव्याहारहालाहलानां, कुलविद्या कौटिल्यस्य, आयुष्येष्टिः पारुष्यस्य, वसन्तवेला कामस्य, दुर्वासोमनोभूमिः क्रोधस्य, सौभाग्यसिद्धिर्लोभस्य, तमःपरिणतिर्मोहस्य, करिकुम्भस्थली मदाविर्भावस्य, वात्सल्यचर्या मात्सर्यस्य, साङ्ख्यपद्धतिः पुरुषगुणानङ्गीकारस्य, शब्दविद्या प्रत्ययविकाराणां, लङ्का ऽहङ्कारराक्षसानां, विभावरी विवेकविवस्वतः, अमावास्या विनयसुधाकरस्य, सुयोधनसमृद्धिर्दुःशासनोल्लासस्य, कृपाणधारा तीक्ष्णभावस्य। अपि चेयं ताटकेव मृगतृष्णा दर्शनोत्पत्तियोग्याऽपि न सुन्दरतोचितचरिता भवति, सूर्पणखेव जनकात्मजातिभयहेतुरपि न खरदूषणोच्छेदे पर्यवस्यति, हिडिम्बेव स्वतन्त्रप्रवृत्ताऽपि न बकवृत्तिविरोधशालिन्यनुरज्यते, विद्युदिव क्षणमात्रोल्लासशीलाऽपि न घनासङ्गिनी भवति, सरसीवान्तःपङ्कप्रायापि न जीवनार्थिभिः स्वच्छन्दमवगाह्यते, उपनिषदिव मिथ्याभावबहुलाऽपि न तत्त्वपरिच्छेदाय भवति, द्यौरिवान्तर्गतवसुरपि न लोकान्तरोपभोग्या संपद्यते, कम-

---

**भुजङ्गी** सर्पिणी, परुषव्यवहारे हालाहलत्वारोपो लक्ष्म्यां भुजङ्गीत्वारोपे निमित्तम्; एवमन्यत्र। **कौटिल्यस्य** चाणक्यस्य कुटिलभावस्य च। **पारुष्यस्य** अतिवादस्य, आयुष्या आयुर्वर्धिका इष्टिर्यागः। **कामस्य** मनोभवस्य। **साङ्ख्यपद्धतिः** **साङ्ख्यशास्त्रप्रक्रिया** पुरुषे जीवात्मनि गुणान्नाङ्गीकरोति, तेषां पुरुषस्य निर्गुणत्वात्, गुणानां च प्रकृत्याश्रयत्वात्; पुरुषाणां ये गुणाः शौर्यादयस्तदस्वीकारस्येति लक्ष्मीपक्षे। **प्रत्ययो** विश्वासः स्वादयश्च, विकारो विसर्गादिरन्यत्राविश्वासः। पुनश्च लक्ष्मीमुत्प्रेक्षते—**अपि चेयमिति**। **ताटका** सुन्दस्त्री, तद्विषयकसुरते परिचिता, मृगाणां तृष्णया गार्ध्येन यद्दर्शनं तस्योत्पत्तियोग्या मांसाशित्वात्, अन्यत्र मरीचिका, सुन्दरतायामुचितं चरितं यस्या तादृशी न। **सूर्पणखा** जनकात्मजायाः सीताया अतिभयहेतुरपि खरदूषणयोरुच्छेदे पर्यवसन्ना, लक्ष्मीस्तु जनकस्य पितुरात्मजस्य पुत्रस्य चातिभयहेतुरपि खरं तीव्रं यद् दूषणं दोषस्तस्य नाशे पर्यवसन्ना न। **हिडिम्बा** राक्षसी, बकासुरवृत्तिविरोधकर्ता भीमस्तस्मिन्ननुरक्ताऽऽसीत्। "अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः। शठो मिथ्याविनीतश्च बकवृत्तिचरो नरः"—इति लक्षणलक्षितबकवृत्तिविरोधशालिनि सुजने नानुरज्यते। **घनो** मेघो दृढश्च। **'जीवनं** वर्तने जीवप्राणधारणयोर्जले' इति मेदिनी। 'ब्रह्मसत्यञ्जगन्मिथ्या' इति सिद्धान्तादुपनिषन्मिथ्याबाहुल्यादसत्यबाहुल्यात् कथं तत्त्वपरिच्छेदिका स्यात्। **द्यौरिव** त्रिदिवमिव अन्तर्गतो मध्यस्थितो वसुस्तन्नामको गणदेवो लोकान्तराणां पुण्यवतां मर्त्यानामपि भोग्या सम्पद्यते, लक्ष्मीस्तु

लिनीव सतामरसभावमावहन्त्यपि न शूरमात्रविकासितां लभते, व्याप्ति-रिवानुमानेनोपजीव्याऽपि नानैकान्तिकत्वं परिहरति ॥ ६२ ॥

राज्यञ्च महदकूपारसमानमालक्ष्यताम्; तथाहि—केचिन्निगूढं कृततप-स्विजनापकाराः कालकेया इवाकलयन्ति; अपरे विजयमात्रसाध्या निवात-कवचा इव प्रविशन्ति; अपरेऽधिष्ठितहिरण्यपुराः पौलोमकालकेयगणा इवाकुलयन्ति; केचित्पक्षानुरागिणोऽसंख्यशिखरजालशालिनो महीधरा इवानुबध्नन्ति; केचन गूढचरणा विषदृष्टयो भुजङ्गमा इव सङ्गं कुर्वन्ति; अन्ये स्वसजातीयभोजिनोऽनेकयोजनावच्छिन्नमितयस्तिमिङ्गिला इव सङ्ग-च्छन्ते; इतरेऽनुपहतमोहशक्तयः कालकूटावयवा इव समाश्रयन्ते; अपरे

---

अन्तर्गतधनाऽपि अन्येषां जनानामुपभोक्तुं योग्या न सम्भवति, 'लोकस्तु भुवने जने' इत्यमरः, 'वसुस्त्वग्नौ, देवभेदे नृपे रुचौ । योक्त्रे शुष्के वसु स्वादौ रत्ने वृद्ध्यौषधे धने' इति भानुः। 'शूरश्चारुभटे सूर्ये' इति विश्वः, 'पङ्केरुहं **तामरसम्**' इत्यमरः, **कमलिनी** तामरसस्य पुष्पं तामरसं कमलप्रसूनं तेन सहिता, तद्भावं = कमलपुष्पवत्त्वं धारयन्ती शूरमात्रविकाशितां=सूर्यमात्रविकासितां लभते, इयन्तु सतां सज्जनानामरसभावं वैरस्यं धारयन्त्यपि शूरमात्रे वीरमात्रे विकासितां न लभते । **व्याप्तिः** साहचर्यनियमः—अनुमानेनोपजीव्यते, **एकान्तिकत्वं** व्यभिचरितत्वं च परिहरति, इयन्तु अनुमननमनुमानोऽनुसरणं तेनोपजीवितुं योग्याऽपि व्यभिचारं न परिहरति, प्रभुप्रसादस्य व्यभिचरितत्वात् ॥ ६२ ॥

लक्ष्मीं वर्णयित्वा राज्यं वर्णयति—**राज्यमिति** । राज्ञः कर्म **राज्यम्**, ( गुणवचनब्राह्मणादिभ्यश्चेति कर्मणि ष्यञ् ) महद् बृहद् अकूपारसमानं पारा-वारसमानं चिन्त्यताम् । केचित् कृतस्तपस्विजनानामपकारो यैस्ते तादृशाः काल-कापत्या **असुरा इव** आकलयन्ति व्याकुलयन्ति 'राज्य' मित्यनुवर्तते । विज-योऽर्जुनः जयनं च, **निवातकवचा**स्तन्नामका असुरा अर्जुनेन जिता इति महाभारते प्रसिद्धम् । अधिष्ठितं **हिरण्यपुरं** तन्नामकनगरं यैस्ते तादृशाः (हिरण्यपुराधिष्ठातार इत्यर्थः ) पुलोम्न इमे पौलोमास्ते च कालकेयाश्च ( मिलिता इत्यर्थः ) ते गणा इव व्याकुलयन्ति; असुराणां समुद्राकुलीकरणं समुद्रमन्थनादावन्यदा च पुराणप्रसि-द्धम् । पक्षो वर्गः पतत्रं च, **शिखरं** कूटः शिरोभूषणं च, **अनुबध्नन्ति** अनुलगन्ति । **गूढचरणाः** गूढपादा गूढाचाराश्च, **भुजङ्गमाः** सर्पा विटाश्च । "शतयोजनविस्तीर्णः **स्तिमिर**मत्स्य उदाहृतः । **तिमिङ्गि**लगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघवः—" अनेकयोजनपरिमिता मितिर्मानं येषां तादृशः, स्वसजातीयभोजित्वं चोक्तकोशे स्पष्टम्, राज्ये च तथा । '**कालकूट**—हलाहलः' इति विषपर्यायेऽमरः । 'प्रश्रय-

प्रकृष्टप्रकाशा अपि चैतन्यहीना मणय इव प्रणयं नावगणयन्ति; केचिदा-स्वादितसर्वतोमुखकाठिन्यसम्पादका मुक्तास्फोटा इव स्फुरन्ति; अपरेऽतिक्षुद्रा अन्तश्छिद्रमालिन्यभाजो वराटका इव रटन्ति; अपरे बहिरवदाता अपि अन्तरनृजुसन्निवेशाः कम्बव इव संवसन्ति; अन्ये बहुमाधुर्यविद्रुमाख्याः प्रवाला इव विस्फुरन्ति; केचन भुवनापचयहेतवोऽन्तर्लग्ना वडवानला इव ज्वलन्ति; केचित्स्वसम्बन्धिनामधोगतिहेतवो भ्रमप्राया आवर्ता इव परि-वर्तन्ते; इतरे बहुतरोद्गमनपूर्वकनिपातशीला भङ्गुरास्तरङ्गा इवाङ्गीकुर्वन्ति; परे दारुणोपहितारम्भा लाभार्थिजनमात्रसहायाः सदाशाः पोता इव लङ्घि-तुमीहन्ते; केचित्सदाविहितनीतिलोपामुद्राशालिनो महामहसो विबुधविभा-वितोद्योगाः कुम्भसम्भववद्विपक्षक्ष्माभृतः पातुमेवेच्छन्ति; अन्ये सततं न-भोगतयाभिमुखीभूताः कमलार्थिनो घना इवोपघ्नन्ति; अपरे सारमादि-त्समाना गोत्रसहाया विपक्षैरपि सम्भूय त्रिदशा इव मथ्नन्ति; केचिदमज्ज-

---

प्रणयौ समौ" इत्यमरः । आस्वादितं पीतं यत् सर्वतोमुखं जलं तेन काठिन्य-सम्पादका मुक्तास्फोटाः; सर्वतोभावाऽऽस्वादेन काठिन्यसम्पादकाः केचिच्छब्द-वाच्याः । **वराटकाः** कपर्दिकाः । 'शङ्खः स्यात्कम्बुरस्त्रियाम्' इत्यमरः, **अनृजु-सन्निवेशाः** कुटिलाऽऽकृतयः । बहुमाधुर्यविद्रुमवदाख्यान्ति चक्षते इति **बहु-माधुर्यविद्रुमाख्याः** विद्रुमवद् बहिर्मनोहराः, पक्षान्तरे अन्तः कठिना इत्यर्थः । **अपचयो** नाशः । 'स्यादावर्तोऽम्भसां भ्रमः' इत्यमरः । **भङ्गुरा** भङ्गशीलाः ( भञ्जे'भञ्जभासमिदो घुरच्' इति घुरच् प्रत्ययः ) । दारुणा काष्ठेन उपहिता-रम्भाः कृतारम्भाः लाभार्थिनो ये जना व्यापारिणस्तन्मात्रसहायाः; सती विद्यमाना आशा दिशः ( मार्गाः ) तादृशाः **पोताः** प्रवहणानि, दारुणो भयङ्करः उपहितः कृत आरम्भो यैस्तेऽन्यत्र, आशा तृष्णा। सदा विहितनीतिः कृतनीतिर्या लोपामुद्रा स्वसधर्मिणी तच्छाली–अगस्त्यः विपक्षरूपस्य क्ष्माभृतः=समुद्रस्य पानकर्ता, तद्वत् सदा विहितः कृतो नीतिलोपो यैस्ते मुद्राशालिनो रूप्यकवन्तः राज्यं पातुं निग-रीतुमिच्छन्ति, **क्ष्माभृता** राजानः । क्ष्मां भूमिं बिभर्ति पोषयति जलसेचनेनेति क्ष्माभृत्समुद्रः । नभसि गच्छन्ति ते नभोगास्तेषां भावस्तया, अन्यत्र न भोगता **नभोगता** बुभुक्षेत्यर्थस्तया । **कमलार्थिनो** जलार्थिनो धनार्थिनश्च, **उपघ्नन्ति** आश्रयन्ते । **आदित्समाना** आदातुमिच्छन्तः, **गोत्रसहायाः** मन्द-रसहाया वंशसहायाश्च, विपक्षैः शत्रुभिरसुरैश्च, मथ्नन्ति समुद्रं राज्यञ्चेति शेषः । अमज्जन्तोऽब्रुडन्तो येऽचलाः पर्वतास्तत्सहायस्तन्मयसेतुबन्धनसहायवान् लङ्कागम-

द्चलसहकारिणो रामवदन्यत्रगमनार्थिनोऽतिक्रामन्ति । तदेवंविधे परस्पर-नैरपेक्ष्येणाप्यनर्थहेतूनां वयोवैभवविद्यादीनां समवाये यथा विविधभ्रम-कारिण्यो मदिरा इव वामलोचना नोन्मादयन्ति, आभिमानिकसुखहेतवो-ऽक्षमा मृगयासङ्गा न हृदयमङ्गारयन्ति, आघातचमत्कारजनकाः कनका-भासा इव दम्भवृत्तयो न विप्रलम्भं संभावयन्ति, दर्शनमात्रसाराः शाल-भञ्जिका इव वारवनिता न नितान्तमपहरन्ति; दृष्टिदूषका मण्डूकवसा-ञ्जनसदृशाः खलाः सद्वंशेपि न भुजङ्गभ्रमं विभावयन्ति, सहजसन्ताप-समर्थाः पित्तवद्धूर्ता न मधुरे तिक्तत्वमुद्भासयन्ति, अन्यथास्वरूपं दर्श-यन्तो नटा इव व्यवहारार्थिनो न विसंवादयन्ति; अनिर्वचनीयमज्ञानमिव भावभूतं मनो नात्मनि मिथ्याप्रपञ्चं प्रकाशयति; विषयग्रहणाभिमुखो विपक्ष इव बाह्येन्द्रियगणो नाभिभवति; वस्तुस्वरूपतिरोधायकोऽन्धकार इवाविवेको नान्धयति; मुखविकारजनको जरागम इव क्रोधो न स्वाधीनयति; अयथास्थानपात्यपराद्धः शर इव न लोभः परिहास्यतां नयति; विपर्ययप्रचुरो दुष्टामात्य इव मोहो न मोहयति; च्यवनहेतुरभिचारागम इव मदो नाव-

---

नार्थी रामः समुद्रमतिक्रान्तवान्, अमज्जन्तोऽतिरोभवन्तोऽचलाः स्थिरा ये सह-कारिणः सहाया येषां तादृशाः, अन्यत्र **गमनार्थिनो** राज्यान्तरगमनार्थिनोऽति-क्रामन्ति अभिभवन्ति, राज्यमित्यर्थः । स्वशिक्षणमुपसंहरति सचिवो बुद्धिनिधिः—**तदेवमित्यादिना । तदेवंविधे अनर्थहेतूनां समवाये यथा वर्ण्यमाना अनर्था नोन्मिषन्ति, यथा च न प्रतपन्ति तथा यतेथा** इत्युत्तरेणान्वयः। **परस्परनैरपेक्ष्येण** परस्परसहायं विना (स्वातन्त्र्येणेत्यर्थः) **समवाये** समूहे, **नोन्मादयन्ति** उन्मत्तं न कुर्वन्ति । **अङ्गारयन्ति** तापयन्ति । **आपातचम-त्कारजनकाः** दर्शनमात्रचमत्कृतिहेतवः, कनकवदाभासन्ते इति कनकाभासाः मिथ्याकनकानि—इत्यर्थः, **दम्भवृत्तयः** दम्भात्मिकावृत्तयः । लोकवञ्चनाय विहि-तानुष्ठानं दम्भः । **शालभञ्जिकाः** पुत्तलिकाः । **मण्डूकवसाया** भेकवसाया दृष्टिदूषकत्वं प्रसिद्धं, **सद्वंशे** वेणौ सत्कुले च । **पित्तस्य** सन्तापकत्वं तिक्तरसो-द्भासकत्वं च स्वभावस्तथा धूर्तानाम् । **अनिर्वचनीयं** निर्वक्तुमशक्यमज्ञानमिव भावभूतं यथार्थभूतं चित्तं यथाऽऽत्मनि मिथ्याप्रपञ्चं न प्रकाशयति तथा यतेथा इत्येवं रीत्या सर्वत्रान्वयः । **विषयो** देशो रूपादयश्च, **विपक्षः** शत्रुः, **बाह्ये-न्द्रियगणश्चक्षुरादिः । मुखविकारो** वलीपलितत्वादिः । **अयथास्थानपाती**

स्कन्दति; सकलगुणविरोधो पिशुन इव मत्सरो न कुत्सयति; मार्गणा-क्रमणद्वेषी भीरुभाव इव कृपणभावो न स्पृशति; सद्रागापहारी तेजःसंयोग इव गुणाऽनादरो नावसादयति; परपरिभवपर्यवसायी द्रविणाभाव इव नाहङ्कारः कलङ्कयति; अत्युन्नतो वेणुरिव गुणगणो नाकस्मादधःपातयति; अदृश्यावेशकारी पिशाच इव गर्वो न गृह्णाति; सर्वात्मना कुत्राप्यदत्तपदा वेश्येव विद्या न नर्तयति; अनर्थहेतुरुत्पात इव मान्यावमानो नानुमन्यते; आकस्मिकोपनिपातो दुरदृष्टविपाक इव प्रमादो नावसादयति; प्रकृतिवि-पर्ययकारी वातावेश इव मूर्खपरिग्रहो न परिभवति; यत्किञ्चन कारयन्नु-न्माद इव कुलाभिमानो नाकुलयति; नयनमिलनकरी दुर्नीतिरिव निद्रा नाभिद्रवति; मलीमसग्राहिणी पिशाचीवालसता नाभिक्रामति; चित्तसङ्को-चकरी सुषुप्तिरिव भीतिर्न वशयति; स्वाऽपकर्षसम्पादकं सौहार्दमिव मार्दवं नार्दयति; जन्यस्वरूपप्रच्यावको भीरुभाव इव दीर्घसूत्रभावो नोपहासयति; तप्तसिकताक्रमणहेतुः पातकमिव मृगयासक्तिर्नात्मानं व्यनक्ति; कलिनिवा-सस्थानं बिभीतकमिवाक्षा न स्वात्मनि विश्रामयन्ति; संज्ञापचयहेतुर्निशा-चरीव मदिरा न विसदृशयति; प्रकाशप्रत्यक्षविरुद्धो मोह इव दिवास्वापो न स्वापो भवति; गाम्भीर्यविपर्ययात्मोत्तानभाव इव परिवादो नावतरति; अङ्गहारबहुलं विपक्षबलमिव नृत्यं न कवलयति; धृतराष्ट्रोदयापहारकं

---

लक्ष्यात्स्खलितोऽतएवापराद्धः । **अवस्कन्दति** आच्छादयति । **कुत्सयति** निन्दयति । **मार्गणा** याचका बाणाश्च । **सद्रागापहारित्वं** विद्यमानरागापहारित्वं तेजःसंयोगस्य रूपान्तरजनकतया प्रसिद्धम् । **परपरिभवपर्यवसायी** परकर्तृकानादरपर्यवसन्नः । **सर्वात्मना** सर्वतोभावेन, न दत्तं निहितं पदं चरणं यया तादृशी वेश्या, न दत्तमुच्चारितं पदं सुप्तिङन्तरूपं यस्यां तादृशी विद्या । '**प्रमादोऽ**नवधानता' इत्यमरः । **नाभिद्रवति** नाऽकाले आयाति । 'मलीमसन्तु मलिन'-मित्यमरः, **अलसता** आलस्यम् । वशं करोति **वशयति** ( 'तत्करोति तदाचष्टे' इति ण्यन्ताल्लट् ) । 'जन्यमायोधनं युद्ध' मित्यमरः । पातकिनां **तप्तसिकताक्रमणं** नरकवर्णने प्रसिद्धम् । **बिभीतकः** कलिद्रुमः, **अक्षाः** पाशकाः बिभीतकफलानि च । **सञ्ज्ञापचयहेतुः** बोधह्रासहेतुः, विसदृशं करोति **विसदृशयति** । सुष्ठु आप्यते इति **स्वापः**=सुलभः, 'स्वापः शयननिद्रयोः, स्पर्शाज्ञतायामज्ञाने' इति मेदिनी । **उत्तानभावः** सरलभावः । '**अङ्गहारोऽ**ङ्गविक्षेपः' अङ्गहरणं च

गन्धर्वसैन्यमिव गान्धर्वं नान्धयति; अनेकततसुषिरं जालमिव वाद्यं न बध्नाति; फलाननुबन्धिनी वन्ध्यवीरुदिव वृथा चेष्टा न कदर्थयति; विरसपरिपाकं पनसफलमिव पैशुन्यं न प्रसरति; विचाराननुगुणं मान्द्यमिव साहसं प्रवहति; बहुच्छलः खल इव द्रोहो न मोहयति; गुणक्षमाविरुद्धा द्रव्योत्पत्तिवेलेवेर्ष्या नाकर्षति; दोषानुसारिणी तिमिरलेखेवासूया न प्रसरति; नास्तिक्यपर्यवसन्नं योगाचारदर्शनमिवार्थदूषणं नोन्मिषति; जनश्रवणोद्वेजकं कर्णशूलमिव वाक्पारुष्यं न पुष्यति; महापरागोत्थापनसमर्थमुत्पातवात्याचक्रमिव दण्डपारुष्यं नोन्मिषति; यथा च-निदाघसमयेनेव दुर्जनेन विश्रामदायिन्यो यामिन्य इव प्रजा न क्षीयन्ते, गम्भीराशयानि सरांसीव मित्राणि न शुष्यन्ति, तापहेतवो दिवसा इव दुर्जना न वर्धन्ते, रागबहुलाः पाटलप्रसवा इव विटा नोल्लसन्ति, गोत्रदाहका दावदहना इव दुर्जना न ज्वलन्ति, तृषार्ताश्चातका इवार्थिनो न कदर्थ्यन्ते, अतिदुःसहस्पर्शा यवबुसा इव दुर्वृत्ता न विलसन्ति, विषप्राया अजगरनिश्वासा इव महासाहसिका न प्रसरन्ति, निशान्तभेदिन

---

**गन्धर्वसैन्यं** चित्ररथसैन्यम्। **गान्धर्वं** सङ्गीतम्। अनेकानि ततानि सुषिराणि च यस्मिंस्तादृशं वाद्यं वीणावंशादिकम्। **वन्ध्यवीरुद्** अफला लता। विरसः परिपाको यस्य तादृशं पनसफलं कण्टकिफलम्। '**साहसन्तु** बलात्कार्यकृतकार्ये, दमेऽपि च' इति मेदिनी। 'उत्पन्नं द्रव्यं क्षणं निर्गुणं निष्क्रियं च तिष्ठति' इति नियमाद् द्रव्योत्पत्तिवेला **गुणक्षमाविरुद्धा** गुणसहनविरुद्धा। **दोषानुसारिणी** रात्र्यनुसारिणी। सन्तापकारकत्वं निदाघदुर्जनयोः साधर्म्यम्, यामिनीप्रजयोर्विश्रामदायकत्वं साधर्म्यम्, निदाघस्य यामिनीक्षयपरत्वं, दुर्जनस्य च प्रजाक्षतिकरत्वं प्रसिद्धं, "रात्रिः, स्वप्नाय भूतानां चेष्टायै कर्मणामहः" इति मनुः, **यथा च** सन्तापकरेण ग्रीष्मसमयेन लोकानां विश्रान्तिदायिन्यः क्षणदाः क्षीणाः क्रियन्ते तथैव राज्ञः विश्रान्तिदायिन्यः प्रजा दुर्जनेन क्षीणा न भवेयु '**स्तथा यतेथा**' इत्युत्तरेणान्वयः। **न शुष्यन्ति** हेतुभूतेन दुर्जनेनेत्यर्थः, (एवमुत्तरत्र कासुचित्क्रियासु दुर्जनस्य हेतुत्वेन, कासुचित्कर्तृत्वेनान्वयः)। '**गोत्रः** शैले, **गोत्रं** कुलाख्ययोः' इति मेदिनी, **दावदहना** वनाग्नयः, 'दवदावौ वनानले' इति विश्वः। **चातकाः** पक्षिविशेषाः। 'कडङ्गरो बुसं क्लीबे' इत्यमरः, यवबुसस्य दुःस्पर्शत्वं शूकबाहुल्यात्। **निशान्तभेदिनो** गृहभेदिनः, 'निशान्तपस्त्यसदनं भवनागारमन्दिरम्'

आतपा इव तस्करा न प्रतपन्ति—तथा यतेथाः । अपि च भुवनव्यापिभिः स्वकीर्तिराजहंसैः समुन्मूलय परेषाञ्चामरमृणालजालकं, तमःस्वरूपेण कृपाणराहुणा कवलय परेषां सितातपत्रसुधाकरमण्डलं, दिगन्तरतिरोधायिभिर्बाणवर्षैर्निर्वापय दीप्यमानं परेषां प्रतापतनूनपातं, स्वतेजोमहोष्मस्वेदैर्निराकुरु तेषां जाड्यनिबन्धनानि शिरोगौरवाणि, शरासनशिञ्जिनीकूजितसिद्धमन्त्रैः स्तम्भय वैरिणामाज्ञावचनानि, अप्रतिहतप्रयत्नशतकोटिभिर्महेन्द्र इव क्षपय विपक्षक्ष्माभृतां पक्षान्, स्वचरणनखररोहिणीरमणकिरणपरम्पराभिः परिभव तदीयवदनारविन्दानि, सुविहितप्रतिबन्धैः प्रतिहेतुभिरिव हेतिनिवहैः प्रतिजहि समरसीमनि सामर्षं तत्साधनानि, धनुर्मध्यनिबद्धदृढतरमुष्टिदृश्यप्रकोष्ठपद्मरागाभरणदीधितिधारामयैः सिद्धौषधीपल्लवैः सम्मार्जय तेषां महान्तमहङ्कारहालाहलम्, दुर्वारप्रवृत्तिरपवाद इव समुत्सारयान्तरङ्गबहिरङ्गप्रचारकक्षां, दुरवगाहतमेष्वष्टादशस्वेव द्वीपेष्विव तीर्थेषु विजयस्तम्भानिव समारोपयाचलान् चारानिति समभिधाय व्यरमत् ॥ ६२ ॥

---

इत्यमरः । तथा यतेथास्तथा यत्नं कुर्याः ( विधौ लिङ् ) । 'जातवेदास्तनूनपात्' इत्यमरः । जडस्य शीतस्य भावो जाड्यं तन्निबन्धनानि तन्मूलकानि शिरोगौरवाणि यथा स्वेदेनापनीयन्ते, तथा मूर्खत्वनिबन्धनानि शिरोगौरवाणि स्वतेजोमहोष्मस्वेदैरपनयेत्यर्थः । विपक्षक्ष्माभृतां शत्रुनृपाणां, पर्वतानाञ्च । रोहिणीरमणश्चन्द्रः । प्रतिहेतुभिः प्रतिद्वन्द्विभिर्हेतुभिः साध्याभावसाधकैः सत्प्रतिपक्षितैरित्यर्थः, हेतिनिवहैः आयुधसमूहैः शत्रुसैन्यानि समरसीमनि रणमूर्ध्नि अमर्षेण सहितं यथा स्यात्तथा प्रतिजहि = प्रत्यक्षं हन्याः । धनुषो मध्ये निबद्धया दृढतरमुष्ट्या दृश्यायाः प्रकोष्ठस्य कूर्पराधःप्रदेशस्य पद्मरागाभरणानां पद्मरागखचितभूषणानां दीधितिधारामयैः किरणधारामयैः सिद्धौषधिपल्लवैः—तेषां विपक्षाणां महान्तमहङ्काररूपं हालाहलं विषं, सम्यक् मार्जय शोधयेत्यर्थः ( मृज् शुद्धौ इत्यस्माण्णयन्ताल्लोट् ) । दुर्वारा अप्रतिषेध्या प्रवृत्तिर्लक्ष्ये यस्य तादृशमपवादशास्त्रमिव ( पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीय इति नियमात् ) अन्तरङ्गा अमात्यादयो बहिरङ्गा आकराधिकारिप्रभृतयस्तेषां कक्षां श्रेणीं सम्यक् अपाकुरु । परपक्षे तीर्थानि अमात्यादयोऽष्टादश नीतिशास्त्रप्रसिद्धानि, 'अष्टादशद्वीपनिखातयूपः' इत्यादि रघुवंशादौ अष्टादश द्वीपाः प्रसिद्धाः, अचलान् स्थिरान् चारान् गूढपुरुषान् स्थापयेति बुद्धिनिधिः सम्यगभिधाय कथयित्वा व्यरमत् विरतोऽभूत् ॥ ६२ ॥

कुमारस्तु तेनाभियुक्तमात्रग्राह्यार्थेन तद्वचसा पूर्वज्ञाने गृहीतप्रामाण्य इव, जातसंवाद इव, संवृत्ताभ्यास इव, अनुगृहीत इव, अपनीतमोहावरण इव, स्वकार्यानुपधायकतत्तद्दोष इव, ततः सम्पन्नमन्तर्वृत्तिप्रकाशविशेषं परितोषविकासितानयनपुण्डरीकेणप्रसारयन्निव तं प्रणम्य गृहीतानुज्ञो गृहमगात् ॥ ६३ ॥

अथापरेद्युरपक्रान्तायां निशीथिन्यां कुमाराभ्युदयत्रासादिव तारकानीके विद्रुते, राजशब्दविषयत्वापगमभीत्येव मन्दतेजसि दिगन्तमवलम्बमाने चन्द्रमसि, अनुरागादिव स्वात्मानं प्रकाशयन्तीषु तत्परिग्रहकामासु हरित्सु, अचिरादेवाऽऽगमिष्यतां पुरुहूतहयानां मुखेभ्यश्च्युतेषु फेनस्तवकेष्विव दृश्यमानेषु कुमुदस्तबकेषु, तदीयाभरणपद्मरागमयूखसमुदाय इव समुन्मीलति पूर्वककुभि सन्ध्यारागे उदितवति भगवति त्रयीमयतेजसि,—कृतयथोचिताचरणो नरपतिः समं कुमारेण विज्ञातावसरैश्च प्रतीहारनिवेदितैः सामन्तनृपैः प्रणम्यमानो महेन्द्र इव जयन्तेन सह सुमनसां समूहेन सादरं वन्द्यमानः सुधर्मासमानधर्माणं सभाम्परिकर्मयाञ्चकार ॥ ६४ ॥

---

कुमारस्तु तं प्रणम्य गृहीतानुज्ञो गृहमगादित्यन्वयः । शेषं स्पष्टम् । अस्मिन् गद्ये उत्प्रेक्षालङ्कारः ।

उपदेशश्रवणमयं कुसुमं मन्दारमञ्जर्याः ।
प्रथमोपदेशकेभ्यः समर्प्यते तातचरणेभ्यः ॥ ६३ ॥

अथापरेद्युः त्रयीमयतेजसि भगवति उदितवति सति कृतयथोचिताऽऽचरणो नरपतिः कुमारेण समं सभाम्परिकर्मयाञ्चकारेति योजना । तारकानीके तारकासमूहे विद्रुते गते सति । राजा नृपश्चन्द्रश्च । पुरुहूतहयानां इन्द्रहयानां, इन्द्रस्य प्राचीदिक्पतित्वात्तद्धयागमनसम्भवः । फेनस्तबकेष्विव हिण्डीरस्तबकेष्विव । सुमनसां देवानां विदुषां च । 'स्यात्सुधर्मा देवसभा' इत्यमरः; समानो धर्मो यस्याः सा सुधर्मा (धर्मादनिच् केवलात् इति समासान्तोऽनिच् प्रत्ययः), ततः सुधर्मया समानधर्माणं, सभां परिकर्मयाञ्चकार शोभयाञ्चकार ॥

सुतधनसम्पद्बहुलः कीर्णः सृष्टस्त्वलङ्कृतिभिः ।
गुम्फित इव सुकृतफलैः कुसुमैः स्तबको द्वितीयोऽयम् ॥ ६४ ॥

तावदेव सुकेशिनगरनिपातरुषितधूर्जटिनयनविक्षेपजातभ्रंशमिव सूर्यमण्डलं, निर्दग्धमदनकलेवरानन्तरकालीनमिव व्योमकेशस्य लोचनोत्पन्नं ज्योतिः, संज्ञासमुत्साहितदेववर्द्धकितर्कुसंपर्कपृथग्भूतमिव विवस्वतः प्रभाखण्डम्, अम्बुधिसहपीतवाडवानलहेतिवृन्दमिव भगवता लोपामुद्रावल्लभेन कुक्षितः प्रक्षिप्तं, कल्पान्तपावकज्वालाकदम्बमिव वेगातिशयेनातिदूरङ्गत्वा चिरतरेण प्रतिनिवृत्तं दुर्वासोनिर्मितकृत्या निषेधार्थमम्बरीषं प्रत्यागच्छदिव सुदर्शनचक्रं, प्रबलतरतत्प्रतापहृताधिकारतया एकीभूय पतदिव वैद्युतमोजः, तदीयवैतानिकवीतिहोत्रहूयमानहविर्जिघत्सया स्वलोकं परित्यज्य समागच्छदिवाग्नेयं महः, तदीयप्रतापैः प्रसह्य स्वस्थानात्पातितमिव विपक्षनृपतीनां प्रतापनिकुरम्बम्, अनवरतसमुत्सृष्टहोमद्रव्यसंपूरितोदरगौरववशेन पतदिव वह्निमण्डलम्, असंज्ञायमानप्रत्येकावयवविभागं महत्तेजोऽम्बरतलान्महीतलाभिमुखमापतदृश्यत ॥ ६५ ॥

---

**तावदेव अम्बरतलान्महत्तेजो महीतलाभिमुखम् आपतदृश्यत**-इत्यन्वयः । तेजो विशिनष्टि उत्प्रेक्षालङ्कारैः-**सुकेशनगरे**त्यादिभिः । सुकेशिनाम्नः नृपस्य नगरनिपातेन रुषितः क्रुद्धो यो धूर्जटिः शिवस्तस्य नेत्रविक्षेपमात्रेण **जातभ्रंशम्** जातपतनं सूर्यमण्डलमिव, भस्मीभूतकामदेवशरीरानन्तरकालिकं **व्योमकेशस्य** शिवस्य तृतीयनेत्रोत्पन्नं **ज्योतिरिव** ( तेजस्वितामात्रे सादृश्यम् ), सञ्ज्ञया सूर्यपत्न्या सम्यगुत्साहितो यो देवानां वर्द्धकिः शिल्पी तस्य तर्कोः सूत्रवेष्टनस्य सम्पर्कात्संस्पर्शात् पृथग्भूतं विवस्वतः सूर्यस्य प्रभाशकलमिव, (कथा साम्बपुराणादौ द्रष्टव्या); **भगवता** षडैश्वर्यसम्पन्नेन अगस्त्येन **कुक्षितः** स्वोदरात्, **प्रक्षिप्तं** निष्ठ्यूतम्, अम्बुधिना समुद्रेण साकं कृतपानवडवानलज्वालासमूहमिव,-'हेतिः स्यादायुधज्वालासूर्यतेजःसु योषिति' इति मेदिनी, प्रलयाग्निज्वालासमूहमिव अतिवेगेन **दूरं गत्वा** ब्रह्मरुद्रविष्णुलोकान् गत्वा, **चिरतरेण** वर्षात्मकेन कालेन **प्रतिनिवृत्तं** प्रत्यागतं दुर्वासोरचिताभिचारनिषेधार्थम**म्बरीषं** राजानं प्रतिनिवृत्त्यागच्छत् सुदर्शनचक्रमिव;-**प्रबलतरो**ऽतिप्रबलो यो राजशेखरप्रतापस्तेनापहृताधिकारतया सम्भूय पतत् विद्युत्सम्बन्धि-**ओज** इव;—राजशेखरसम्बन्धियाज्ञिकाग्निहूयमानहोमीयद्रव्यभोजनेच्छया **स्वलोकं** वह्निलोकं परित्यज्य सम्यगायान्-अग्निसम्बन्धिसमूह इव;—अनवरतं निरन्तरं समुत्सृष्टं हुतं यद् होमीयद्रव्यं तेन सम्पूरितं यदुदरं तस्य गौरववशेन पतद् **वह्निमण्डलमिव** ( पतने गौरवस्य हेतुतया काव्यलिङ्गम् )-**असञ्ज्ञायमाना**=न सम्यग् ज्ञायमाना प्रत्येकावयवविभागा यस्य तत् बृहत्तेजः आकाशाद् भूतलं प्रति पतदृश्यत ॥६५॥

क्रमेण च सन्निकर्षप्रकर्षेण सम्भूताभिव्यक्तिकतया गृह्यमाणे संस्थानविशेषे मरकतमणिमयूखसमुदायभूतानामिव, गरुत्मतेव स्वाविनयविनयार्थमुपहारीकृतस्वनामकाश्मरूपाणां, कुमारोद्वहनमयूरेणात्मसौहृदानुबन्धार्थमिव समर्पितस्वपक्षवर्तिगुणविशेषाणां, नभसेव स्वपरिमाणातिशयप्रथावैपरीत्यनिरासाय स्वपरिच्छेदशङ्कया सञ्जनितसारूप्याणाम्, अतिगतिशीलतयेव प्रत्येकपर्याप्तहरितां, स्वप्रतिबिम्बशङ्कया सोढप्रातःकालीनभास्वदश्वसम्पातानां, वेगवत्ताजन्यद्वेषविषयत्वादिव चरणैरपि भूमिस्पर्शान्निवृत्तानां, तैजसद्रव्यवत्तयेव चक्षुषस्तत्स्थानभूतान्यपि गोलकानि स्वावय-

---

क्रमेण च दिव्यानामश्वानां सहस्रेण समुह्यमानं पुरुहूतसमारोहणार्हं रथमपश्यदिति योजना। तदेव रथं मालोत्प्रेक्षया विशिनष्टि—**सन्निकर्षप्रकर्षेणेत्यादिना**। क्रमशः सन्निकर्षस्य सान्निध्यस्य प्रकर्षेणाऽऽधिक्येन सञ्जातस्फुटतया साक्षात्क्रियमाणे **संस्थानविशेषे** अवयवरचनाविशेषे मरकतमणीनां ये मयूखाः किरणास्तेषां समुदायभूतानामिव **दिव्यानामश्वानाम्** इत्यनेनान्वयः। एवमुत्तरत्र षष्ठ्यन्तानाम्। **गरुत्मता** गरुडेन स्वस्याविनयस्य विनयार्थम् अपनयनार्थम् उपदीकृतानामिव **स्वनामकाश्मरूपाणां** गारुत्मतमणिमयानां,—**कुमारस्य** कार्तिकेयस्योद्वहनमयूरेण वाहनबर्हिणा आत्मनो यत्सौहृदं मैत्री तदनुसरणार्थमिव समर्पितः स्वपक्षवृत्तिर्यो गुणविशेषो गुणभेदः पालाशवर्ण इत्यर्थस्तद्रूपाणां,—**नभसेव** आकाशेनेव स्वस्य गगनस्य यत् परिमाणं मानं तस्य योऽतिशयः परममहत्त्वं तस्य या प्रथा प्रसिद्धिस्तस्या यद् वैपरीत्यं न्यूनपरिमाणता तन्निरासाय तदपाकरणाय स्वस्य यः परिच्छेद इयत्ता तस्य शङ्कया **सञ्जनितसारूप्याणां** कृतसारूप्याणां—महतामित्यर्थः,—**अतिगतिशीलतयेव** अतिचलनवत्तयेव प्रत्येकं पर्याप्ताः परिमिता हरितो दिशो येषां ते तादृशानां, (अतिवेगवतामित्यर्थः), स्वस्यप्रतिबिम्बशङ्कया सोढः प्रातःकालिकसूर्याश्वानां सम्पातो गतिर्यैस्ते तादृशानां (सूर्याश्वानां च हरिद्वर्णतया साजात्येन स्वप्रतिबिम्बशङ्का, सा च सहनत्वे हेतुरिति काव्यलिङ्गम्) 'कालीन' इति अव्युत्पन्नप्रातिपदिकं पुराणादिप्रसिद्धम्; वेगो विद्यते येषु ते वेगवन्तः क्षित्यादयस्तेषां भावस्तत्ता तज्जन्यो यो द्वेषस्तद्विषयास्त एव क्षित्यादयस्तत्त्वादिव चरणैरपि भूमिस्पर्शान्निवृत्तानां (दिव्यानां भूमेरस्पर्शनं स्वाभाविकम्)—स्ववेगं प्रति भूम्यादिवेगस्य तुच्छत्वादुत्प्रेक्षितं **द्वेषविषयत्वादिवेति**। **चक्षुषश्चक्षुरिन्द्रियस्य तैजसद्रव्यवत्तया** तेजोद्रव्यविकारवत्तया **तत्स्थानभूतान्यपि** तेजसः आश्रयभूतान्यपि **गोलकानि** नेत्रगोलकानि, स्वस्य नेत्रगोलकस्यावयवभूतैः

वभूतैः पक्ष्मभिरस्पृशतां, पार्थिवांशोपगृहीततैजसभागारब्धतयेव स्वावयवेष्वस्वपि स्वशरीरसंयोगमविभ्रतां, स्वजीवनहेतुभूतमपि मनोऽमृष्यमाणानां, स्वान्ततर्गतमपि श्वासमारुतं ससंरम्भमपमुञ्चतां, पुलोमकन्यकाकर्णपूरशिरीषपरागेणेव पालाशीकृतानां, तैजसद्रव्यतया पावकप्रणयोपनततद्वाहजीमूतशुकपक्षकान्त्येव रञ्जितानां, त्रैलोक्यराज्यलक्ष्मीनिष्ठमहेन्द्रविषयकशृङ्गाररसेनेवानुलिप्तानां, हरिन्मणिसमारम्भकपार्थिवभागैरिव कृतोपष्टम्भानां, जलनिधिसञ्जाततयेव बहिर्लग्नशैवालमञ्जरीकाणाम्, इन्द्रनीलाभरणप्रभाभरैरिव व्याप्तानां, दानवेन्द्रविजयोद्यतमहेन्द्रमङ्गलार्थिसुरसुन्दरीसमुदायोपनीतदूर्वाप्रवालकान्तिभिरिव संक्रान्ताभिरङ्कितानां, वेगवत्पदार्थविजयकेतुभूताभ्यामिव स्तब्धाभ्यां कर्णाभ्यामुद्भासमानानाम्, अतिचिरं निगीर्णां गरुत्मतः कीर्तिमिव फेनव्याजेनोद्वमतां, प्रखरतरखलीनखेलनखणत्कारमुखरतया रयलवदुर्विनीतनभस्वन्तमिव भर्त्सयमानानां, स्वप्रे-

पक्ष्मभिः नेत्ररोमराजिभिः स्पर्शमकुर्वतां,(निमेषव्यापाररहित्यं दिव्यानां स्वभावः)—पृथिवीसम्बन्धी योंऽशो भागरूपेणोपगृहीतोऽवष्टब्धो यस्तैजसोभागस्तेजोंऽशस्तदारब्धतयेव=तज्जन्यतयेव स्वावयवेष्वपि स्वकीयचरणादिष्वपि स्वशरीरस्य संयोगमप्राप्तप्राप्तिरूपं सम्बन्धं न धारयताम्; ( अवयवावयविनोः समवायात् इति तत्त्वम् )—अमृष्यमाणानामसहमानानां, मनसोऽपि वेगवतामित्यर्थः; **स्वान्तर्गतमपि** प्राणवायुं सकोपमपमुञ्चतां त्यजतां,—**पुलोमजायाः** कर्णपूरशिरीषपुष्परजसा इव हरिद्वर्णीकृतानां,—**त्रैलोक्यस्य** यद्राज्यं तस्य या लक्ष्मीस्तद्वृत्तिर्यो महेन्द्रविषयकः शृङ्गाररसस्तेनेवानुलिप्तानां, (शृङ्गारस्योज्ज्वलत्वात्)—**हरिन्मणेः** समारम्भका जनका ये पार्थिवभागाः पृथिवीपरमाणवस्तैरिव कृतावलम्बनानां,—समुद्रोत्पन्नतयेव **बहिर्लग्नाः** सन्नद्धाः शैवालमञ्जर्यो येषां तेषां,—**दानवेन्द्राणां** विजये उद्यतो यो महेन्द्रस्तद्विषयकमङ्गलार्थिन्यो याः सुरसुन्दर्यस्तासां समुदायेनोपनीता ये दूर्वाप्रवालास्तेषां **संक्रान्ताभिः** प्रतिबिम्बिताभिः कान्तिभिरिव चिह्नितानां,—**वेगवन्तो** ये पदार्था वाय्वादयः—'क्षितिर्जलं तथा तेजः पवनो मन एव च । परापरत्वमूर्तत्व—क्रियावेगाश्रया अमी' इत्युक्तास्तेषां विजयपताकाभूताभ्यामिव **स्तब्धाभ्यां** निश्चलाभ्यां श्रोत्राभ्यां विद्योतमानानां,— फेनव्याजेन=फेनच्छलेन चिरकालं निगीर्णां ग्रसितां वैनतेयस्य समज्ञामिव वमनंकृतवतां,—**प्रखरतर**स्तीक्ष्णतरो यः खलीनः कविका तस्य खेलनेन चलनेन यः खणत्कारोऽव्यक्तो ध्वनिस्तेन मुखरतया शब्दायमानतया—**रयलवेन** वेगलेशेन दुर्विनीतोऽभिमानी यो नभस्वान्

क्षितस्थानस्य स्वसमकालमेव तदाक्रमणासहिष्णुतयाऽतिविप्रकृष्टगमनेच्छावद्भ्यामिव निमेषवर्जिताभ्यां चक्षुर्भ्यामलङ्कृतानाम्, अतिपरिप्लवप्रोथतया मुखान्निःसरतः श्वासमारुतस्य वेगप्रतिरोधेच्छया मार्गमिव निरुन्धानानाम्, अतिस्वच्छदन्तकौमुदीच्छलेन स्वगमनपर्याप्तिरहितमाकाशस्य परममहत्परिमाणमिवोपहसताम्, अतिस्तोकमेवाग्रतोगन्तव्यस्थलमस्ति तदलं महावेगसंरम्भेणेति चरणान्प्रति विवक्षयेव स्वाभिमुखभुग्नीकृतमुखानां, मुखनमनोन्नतीभवत्कन्धरानुबन्धिभिश्च वेगवंशकरीरैरिवोपरि स्वानुरूपदेशविरहदर्शनेन ह्रिया वाङ्मुखीभूतैर्मरकतमयमहायुगदण्डमयूखमण्डलैरिव केसरकेशैरुपशोभितानां, महाहवनिहतदानवेन्द्रामुक्तकञ्चुकोपरि संचरणघर्षणोत्पन्नदहनस्फुलिङ्गसङ्गमेन प्रकाशितस्वरयप्रतापैः खुरपुटैश्चकासद्भिः अनवरतदर्भदन्तुरयज्ञवाटसञ्चरणविद्धैरिव भूमिमस्पृशद्भिर्यथेच्छगमनानुरूपस्थानानवाप्तिचिन्तयेव तनूभवदुपान्तैर्वैनतेयसाधर्म्य-

---

पवनस्तमिव तर्जयतां,—**स्वप्रेक्षितस्थानस्य** चक्षुरिन्द्रियसाक्षात्कृतस्य पदन्यासस्थानस्य साक्षात्करणसमकालमेव तत्स्थाने पदन्यासस्यासमर्थतया अतिदूरदेशगमनेच्छावद्भ्यामिव निमेषैः पक्ष्मव्यापारैर्वर्जिताभ्यां चक्षुर्भ्यामलङ्कृतानां भूषितानाम्—**अतिपरिप्लवं** अतिचपलं यत् प्रोथं घोणा तस्य भावस्तया वदनान्निर्गच्छतः मुखमारुतस्य वेगनिवारणेच्छया मार्गमिव आवरणं कुर्वताम्,—**अतिस्वच्छा** ये दन्तास्तेषां या कौमुदी ज्योत्स्ना तस्या व्याजेन स्वधावनपर्याप्तिहीनमाकाशस्य नभसः परममहत्परिमाणं-तमिवोपकखताम्,—**अतिस्तोकमेवा**त्यल्पमेवाग्रतः पुरतो गन्तव्यस्थलमस्ति, **तत्** तस्मात् महावेगसंरम्भेणालमिति चरणान् प्रति वक्तुमिच्छयेव स्वाभिमुखमात्माभिमुखं भुग्नीकृतानि कुटिलीकृतानि मुखानि शफानि यैस्तेषां,—**मुखस्य** नमनेन उन्नतीभवन्ती या कन्धरा तदनुबन्धिभिः वेग एव वंशो वेणुस्तस्य करीरैरिव अङ्कुरैरिव उपरि ऊर्ध्वं स्वानुरूपः स्वयोग्यो यो देशोऽवकाशस्तस्याभावदर्शनेन ह्रिया लज्जया अधोमुखीभूतैः, पुनश्च मरकतमयौ यौ महायुगदण्डौ रथसंयोजकदण्डौ तयोर्मयूखसमूहैरिव केसरकेशैः सटाकेशैर्द्योतितानां,—**महाहवे** महासंग्रामे निहता ये दानवेन्द्रास्तेषामामुक्ताः परिहिता ये कञ्चुका वारबाणास्तेषामुपरि सञ्चरणेन यद् घर्षणं तेनोत्पन्ना ये दहनस्फुलिङ्गा अग्निकणास्तेषां संगमेन प्रकाशितः स्वरयस्य = वेगस्य प्रतापो यैस्तैः खुरपुटैश्चकासद्भिः शोभमानैः 'श्चरणौ रुद्धासिताना मित्यनेनान्वयः' (एवमुत्तरत्र),—अनवरतं निरन्तरं दर्भैः कुशैर्दन्तुर आच्छादितो यो यज्ञवाटो यज्ञभूमिस्तस्मिन् संचरणेन विद्धैः=क्षतैरिव भूमिमस्पृशद्भिः,—यथेच्छं

मात्सर्यावल्गनैः पक्षाङ्कैरिव तद्व्यतिरेकबीजभूतैर्भूष्यमाणैः स्वालङ्करणमयूखजालिकैस्तेजोविशेषैरिव कञ्चुकितैर्गरुडवेगगर्वग्रन्थिहरणाभ्युदितग्रन्थिभिरिव मध्यभागैः स्फुरद्भिश्चरणैरुद्भासितानां, स्वातिक्रममार्जनार्थमिव पश्चाल्लग्नस्य जवजनितस्य मारुतस्य वारणार्थमिव प्रतिवारं चलाचलीभवता पुच्छेन भासितानाम्, एककार्यनियोजितानामप्यनपेक्षितपरस्पराणां, सरूपाणामप्यप्राप्तैकशेषाणां, चाक्षुषाणामपि सदा गतीनाम्, अश्वजातीयानामपि सपौरुषाणां, महेन्द्रवाहनानामप्यवारणानां, हरीणामप्यवामनानां, न्यग्रोधोत्सृष्टानामप्यनुद्वेगानां, सुगतानामपि प्रशस्तपृष्ठानां, धाराधरत्वादेव

---

स्वच्छन्दं यद् गमनं तदनुरूपं यत्स्थानं तस्यानवाप्तिचिन्तयेव तनूभवन्तः प्रान्ता येषां तैः,—वैनतेयस्य यत् साधर्म्यं सादृश्यं तद्विषयकं यन्मात्सर्यं तेन वल्गनैश्चलद्भिः ( 'अनुदात्तेतश्च हलादे'रिति कर्तरि युच्यनादेशः ) पक्षयोः पार्श्वयोरङ्कैश्चिह्नितैरिव तस्मात् वैनतेयाद्यो व्यतिरेक आधिक्यं तस्य कारणभूतैर्भूष्यमाणैरलङ्क्रियमाणैः स्वेषां येऽलङ्कारास्तेषां किरणसमूहस्वरूपैः प्रतापविशेषैरिव कञ्चुकितैः वर्मितैः,—गरुडस्य यो वेगो जवस्तेन यो गर्वोऽभिमानस्तस्य या ग्रन्थिस्तस्या हरणे अभ्युदिता या ग्रन्थयो घुटिका—( 'तद्ग्रन्थी घुटिके गुल्फौ' इत्यमरः ) स्ताभिरिव मध्यमागैः स्फुरद्भिश्चलायमानैश्चरणैरुद्भासितानां शोभमानानां,—स्वस्य मारुतस्य योऽश्वकर्तृकोऽतिक्रमः अतिक्रमणं तस्य मार्जनार्थमपनयनार्थमिव पश्चाल्लग्नस्य जवेनाश्ववेगेन जनितस्य मारुतस्य वारणार्थमवरोधार्थमिव निरन्तरं चलता पुच्छेन शोभमानानाम्,—एककार्ये रथवहनरूपे कार्ये कृतनियोगानामपि परस्परापेक्षारहितानां,—समानरूपाणामपि न प्राप्त एकोऽपि शेषः रथवहनाद् बहिर्भूतो येषां तेषां, ( सरूपाणां शब्दानामेकशेषो भवति नार्थानाम् ),—चक्षुरिन्द्रियग्राह्याणामपि सदागतीनां वायूनामिति विरोधः, निरन्तरगतीनामिति परिहारः; अश्वजातिभवानामपि सपौरुषाणामिति विरोधः, सपराक्रमाणामपि इति परिहारः;—महेन्द्रस्य यानभूतानामपि वारणभिन्नानां गजभिन्नानामिति विरोधो, महेन्द्रस्य ऐरावत एव वाहनत्वेन प्रसिद्धः 'एह्येहि वृत्रघ्न गजाधिरूढे'त्यादिषु ध्यानवाक्येषु, वारयितुमशक्यानामिति परिहारः, हरिशब्दवाच्यानामपि वामनभिन्नानामिति विरोधः, वामनस्य विष्णोरवतारत्वात्, अखर्वाणामिति परिहारः; 'खर्वो ह्रस्वश्च वामन' इत्यमरः,—न्यग्रोधोत्सृष्टानामपि वटोत्सृष्टानामपि अवरोहाणामित्यर्थः, नास्ति उद्दूर्ध्वोद्वेगोऽधोमुखतया वर्धनरूपः येषामिति विरोधः; न्यग्नीचैः रोधेन रोधपूर्वकमुत्सृष्टानां विसर्जितानां-नास्ति-उद्वेग उद्वेजनं येषामिति परिहारः;—बौद्धाः प्रश-

वायुविरोधभाजां, गन्धर्वत्वादेव चित्रसेनाग्रेसराणां, हरित्वादेवाक्रान्तगगनानां, प्रशस्तहनुमत्त्वादेव लङ्घितवारिधीनां, बलित्वादेव पातालावाप्तियोग्यानां, सुनाभत्वादेवावगाढसमुद्रान्तराणां, जलधिजन्यत्वादेव स्फुरदावर्त्तानाम्, अह्रस्वदीर्घत्वादेव जातप्लुतसम्बन्धानां, वेगोत्कर्षनिरोधार्थं शृङ्खलाभिरिव पारिजातकुसुममालाभिरलङ्कृतकन्धराणाम्, अनिवार्यरयत्वेनेव चरणालङ्कारमणिमरीचिकैतवेन निगलितानामुपरितनाकाशपरिमाणवीक्षणार्थमिव शेखरमणिप्रदीपेन कृतोद्योतानां दिव्यानामश्वानां सहस्रेण समुह्यमानं,–दनुजेन्द्रबलविमर्दनासक्तसंस्त्यानशोणितरञ्जितेन, राक्षसराजसैनिकवारबाणसंघट्टोत्पन्नपावकबाणोद्योतितेनेव प्रधिना अनेकशतसंख्य-

---

स्तत्पृष्ठा न भवन्तीति विरोधः, शून्यवादित्वात्, अन्यत्र **सुगतानां** सुष्ठुगमनवतामपि प्रशस्तं पृष्ठं येषां तेषाम् इति परिहारः; धाराधरो मेघो वायुकर्तृकविरोधभाक्,–अश्वा अपि धारां स्वगतिं धरन्ति ते धाराधरा अतएव तथा;—**चित्रसेनो** गन्धर्वः सजातीयानां पुरस्सरः, अश्वा अपि गन्धर्वशब्दवाच्या अत एव चित्रा चतुरङ्गिणी या सेना तस्या अग्रेसराणां प्रधानानां;—**हरिर्विष्णुः**क्रान्ताकाशो वामनावतारे, अश्वा अपि हरिशब्दवाच्या अत एव तथा,–हनुमान् लङ्घितसमुद्रः, एतेऽपि प्रशस्त हनुमत्त्वात्तथा (हनुः कपोलाधोभागः);—बलमस्ति येषां ते बलिनस्तेषां भावस्तस्मादश्वपक्षे; सुनाभः सुदर्शनं चक्रं तच्च अवगाढब्रह्माण्डान्तरं किमुत समुद्रान्तरम्, अश्वाश्च सुनाभवन्तः, अतएव अवगाढसमुद्रान्तराः; ( सुनाभोऽश्वानां नाभिस्थो दक्षिणावर्तः)–उच्चैःश्रवस्सजातीयत्वादेवाश्वानां जलधिजन्यत्वं, तस्मादेव स्फुरन्त आवर्ता रोमाणां दक्षिणावर्ता येषां तादृशानां;–ह्रस्वदीर्घभिन्नः स्वरः प्लुतः, अश्वाश्च ह्रस्वदीर्घभिन्ना मध्यमशरीरा अत एत जातः प्लुतगतिसम्बन्धो येषां;—**वेगोत्कर्षस्य** अवरोधार्थं शृङ्खलाभिः पारिजातकुसुमानां मालाभिःअलङ्कृता कन्धरा ग्रीवा येषां तेषाम्,—**अनिवार्यवेग**वत्त्वेनेव चरणालङ्कारखचिता ये मणयस्तेषां मरीचिच्छलेन निगलितानां = तिरोहितानाम्;—**उपरितनं** यदाकाशं तस्य यत्परिमाणं तद्दर्शनार्थमिव शिरोमणिरूपेण प्रदीपेन कृतप्रकाशानां दिव्यानाम् द्युतिमताम्–(तैजसानामित्यर्थः) **अश्वानां सहस्रेण समुह्यमानं** रथमित्यनेनान्वयः। इतः परं रथं विशिनष्टि–**दनुजेन्द्रे**त्यादिभिः। दनुजेन्द्राणां बलविमर्दनेन सेनाविमर्दनेन आसक्तं लग्नं यत्संस्त्यानशोणितं गाढशोणितं तेन रञ्जितेन 'चक्रचतुष्टयेन'; **राक्षसराजस्य** रावणस्य ये सैनिकास्तेषां वारबाणानां कवचानां संघट्टनेन उत्पन्नो यः पावकबाणः अग्निमयो बाणस्तेनोद्योतितेनेव **प्रधिना** नेमिना उपलक्षितेन 'चक्रचतु-

दानवेन्द्रद्वैरथसंमर्दगणनारेखाभिरिवारराजीभिरङ्कितेन विपक्षसैन्यमज्जनास्पदेन युद्धार्णवावर्तेनेव नाभिना विराजमानेन संग्रामलक्ष्मीकुण्डलायमानेन चक्रचतुष्टयेनोद्भासितं,–रावणविद्वेषबन्दीकृतेनेव महताक्षेणोद्भासितं, सैन्धवकन्धरासम्बन्धस्थैर्यहेतुबन्धनसमुदायेनात्यायतयुगग्रीवामण्डलाश्रितेन मुखसहस्रेणेव मरकतमरीचिमिश्रशोणोपलदीधितिवितानव्याजेन धूमस्तोमकलुषीकृतं, हालाहलानलमिवोद्गिरता दर्शनाव्यवहितानन्तरकालमेव परिपन्थिसार्थं भस्मसात्कुर्वतात्यायतस्थूलदेहेन दर्वीकरसार्वभौमेनेव कूबरदण्डेनाशून्यतां नीतं, क्षेत्रज्ञमिव साक्षीभूतं, भागवतमिवानेकभक्तिभव्यं, तार्किकमिव कल्पितानन्तकक्षं, महावराहमिव सोढहिरण्याक्षनिर्मुक्तनाराचधारासंपातं, नृसिंहमिव प्राप्तहिरण्यकशिपुप्रहितमहास्त्रदहनहेतिसम्बाधं,

---

ष्टयेन';—अनेकशतसंख्यानां दानवेन्द्राणां यद् द्वैरथं युद्धं तस्मिन् यः सम्मर्दो विध्वंसस्तस्य गणनालेखाभिरिव अरराजिभिः अरपङ्क्तिभिश्चिह्नितेन 'चक्रचतुष्टयेन',-शत्रुसैन्यब्रुडनस्थानभूतेन युद्धार्णवस्य आवर्तेनेव=भ्रमेणेव नाभिना शोभमानेन, संग्रामलक्ष्म्याः कर्णभूषणायमानेन चक्राणां चतुष्टयेनोद्भासितं,–रावणविषयकेणेन्द्रनिष्ठेन विशिष्टद्वेषेण बन्दीकृतेनेव=निगृहीतेनेव बृहता अक्षकुमाररूपेणाक्षदण्डेन शोभितं,-सैन्धवानामश्वानां ग्रीवासम्बन्धस्य स्थिरताहेतुर्यो बन्धनसमुदायस्तेनात्यायतायुगे [लग्नाया] ग्रीवाया मण्डलाश्रितेन वदनश्वासेनेव हरिन्मणिकिरणयुक्तमाणिक्यकिरणवितानच्छलेन धूमसमूहेन कलुषीकृतं,–कालकूटानलमिव उद्गिरता दर्शनोत्तरकालमेव शत्रुवर्गं भस्मसात्कुर्वता अतिदीर्घशरीरेण वासुकिना इव कूबरदण्डेन युगन्धरदण्डेनाशून्यतां नीतं=युक्तं 'रथं',– क्षेत्रज्ञमिव आत्मानमिव इन्द्रियादीनां साक्षीभूतमन्यत्र अक्षेण सहितः साक्षः,असाक्षः,साक्षोभूतः साक्षीभूतस्तं (अभूततद्भावे च्विः)अक्षसहितमित्यर्थः,–भगवान् भक्तिःसेव्यो यस्य स भागवतः=( 'भक्तिः' इति अण् ) तमिवानेकाभिर्नवविधाभिर्भक्तिभिर्भव्यं भावुकम्, अन्यत्र भक्तिभिः=रचनाभिः, तार्किकमिव कल्पिता रचिता, अनन्ता कक्षा स्पर्धास्पदता येन स तम्, अन्यत्र कल्पिता अनन्ताः कक्षाः रथगेहप्रकोष्ठा यस्मिंस्तं,–['कक्षा स्पर्धास्पदे काञ्च्यां रथगेहप्रकोष्ठयोः' इति धरणिः], महावराहः सोढः हिरण्याक्षेण निर्मुक्तानां नाराचधाराणां सम्पातो येन स–तमिव, रथेऽपि समानम्, अथवा सोढो हिरण्यस्य सुवर्णस्य योऽक्षो रथावयवस्तस्मिन्निर्मुक्ता बद्धा ये नाराचास्तेषां धारासम्पातो यस्मिन् युद्धरथत्वाच्छस्त्रवत्त्वं प्रतिपाद्यतेऽनेन विशेषणेन,–हिरण्यकशिपुना प्रहितानि यानि महास्त्राणि तज्जन्यो यो दहनस्तस्य या हेतिर्ज्वाला तस्याः प्राप्तः

महेश्वरमिव लब्धत्रिपुरासुरविसृष्टप्रहरणवर्षपरामर्शं, कुमारमिवानुभूततारकासुरक्षिप्तलक्षाधिकायुधवृन्दप्रत्यवस्कन्दं, महेन्द्रमिव प्रह्लादबलिवृत्रादिदैत्यचक्रवर्त्तिप्रयुक्तसायकनिकायसंस्पृष्टकायं, राममिव साक्षात्कृतलङ्केन्द्रभुजवृन्दयुगपदुत्क्षिप्तकुलिशसमस्पर्शबाणवेगम् ,अनिरुद्धमिव बाणासुरनिरस्तभासुरविशिखशिखोल्लिखितगात्रं, प्रद्युम्नमिव शम्बरवज्रनाभदानवप्रेरितमायाप्रभावनिष्पतत्कृष्णवर्त्मजातसम्बन्धं, नारायणमिव विज्ञातकालनेमिभुजदण्डोद्यतगदाप्रहारसारम् , अर्जुनमिव सञ्जातनिवातकवचसंविहितशाम्बरीसंवलनसंवेदनं,--दुर्वासःप्रसादीकृतपारिजातकुसुमदामनिक्षेपजनितापराधनिर्माजनकाम्ययेव महेन्द्रेण कृतशूलारोपणेन, गरुडकेतुकस्वभङ्गनिवेदातिशयार्ततयेव दानवसमागमेषु समधिगतवैश्वानरोदरनिवासेन, अपिवाहितजलधराव्यतिकराहितात्याहितेन, अनुभवविषयीकृततुषारपातजनितवैक-

---

सम्बाधो येन तादृशो **नृसिंहस्तमिव**, रथेऽपि समानं विशेषणम् ,—**लब्धस्त्रिपुरासुरत्यक्तायुधवृष्टिः स्पर्शो महेश्वरस्तमिव**, समानं रथेऽपि, असुराणामिन्द्रवैरित्वात्, रथस्य तत्सम्बन्धित्वात्,—**अवस्कन्दम्** आक्रमणम् ,–प्रह्लादबलिवृत्रादयो ये दैत्यास्त एव चक्रवर्तिनस्तैः प्रयुक्तैः सायकनिकायैर्बाणसमूहैः संस्पृष्टः कायो यस्य स महेन्द्रस्तमिव,—**साक्षात्कृतो** लङ्केन्द्रस्य भुजवृन्दैर्युगपदुत्क्षिप्तानां कुलिशसमस्पर्शानां बाणानां वेगो येन स रामस्तमिव,—बाणासुरेण निरस्तैः भासुरैः विशिखानामग्रैरुल्लिखितमङ्कितं गात्रं यस्य **तमनिरुद्धमिव** (रोद्धुमशक्यमित्यर्थः)-शम्बरवज्रनाभाभ्यां दानवाभ्यां प्रेरिता या माया तत्प्रभावेण निष्पतन् यः कृष्णवर्त्मा वह्निस्तेन जातः सम्बन्धः संस्पर्शो यस्य तं **प्रद्युम्नमिव**, ( दीप्तिमन्तमित्यर्थः ),–विज्ञातः कालनेमिभुजदण्डोद्यतगदाप्रहारस्य सारो येन तं **नारायणमिव**,—सञ्जातं निवातकवचसंविहितायाः=प्रणीतायाः शाम्बर्या मायायाः संवलनस्य संचलनस्य संवेदनं ज्ञानं यस्य तम् **अर्जुनमिव**;–**दुर्वाससा** प्रसादीकृतं यत्पारिजातकुसुमदाम तस्य निक्षेपेण जनितस्यापराधस्य निर्माजनस्य=शुद्धेः काम्यया इव=कामनयेव **महेन्द्रेण** कर्त्रा कृतं यत् शूलारोपणं तेन 'समुद्भासमान'मित्यनेनान्वयः,—दानवसमागमेषु सत्सु गरुडकेतुके [ विष्णौ प्रतीत्यर्थः ] स्वस्य यो भङ्गस्तस्य निवेदेन अतिशयमार्ततयेव समधिगतो वैश्वानरोदरे=समुद्रे निवासो येन ; **अपिवाहिताः** प्रेरिता ये जलधरास्तेषाम् आसमन्ताद् व्यतिकरेण आहितं कृतमत्याहितं यस्मै तेन, पुनः अनुभवविषयीकृतं तुषारपातजनितवैकल्यं येन, पुनः साक्षात्कृतः–अनेकप्रहरणसंयोगो येन–तेन **हिमवतेव मैनाकस्य**

ल्येन, साक्षात्कृतानेकप्रहरणसंयोगेन हिमवतेव मैनाकपक्षसंरक्षणेच्छया नित्यमेव सुरराजसेवकीभूयावतिष्ठमानेन, कैलासेनेव स्वसमुन्मूलनोत्साहप्ररुढदृढविरोधतया दशवदनविशसनकुतूहलदिदृक्षया तत्र समागम्य तदानन्दपरतन्त्रताविशेषेण पुनर्गमनशक्तिराहित्यात्तत्रैव बद्धवासेन, गजासुरेणेव परव्यामोहनार्थं मायया रूपव्यत्ययं विधाय तत्राश्रितेन, सरस्वतीजलान्तर्गतेन वारणरूपिणा त्रिपुरान्तकेनेव स्वभक्तिपरितुष्टेन सर्वदा तत्र कृतसन्निधानेन, स्वाभिधानद्वैतक्रोधादिव समुल्लिखितैरावतमेघभेदेन बलाहकमण्डलोद्भेदसंबद्धया स्ववल्लभयेव ऐरावत्या सुवर्णकक्षया परिक्षिप्तेन, इन्द्रवाहनत्वाविशेषकृतसाम्यनिरासार्थमिव स्वावयवीकृतेन केतनीभूतवता कृत्रिमेणैरावतेन समुद्भासमानम्,—अतिबहलदानवनिर्मुक्तशस्त्रास्त्रपरामर्शजर्जरितशरीरेण सर्ववृत्तिषु स्वायत्तीकृताभिर्वाजिनां मनोराजिभिरिव कर्णपू-

---

स्वपुत्रस्य पक्षाणां संरक्षणेच्छया नित्यमेव सुरराजस्य सेवकीभूय **अवतिष्ठमानेन** स्थितेन कृत्रिमेणैरावतेन समुद्भासमानमित्यनेनान्वयः,—पुनः कथम्भूतेन कृत्रिमेणैरावतेन—**कैलासेनेवेति**। स्वस्य = कैलासस्य यत्समुन्मूलनं तद्विषयको य उत्साह उद्योगस्तेन प्ररूढो विरोधो यस्य तस्य भावस्तया हेतोर्दशवदनस्य यत् विशसनं=रामकर्तृकं, तदेव कुतूहलं, तद्दिदृक्षया **तत्र** रथे समागम्य, रावणवधसमये इन्द्ररथस्थेनैव रामेण तद्वधस्य कृतत्वात्, तेन रावणवधेन य आनन्दस्तत्परतन्त्रताविशेषेण = तदधीनताविशेषेण, पुनः परावर्तनशक्तिराहित्यात् तत्रैव रथे एव बद्धवासेन = कृतनिवासेन—कैलासेनेव,—पुनः **परेषां** सुराणां व्यामोहनार्थं **मायया** छलेन रूपपरिवर्तनं कृत्वा रथे आश्रितेन गजासुरेणेव, पुनश्च **वारणरूपिणा** हस्तिरूपधारिणा सरस्वतीजलान्तर्गतेन स्वभक्त्या इन्द्रकृतया परितुष्टेन सर्वदा तत्र = रथे कृतसन्निधानेन=सन्निहितेन त्रिपुरान्तकेनेव, पुनश्च—**स्वस्यै**रावतस्य गजस्य यदभिधानं नाम तस्य यद् द्वैतं,—मेघस्याऽपि ऐरावतनामधेयत्वात्, तज्जनितात्क्रोधादिव समुल्लिखितो य **ऐरावत**नामा मेघभेदस्तेन बलाहकानां मेघानां यन्मण्डलं तस्य उद्भेदे संबद्धया स्वस्य ऐरावतमेघस्य वल्लभया **ऐरावत्या** विद्युता इव सुवर्णस्य कक्षया रेखया परिक्षिप्तेन, पुनरपि इन्द्रवाहनत्वस्य योऽविशेषोऽभेदः ऐरावतरथनिष्ठस्तत्कृतं यत् साम्यं तन्निरासार्थमिव स्वस्य=रथस्य अवयवीकृतेन, अत एव **केतनीभूतवता** पताकायमानेन कृत्रिमेण **ऐरावतेन** अभ्रमुपतिना समुद्भासमानं 'रथ'मित्यनेनान्वयः। **अतिबहला** अतिगाढा या दानवनिर्मुक्ता शस्त्रास्त्राणां परम्परा तस्याः परामर्शेन जर्जरितं यत् शरीरं तेन

रीकृतपारिजातपरागपरमाणुपरम्पराभिः परिष्कृतेन, हिरण्यपुरलुण्ठनलाञ्छनेनेव शातकुम्भमयेन, वासवसारूप्यचिह्नेन नेत्रसहस्रेणेव हयसहस्रप्रत्येकवीक्षणतात्पर्यपर्यवसायिना मणिगणेन, कञ्चुकितेन कञ्चुकेन, सञ्चितगात्रावरणेन, हिरण्यगर्भेण मुकुटेन, अरुणेनाधरेण, वास्तेयान्वितेन हृदयेन, वीरसेनोदितेनोपष्टम्भविशेषेण, दारुकाभिन्नया मनोवृत्त्या, अर्जुनेन दुकूलेन, मद्रराजेन वेषेण, अनेकसारथिसारभूतेनोपलक्ष्यमाणेन, चित्राङ्गदेन बाहुना, चित्ररथाश्रयेण वपुषा, चित्रसेनोचितेन प्रभावेण, ऊर्णायुना भ्रूमध्येन, अनघेन रूपेण, धृतराष्ट्रोग्रसेनेन, सोमसूर्यवर्चसा, वृषपर्वणा स्कन्देन, हंसावदातेन यशसा, दानवकामिनीहाहाशब्दवितरणप्रवणेन, पर्जन्योपमेयेन केशकलापेन, सुरुचिना वृत्तमण्डलेन, ताम्रकेण दृक्कोणेन,

---

सर्वासु वृत्तिषु=आस्कन्दितादिषु धारासु स्वायत्तीकृताभिः स्वाधीनीकृताभिर्वाजिनां मनोराजिभिरिव कर्णपूरीकृतानि यानि पारिजातानि ( पुष्पाणि ) तेषां परागपरमाणूनां परम्पराभिः श्रेणीभिः **परिष्कृतेन** शोभितेन 'मातलिना' सनाथीकृतमित्यनेनान्वयः। पुनश्च—**हिरण्यपुरस्य** यल्लुण्ठनं तस्य लाञ्छनेनेव चिह्नभूतेनेव शातकुम्भमयेन=सुवर्णमयेन, पुनरपि **वासवस्येन्द्रस्य** सारूप्यचिह्नेन नेत्राणां सहस्रं, तेनेव हयसहस्राणां यत्प्रत्येकवीक्षणं तस्मिन् यत्तात्पर्यं तत्पर्यवसायिना तत्पर्यवसन्नेन मणिगणेन करणभूतेन **कञ्चुकितेन** खचितेन **कञ्चुकेन** वारबाणेन, सञ्चितं कृतं गात्रावरणं येन तेन मातलिना, **हिरण्यं** गर्भे यस्य तादृशेन मुकुटेन [ ब्रह्मरूपेण श्लेषः ] **अरुणेन** रक्तेन [ सूर्यसारथिरूपेणेति श्लेषः ], बस्ताया अजाया अपत्यं पुमान् वास्तेयश्छागस्तेनान्वितेन ( यागादिद्वारा) हृदयेन, वीरा चासौ सेना तया उदितेन च, **वीरसेनेन** नलपित्रा उदितेन कथितेनाधारभेदेन, **दारुकः** कृष्णसारथिः, दारु काष्ठमेव दारुकं तदभिन्नेत्यादि, **अर्जुनेन**=धनञ्जयेन धवलेन च; **मद्रराजेन** सशल्येन, अनेकेषां सारथिनां सारभूतेन **उपलक्ष्यमाणेनेति** प्रत्येकमन्वयः, मातलिना इत्यनेन च संबध्यते, **चित्राङ्गदो** गन्धर्वो विचित्रमङ्गदं च, **चित्ररथो** गन्धर्वो विचित्ररथश्च, **चित्रसेनोचितेन** गन्धर्वोचितेन, चित्रा या सेना तदुचितेन च; **ऊर्णायुना** ऊर्णावता, **अनघेन** निर्दोषेण, उग्रा सेना यस्येति बहुव्रीहिः, ततः धृतराष्ट्रश्चासावुग्रसेनश्च—तेन,—**सोमसूर्य**वद्वर्चस्तेजो यस्य तेन,—**वृषपर्वा** असुरः, वृषस्येव पर्व यस्य तेन स्कन्देन—हंसवत् अवदातेन स्वच्छेन यशसा,—**दानवानां** या कामिन्यस्तासां हाहाशब्दवितरणे प्रवणेनानुकूलेन, **पर्जन्यः** कृष्णमेघः, **सुरुचिना** सुकान्तिना, **ताम्रकेण** रक्तेन

दहनवत्सभूपतितमहेन्द्रसारथ्यसामर्थ्योपजननार्थमिवान्तःप्रविष्टेन गन्धर्वकुलेन साक्षात्क्रियमाणेन, मुनिचिह्नतयोपात्तेन कृष्णाजिनेनैव कल्पद्रुमकुसुमनिर्मितवैकक्षकविभ्रमभ्रमन्मधुकरकुलेनोद्भासितेन, भास्वदेव धृतरश्मिना, गन्धर्वभेदेनेव प्रियंवदेन, आस्तिकेनेव स्थिरदृष्टिना, नकुलेनेव हयाभिप्रायवेदिना, अर्जुनेनेव स्वाधीनीकृतसैन्धवेन, विजयेनेव समीकजन्येन, जयन्तेनेव महेन्द्रसूतेन, आत्मनेव रथचेष्टाजनकेन, प्रतिपक्षेणेव रथिनो बलाबलवेदिना, हयमेधदीक्षितेनेव अनिवारिताश्वागमाकुलेन, याजुषेणेव महाप्रतिरथसहेन, विश्वावसुनेव गन्धर्वनायकेन मातलिना सनाथी-

---

दृक्कोणेनापाङ्गेन, दहेनन तुल्यं दहनवत्, भूपतितो भूम्यागतो यो महेन्द्रस्तस्य यत् सारथ्यं = सारथिकर्म तत्सामर्थ्योपजननार्थमिव अन्तःप्रविष्टेन = युगन्धरद्वयान्तःप्रविष्टेन गन्धर्वकुलेन=हयकुलेन देवयोनिविशेषेण च सङ्घेन कर्त्रा साक्षात्क्रियमाणेन = दृश्यमानेन;—मुनिचिह्नतया=मुन्याश्रमगमनानुकूलचिह्नतया उपात्तेन स्वीकृतेन परिहितेन कृष्णाजिनेनैव कल्पद्रुमकुसुमैर्निर्मितं यद् वैकक्षकम्=उरसि तिर्यक् क्षिप्तं माल्यं, तस्य विभ्रमेण = भ्रमत्–यत्–मधुकरकुलं तेनोद्भासितेन,—भास्वान् सूर्यो धृतरश्मिर्धृतकिरणस्तेनेव धृतप्रग्रहेण; गन्धर्वभेदो नाम्ना प्रियंवदः, मातलिस्तु प्रियंवदतीति प्रियंवदः,–आस्तिकः स्थिरदृष्टिः स्थिरविचारः, मातलिरश्वनिग्रहार्थं स्थिरदृष्टिः,–नकुलः हयाभिप्रायवेदी–अश्वशास्त्राभिज्ञत्वात्, मातलिस्तु सारथित्वात्; अर्जुनः स्वाधीनीकृतसैन्धवः=स्वाधीनीकृतजयद्रथः, मातलिपक्षे सैन्धवा अश्वाः,–'हयसैन्धवसप्तय' इति अश्वसामान्येषु पाठात् ; समीकजन्येन संग्रामजन्येन, विजयेन जयेन इव मातलिना च, तत्पितुः समीकनामधेयत्वात्;–महेन्द्रात्सूत उत्पन्नः जयन्तः, तेनेव महेन्द्रेण सूतः प्रेरितस्तेन महेन्द्रसारथिना मातलिना, 'सूतस्तु सारथौ तक्षिण क्षत्रियाद् ब्राह्मणीसुते । वन्दिपारदयोः पुंसि, प्रसूते प्रेरिते त्रिषु' इति विश्वमेदिन्यौ । रथचेष्टाजनकेन=शरीरचेष्टाजनकेन आत्मना इव स्यन्दनचेष्टाजनकेन मातलिना, 'रथः शरीरं पुरुषस्य' इत्यादि श्रुतेः;–रथिनो रथारूढस्य, प्रतिपक्षेण प्रतिद्वन्द्विना;–अनिवारितः अनवरुद्धो योऽश्वमेधीयोऽश्वस्तस्यागमे आगमने परिवर्तने आकुलेन व्याकुलेन हयमेधदीक्षितेन अश्वमेधदीक्षितेनेव अनिवारिता येऽश्वास्तेषामागमे भूलोकागमने आकुलेन व्यापृतेन मातलिना । 'फाल्गुनसिताष्टम्याम् अश्वमेधदीक्षितोऽश्वं सैनिकैः सह विसर्जयति, भूमण्डलं परिक्रम्य राज्ञो विजित्य पुनः वत्सरान्ते तस्यामेवाष्टम्यामश्वमेधदीक्षितसमीपेऽश्वः प्राप्नोति तत अश्वमेधयाग—प्रारम्भः, तावद्दीक्षितोऽश्वागमनमेव प्रतीक्षते, अतः समाकुलत्वम् । महाप्रतिरथनाम सूक्तं, तं सहते तादृशो याजुषो

कृतं,-निवातकवचनिर्मितमायान्धकारसमूहेनेव, वासवीयत्वादरसमागतेनेव वारिवाहसमूहेन, मखमण्डपगमनसङ्गतेनेव त्रेताग्निधूमस्तोमेन, दानवेन्द्रवरवर्णिनीनयनकज्जलपुञ्जेनेव समुदायतापन्नेन, वैरिणामकीर्तिव्यूहेनेव स्वजन्यतया समागतेन, विनाशहेतुनेव विपक्षशस्त्रनिष्ठभेदनानुकूलशक्तीनाम्, एकाश्रयेणेव दार्ढ्योत्कर्षस्य, अपभ्रंशैरिव विभक्तिहीनैरवयवैः समारब्धेन, कर्णवञ्चनगृहीततदीयचर्मावयवैरिव दधीचिकीकसत्रसरेणुभिरिव कृतारम्भेण कालायसमयेन महता वरूथेन कृताऽऽवरणं पुरुहूतसमारोहणार्हं रथमपश्यत् ॥ ६६ ॥

अनन्तरञ्च ससंभ्रममुत्थाय, मुनित्वस्य वासवसम्बन्धितायाः स्वसख्यस्य चानुरूपयोपचारपरम्परया मातलिमुपचर्य, कुङ्कुमानुलेपनमिषेण स्वहृदयस्थमनुरागमिव तत्र संप्रवेशयन्दृढतरं समाश्लिष्यालङ्कृतस्वासनप्रतिकृतीभूतासनान्तरमवादीत् ॥ ६७ ॥

---

यजुर्वेदज्ञस्तेनेव महाँश्चासौ प्रतिरथः प्रतिभटस्तं सहते अभिभवति तादृशो मातलिः, विश्वावसुर्गन्धर्वाधिपतिः स इव मातलिरपि गन्धर्वाणामश्वानामधिपतिस्तेन सनाथीकृतं 'रथमपश्यदि'त्यनेनान्वयः। इतः परं तृतीयान्तानां 'महता वरूथेने'त्यनेनान्वयः, कृतावरणमित्यस्य रथमित्यनेन। निवातकवचनामकैरसुरैर्निर्मितस्य मायान्धकारस्य समूहेनेव;-वासवीयत्वस्य इन्द्रसम्बन्धित्वस्य य आदरस्तेन हेतुना समागतेन इव—वारिवाहसमूहेन=बलाहकसमूहेन,-मखमण्डपसंगतेन यज्ञशालासंगतेन इव त्रेताग्निसमूहेन, 'दक्षिणाग्निर्गार्हपत्याऽऽहवनीयास्त्रयोऽग्नयः। अग्नित्रयमिदं त्रेता'-इत्यमरः, दानवेन्द्राणां या वरवर्णिन्यस्तासां नयनकज्जलपुञ्जेनेव समूहीभूतेन,—स्वजन्यतया स्वकीयस्वामिजन्यतया समागतेन वैरिणामकीर्तिसमूहेनेव;—वैरिणां विपक्षाणां शत्रूणां यानि शस्त्राणि तन्निष्ठा या भेदनानुकूलशक्तयस्तासां विनाशहेतुनेव;-दार्ढ्योत्कर्षस्य=दृढतोन्नतेरेकाश्रयेणेव,-विभक्तिहीनैः सुबादिविभक्तिरहितैरपभ्रंशैरपशब्दैरिव विभक्तिहीनैः=विभागप्रतीतिरहितैरवयवैरङ्गैः समारब्धेन=सम्यक् रचितेन;-कर्णस्य वञ्चनेन गृहीतं यत् तदीयचर्म=कर्णचर्म तस्यावयवैरिव दधीचेः कीकसानामस्थ्नां त्रसरेणुभिरिव सूक्ष्मावयवैरिव कृतारम्भेण=कृतरचनेन, कालायसमयेन=कृष्णलोहमयेन बृहता वरूथेन रथगुप्त्या कृतमावरणं यस्मिन् तं, पुरुहूतस्य पुरन्दरस्य समारोहणार्हमारोहणयोग्यं रथमद्राक्षीत् ॥ ६६ ॥

**अनन्तरञ्च ससंभ्रममुत्थाय मातलिमुपचर्य आश्लिष्य च, कृतं=**

"कच्चिदशेषभुवनशेखरायमाणनिदेशलेशस्य दनुतनयान्धकारसहस्रकिरणायमाननेत्रसहस्रस्य अनामयमुपनामयन्ति बलवैरिणः प्रथमार्जिताः सुकृतसम्पदः, कच्चिदपाकृताखिलकण्टके त्रिजगति निरूढो विपक्षसामान्यविरहः, केनचिद्दानवापसदेन मदेन न प्रत्यवस्कन्दितः, अपि नाम विध्वस्तगीर्वाणकोटिशतकोटिमपहाय दनुतनयसैन्यसमुदायप्रमापणोपनीतयशोरत्नप्रसादमस्मदुपरि समासञ्जयितुमयमुपक्रमः, कच्चित्समस्तसुरमौलिलालितामाज्ञामयीं पारिजातस्रजमस्मदीयशेखरीकर्तुमयं प्रयत्नः, किं वा मनोरथवृत्तीनामप्यविषयत्वमस्मानारोहयितुमयं प्रयासः। अद्य पचेलिमानि सुकृतानि, सम्प्रत्येव विनश्यदवस्थानि जातान्यंहसां कुलानि, अद्यैव कन्दलायितुमुपक्रान्तानि विविधकल्याणानि, इदानीमेव चरितार्थतामारोढुं बद्धकक्ष आत्मा, साम्प्रतमेव साफल्यमनुभवितुमुत्सहते जननम्' इत्यभिधाय महेन्द्रनिदेशशुश्रूषया बद्धवचसि पृथिवीश्वरे सविनयं महेन्द्रमिव मातलिर्वक्तुं प्रक्रान्तवान् ॥ ६८ ॥

"देव ! यथाऽभिहितं सर्वमेव कल्याणमपरिहीणं वृत्रशात्रवस्य, सति

---

दत्तं स्वासनप्रतिकृतीभूतम् आसनान्तरमन्यदासनं यस्मै तं मातलिमवादीदिति सम्बन्धः ॥ ६७ ॥

अनामयप्रश्नपूर्वकमात्मनः कृतार्थतां प्रकटयति महीपतिः–**कच्चिदित्यादिना**। **अशेषेषु भुवनेषु शेखरायमाणः** निदेशस्य आज्ञाया लेशो यस्य,–दनुतनया दानवा एव अन्धकारस्तेषां विषये सहस्रकिरणायमानानि नेत्रसहस्राणि यस्य तस्य **बलवैरिणः** प्रथमार्जिताः = पूर्वजन्मार्जिताः सुकृतसम्पदः पुण्यराशयः–**अनामयं** कुशलम् **उपनामयन्ति** प्रह्वयन्ति (फलन्तीत्यर्थः)–'कच्चित् कामप्रवेदने' इत्यमरः। **अपाकृतानि** अखिलानि कण्टकानि दस्युप्रभृतीनि लोककण्टकानि यस्मिन्–तादृशे त्रिजगति, **विपक्षाणां** शत्रूणां सामान्यविरहः=सामान्याभावो **निरूढः** प्रथितः कच्चित्। केनचिदसुराधमेन कर्त्रा, मदेन हेतुना **'बलवैरी'** (विभक्तिविपरिणामेनान्वयः) न प्रत्यवस्कन्दितो=नाक्रान्तः कच्चित्। **विध्वस्तानां** गीर्वाणकोटीनां शतकोटिमनन्तम् अपहाय, दनुतनयानां सैन्यसमुदायस्य प्रमापणेन = नाशेन उपनीतं = प्राप्तं यशोरत्नप्रसादम् अस्मदुपरि समासञ्जयितुं = लगयितुमयमुपक्रमः **अपि नाम** कच्चित्। **स्वस्य** यः प्रणयः प्रेमा तस्य विषयत्वं गोचरत्वम्। अन्यत्स्पष्टम् ॥६८॥

**मातलिः–देव ! नमुचिसूदनः–अयमुत्सवो देवेनाऽपि (भवताऽपि)**

च दानवेन्द्रयूथमहान्धतमसनिर्मूलननिदाघदीधितौ देवे संगरसहाये, क इव प्रसङ्गो वैरिनिबन्धनस्य वैमनस्यलेशस्यापि, किन्तु श्रूयतां यदर्थमहं महेन्द्रेणेह प्रेषितः, भुवनत्रयविजयलक्ष्मीनिवासप्रासादेन दनुजवरप्रहरण-भङ्गनिदानेन सुमेरुतटपरिणाहिना वक्षसा तादृशमेव देवस्य वक्षस्तटमव-घट्टयन्नसुरवरवर्णिनीकुन्तलकलापकुसुममालिकापरिमर्दनोत्पन्नपरिमलान्व-याभ्याम् अधरीकृताऽभ्रमुवल्लभकरपीवरभावाभ्यां बाहुभ्यां देवस्य सप्रणयं परिरम्भेण परिवेषमिव पीयूषमालिनो विदधानो देवस्य शरीरे, अन्तःपुरेषु, प्रजासु, राज्याङ्गेषु च समस्तेष्वनामयमनुयुज्य भगवान्नमुचिसूदनः समा-दिशति । अस्ति हिमवतो भागविशेषेऽनेकगुणभाजनं सरो, यत्पुराणवेदिनो बिन्दुसर इति समामनन्ति । तत्तीरवासिनश्च महामुनेर्बहुवत्सरसहस्रप-र्यन्तमव्यवधानेन कृतसमाधेर्गृत्समदसंज्ञकस्य भगवतस्तपोवने तद्दर्शनो-त्कलिकया मया प्रयातव्यम्, अतो देवेनापि रमणीयोद्भुततरश्चायमुत्सवो विषयतां नयनयोर्नेय इति" ॥ ६९ ॥

राजात्वेतदाकर्ण्य—'अहो धन्यतरोस्मि, यदेवंविधे मनोरथपथाति-वर्तिनि विस्मयातिशयहेतौ दुरितदूरतासम्पादके बीजभूते जगदुत्तराणामा-नन्दकन्दानां मानुषानुभवानर्हेऽपि विषये मां संविभागिनमावहति भगवा-न्बलसूदनः, अनवधयः खलु परमेश्वराणां भक्तजनानुग्रहाभिलाषा' इत्य-भिधाय, विशेषतो मन्त्रिमुख्ये राज्यभारं निधाय, कृतपरिक्रमः, सममेव मातलिना चित्रभानुना कुमारेण च माहेन्द्रं स्यन्दनमध्यरुक्षत् ॥ ७० ॥

---

नयनयोर्विषयतां नेय इति--समादिशतीति प्रतिपादयति—देवेत्या-दिना । अपरिहीणं पूर्णम् । लक्ष्म्या राज्यश्रियो निवासस्य प्रासादो भवनं तेन 'वक्षसा' इत्यनेनान्वयः । अवघट्टयन् संघर्षयन् । पीयूषमालिनः—चन्द्रस्य, परिवेषमिव परिधिमिव । उत्कलिकया उत्कण्ठया हेतुभूतया इति मातलिः प्रकान्तवानित्यनेनान्वयः ॥ ६९ ॥

राजा तु एतदाकर्ण्य अहो धन्यमतरोऽस्मि इत्याद्यभिधाय, मन्त्रिमुख्ये राज्यभारं विधाय, मातलिना चित्रभानुना कुमारेण च सममेव माहेन्द्रं स्यन्दनमध्यरुक्षत्—इत्यन्वयः ।

स्यन्दनवर्णनकुसुमं समन्वितं स्यन्दनाधिरोहेण ।
उत्प्रेक्षणबहुलतया समर्प्यते सहस्रनेत्राय ॥ ७० ॥

अथोत्कलिकोत्तरलोचनेषु मर्त्यजनानवलोकितकुतूहलसाक्षात्कारोल्लसितविस्मयसुधोदधितरङ्गावगाहरितमितमानसेषु, सानन्दं दत्तोद्ग्रीविकेषु, अननुभूतगगनलङ्घनक्रमेषु पश्यत्सु नागरैः समं सामन्तमहीवल्लभेषु, अतिक्रम्य नयनपथमम्बरमाचक्राम। अथ राज्ञो विशेषविलोकनकुतूहलमाकलय्य मन्दीकृतवेगेन रथेन गगनवीथीं गाहमानो महेन्द्रस्य वाजिनां नेता सुधामधुरां राजिं वचसां तच्छ्रवणसामाजिकीं व्यतनोत्॥ ७१॥

"देव! भवदीयवैतानवीतिहोत्रधूमवल्लरीभिरिव परस्परसंयुक्ताभिर्विहितारम्भा गगनतरङ्गिणीनिपतितशैवालवल्लय इव भासमानाः, भवदनीकदलितमेदिनीमण्डलसमुत्थायुकधूलिधारानिरोधाय विहरतां सिद्धमिथुनानाम् अध्वनि कृता इव काचवृतयः, शचीरमणप्रणयविषयतया वारंवारं विस्तारितैर्विलोचनैरिव सौदामनीसम्पातैः सबहुमानगौरवं भवन्तमवेक्षमाणा विलोक्यन्तामिमा बलाहकलेखाः। प्रतिबिम्बिताऽमृतमयूखमण्डलतया विकचकुमुदकदम्बकरम्बितासु इन्द्रनीलमणिमयदीर्घिकास्विवैतासु विहरन्ति वल्लभाभिः सह नभश्चराः, प्रावृषि शरदि च नीलधवलदुकूलायमानाभिरेताभिरिव विद्याधराभिसारिकाणामनुविधीयन्ते हृदयवृत्तयः। अयञ्च भगवतश्चक्रवाककामिनीहृदयतापनिर्वापकस्य पुण्डरीकमुकुलमण्डलीनिद्राभङ्गनिदानस्य त्रयीमयतयेव सकलकर्मणां निष्पत्तिहेतोस्तिमिरोदन्वदाचमनमैत्रा-

---

अथ राजा नागरैः समं सामन्तमहीवल्लभेषु पश्यत्सु सत्सु नयनपथमतिक्रम्य अम्बरपथमाचक्रामेति योजना। अथ महेन्द्रवाजिनां नेता (मातलिः) सुधामधुरां वचसां राजिं व्यतनोदिति च। तस्य = राज्ञः। श्रवणयोः सामाजिकीं सामूहिकीम्॥ ७१॥

देव! इमा बलाहकलेखा विलोक्यन्तामित्यन्वयः। गगनतरङ्गिणी मन्दाकिनी। मेघेषु शैवालवल्लित्वमुत्प्रेक्ष्यते, न तु वर्ण्यते, अतो न कविसमयविरोधः। मेदिनीमण्डलात् समुत्थायुका उत्थिता या धूलिधारा। स्वच्छत्वान्मेघानां काचवृतित्वमुत्प्रेक्ष्यते। शचीरमणस्य इन्द्रस्य सखित्वात् राजन्यपि प्रणयविषयता। एतासु (बलाहकलेखासु) नभश्चरा विहरन्ति, प्रावृषि शरदि च एताभिरेव (बलाहकरेखाभिः) विद्याधराभिसारिकाणां हृदयवृत्तयः (चित्तवृत्तयः) अनुविधीयन्ते = अनुक्रियन्ते इत्यन्वयः। प्रावृषि शरदि च नीलधवलयोर्यथासंख्यम्। अयञ्च अग्रतः उदयगिरिः समुदी-

वरुणः सहस्रकिरणस्य गगनसमारोहणपादपीठाकारः, सवितृकिरणसंपृक्त-सूर्यकान्तमणिस्थलेषु ज्वलता कृपीटयोनिना दग्धाभिर्बालतृणराजिभिरिव मरकततटमरीचिमञ्जरीभिरुद्भासमानः, अत्युन्नततटनिपतच्चन्द्रिकापरामृष्टचन्द्रोपलनिस्यन्दमानवारिसारिणीपरिपूर्यमाणकेलिदीर्घिकापरिप्लवमान-सुरसुन्दरीसमाजकेलिमरालः, कर्णावतंसकमलनिमीलनकुपितविद्याधर-मत्तकाशिनीजननिक्षिप्ततत्समास्वादनतुन्दिलजैवातृककलङ्ककुरङ्गकोग्रतः समुदीक्ष्यतामुदयगिरिः। अत्र हि तत्कालकन्दलितकृशानुषु सूर्यकान्त-दृषदङ्गणेषु चङ्क्रम्यमाणो, रजनीषु सरस्वदन्तर्मज्जनलग्नवडवानलज्वाला-वलीवलयित इव लक्ष्यते बालनलिनीवल्लभः। अस्य विविधमणिमयानि तटानि प्रतिबिम्बितनिदाघमयूखमण्डलतया गर्भितभाविदिवसभानुमण्ड-लानीव भासन्ते। अत्र च तदुदयमात्रव्यपेतविप्रलम्भा अपि नैशतिमिरनिकुर-म्बकैरिव मन्देहनामधेयैः राक्षसविशेषैः किञ्चित्परिक्लिश्यमानमालोक्य, भानुमन्तं न मुदमनुभवन्ति चक्रवाकयुवानः। अस्य चानेकजातीयरत्न-मयान्यपि तटानि बालमिहिरमयूखलेखारञ्जिततया पद्मरागमयान्येव प्रति-भान्ति, केवलं ज्वलता ज्वलनेनानुमीयन्ते स्फटिकानि। अपि चात्र विन-दत्केसरीकुलकोलाहलसमाकर्णनाकुलकुरङ्गकस्य, सन्निहितदिव्यसुन्दरीवद-नमण्डलसाक्षात्कारविहितया ह्रियेव मरकतमणिमयूखमालामयीं म्लानता-मनुप्रविष्टस्य, स्फटिकभूमिसञ्चरणकैतवेन सादृश्यतामिवोपगतस्य माणिक्य-मरीचिमालिकासु वीतिहोत्रहेतिसमूहेष्विव निर्भेदान्निरस्तदेहस्य, स्वनयन-

---

क्ष्यतामिति योजना। अत्युन्नततटान्निपतन्ती या चन्द्रिकापरामृष्टचन्द्रोपलेभ्यो निस्यन्दमाना **वारिसारिणी** वारिधारा तया परिपूर्यमाणा या केलिदीर्घिका, तस्यां परिप्लवमानाः (तरन्तः) सुरसुन्दरीसमाजस्य केलिमराला यस्मिन्;—**कर्णावतंसकमलस्य निमीलनेन** कुपितो यो विद्याधराणां मत्तकाशिनीजनस्तेन निक्षिप्तो यः स (कर्णावतंसः) तस्य समास्वादनेन तुन्दिलः पीनो **जैवातृकस्य** चन्द्रस्य कलङ्करूपः **कुरङ्गको** मृगो यस्मिन् स उदयगिरिः। **अत्र हि रजनीषु बालनलिनीवल्लभश्चन्द्रो लक्ष्यते इति सम्बन्धः।** ‘**अस्य मणिमयानि तटानि**’—इत्यस्य ‘**भासन्ते**’ इत्यनेनान्वयः। **अत्र च चक्रवाकयुवानः न मुदमनुभवन्तीत्यन्वयः। अस्य च तटानि पद्मरागमयान्येव प्रतिभान्तीति योजना। अपि चात्र सुधादीधितेः अभ्युदयकालीनानि कदर्थनानि**

लक्ष्मीस्तेयानुशयादिव देवानां क्रीडाचकोरकैर्विलुप्यमानचन्द्रिकाविभवस्य, विमुक्तचक्रवाकतरुणकरुणाकूजिताङ्कुरितकृपसिद्धाङ्गनाजनोदीरितनिन्दोक्ति-श्रवणविलक्षणस्य, दयितसङ्गमलज्जमाननवीनसुरसुन्दरीजननिक्षिप्यमाण-चूर्णमुष्टिलक्षान्धीकृतरथतुरङ्गमस्य सुधादीधितेर्विभाव्यन्तेऽभ्युदयकाली-नानि । अयञ्च सम्पादितलोकयात्राविशेषाणां, सकलविशुद्धिकारणानां, सकलतमोपहारकाणां, कोककुलहृदयानन्दजनकानां, विकसितारविन्दक-दम्बानां, दिवसानां, नदीप्रवाहाणामाद्यमुत्पत्तिस्थानम् । अथायमग्रतः श्वेत-कियज्ञाज्यधाराजनितसौहित्यातिशयालसतया संभूय वर्त्तमान इव कृपीट-योनिकूटः, अनन्तब्रह्माण्डनिर्माणपर्याप्त इव कलधौतस्तोमः, सन्ततसं-सृज्यमानजम्बूरसप्रभावादिव काञ्चनीभूतबाह्याभ्यन्तरमृत्तिकासमुदायः, समयप्रवाह इवानेकवर्षाश्रितो, रविरिव निर्विशेषलोष्टजातरूपः, सकला-श्रयाणामपि दिविषदामाश्रयः, सर्वनमस्यैरपि ग्रहगणैः प्रदक्षिणीक्रियमाणः, परीक्षादहनायमानप्रलयकालानलः, कषपाषाणायमानान्तरिक्षतलः, निवा-सकोषायमाणब्रह्माण्डमण्डलः, अनेकजगदण्डमय इव सृष्टिसंहाररूपाभ्यां प्रकाशान्धकाराभ्याममुच्यमानपरिसरः प्रत्यक्षीक्रियतां **काञ्चनाचलः** । अयञ्च प्रलयानलहेतिसंहतिदग्धो निपतित इवाकाशस्यैकदेशः, उत्पत्ति-भूमिरिव तिमिरलेखानामनन्तानां, कूट इव घनाघनानां, स्तोम इव तम-स्विनीनां, श्यामीकरणाञ्जनपुञ्ज इव दशानामपि दिशां, कलङ्कोष इवान-

---

विभाव्यन्ते इति-अन्वयः । 'सुरसुन्दरीभिः' इति प्रत्यासत्त्या लभ्यते । अयञ्च दिवसानां नदीप्रवाहाणाञ्च आद्यमुत्पत्तिस्थानम् इति योजना । अथा-यमग्रतः काञ्चनाचलः प्रत्यक्षीक्रियतामिति योजना । श्वेतकेर्नाम्नो नृपस्य यज्ञाज्यधारया जनितेन सौहित्यातिशयेन या अलसता तया **संभूय** सङ्घीभूय स्थित इव कृपीटयोनिकूटः=ज्वलनकूटः । **कलधौतस्तोमः**=सुवर्ण-पुञ्जः । **सन्ततं** संसृज्यमानो यो जम्बूरसो जम्बूफलरसस्तस्य प्रभावादिव **काञ्च-नीभूतो** बाह्याभ्यन्तरभूमिकायाः समुदायो यस्य सः । **वर्षो** संवत्सरो भूखण्डश्च । निर्विशेषाणि **लोष्टानि** लेष्टवो जातरूपाणि च यस्मिन्सः । **परीक्षार्थं** दहनाय-मानः प्रलयकालानलो यस्मिन्सः, सुवर्णाचलस्य अग्निवर्णत्वात् । अन्तरिक्षतलस्य नीलत्वात्कषपाषाणायमानत्वम् । **अयञ्च राजजम्बूपादपः आलोक्यताम्-इति सम्बन्धः** । **हेतिसंहतिः**=ज्वालासमूहः । **तमस्विनीनां** रात्रीणाम् । **दशाना-मपि** दिशां श्यामीकरणार्थम् अञ्जनस्य पुञ्ज इव=राशिरिव, परिपक्वजम्बूफलानां

न्तानां कुमुदबान्धवानां, घ्राणेन्द्रियविषयोपनिषन्निधानभूतैस्तरुणरतम्बेरम-कलेवरसन्निकाशैः स्वरससमास्वादनाभिमुखाखिलसुधापानकुलव्याख्याय-मानरसातिशयैः फलैरुपचीयमानो जम्बूद्वीपव्यपदेशनिमित्तमालोक्यतां राज-जम्बूपादपः। इयञ्चोत्तुङ्गस्थलनिपातभग्नानां जम्बूफलानामतिभूयसा रसेन प्रवहन्ती कस्तूरीपत्रभङ्गमकरिकेव दिश उदीच्याः, कर्णावतंसतालपल्लवा-वलीव काञ्चनाचललक्ष्म्याः, साजात्यनिबन्धनविन्ध्याचलाहङ्कारखण्डन-करवालवल्लरीव विभाव्यमाना, ज्वलितानलसंयोगिनीव धूमलेखा, प्रश-स्तिवर्णावलीवाचलेन्द्रस्य, शिखरपतयालुमन्दाकिनीस्पर्द्धया समुपागतेव कालिन्दी, तैजसतया सुवर्णस्य निगृह्य रुद्धा तद्भयादवाप्तद्रवभावेव तिमिर-वीथी, कादम्बिनीभ्रमविवर्द्धमानविरहपावकदह्यमानप्रोषितभर्तृकदिव्याङ्गना-जनाशास्यमानापचया विलोक्यतां **जम्बूसरित्**। अस्यैव शिरसि स्थूल-तरेन्द्रनीलमणिमांसलमयूखमञ्जरीमिषेण स्वसमुन्नतिप्रतिकूलतया ब्रह्मा-ण्डकटाहमपिधाय तदुपर्यपि गगनान्तरमिव निर्मातुमीहमानैः, स्फटिकोप-लाभ्यन्तरप्रतिबिम्बिततया तिरस्कृतोत्तुङ्गभावमम्बरमिवाधोविदधानैः, मर-

---

श्यामत्वात्। **कुमुदबान्धवानां** चन्द्राणाम्। **स्वरसस्य** रसस्य समास्वादने अभिमुखानि अखिलानि यानि सुधापानकुलानि देवकुलानि तैः व्याख्यायमानो रसातिशयो येषान्तानि तैः फलैः **उपचीयमानः** परिपूर्णः। **व्यपदेशो** व्यवहारः। **इयञ्च जम्बूसरित् विलोक्यताम्**—इति योजना। उत्तुङ्गस्थलात् जम्बूपाद-पाग्रात् निपातेन भग्नानां जम्बूफलानामतिभूयसा रसेन प्रवहन्ती,—कस्तूर्याः पत्राकार-रचनया या मकरिका (तिलकविशेषः) सा इव उत्तरस्या दिशः '**जम्बूसरित्**' इत्यने-नाऽन्वयः। **साजात्यनिबन्धनः**=पर्वतत्वसादृश्यमूलको यो विन्ध्याचलस्याहङ्कारः 'सुमेरुःपर्वतः—अहमपि पर्वतः'इत्याकारकः काशीखण्डप्रसिद्धः—तस्य खण्डनार्थं करवालवल्लरीव खड्गवल्लरीव सम्भाव्यमाना;—**शिखरात्पतयालुः** पतनशीला या मन्दाकिनी तस्याः स्पर्द्धया समुपागता प्राप्ता यमुनेव;—**सुवर्णस्य** तेजोविकारतया प्रतापशालित्वेन च निगृह्य रुद्धा, तद्भयात्=तेजोभयादवाप्तो द्रवभावो यया तादृशी तिमिरवीथीव;- **कादम्बिनी** मेघमाला तस्या भ्रमेण विवर्धमानेन विरहपावकेन द-ह्यमानैः प्रोषितभर्तृक दिव्याङ्गनाजनैः आशास्यमानोऽपचयो यस्यास्तादृशी जम्बूसरित् विलोक्यताम्। **अस्यैव प्रकृतस्य काञ्चनाचलस्य शिरसि ( उपरिभागे ) गृहगणैरुद्भासमाना अमरावती विभाति-इत्यन्वयः।** **अपिधाय** छादयित्वा,

कृतमरीचिमालिकानां तिर्यक्प्रसारेण स्वपरिणाहपर्याप्तं हरिदन्तरमिव जनयितुमिच्छद्भिः, स्वीकृतपरस्पराश्रयैरिव मिथः प्रतिबिम्बितैः, अवगणितात्माश्रयैरिव कपोतपालिकासमाश्रितकपोतपालिकामुखरैः, कार्यतया त्वष्टृतादात्म्यापन्नैरिव विटङ्कशालिभिः, स्फटिकमयैर्मुक्तात्मभिरिव स्वच्छभावादावरणशक्तिहीनैः, विद्वद्भिरिवानेकविद्याधरैः, कलापैरिवाभ्युपगतहाहापदक्रियैः, असुरैरिवादित्यसुन्दरैः, सुखैरिव विश्वरमणीयैः, तेजोभिरिव सदा भास्वरैः, तार्किकैरिव लब्धसाध्यविचारैः, लुब्धैरिवान्तर्धृतानेकवसुभिः, नित्यद्रव्यैरिव तुषिताधरैः, जीवच्छरीरैरिवान्तर्धृतमरुद्भिर्गृहगणैरुद्भासमाना विभात्यमरावती। इतश्चायं पुराणपुरुषयोर्नरनारायणयोर्निवासस्थानं **गन्धमादनगिरिः**। अस्य ह्यद्यापि प्रतिनिशं दीप्यमानाभिर्महौषधिभिः प्रयुद्धप्रह्लादनिर्मुक्तशिलीमुखसङ्घमुखसङ्घट्टनोल्लिखितपुराणपुरुषविशेषोद्भ्रान्तपावकशिखोज्ज्वलमिव वपुरुपलक्ष्यते । इहैव मारुतोपनीतसौगन्धिककुसुमानुबन्धचञ्चलीकृतपा-

---

**परिणाहो** विशालता, **हरिदन्तरम्** दिगन्तरम्। अवगणित आत्माश्रयो यैस्तैरिव कपोतपालिकाश्रयत्वमेव आत्माश्रयत्वम्,–परिहारस्तु पूर्वत्र **कपोलपालिका** विटङ्कम्, उत्तरत्र कपोतान्पालयतीति कपोतपालिका। विशिष्टः टङ्कः ग्रावदारणः=पाषाणदारणस्त्वष्टृपक्षे, गृहपक्षे—"कपोतपालिकायां तु विटङ्कं पुंनपुंसम्" इत्यमरप्रसिद्धम् । मुक्तात्मनामावरणशक्तिहीनत्वं, स्वच्छतया स्फटिकभवनानां च। **विद्यानां धरा** विद्वत्पक्षे, देवयोनिविशेषा गृहणपक्षे । कलापव्याकरणपक्षे हाहा–शब्दः, अन्यत्र हाहा गन्धर्वः । असुरा अदित्यै देवमात्रे असुन्दराः, गृहगणास्तु आदित्यैः देवैः सुन्दराः । **तार्किका** लब्धः साध्यस्य वह्न्यादेर्विचारः परामर्शो यैस्तादृशाः, लब्धः साध्यो गणदेवानां विशिष्टश्चारो येषु तादृशाः। **वसुर्धनं** गणदेवाश्च । नित्यद्रव्याणि परमाण्वादीनि तुषितं तुच्छीकृतम् अधरमात्मनः परं यैस्ते तादृशानि, तुषितान् गणदेवान् आसमन्ताद् धरन्ति तादृशाः । **मरुत्प्राणवायुर्देवाश्च** । **इतश्चायं गन्धमादनगिरिः–इति सम्बन्धः** । गन्धमादनपर्वतौ द्वौ, बदरीनारायणनिवासस्थानम्, किम्पुरुषभद्राश्ववर्षयोः सीमापर्वतश्च । **अद्याप्यस्य वपुरुपलक्ष्यते-इति योजना** । कथमिवेत्याकाङ्क्षायामाह–प्रतिनिशमित्यादि । प्रयुद्धे प्रह्लादेन निर्मुक्ता ये शिलीमुखानां सङ्घास्तेषां मुखानामग्राणां संघट्टनेनोल्लिखितः पुराणपुरुषेण विशेषेण उद्भ्रान्तो यः पावकस्तस्य शिखया उज्ज्वलमिव वपुः उपलक्ष्यते। **इहैव वृकोदरो यक्षाणां लक्षं क्षणादक्षपयत्–इति सम्बन्धः** । मारुतेनोपनीतानां

ञ्चालीवचनानुरोधेन राजराजविहारवापिकायां वृकोदरो युद्धबद्धलक्षं यक्षाणां लक्षं तत्क्षणादक्षपयत्। इत उत्तरश्च दिवसं शर्वरीनिर्विशेषतया समुल्लासमानैरपूर्वैरिव चन्द्रिकाप्रतानैः प्रतिक्षणभिन्नानां सुधांशुबिम्बानां कोश इव विधात्रा निर्मितः, प्रलयानलहेतिकथनाद् घनभावापन्न इव क्षारोदकूटः, आदर्श इव निखिलब्रह्माण्डश्रीणाम्, अद्वैतमिव श्वेततायाः, जन्मभूमिरिव स्वच्छतायाः, अभ्युदञ्चताञ्च दशवदनबाहुदण्डोत्पीडनोच्छ्वसितमूलदेशनिर्व्यथनान्तरालनिर्गतानामिव शेषफणामण्डलरत्नस्तोमानामभ्रंलिहानां मयूखपरम्पराणां मिषेण मन्दाकिनीसहस्रमिव गगनतलाभिमुखमुदञ्चयन्, हीयमानचन्द्रकं कुमुदबान्धवं कौमुदीसहस्रैरिव समापूरयन्, शीतनिदाघदीधितिकरप्रसारविषयमप्यतिक्रम्य वर्तमानमुपरितनं तमःसङ्घातमिव भेत्तुमुद्यच्छमानः,भगवतो भीमस्यायं मूर्तिविशेष इति प्रेम्णा गगनतलमिव लिहानः, सन्ततहरधारणजन्मनातिशयेनेव प्राप्ततत्सारूप्यः, कन्द इव चन्द्रलोकस्य, उपादानमिव श्वेतद्वीपस्य, मूलमिव मन्दाकिन्याः, प्रवाहाविच्छेद इव क्षीराकूपारस्य, तारुण्यमिव चन्द्रिकाणां, सङ्घात इव घनसाराणां, शशिशेखरानादरणजन्यनिर्वेदतत्सेवार्थं पुञ्जीभूत इव कुन्दकेतकीकुसुमानां कूटः, मदनमथनमौलिमण्डनचन्द्रलेखाप्रणयेन राशीभूत इव कुमुदसमुदायः, हरवृषभपरितोषाय सर्वदा कृतसन्निधान इव शरदम्बुस्तोमः, भवानीप्रणयेन नित्यसन्निहित इव हिमशैलः, अतिचिरप्रोषितबन्धुवर्गावेक्षणायेवाभ्यागतः शेषभुजगः, अतिचिरनिरवकाशतया वेगवशेन भूमितलमुद्भिद्य निर्गत

---

सौगन्धिककुसुमानाम् अनुबन्धेन चञ्चलीकृतायाः पाञ्चाल्या वचनस्यानुरोधेन। 'राजराजो धनाऽधिपः' इत्यमरः। **वृकोदरो** भीमः। **इत उत्तरश्च अयं कैलासः प्रेक्ष्यतामिति योजना। शर्वरीनिर्विशेषतया**=रात्रिवत्। **कथनात्** परिपाकात्। **दशवदनस्य** बाहुदण्डोत्पीडनेन उच्छ्वसितात् मूलदेशस्य निर्व्यथनस्य रन्ध्रस्य अन्तरालात् मध्यात् निर्गतानामिव **उदञ्चताम्** उपरिगच्छतां शेषफणामण्डलरत्नस्तोमानां सम्बन्धिनाम् **अभ्रंलिहानाम्** आकाशस्पृशां किरणपरम्पराणां छलेन **मन्दाकिनीसहस्रमिव** आकाशाभिमुखं **उदञ्चयन्**=ऊर्ध्वं कर्षन्। **भीमस्य** शिवस्य 'भवो भीम' इत्यमरः। अयमाकाशः। **तत्सारूप्यः** शिवसारूप्यः, पर्वतस्य स्फटिकमयत्वात् शिवस्य रजतगिरिनिभत्वात्। **प्रवाहाविच्छेद इव**=पिण्डीभूतत्वमिव। **घनसारः** कर्पूरः। **कूटः** समूहः। **स्तोमः** समूहः। **बन्धु**-

इव पातालरत्नकान्तिसमुदायः, प्रतिबिम्बदर्शनोत्पन्नप्रतिवृषविभ्रमहर-वृषभविषाणकोटिघट्टनोल्लिखितशिखरः, अतिभक्तिवशात्प्रतिमाच्छलेनान्तर्गतत्रिपुरहरदेह इवाऽऽलक्ष्यमाणः प्रेक्ष्यतामयं **कैलासः** । अत्र हि हैमवतीप्रतियातनासु उत्सङ्गगृहीतद्वैमातुरतारकान्तकान्तरासु स्वेतरग्रहणकोपाविलहृदयौ साक्षाद्द्वैमातुरषाण्मातुरौ मातरं तत्परित्यागार्थमायासयन्तौ, तया स्वाङ्कादवतार्यमाणौ स्वसदृशान्तरपरित्यागतुष्टावपि पुनरपि स्वाङ्काधिरोहणाय मातरं कदर्थयमानौ भगवन्तमन्धकविध्वंसनं मुहुर्मुहुरुपहासयतः । इहाऽन्योन्यकलेवरैक्यादपि अपर्याप्तपरितोषावपि गौरीमहेश्वरावनुबिम्बकैतवेन सहस्रधा भवतः । इहैव दानजलपातविततप्रावृट्समारम्भसमाकर्ण्यमानहेरम्बबृंहितविहितगर्जितभ्रमः कुमारमयूरो न कदाचिदपि नृत्योत्सवाद्विरमति । अत्र चाविभाव्यमानदिवसरजनीविभागे प्रहरावसानं बोधयन्ति कूजन्तः कौमाराः क्रीडाकुक्कवाकवः । अत्र च प्रणामार्थिषु महेन्द्रादिवृन्दारकेषु परमार्थालीकहराविवेकमुग्धहृदयेषु साकूतमुपहसन्ति हैमवतीसह-

---

वर्गा वासुकिप्रभृतयः । **प्रतिबिम्बदर्शनेन** उत्पन्नो यः प्रतिवृषभविषयको विभ्रमो यस्य तादृशो यो **हरवृषभो** नन्दिकेश्वरस्तस्य विषाणकोट्याः घट्टनेन संघर्षणेन उल्लिखितानि शिखराणि यस्य सः । अत्र हि ( कैलासे ) **द्वैमातुरषाण्मातुरौ भगवन्तमन्धकविध्वंसनं मुहुर्मुहुरुपहासयतः**—इत्यन्वयः । उत्सङ्गे गृहीतौ द्वैमातुरतारकान्तकान्तारौ यासु तासु, हिमवति भवा हैमवत्यस्ताश्च **प्रतियातनाः** प्रतिमाः=( हिमवति संक्रान्ताः प्रतिबिम्बाः ) तासु, स्वाभ्यामितरौ यौ प्रतिबिम्बौ तयोर्ग्रहणेन यः कोपस्तेन आविलहृदयौ कलुषितहृदयौ प्रत्यक्षभूतौ गणेशकुमारौ **मातरं** पार्वतीं प्रतिबिम्बपरित्यागार्थं खेदयन्तौ **तया** पार्वत्या स्वोत्सङ्गादवरोह्यमाणौ स्वसदृशान्तरयोः स्वप्रतिबिम्बयोः परित्यागेन तुष्टौ सन्तावपि पुनरपि स्वोत्सङ्गाधिरोहणाय पार्वतीं क्लेशयन्तौ भगवन्तमित्यादिनाऽन्वयः । **इह गौरीमहेश्वरौ सहस्रधा भवतः**—इति योजना । **अन्योऽन्यकलेवरैक्यम्** अर्धनारीनरेश्वरत्वेन । **इहैव दानजलपातेन** मदजलपातेन विततो यः प्रावृट्समारम्भस्तस्मिन् समाकर्ण्यमानं यद् हेरम्बबृंहितं=करिगर्जितं, तेन विहितो गर्जितभ्रमो यस्य तादृशः **कुमारमयूरः** कदाचिदपि नृत्योत्सवान्न विरमति । वर्षाकाले मेघगर्जनसमये मयूराणां नृत्योत्सवस्य प्रसिद्धत्वात् । अविभाव्यमानो यो दिवसरजन्योर्विभागस्तस्मिन् । परमार्थश्च अली-

चर्यः। अत्राधिरजनि बहुशः समुदितेषु कुमुद्वतीप्रियतमस्य प्रतिबिम्बेषु रूपसाम्यादविभाव्यभावमनुभवत्सु, तत्रत्यकलङ्ककुरङ्गकानुदिश्य कात्यायनीकेसरिणा प्रहितेषु प्रतलप्रहारेषु विफलतामाकलयत्सु विहसन्ति प्रमथयूथनाथाः। अस्यैव पाददेशेऽमन्दोदकमपि **मन्दोदकं** नाम सरः प्रस्फुरति। यतो मन्दविनिद्रमन्दारमकरन्दतुन्दिलीभवदिन्दिन्दिरवृन्दोपगीयमानगुणा, एकदन्तवदनसमुदयन्मदबिन्दुचन्द्रकसन्दोहसुन्दरी स्पन्दते **मन्दाकिनी** सरित्। इतश्च प्रागुत्तरस्यां दिशि शब्दसमूह इव धातुमयो, दिव्यौषधिदीपिकासहस्रपुनरुक्ततारागणो, मणिभद्राभिधानयक्षसेनान्यधिष्ठितो, विविधरत्नकान्तिमन्दीकृतचन्द्रप्रभो गिरिश्चन्द्रप्रभनामधेयो दृश्यते। यतो विहारव्यासक्तसिद्धसुन्दरीपयोधरद्विगुणितहेमारविन्दमुकुलमनुगतार्थकमच्छोदकं नाम सरः समस्ति। ततः प्रभवति हरिचन्दनविटपाधिरूढरणद्दिव्यपत्रथेन चैत्ररथेनोपवनेन परिष्कृततीरा सरिद्**च्छोदका**। कैलासाच्च दक्षिणपूर्वस्यां दिशां लावण्यपङ्क इव मनःशिलाप्रायो, मणिवराभिधेन यक्षपतिनाऽध्युषितः, शिखावलग्नबलाहकतया धूमकलुष इव जाज्वल्यमानो जातवेदा जागर्त्ति **लोहिताख्यो** महाशैलः। यत्र काञ्चनकमले समाहारसमानाभिहारतिरोहितप्रियतमाननावेक्षणमोहितदिव्यतरुणं **लोहितसंज्ञं**

---

कश्च यो हरस्तयोर्विवेके मुग्धहृदयेषु वृन्दारकेषु हैमवतीसहचर्यः साभिप्रायमुपहसन्ति। **अत्र प्रमथयूथनाथा विहसन्ति—इति योजना। पाददेशे**=प्रत्यन्तपर्वतसमीपे **मन्दोदकं नाम सरः प्रस्फुरति—इति योजना। यतः**=मन्दोदकसरसः मन्दमीषत् विनिद्राणि यानि मन्दाराणि=तत् कुसुमानि तेषां मकरन्देन तुन्दिलीभवन्ति यानि इन्दिन्दिरवृन्दानि भ्रमरसमूहास्तैरुपगीयमानगुणा, एकदन्तस्य वदनात् समुदयन्तो=समुद्यन्तो ये मदबिन्दवस्तेषां चन्द्रकसन्दोहैः सुन्दरी रमणीया **मन्दाकिनी सरित् वहति। इतश्चायं प्रागुत्तरस्यां दिशि (ईशान्यां) चन्द्रप्रभनामगिरिर्दृश्यते—इति योजना। यतः**=यस्मिन् **अच्छोदकं नाम सरः समस्ति। विहारव्यासक्तानां** सिद्धसुन्दरीणां पयोधरैः द्विगुणितानि हेमारविन्दमुकुलानि यस्मिन् तत्। **ततः**=अच्छोदकसरसः **अच्छोदका सरित् प्रभवति। कैलासाच्च दक्षिणपूर्वस्याम् (आग्नेय्यां) दिशि लोहिताख्यो महाशैलः जागर्ति। यत्र च**=लोहितशैले **लोहितसंज्ञं सरः**

सरः । यतः प्रसरति दिव्याङ्गनाचरणप्रहरणविकसदशोकालङ्कृतेन विशोक-नाम्ना देवोद्यानेन प्रसाधितपरिसरस्तीरकुञ्जसम्पत्तिकृतगुह्यकाभिसारिकानथनसौहित्यविशेषो **लौहित्यनामा** नदः। तत एव पश्चिमोत्तरस्यां तीव्र-हेतिना प्रहेतिसुतेन ब्रह्मधामनाम्ना नरवाहनानुजीविना यक्षाधिपेनाध्यास्यमानः सञ्चरत्सिद्धसुन्दरीजननिह्नुतवैद्युतविलासो **वैद्युतो** नामाचलः । यत्र स्फटिकोपलच्छेदसुन्दरसलिलं मूर्त्तिमदिव यशो यौवनाश्वस्य सिद्धसञ्चा-रयोग्यं रामणीयकहृतमानसं सरो **मानसा**भिधानं विद्यते। यतः समुद्भवति शरवणोद्भवा स्वसेव स्कन्दस्य, भगवतोऽरुन्धतीहृदयदयितस्य तपोनिर्यासभूता, कल्पवल्ली निकुञ्जान्तरालनिलीनविद्याधरीसमाजेन वैभ्राजेन वनेन विभ्राजितोपान्तभागा सरित् **सरयूः** । तत एव पश्चिमतो नीललोहितललाटतट-ज्वलदनलकीलाकलापैरिवान्तरिक्षमाच्छादयद्भिर्जातरूपस्वरूपैस्सानुभिरने-कसंख्यैर्दीप्यमानस्तरुणादित्यरुचिर**रुणा**भिधो धराधरः । यस्मादुन्मिषति शशिशेखरवृषभवृषाणघर्षणोल्लिखिततीरमनाविलोदकं **शिलोदन्ना**म सरः। यतः स्फुरति रतिरमणमदमत्तत्रिदिव वरवर्णिनीकुचशैललुलितोदका **शैलो-दकीति** विदिता द्वीपवती । अथायमुत्तरेण कैलासं यौवनालसविबुधविला-सिनीश्रवणावतंसकेतकीकिसलयद्वयान्तरालवृत्तिवदनविडम्बमानविधुन्तुददं-

---

अस्ति । यतः = लोहितसरसः लौहित्यनामा नदः निस्सरति । ततः (लौहित्यनदात्) पश्चिमोत्तरस्यां वैद्युतो नामाचलोऽस्ति । यत्र (वैद्युताऽचले) मानसाभिधानं सरो विद्यते । यौवनाश्वस्य=मान्धातुः । यतः मानसरसः सरयूः सरित् समुद्भवति—इति योजना । तत एव (वैद्युताचलात् एव) पश्चिमतः अरुणाऽभिधो धराधरः—अस्ति । यस्मादरुणपर्वतात् शिलोदं नाम सरः उन्मिषति । यतः (शिलोदसरसः) शैलोदकीति विदिता द्वीपवती (नदी) स्फुरति—इति योजना । अथ (प्रकरणान्तरे) कैलासमुत्तरेण (कैलासपर्वतस्य उत्तरस्यां दिशि अदूरे इत्यर्थः) शिवसञ्ज्ञो गिरिः—अस्ति, यत्र च विन्दुसरश्चकास्ति—इत्यावेदयत्येव मातलौ देवमार्गमपहाय तपोवनपरिसरं परिष्कृतवन्तः (हरिहयस्य हरयः)—इति सम्बन्धः । शिवसञ्ज्ञकं गिरिं विशिनष्टि—यौवनेन अलसानां विबुधविलासिनीनां श्रवणावतंसभूतानां केतकीकिसलयद्वयस्य

ष्ट्रोदरविद्यमानसुधादीधितिमण्डलाऽऽपिशङ्गभावं मेचकताञ्च समाचरद्भिर्बहुभिर्धाररूपैर्द्रुमात्मकैश्च तालैरलङ्कृतः, नृसिंहग्रसनरभसाधिगतशरभभावभवाभेदभावादिवाष्टापदमयाशेषशिखरः, विहरदमरवरवर्णिनीरतिरभसभग्नहारावलीगलितातिस्थूलमुक्ताकलापैर्बलाहकानामप्यविषयेषु प्रदेशेषु प्रसञ्जितवर्षोपलनिपातव्यक्तिकरः, मरकतमणितटीपरिणतदन्तावलदन्तमुशलानुषङ्गेण मुहूर्तमम्बरतलनिपतन्मन्दाकिनीप्रवाहसहस्र इव संभाव्यमानः, अभिनवोल्लसितदूर्वापल्लवविभ्रमाविलीभवत्सहस्रकिरणवाहलिह्यमानहरिन्मणिमयूखाङ्कुरः,मध्यतुच्छाधोभागतया परिपूर्णोपरितनावयवया च किरणरज्जुपरिगृहीतकेशवशिशुकेलिकृष्यमाणमधोमुखमुलूखलमिव मृगाङ्कमण्डलं दधानः,नितम्बनिषण्णसिद्धजनदृश्यमानक्षरज्जलधरसहस्रधारकलशविलासः **शिवसंज्ञो** गिरिः। यत्र मन्दारकुसुमपरिमलोद्गारचारुतरमारुतरयं विधूयमानतरङ्गोदितबिन्दुसरसं **विन्दुसरश्चकास्ति**"—इत्यावेदयत्येव मातलौ

---

अन्तरालवृत्तिर्यद्वदनं तद्विडम्बमाना या विधुन्तुदस्य राहोः दंष्ट्रास्तासामुदरे विद्यमानं यत्सुधादीधितिमण्डलं तद्वत्—आ—ईषत् पिशङ्गभावं पीतभावं **मेचकतां** श्यामतां च समाचरद्भिः बहुभिः धातुमयैर्वृक्षरूपैश्च तालैः हरितालैस्तृणद्रुमैश्चालङ्कृतः,– **नृसिंहस्य** ग्रसनार्थं रभसेन वेगेन अधिगतशरभभावस्य भवस्य = शिवस्य अभेदभावादिव **अष्टापदमयानि** = सुवर्णमयानि मृगमयानि अशेषाणि शिखराणि यस्य—( नृसिंहग्रसनार्थं भगवता शिवेन शरभरूपं धृतमिति कथा शिवपुराणे ),—**विहरन्त्यो** या अमरवरवर्णिन्यस्तासां रतिरभसेन भग्ना या हारावल्यस्ताभ्यो गलितानि अतिस्थूलमुक्ताकलापानि तैः **प्रसञ्जितः** वर्षोपलानां करकाणां निपातस्य व्यतिकरः समूहो येन,—कुत्र इत्याकाङ्क्षायामाह—बलाहकानामित्यादि। **मरकतमणितटीषु** परिणतास्तिर्यग्दन्तप्रहारिणो ये दन्तावला गजास्तेषां दन्तरूपाणां मुशलानां अनुषङ्गेण ...संभाव्यमानः,—**अभिनवमुल्लसितानां** दूर्वापल्लवानां विभ्रमेण = भ्रान्त्या आविलीभवद्भिः = व्याकुलीभवद्भिः सहस्रकिरणस्य वाहैर्लिह्यमाना हरिन्मणिमयूखाङ्कुरा यस्मिन्,—मध्ये तुच्छोऽधोभागो यस्य तस्य भावस्तया, परिपूर्णा उपरितना ऊर्ध्वस्था अवयवास्तेषां भावस्तया च किरणरज्जुभिः परिगृहीतं, **केशवेन** शिशुकेल्यां कृष्यमाणमधोमुखमुलूखलमिव चन्द्रबिम्बं दधानः,—नितम्बे निषण्णा ये सिद्धजनास्तैर्दृश्यमानः क्षरन् यो जलधरः तद्रूपस्य सहस्रधारकलशस्य विलासो यस्मिन्—सः शिवसंज्ञो गिरिः। मन्दारकुसुमानां परिमलोद्गारेण चारुतरो मारुतस्य रमणे विधू·

वातलौल्यमदलुण्ठनजङ्घालरयोद्धुरा हरिहयस्य हरयो मुहूर्तादेव देवमार्गमपहाय तपोवनपरिसरं परिष्कृतवन्तः ॥ ७२ ॥

राजा तु ससंभ्रमं मातलिमात्रसद्वितीयं निर्माय स्यन्दनमत्यद्भुतानन्दकन्दलदन्तुरान्तःकरणः पद्भ्यामेव परिक्रामन् पवनमिवाऽऽविभूर्तजवं, वृद्धमिव प्रवृद्धश्वसनं, गोकुलमिव लाङ्गलिकृष्णोपशोभितं, नगरमिव दृश्यगणिकं, तापसमिव दृश्यमानधमनीकं, दुर्जनमिव दृश्यबहुग्रन्थिकं, नन्दनमिव सदेन्द्राणीसहितं, चैत्ररथमिव कुबेराक्ष्यवेक्षणीयं, दण्डकारण्यमिव वैदेहीवासयोग्यं, वेत्रकीयमिवान्तर्गतबकं, हस्तिनापुरमिवोल्लसदर्जुनं, काम्यकमिव धृतपलाशकिर्मीरं, सज्जनमिव स्वसिद्धसरलम्, आस्तिकमिव धृतजातिभावं, विराटनगरमिव समुदितकीचकं, क्वचिन्मुनिमठमिव व्याघ्रपात्कौशिकोद्दालक-व्याघ्र-राम-हारीत-कपिञ्जल-भारद्वाज-शुक-शाण्डिल्यशोभितं, क्वचिद्राज-

---

यमाना ये तरङ्गास्तेभ्य उदितैः बिन्दुभिः सरसं बिन्दुसरः । वातस्यान्तरिक्षचरस्य यो लौल्यमदस्तस्य लुण्ठने जङ्घालरयेणोद्धुरा हरिहयस्य=इन्द्रस्य हरयोऽश्वाः मुहूर्तादेव क्षणादेव सुरवर्त्म त्यक्त्वा तपोवनसमीपं शोभितवन्तः= गगनादुत्तेरुरित्यर्थः ॥ ७२ ॥

राजा तु तपोवनं प्राविशदिति—योजना । सद्वितीयं ससहायम्—अत्यद्भुतानन्दकन्दलेन दन्तुरप्रफुल्लमन्तःकरणं यस्य तादृशम् । जवो वेगः । प्रवृद्धः श्वसनः श्वासो यस्य । लाङ्गली नालिकेरो बलभद्रश्च, कृष्णो वासुदेवः । कृष्णा पिप्पली, गणिका वेश्या, यूथिका च । धमनी शिरा, अर्जुनकेशी च । बहुग्रन्थिः बहुकपटः, वचा च । इन्द्राणी शची, इन्द्रवारुणी च । कुबेरस्य अक्षिभ्यामीक्षणीयमेकत्र, कुबेराक्षी कृष्णवृन्ता ईक्षणीया यस्मिन्नन्यत्र । वैदेही सीता, पिप्पली च । वेत्रकीयम् केदारपुष्पकरण्डकम्, बको बकासुरो भीमवध्यः, पुष्पं च । अर्जुनः पार्थो वृक्षश्च । काम्यकं वनम्, पाण्डवानां वनवास—सम्बन्धि, पलाशो मांसाशी, किर्मीरो राक्षसो यस्मिन् वनपक्षे; पलाशाः किंशुकाः, किर्मीरा नागरङ्गा यस्मिन् तपोवनपक्षे । सज्जनः सरलस्वभावः, आश्रमे सरला देवदारुभेदाः । जातिः सामान्यं, पुष्पं च । कीचको राक्षसः, सस्वनवंशश्च । मुनिमठपक्षे व्याघ्रपात् प्रभृतयः सर्वे मुनयः । अन्यत्र व्याघ्रपात् विकङ्कतवृक्षः, कौशिको गुग्गुलुः, उद्दालो बहुपत्रकः, व्याघ्रः प्रसिद्धः, रामो मृगभेदः, 'गन्धर्वः शरभो रामः' इत्यमरः; हारीतः पक्षी, कपिञ्जलः पक्षिविशेषः, भारद्वाजो दार्वाघाटः, शुकः प्रसिद्धः, शाण्डिल्यो वह्निर्मालूरश्च ( बिल्वः ) । धार्तराष्ट्रादयश्चत्वारो राजानः,

मयमिव धार्त्तराष्ट्र-शशाद-शल्यक-शिखण्डि-मण्डितं, क्वचिद्दानवमयमिव वृष-पर्व-बलि-महिष-बल-कालनेमि-मधु-जम्भ-शम्बर-सिंहिकासुतोद्भासुरं, क्वचिद्वृत्तमयमिव मालती-मत्तमयूर-कुररीरुतैरुररीकृतं, क्वचिद्राघवसैन्यमिव गवय-पनस-सुषेणकृतसुषमं, क्वचिदुरगपुरमिवानन्त-कर्कोटक-तक्षकैला-पत्रैरावत-पद्मकृतसद्मकम्, सज्जधात्रीकं प्रसूतिगृहमिव धर्मस्य, शैलूषगृहीतभूमिकं नाट्यरङ्गमिव सद्वृत्तानां, समवेतधवं लीलालयमिव त्रयीवध्वाः, समवेतानेकवरं स्वयंवराङ्गणमिव पतिंवरायाः, प्रकाशितक्रकचपत्रं सर्वावयवपाटनस्थलमिव कलेः, सज्जितशतप्रासं भेदास्पदमिवाधर्मस्य, दृश्यकिंशुक-

---

अन्यत्र **धार्तराष्ट्रा** हंसविशेषाः, ('धार्तराष्ट्राः सितेतरैः' इत्यमरः) **शशादः** श्येनः, **शल्यकः** श्वावित् मदनवृक्षश्च, **शिखण्डी** मयूरः। **वृषपर्वप्रभृतयोऽसुराः**, अन्यत्र **वृषपर्वाणि** कर्कटश्रृङ्गीपर्वाणि, **बलिः** सपर्यातर्पणादीनि, **महिषः** प्रसिद्धः, **बलः** काकः, **कालनेमिः** कालतिनिशः, **मधुर्यष्टिमधुः**, **जम्भो** जम्बीरः, **शम्बरो** मृगभेदः, **सिंहिका** वासा कण्टकारिका च,—एतेषां सुतैः वत्सैरङ्कुरैश्च उद्भासुरं शोभितम्। **मालतीप्रभृतयो** वृत्तानि तेषां रुतैरुच्चारणध्वनिभिः। आश्रमपक्षे **मालती** लता, मत्तश्चासौ मयूरः, **कुररी** उत्क्रोशी पक्षिणी। **गवयादयो** वानरभेदाः सैन्यपतयः, आश्रमपक्षे गोसदृशो मृगो **गवयः** सास्नाहीनः, **पनसः** कण्टकिफलम्, **सुषेणः** करमर्दः 'सुषेणः करमर्दे स्यात् विष्णुसुग्रीववैद्ययोः' इति मेदिनी। **उरगपुरं** नागलोकः, **अनन्तादयो** नागभेदाः, उभयत्र समानम् 'वेश्मसद्मनिकेतनम्' इत्यमरः। **सज्जा** सन्नद्धा धात्री=उपमाता यस्मिन्—अत एव (साक्षात्) धर्मस्य प्रसूतिगृहमिव, तपोवनपक्षे **धात्री** आमलकी;—**शैलूषैर्नटैर्गृहीता** भूमिः वेषान्तरं यस्मिन् अतएव सद्वृत्तानां सच्चरित्राणां नाट्यरङ्गमिव, तपोवनपक्षे शैलूषो बिल्वः, 'शैलूषो नटबिल्वयोः' इति मेदिनी; **समवेताः** सङ्गीभूता धवास्तरवःप्रियाः दक्षिणागार्हपत्याहवनीयाश्च यस्मिन् अतएव त्रयीरूपा या वधूस्तस्याः लीलाया आलयमिव,—समवेतान्यनेकानि वराणि कुङ्कुमानि यस्मिन्नत एव समवेता अनेके वरा वरणीया यस्मिन् तादृशं, पतिंवरायाः स्वयंवरस्य अङ्गणमिव,—**प्रकाशितानि** क्रकचानां ग्रन्थिलतरूणां पत्राणि यस्मिन् अत एव कलेः चतुर्थयुगस्य सर्वावयवानां पाटनस्य विदारणस्य स्थलं स्थानमिव, क्रकचपत्राणां दारुविदारणशस्त्राणां प्रकाशितत्वात्,—**सज्जिताः** शतप्रासाः करवीराः त एव शतशः प्रासाः कुन्ता यस्मिन्—अतएव अधर्मस्य भेदस्य विदारणस्य आस्पदमिव=स्थानमिव,—**दृश्याः** किंशुकमुकुलरूपा अर्धचन्द्राः=खण्डचन्द्राश्चपेटाश्च—अत एव

मुकुलार्धचन्द्रनिर्वासनावासमिव दुर्वासनानां, समुदितकूष्माण्डमावेशदेश-मिव दुश्चरितानां, सम्पन्नचम्पककोरकप्रकरं तप्ताङ्गारशयनमिव दुःखानां, प्रसृत्वरकेतकपरागमान्ध्यपदमिव कुदृष्टीनां, विकासि-कुरबकं भर्त्सनकेतन-मिव कुसृतीनां, दृश्ययज्ञप्रस्तरं पेषणाश्रयमिव द्वेषस्य, अदभ्रकुशं तक्षणवेश्मेव कश्मलभावस्य, कूजत्परशुकं विदारणमन्दिरमिव दारुणतायाः, गृहीतार्त-गलश्वासमवरोधमिव व्यसनानां, विततजालकं बन्धनस्थानमिव दुःस्थितीनां, समुच्चितश्येनमभिचारमिव दुराचाराणां, समुषितक्षारकं भर्जनस्थानमिव दुर्जनतायाः,बहुसूनं वधसदनमिव मदनस्य,प्रसारितालीकं वञ्चनाधिकरणमिव

---

दुष्टाश्च ता वासनास्तासां निर्वासनस्य आवासमिव, समुदिताः कूष्माण्डाः कर्कारवो यस्मिन्–अत एव दुश्चरितानां दुर्वृत्तानामावेशस्य आरुध्य वेशनस्य (निग्रहस्येत्यर्थः) देशं प्रदेशमिव, निग्रहस्थानं दुश्चरितानामित्यर्थः;—सम्पन्नाश्चम्पककोरकाणां प्रकराः समूहा यस्मिन्–अतएव दुःखानां तप्ताङ्गाराणां शयनमिव = मञ्चमिव, प्रसृत्वराः प्रसरणशीलाः केतकानां परागा यस्मिन्–अत एव कुदृष्टीनामान्ध्यपद-मिव,—विकासिनः कुरवका रक्तकुरण्टका यस्मिन्नत एव कुसृतीनां शाठ्यानां भर्त्सनस्य केतनमिव=रक्तध्वजमिव,(रक्तध्वजस्य युद्धचिह्नत्वात्);-दृश्यः यज्ञस्य प्रस्तरः सोमकण्डनपाषाणो यस्मिन्नत एव द्वेषस्य वैरस्य पेषणाधारमिव (निर्वैर-त्वमाश्रमस्य द्योत्यते), अदभ्राणि कुशानि यस्मिन्–अत एव कश्मलस्य मोहस्य, ('मूर्छा तु कश्मलं मोहः'–इत्यमरः) तक्षणस्य वेश्मेव तनूकरणशालेव; कूजन्तः क्षीजन्तः परे प्रशस्ताः शुकाः कीराः परशवः कुठाराश्च यस्मिन्नत एव दारुणताया भीष-णताया विदारणस्य भेदनस्य मन्दिरमिव सदनमिव;–गृहीतः–आर्तं यथास्यात्तथा गलस्य श्वासः प्राणवायुर्यस्मिन्नत एव व्यसनानां कामजक्रोधजदोषाणां दिवास्वाप-मृगयादीनाम् अवरोधनमवरोधो निवारणमिव; विततानि जालकानि कोरक-समूहाः यस्मिन्नत एव दुःस्थितीनां दुरवस्थितीनां बन्धनस्य स्थानमिव; समुच्चितः कृतचयनः श्येनः श्येनाकारश्चयनस्थलविशेषो यस्मिन्नत एव दुराचाराणामभिचार-इव मारणप्रयोग-इव, 'श्येनेनाऽभिचरन् यजेत शत्रुमारणकामः' इति विदितस्य श्येननामकस्य यागस्य मारणार्थत्वात्। सम्यगुषिता उद्भूताः क्षारकाः कलिका-समूहाः राक्षाश्च यस्मिन् अतएव दुर्जनताया भर्जनस्थानमिव,—"क्षारको जालकं क्लीबे, क्षारो राक्षा" इत्युभयत्रामरः। बहूनि सूनानि प्रसूनानि यस्मिन्नत एव मदनस्य मनोमादकस्य मनोभवस्य वधसदनमिव मारणभवनमिव, सूना प्राणिवधस्थानम्। प्रसारितानि अलीकानि यस्मिन्नत एव चञ्चलतायाः चपल-

चञ्चलतायाः, कृतानवद्यपदक्रमैरसङ्कीर्णावग्रहैर्गजगणैरपि निवेदितवैदिकभावं, परागभसितसितदेहैर्वृक्षभेदैरपि प्रकाशितपाशुपतस्वरूपं, प्रत्यक्षगन्धवहैः कुसुमैरपि समर्थितमीमांसकसीमम्, अप्रमेयात्मभिः शालैरपि विशदितौपनिषद्भावम्, अमानशब्दैः कुररैरपि विशेषितवैशेषिकशीलं, परतःप्रकाशमानप्रमाणैर्न्यग्रोधैरपि बोध्यमाननैयायिकभावं, सर्वोपादानप्रकृतिभिः कपिभिरपि

---

ताया वञ्चनस्य प्रतारणस्याऽधिकरणस्थानमिव। अलीकं भालमसत्यञ्च, भालप्रसारणं प्राणायामे यथार्थं, तपोवने वञ्चनप्रसारणं व्यञ्जनयोत्प्रेक्ष्यते, अतएव चपलतावञ्चनं वाच्यमुत्प्रेक्षाविषयम्, एवं सर्वत्र प्रथमार्थस्य यथार्थता द्वितीयार्थस्योत्प्रेक्षणीयत्वं श्लेषमूलकमिति विभावनीयम्। **कृतोऽनवद्यो** निर्दोषः पदानां चरणानां क्रमः प्रक्षेपो यैस्तैर्गजसमूहैरपि "किमुत बटुव्रजैः" न संकीर्णः, अवग्रहः= ललाटं येषान्तैः, अन्यत्र अवग्रहः पदच्छेदविशेषः, क्वचित्प्रकृतिप्रत्ययविभागात्मकः, क्वचिदुपपदप्रत्ययान्तविभागात्मकः। 'अवग्रहो वृष्टिरोधे प्रतिबन्धे गजालिके' इति मेदिनी। निवेदितः विज्ञापितः वैदिकभावो वेदाध्ययनकर्तृत्वं यस्मिन् 'इषे त्वा, ऊर्जे त्वा' इत्यादिपदच्छेदस्य, त्वा ऊर्ज्जे, ऊर्ज्जे त्वा, इत्यादिक्रमस्य, अन्न अदः अन्नादः इत्यादेरवग्रहस्य च वेदपाठिभिः क्रियमाणत्वेन साधर्म्यम्। पदं, क्रमः, इत्यादय अष्टौ वेदस्य विकृतयः। **परागः** सुमनोरज एव भसितं भस्म तेन सितसंबद्धश्वेतश्च देहो येषान्तैः वृक्षभेदैः श्वेतपरागवद्भिस्तरुभिरपि किमुत तपस्विभिः प्रकाशितं पशुपतिभक्तस्वरूपं यस्मिन्,—**प्रत्यक्षः** घ्राणेन्द्रियसाक्षात्कारविषयः गन्धः सौरभं येषान्तैः कुसुमैरपि समर्थिता पोषिता मीमांसकानां जैमिनीयानां सीमा मर्यादा यस्मिन्, मीमांसकैः गन्धवहस्य= पवनस्य त्वाचप्रत्यक्षविषयत्वस्वीकारात्। तार्किकास्तु त्वाचप्रत्यक्षेऽपि रूपस्य सहकारिकारणतां मन्यन्तेऽतो न पवनस्य प्रत्यक्षं रूपरहितत्वात्तस्येति वदन्ति रूपमत्रापि कारणमिति। **न प्रमातुं** योग्य आत्मा स्वरूपं येषान्ते तैः शालैरपि सर्जवृक्षैरपि, अप्रमेये ब्रह्मणि आत्मा येषान्तैरिव विशदितः स्पष्टीकृत औपनिषद्भावो वेदान्तिभावः समीपवृत्तित्वभावश्च यस्मिन्,—**अमानोऽ**परिमितः शब्दो रवो येषान्ते तैः कुररैरपि=उत्क्रोशैरपि, विशेषितं सविशेषणीकृतं शीलं स्वभावो यस्मिन्। **वैशेषिकाः** प्रत्यक्षमनुमानञ्चेति प्रमाणद्वयमेव स्वीकुर्वते, शब्दस्यानुमानेऽन्तर्भावं कुर्वन्ति—अतो न मानभूतशब्दः आप्तोपदेशो येषान्ते तादृशा वैशेषिकाः। **परतः** पादपान्तरात् प्रकर्षेण काशमानं दीप्यमानं प्रमाणमुन्नतत्वं येषान्ते तैर्न्यग्रोधैरपि वटैरपि बोध्यमानो ज्ञाप्यमानो नैयायिकभावस्तत्त्वं यस्मिन्। नैयायिकाः प्रत्यक्षादिप्रमाणे प्रामाण्यं—विषयेन्द्रियसन्निकर्षाधीनमिति परतः प्रामा-

परिचितकापिलदर्शनस्वभावं, पौरुषेयश्रुतिवादिभिः शुकैरपि प्रसञ्जितपातञ्जलस्वरूपं, परिणतकषायाभिर्हरीतकीभिरपि दर्शितशान्तभावं, लाङ्गलिकीभिरपि स्तबककञ्चुकिताभिर्गृहीतकाषायमिव लक्ष्यमाणं, लताभिरपि धृतत्रिवृद्भावाभिः प्रकाशितयाज्ञिकभावं, पञ्चशिखत्वादिव हिंसाविहीनहर्यक्षं, क्रोडत्वादिव क्रूरत्वमन्दीभूतवराहम्, अच्छत्वादिव सौम्यभल्लूकं, चक्रित्वादिव विमुक्तशिखण्डिविरोधदर्वीकरं, द्रोणत्वादिव परिहृतोल्लूकविरोधकाकोलम्, वृषजन्यत्वादिव नकुलविभ्रमार्हमूषकं, व्याघ्रत्वादिव मातङ्गस्पर्शविमुखसिंहं,

---

ण्यं मन्यन्ते। सर्वेषां वस्तूनामुपादानस्य स्वीकारस्य प्रकृतिः स्वभावो येषान्तैः कपिभिः प्लवङ्गैरपि परिचितः कापिलदर्शनस्य साङ्ख्यदर्शनस्य स्वभावो यस्मिन्। प्रकृतिं=प्रधानं पदार्थमात्रस्योपादानमादिकारणं मन्यन्ते कापिलाः। पौरुषेयाः पुरुषैः कृता याः श्रुतयो ध्वनयः ताः वदन्ति तच्छीलास्तैः शुकैः कीरैरपि प्रसंजितं 'पुरुषनिर्मितवेदवादित्वेन' पातञ्जलानां योगदर्शनविदां स्वरूपं यस्मिन्,-परिणतः कषायो विषयाऽभिलाष इव कषायो रागो रसश्च यासां ताभिर्हरीतकीभिरपि दर्शितः शान्तभावः शमो यस्मिन् (हरीतक्या रोगशमनकारकत्वात्),-लाङ्गलिकीभिरपि अग्निशिखाभिरपि ( करिहारि ) इति प्रसिद्धाभिः स्तबकैर्गुच्छकैः कञ्चुकिताभिः कृतकञ्चुकाभिः गृहीतः कषायो यस्मिन्-तादृशमिव लक्ष्यमाणम्,-धृतस्त्रिवृद्भावः त्रिवृतात्त्वं ( त्रिवृत्संज्ञा ) याभिस्ताभिः लताभिरपि शुक्लत्रिधाराभिरपि प्रकाशितः याज्ञिकानां भावो वेदत्रयावर्तकतया त्रिवृत्त्वमिव यस्मिन्,-(सर्वानुभूतिः सरला त्रिपुटा त्रिवृता त्रिवृत्-इत्यमरः) "ऋचो यजूँषि चान्यानि सामानि विविधानि च। एष ज्ञेयस्त्रिवृद्वेदः"-इति मनुः। कृताऽनवद्येत्यारभ्य अशब्दलभ्यकैमुतिकन्यायविषयो वैदिकादिः सर्वत्रोहनीयः। उपमार्थापत्तिरूपकाणां संकरः-अर्थश्लेषानुप्राणितः। पञ्चशिखो मुनिः, पञ्चशिखा चूडा=अग्रभागा युद्धादियोग्या च यस्य तस्य भावस्तस्माद् इव हेतोः हिंसया विहीना हर्य्यक्षाः केसरिणो यस्मिन्। 'शिखा ज्वालाबर्हिचूडालाङ्गलिक्यग्रमात्रके' इति भानुः। 'हर्य्यक्षः केसरी हरिः' इति-अमरः। क्रोडत्वादिव=अङ्कत्वादिव क्रूरत्वेन मन्दीभूता वराहाः सूकरा यस्मिन्-'क्रोडः कोले शनौ क्रोडमङ्के'-इति हैमः। अच्छत्वादिव स्वच्छत्वादिव सौम्या मृदवोऽहिंसका भल्लूका यस्मिन्। 'अच्छः स्फटिकभल्लूकनिर्मलेष्वच्छमव्ययम्' इति मेदिनी। चक्री विष्णुः सर्पश्च, शिखण्डी मयूरः। मयूरसर्पयोर्विरोधः स्वाभाविकः, विष्णुसर्पयोर्मैत्री च सर्वविदिता। दर्वीकरः सर्पः। द्रोणोऽश्वत्थामपिता कृष्णकाकश्च, उलूको वैशेषिकाचार्यः घूकश्च। 'द्रोणकाकस्तु काकोलः, पक्षिणो विरोधो न मुन्योः। वृषो वृषभः मूषकश्च, विश्रम्भो विश्वासः। व्याघ्रो मुनिः शार्दूलश्च, मातङ्गश्चाण्डालो

सप्रतिचारत्वादिव श्येनभयानभिज्ञवर्त्तिकं, पञ्चाननत्वादिव बद्धाष्टापद-सौहृदमृगेन्द्रं, शुकत्वादिव भयानापन्नकीरं, द्विजसमाजोपजीव्यैर्द्रुमैरपि धार्यमाणबहुशाखं, कैश्चिदत्रिभिरपि त्रिशूलैः, कैश्चिद्भृगुभिरपि पातानर्हैः, अन्यैः कुत्सात्मकैरपि सकलाभ्यर्हणीयैः, अपरैर्वसिष्ठैरपि सरस्वत्यावाह्य-मानैः, इतरैर्गौतमैरप्यनभिनन्दितशतानन्दभावैः, परैरङ्गिरोभिरप्यजातदीर्घतमोऽन्वयैः, कैश्चित्कृष्णाजिनैरपि कर्मस्वनुपयुक्तैः, कैश्चित्कृष्णसुन्दरैरपि रामानतुसृतैः, कैश्चिद्धुतभुग्भिरपि अकृष्णवर्त्मभिः, कैश्चित्सर्वहितैरपि विहितपराकैः, कैश्चिदगस्त्यैरप्यनाश्रितदक्षिणाशैः, कैश्चिद्द्वन्द्वातीतैरप्यप्राप्त-

---

गजश्च । प्रतिचारेण प्रतिगत्या सहितं सप्रतिचारं तस्य भावस्तत्त्वन्तस्मात्प्रतिगति-सहितत्वेन बन्धसहितत्वादिव श्येनात्=शशादनाद् भयस्याऽनभिवर्त्तिका यस्मिन्,–**पञ्चाननत्वादिव** शिवत्वादिव बद्धमष्टापदनाम्ना मृगेण सौहृदं यैस्तादृशा मृगेन्द्रा यस्मिन् (बहुव्रीहिगर्भो बहुव्रीहिः), पञ्चाननः सिंहः, पञ्चानन इव शिव इव तस्मादिवेति श्लेषः, सर्वत्रैवं बोध्यम् । **शुकः** कीरो व्याससुतश्च, मुक्तत्वान्निर्भयः । **द्विजा** ब्राह्मणाः पक्षिणश्च, शाखा वेदस्य द्रुमाणाञ्च । **कैश्चित् अत्रिभिरपि** अत्रिगोत्रजैरपि त्रिशुक्लैः त्रिशुक्लशाखीयैः ( विरोधः स्फुटः ), **भृगुर्मुनिः** पर्वत-प्रपातश्च । **कुत्सात्मकैः** कुत्सगोत्रजैः, विरोधः स्फुटः । **वशिष्ठैरतिशयेन** वशी-भूतैः सरस्वत्या वाह्यमानैरिति विरोधः, वशिष्ठगोत्रजैः, सरस्वत्या विद्यया–इति परिहारः । **गौतमैः** गौतमगोत्रजैः, शतानन्दः गौतमसुतः शतश आनन्दाश्च । **अङ्गिरा** बृहस्पतिपिता, तद्गोत्रजैरपि दीर्घस्य तमसस्तमोगुणस्य, अन्वयः संबन्धः । **कृष्णाजिनानि** 'शर्मासि' इत्यादिमन्त्रैः कर्मसूपयुक्तानि, अनुपयुक्तैरिति विरोधः, कृष्णमजिनं येषां तैरपि कैश्चिज्ज्ञानिभिः कर्मसु यागादिषु अनुपयुक्तैर्ज्ञानित्वात् । **कृष्णः** सुन्दरत्वाद् गोपीभिः=भौमासुरावरुद्धाभिः कन्याभिश्चानुसृतः । कैश्चिद्यति-भिस्तु कृष्णवत्सुन्दरैरपि न अनुसृता रामा रमणी यैस्तैरलङ्कृतम् । कैश्चिद् वानप्रस्थैर्हुतं भुञ्जते हुतभुजः यज्ञशिष्टाशिनस्तैः ( 'यज्ञशेषं तथाऽमृतमिति' मनुः ) अकृष्णवर्त्मभिः स्वच्छचरितैः, विरोधस्तु स्फुटः । **कैश्चित्** परोपकार-निरतैः, अतएव सर्वेभ्यो हितैरपि परेभ्यः (परेषां) विहितमकं दुःखं यैस्तैर्विहित-पराकैरिति विरोधः, कृतपराककृच्छ्रैरिति परिहारः । ( यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम् । **पराको** नाम कृच्छ्रोऽयं सर्वपापाऽपनोदनः म० ११।२१५)। **अगस्त्यैः** लक्षणया तद्गोत्रजैः न आश्रिता दक्षिणाशा यैः, मुनिद्रुमैरिति वा, ( अगस्त्यः कुम्भयोनौ स्याद्वङ्गसेनतरावपि–इति मेदिनी ) **कैश्चित्** सहिष्णुभिः,

कृच्छ्रैः, कैश्चित्त्यक्तकुशीलशूलैरपि कुशूलधान्यैः, अपरैर्बहुधान्यगम्यातिशयैरपि कुम्भीधान्यैः, कैश्चिज्ज्वरभेदवद्भिरपि त्र्याहिकैः, अन्यैरनेकयुगावसानसाक्षिभिरपि अश्वस्तनैः, इतरैरनालम्बनैरपि शिलैकवृत्तिभिः, कैश्चिदतिथिस्वरूपैरपि पक्षाशिभिः, कैश्चिन्निष्कामैरपि फलभोगिभिः, कैश्चिद्रोगरहितैरपि धृतपर्णाशैः, अपरैर्दत्तसर्वाभयैरपि विहितजीवनाशनैः, कैश्चिन्मुक्ताहारैरप्यतरलैः, कैश्चन बन्धरहितैरपि रश्मिपैः, अन्यैरवदाताभ्यन्तरैरपि धूमपैः, इतरैरकमलैरपि कृतोदवासैः, परैरस्तम्भैरपि शरीरक्रियारहितैः,

---

द्वन्द्वानि शीतोष्णादीनि अति अत्यन्तमितानि प्राप्तानि यैस्तैरपि, न प्राप्तं कृच्छ्रं कष्टं यैस्तैरिति परिहारः । कैश्चित्सोमपायिभिः त्यक्तं कुत्सितं शीलं शूलञ्च यैस्तैरपि कुशूलधान्यैरिति विरोधः, कुशूलेषु–इष्टकादिरचितप्रकोष्ठेषु धान्यानि येषान्तैरिति परिहारः । 'कुशूलधान्यको वा स्यात्कुम्भीधान्यक एव वा । त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा'–इति मनुः । अपरैः संवत्सरसंचायकैः बहुभिर्धान्यैर्गम्यो ज्ञाप्योऽतिशय आधिक्यं येषान्तैरपि कुम्भ्यामेव धान्यं येषामिति विरोधः, बहुधाऽनेकधा अन्यैर्गम्योऽतिशयो येषामिति परिहारः । "यस्य त्रैवार्षिकं धान्यं पर्याप्तं भृत्यवृत्तये । अधिकं वापि विद्येत, स सोमं पातुमर्हति"–इत्युक्तलक्षणस्त्रैवार्षिकधान्यः कुशूलधान्य इत्युच्यते, वार्षिकधान्यस्तु कुम्भीधान्य–इत्युच्यते । कैश्चित् प्राणायामतत्परैः ज्वरभेदवद्भिरपि ( ज्वरनिरूपितभेदाधिकरणैर्वा ) त्र्याहिकैरिति विरोधः, त्र्याहिकस्य ज्वरभेदत्वात्, तृतीयदिनभोजिभिरिति परिहारः । अन्यैः कल्पान्तजीविभिः अनेकेषां युगानामवसानस्य साक्षिभिरपि श्वोभवाः श्वस्तनाः, तेन भवन्तीति अश्वस्तनैरश्वस्तनिकैरिति विरोधः, आगामिदिवसीयाऽऽजीवरहितैरिति परिहारः । अनालम्बनत्वं पाषाणैकवृत्तत्वञ्च विरुध्यते, 'कणिशाद्यर्जनं शिलम्', 'कणिशं सस्यमञ्जरी' इति परिहर्त्तव्यम् , न विद्यते द्वितीया तिथिराश्रयार्थमिति–अतिथिः, पक्षमश्नातीति पक्षाशीति विरोधः, (अत्यन्तसंयोगे द्वितीया) पक्षेऽश्नन्तीत्येकवारमिति परिहारः । 'अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते'–इति मनुः । फलं=कर्मफलं, वृक्षादिफलञ्च । पर्णाशैः पत्रभोजिभिः, ('दलं पर्णं छदः पुमान्'), जीवनं जलमश्नन्ति ते जीवनाऽऽशाः=अब्भक्षाः । मुक्तस्त्यक्त आहारो यैस्तैः, तरलो हारमध्यगः । बन्धरहिता मुक्ताः, रश्मीन् पान्ति ते रश्मिपा रश्मिरक्षकाधारका-इति विरोधः, पिबन्तीति परिहारः । 'किरणप्रग्रहौ रश्मी'इत्यमरः । अवदातं सत्त्वगुणवत्तया विशुद्धमभ्यन्तरं येषान्तैरपि धूमं कज्जलजनकं पान्ति-इति विरोधः, धूमस्य कलुषजन्यत्वात्,

कैश्चन हिंसानिवृत्तैरप्यात्तदण्डैः, अन्यैराषाढवद्भिरपि श्रिततपस्यैः, कैश्चनो-परिगमनोन्मुखैरप्यधोमुखैः, कैश्चन पञ्चाग्निसेविभिरपि तापरहितैः, कैश्चि-न्नालीकवृत्तिभिरप्यवरटैः, अपरैर्नीरागैरपि मित्राभिमुखैः, कैश्चिन्निरपेक्षैरपि सामप्रयोगव्यासङ्गिभिस्तपोधनैरलङ्कृतं–तपोवनं पश्यन्नेव संपन्नपावन-मात्मानं मन्यमानः, कुतूहलायत्तमानसः,–स्तभ्यमान इव तत्तत्प्रत्यक्षाद्भुता-लोकनेच्छया, कृष्यमाण इवाग्निमद्भुतदिदृक्षारसेन, आहूयमान इव स्वाध्या-यध्वनिना, विहितप्रवेशमङ्गल इव सामगीतिभिः, प्रत्युद्भूत इवाग्निहो-त्रदहनधूमैः, पूज्यमान इव मन्दारमकरन्दबिन्दुस्यन्दिना गन्धवहेन प्राविशत् ॥ ७२ ॥

अग्रतो गत्वा च भुवनभङ्गभयेन वलयिताभिरिव तपःपावकज्वाला-

---

क्लिन्नेन्धनज्वलनसंयोगस्य धूमजननिमित्तस्याऽनवद्यातत्वात् । पिबन्तीति परिहारः । इतरैः=तपोवर्द्धकैः न कमलानि अकमलानि तैः, नास्ति कमला येषां तैः, अकं दुखं मलं येषान्तैः, उदके वासः उदवासः, कृतः उदवासो यैस्तैः । 'ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षास्वासारषाण्मुनिः । आकण्ठमग्नः शीतोदे क्रमशो वर्धयँस्तपः' इति मनुः । स्तम्भः स्थूणा, शरीरक्रियया चेष्टया रहितो भवति, जडत्वात्, मुनयस्तु निरपेक्ष-त्वाद् ध्यानैकतानवत्त्वाच्च ( विरोधः सङ्गमनीयः ) । 'स्तम्भौ स्थूणाजडीभावौ' इति नानार्थेऽमरः । कैश्चन संन्यासिभिः आत्तः स्वीकृतः दण्डो यैस्तैः । अन्यै-र्ब्रह्मचारिभिः 'पालाशदण्ड आषाढः मासश्च, तपस्तपस्या, तपस्यः फाल्गुनः । उपरि गमनोन्मुखत्वं तपःसिद्धेरासन्नत्वात् शम्बूकन्यायेनाऽधोमुखत्वम् । तापः शारीरो मानसश्च । नालीकं कमलसमूहः, वृत्तिराजीविका स्थितिश्च, वरटो हंसः । रागो-ऽनुरागः । मित्रं सुहृत्, मित्रः सूर्य्यः । साम सान्त्वनम् , तृतीयवेदश्च । व्यासङ्गो–ऽभ्यासः प्रयोगश्च । तप एव धनं येषान्ते तैः अलंकृतपरिपूर्णम् पर्य्याप्तम्–तपोवनं पश्यन्नेव प्राविशदिति । सम्बन्धः पूर्वमुक्तः । प्रविशन्तं राजानमुत्प्रेक्षते स्तभ्यमान इत्यादिना ।

पुरुहूताहूतनृपः, प्रययौ यद्दर्शनायालम् ।
तुष्यतु कुसुमेनायं, स्वतपोवनवर्णनात्मकेन मुहुः ॥ ७२ ॥

अग्रतो गत्वा च भगवन्तं गृत्समदमपश्यदित्यन्वयः । अत्र तृतीयान्ता-नां विराजमानमित्यनेनाऽन्वयः, विराजमानमित्यस्य च भगवन्तमित्यनेन । तथाहि–कथम्भूतं भगवन्तं–जटाभिर्विराजमानम् । जटाः विशेषयितुमुत्प्रेक्षते, भुव-नस्य जगतः भङ्गात्संभाविताद्नाशाद्, भयेन हेतुना वलयिताभिरिव कुण्डलीभूता-

वलिभिः, बहुसमयसलिलवासलग्नाभिरिव कमलकिञ्जल्कराजिभिरुपञ्झमित-स्तोककत्तृष्णाभिरवगाढानेकशतह्रदाभिर्जटाभिर्विराजमानम्, अलीकत्वदृश्य-त्वयोः सहचारस्थानमिवौपनिषदसिद्धान्तानुगुणं भालं बिभ्राणं, तत्त्वसाक्षा-त्कारभग्नस्य निसर्गकुटिलमलिनस्य महामोहस्य शकलयुगलेनेव भ्रुवोर्द्वयेन विभ्राजमानं, चिरतरमतिसन्निधानवशेन स्वान्तरालमार्गनिर्गच्छदक्षिसंसर्गा-दिव श्यामतामापन्नं, कनीनिकाकिरणाङ्कुरनिकुरम्बमिव पक्ष्मलोमकलापं कलयन्तं, विषयान्तरसम्पर्कप्रत्यादेशविन्दुसदृशाभ्यां नयनयोस्तारल्यरजः-संसर्गप्रतिबन्धककाचावरणभूताभ्यां तारकाभ्यां विराजमानं, शरच्चन्द्रिका-वदातैर्दृग्व्यापारैर्विभ्रमाविलस्य सकललोकस्य सन्मार्गमिवोपदर्शयन्तं, दुःखत्रयोपतापमिव शमयन्तं, मोहान्धकारमिव निरस्यन्तं, प्रमोददुग्धो-दन्वन्तमिवोद्वेलयन्तं, शान्तिकुमुदिनीमिव विकासयन्तं, कुबुद्धिकौशिकसं-सदमिवान्धयन्तं, कठिनानपि हृदयचन्द्रकान्तान्द्रवत्वमिव नयन्तं, चक्र-मेलकानीव घटयन्तं, बाह्याभ्यन्तरकरणसंयमपाशाभ्यामिव कर्णाभ्यां

---

भिरिव तप एव पावको वह्निस्तस्य ज्वालावलिरूपाभिः जटाभिः। एवमग्रेपि भाल, भ्रूयुग, पक्ष्म, कनीनिकादिवर्णने बोध्यम्। औपनिषद्-सिद्धान्तस्य वेदान्तसिद्धान्तस्याऽनुगुणमनुरूपम्, अलीकत्वस्य मिथ्यात्वस्य, दृश्यत्वस्य साक्षात्कारविषयीभूतस्य च सहचारस्य सहवृत्तित्वस्य स्थानमिव भालं ललाटम-लीकपदवाच्यं जनैर्दृश्यमानं बिभ्राणम्। अलीकं नरविषाणादि न दृश्यम्, भाल-न्त्वलीकमपि दृश्यमिति चमत्कारः। तत्त्वसाक्षात्कारेण महामोहस्य भङ्गः समुचितः, भग्नस्य च तस्य स्वभावतो मलिनस्य कुटिलस्य च भ्रूयुगलेन परिणा-मोऽपि समीचीनः। चिरतरमित्यादि स्पष्टम्। प्रत्यादेशः प्रत्याख्यानम्। तारल्यम् चपलता। रजःसंसर्गस्य धूलिसम्पर्कस्य प्रतिबन्धकेऽवरोधके ये काच-स्याऽऽवरणे तत्स्वरूपाभ्यां कनीनिकाभ्यां विराजमानम्। शरच्चन्द्रिकावदातैः स्वच्छैः दृग्व्यापारैः=दर्शनैः सकललोकस्य सन्मार्गमिवोपदर्शयन्तमित्यादिभिः—घटयन्तमित्यन्ताभिः क्रियाभिर्दृग्व्यापारैरित्यस्य करणत्वेनाऽन्वयः। आध्यात्मिकमा-धिदैविकमाधिभौतिकमिति दुःखत्रयम्, तज्जन्य उपतापः सन्तापः। चक्राणां मेलकानीव सङ्गमान् इव ('मेलके सङ्गसङ्गमावि'त्यमरः), बाह्यकरणानि बहिरिन्द्रियाणि चक्षु-रादीनि तेषां संयमः शमः, आभ्यन्तरकरणानि मनोबुद्ध्यहङ्कारचित्तानि तेषां संयमो

प्रकाशमानम्, आकाशावच्छेदिकाभ्यां कर्णशष्कुलीभ्यां जगदनुजिघृक्षारसादविद्यास्वरूपमिव विवृण्वन्तं, मिथ्याज्ञानवासनानिराकरणोपयोगिना यवफलेनापि तिलकुसुमेन, रमणीयदर्शनेनापि वहुवेलमनुभूताक्षिगतभावोग्रेण-योगाभ्यासस्थाणुनापि असकृत्प्राप्तकरशाखासंयोगेन—विहितागणेयकुम्भकेन नासादण्डेन मण्डितम्, अपाकृतश्रुतिव्यसनानां-धृतरत्नगर्भाणां-निरस्तस्वेतरप्रह्लादकानां—विहितलोकोत्तरपदन्यासानां-दूरीकृतसहस्रदोषार्जुनानाम्-अनभिमतखरभावानाम्-अविसंवादिभावहलानां-गृहीततथागतभावानां-कलिकलुषा-

---

दमः, शमदममयाभ्यां पाशाभ्यामिव श्रोत्राभ्यां प्रकाशमानम्, पुनश्च—**आकाशावच्छेदिकाभ्याम्** निरवच्छिन्नस्याऽऽकाशस्याऽवच्छेदिकाभ्यां भेदिकाभ्यां ('श्रोत्राकाशः') इत्यादिव्यवहारकारिकाभ्यामविद्याया अज्ञानस्य स्वरूपमिवाकारमिव विवृण्वन्तमसंवृतं कुर्वन्तं प्रकाशयन्तमित्यर्थः। विवरणे हेतुर्जगदनुग्रहेच्छारसः।(यथाऽनवच्छिन्नस्याऽऽकाशस्य घटाकाशो मठाकाशः श्रोत्राकाश-इत्यादिव्यवहारोऽज्ञानमूलकस्तथा—त्रिकालाऽबाध्ये ब्रह्मणि प्रपञ्चप्रतीतिरज्ञानकृतेति अविद्यास्वरूपम्),**मिथ्याज्ञानस्य** अयथार्थज्ञानस्य, वासनायाः, संस्कारस्य, गन्धस्य च निराकरणे दूरीकरणे उपयोगिना प्राणायामादिद्वारीभूतेन **यवफलेनापि** यवफलसन्निवेशेनापि; तिलकुसुमाकारेणेत्यादिना विरोधपरिहारः। यवफल—तिलकुसुमादीनि नासिकोपमानि प्रसिद्धानि सामुद्रिकोक्तशुभलक्षणानि च। **रमणीय**त्वमुग्रत्वञ्च विरुद्धम्, 'ध्यायन्नासाग्रलोचनः' इति परिहारः। स्थाणुना शाखासंयोगो विरुद्धः,प्राणायामेन परीहारः। नासादण्डेन कुम्भविधानं विरुद्धम्, कुम्भकप्राणायामेन परिहारः। पुनश्च—**अधरेण बन्धुरम्** मनोहरम्, कथम्भूतेनाऽधरेण किसलयेनेव प्राप्तोऽनेकाभिः शाखाभिः संबन्धो येन, समानमुभयत्र। पुनः कथम्भूतेनाधरेण—अच्युतानामच्युतावताररूपाणां, शब्दब्रह्मात्मकानां च्युतसंस्कारदोषरहितानाञ्च वाक्यानाम् प्रादुर्भावस्याऽऽविर्भावस्य हेतुना कारणेन। कथमच्युतानाम्—**अपाकृतं** श्रुतेः वेदस्य व्यसनं येन तादृशो मत्स्यः, **धृता** रत्नगर्भा वसुन्धरा येन तादृक् कूर्मः वराहश्च, **स्वा**दात्मीयादितरः शत्रुः प्रह्लादो यस्य स हिरण्यकशिपुः, स निरस्तो येन तथाभूतो नृसिंहः, **विहितः** कृतो लोकोत्तरः—अलौकिकः पदानां चरणानां न्यासः स्थापनं येन तथा वामनः, **दूरीकृतः** सहस्रदोषार्जुनः सहस्रबाहुरर्जुनः कार्तिकेयो येन तथाविधः परशुरामः, **न अभिमतः** खरस्य राक्षसस्य भावः सत्ता यस्य तादृक्षो दाशरथी रामः, **अविसंवादिभावं** विसंवादिभावरहितं हलं सीरायुधमस्य स बलरामः, **गृहीतः** स्वीकृतस्तथागतभावः तथागतेति नाम येन तथाविधो बुद्धः, कलेः कलुषाणामपाकरणं करो-

पाकरणकृतामच्युतानां वरवाक्यानां प्रादुर्भावहेतुना किसलयेनेव प्राप्ता-नेकशाखासम्बन्धेनाधरेण बन्धुरं, रसनाग्रभागासीनसरस्वतीकराभरणमाला-सम्बन्धिनामिवाक्षमालागुलिकानिकुरम्बं, तपःसम्बन्धकृतसन्निकर्षमिव कुन्दकलिकाकदम्बकं, वदनोदरवृत्तेर्वाङ्मयपारावारस्येव मुक्ताफलकलापं दशनमण्डलं दधानं, सर्वार्थप्रकाशिकामत्युज्ज्वलामिव मन्त्रसन्तति-सरस्वती-श्रवणावतंससिन्दुवारमञ्जरीमिव दशनकौमुदीं दिक्षु दिशन्तं, बहुवेलवक्ष-स्थलास्थिसंघट्टनादिव निम्नमध्यभागेन चिबुकेन चकासन्तं, स्वभावोज्ज्वलं-बहुगुणं-निबद्धग्रन्थि-जीवात्मानमिव मूर्त्त-विद्यासमूहमिव सूत्रमयं यज्ञो-पवीतमुद्वहन्तं, दामोदरमिव कृतभुवनपानं-शेषजठरमिव पवनपूरणीयं नितान्तसंक्षिप्तं कुक्षिं धारयन्तं, सकलाभिलाषपूरणसामर्थ्यशिक्षार्थमागत-मिव कल्पद्रुमकिसलयं-सिद्धौषधीप्रवालमिव विहितसहजजगदभयदानं

---

तीति- तादृक् कलिः, एवमच्युतावतारविशेषणविशिष्टया ऽच्युतानां वरवाक्या-नाम्। तथाहि—अपाकृतो निरस्तः श्रुतेः श्रवणेन्द्रियस्य व्यसनं दुःखं दुःश्रवत्वादिकं येषु—तेषां वरवाक्यानाम्—धृतं 'प्रतिपादकतासंबन्धेन' रत्नं श्रेष्ठार्थः, गर्भे आकाङ्क्षा-भास्ये सम्बन्धे यैस्तेषाम् , निरस्तोऽभिभूतः स्वीयात्स्वजन्यादितरो भिन्नः प्रह्लाद आस्वादो येषु तेषाम् , विहितो रचितः—लोकोत्तराणामलौकिकचमत्कारकृतां पदानां =विभक्त्यन्तानां शब्दानां न्यासो निवेशो येषु तेषाम् ,—दूरीकृता रहिताः सहस्र-दोषा अनेकदोषाः शब्दार्थरसनिष्ठा येषामत एवाऽर्जुनानां विशदार्थप्रतिपादकानाम्, न अभिमतः खरभावः परुषवर्णता येषु तेषाम् ,-न विसंवादिभावा अनुप्रासादि शब्दालङ्कारैर्वञ्चिता हला व्यञ्जनानि येषु तेषाम्—( हलशब्देऽकार उच्चारणार्थः, हलामाः—अकारा इति वा छेदः )—गृहीतः प्रतिपादकतासंबन्धेन स्वीकृतः, तथा-गतभावो यथार्थता यैस्तेषाम्- कलिकलुषापाकरणकृताम्—'श्रुतं हरति पापानी'ति-न्यायात्, हरिर्हरति पापानीति सामानाधिकरण्येनाच्युतानां वरवाक्यानाम् । पुनश्च—दशनमण्डलं दधानम् । विशेषणत्रयेण दशनमण्डलं विशिनष्टि-रसना-ग्रेति—तपःसंबन्धेति—वदनोदरेति । पुनश्च—दशनकौमुदीं दिक्षु दिशन्तम् । दशनकौमुदीं द्विरुत्प्रेक्षते—सर्वार्थेति—सरस्वतीति । पुनश्च—चिबुकेन चकास-न्तम् । चिबुकमध्यगां निम्नरेखामुत्प्रेक्षते बहुवेलेत्यादिना । पुनश्च—यज्ञोपवीत-मुद्वहन्तम् । यज्ञोपवीतं विशिनष्टि—स्वभावेत्यादिना । पुनश्च नितान्तसंक्षिप्तं कुक्षिं धारयन्तम्। कुक्षिं विशिनष्टि दामोदरेत्यादिना। पुनश्च करद्वयं वहन्तम् । करद्वयं द्विधोत्प्रेक्षते कल्पद्रुमकिसलयत्वेन, सिद्धौषधीप्रवालत्वेन च । तत्र

करद्वयं वहन्तम्, उपरिगतचरणद्वयेनोरुयुग्मेन जलवासलग्नकमलमिव लक्ष्यमाणम्, अनेकयुगाभिव्यापकतपोगणनलेखाभिरिव धमनीभिः कमनीयकायं, गजाजिनेनेव भगवन्तमन्धकविध्वंसिनं कृष्णाजिनेन संवीतं, भास्वन्तमिव जनितयमं, मीमांसकमिव परिष्कृतनियमम्, अनुद्यममिव बद्धासनं, वर्षाकालमिव कृतकदम्बपवनायामं, शाब्दिकमिव निरूपितप्रत्याहारं, शून्यमिव कृतबहुधारणं, व्यग्रमिव निर्मितध्यानं, सुश्लोकमिवाबाधितसमाधिं, वसिष्ठमिव परिगृहीताक्षमालम्, अत्रिमिव कृतचित्रभानुकार्यम्, अङ्गिरसमिव सञ्जातधिषणान्वयं, मरीचिमिव प्रभूतसुरगुरुं, पुलस्त्यमिव मनुष्यधर्मजनकसवितारं, पराशरमिव सुवाचिसत्यवत्यामनुरक्तं, जाबालिमिव लब्धजटाबन्धं, विभाण्डकमिव परिमार्जितऋष्यशृङ्गं, बृहदश्वमिव विभावितपुण्यश्लोककथं, याज्ञवल्क्यमिव ब्रह्मवादिवल्लभं, अगस्त्यमिव स्तम्भिताहार्यवृद्धिं, वाल्मीकिमिव कवीनामग्रगण्यं, सौम्यमपि तेजोविशेषावहेलितहेलिमण्डलं, तपस्विन-

---

हेतुर्विहितेत्यादिः। पुनश्च-कमलमिव लक्ष्यमाणं पद्मासनं प्रतिपादयति—उपरिगतेत्यादिना। पुनश्च—धमनीभिः कमनीयकायम्। धमनीर्विशिनष्टि—अनेकेति। पुनः कथम्भूतं भगवन्तं गृत्समदमपश्यत्? कृष्णाजिनेन संवीतम्—अत एव गजाजिनेन संवीतं भगवन्तमन्धकविध्वंसिनमिव। अथ मालोपमां ग्रथ्नाति—भास्वन्तमिवेत्यादिना। यमः शमनोऽहिंसादयश्च। नियमः = नियमविधिः (व्रीहीनवहन्ति–इत्यादिः) शौचादयश्च। आसनम् = योगासनमालस्यासनञ्च। कदम्बमुकुलपवनविस्तारो वर्षासु, समुदितप्राणायामो भगवति गृत्समदे। प्रत्याहारो हलादिः, बहिर्मुखानामिन्द्रियाणामात्माभिमुखीकरणञ्च। देशबन्धश्चित्तस्य धारणा। तत्र प्रत्ययैकतानता ध्यानम्। समाधिरलङ्कारो ऽष्टमं योगाङ्गञ्च। अक्षमाला जपमाला, वसिष्ठपत्नी च। 'अक्षमालावसिष्ठेन···जगामाऽभ्यर्हणीयतामि'ति मनुः। चित्रभानुकार्यं प्रकाशश्चन्द्रजननेन, चित्रभानो राजकुमारस्य च कार्यं बुद्धिस्थम्। धिषणान्वयः सुराचार्यवंशः सरस्वतीसंबन्धश्च। प्रभूताः सुरगुरवः कश्यपादयः पुत्रा यस्य, प्रभूतानां सुराणां गुरुः। मनुष्यधर्मा धनदस्तस्य जनको विश्रवास्तस्य सविता पुलस्त्यस्तमिव मनुष्याणां धर्माः वर्णाश्रमादिधर्मास्तेषां जनिकाः स्मृतयस्तासां सविता गृत्समदो भगवान्। सत्यवती व्यासजननी, सुवाक् च। जटाबन्धो जाबालिसुतो जटामण्डलञ्च। ऋष्यशृङ्गो विभाण्डकसुतो मृगविषाणञ्च। बृहदिति स्पष्टम्। आहार्यः पर्वतः—आरोपितश्च। 'आहार्य-धर-पर्वता'-इत्यमरः। हेलिः सूर्यः। तपा माघः, तपः =

मप्यदीनं, निर्विशेषदर्शनमपि निरस्तविभ्रमं, कृतभेदनिरासमपि मन्त्रकृतामाद्यं, द्विजराजमपि तपस्विन्यप्रगतप्रीतिं, सन्ततपसमपि जाड्यहीनं, शुचिमप्यनूष्माणं, क्षमाशीलमप्यनुपात्तवासनं, करुणात्मकमप्यशोकप्रकृतिं, सदाचारमप्यपरिहीणस्थैर्यं, योगासक्तमपि विषयनिर्मुक्तं, निस्तमस्कमपि कौशिकप्रणयभाजं, सदयमपि ज्ञानानलभृष्टकर्माणं, समदर्शिनमप्यदण्डधरम्, अभिनिवेशहीनमपि सदा निबन्धम्, अकौतुकमप्यस्मितोज्झितं, सर्वज्ञमप्यपरिगृहीतकालकूटम्, अनात्मभुवमपि वेदोत्पत्तिस्थानं, जलशायिनमप्यगदं, नीरागमपि सुरागवृत्तिम्, अमारजितमप्यनङ्गीकृतविज्ञानवादं, सदममप्य भीमं, नारदाभिन्नमप्यनाकलितकलिकालकेलिम्, अमुक्तमर्यादमप्यतिलङ्घितानेकसत्यसमयं, अविच्छिन्नपुण्यजीवनं जाह्नवीप्रवाहमिव शुद्धीनाम्, अनुभूतविषमहेतिमध्यवासं भीष्ममिव धर्मानुशासनस्य, विघटितघनतमस्कं

---

तपश्चर्या । शुचिराषाढः पवित्रश्च । क्षमा भूमिरुपात्तवासना=गन्धवती, अन्यत्र क्षमा क्षान्तिः, वासना संस्कारः । करुणाऽशोकौ वृक्षौ, करुणा=दया, अशोकः शोकराहित्यम् । सदा-चारः सदा भ्रमणं, स्थैर्येण विरुद्धम्, सन् आचारो यस्येति परिहारः । योगः संयोगस्तदासक्तो न विषयनिर्मुक्तः, अष्टाङ्गयोगाभ्यासासक्त-इति परिहारः । कौशिक-उलूकः पुरन्दरश्च । सदयमिति स्पष्टम् । समदर्शी यमो दण्डधरः, न मुनिः । अभिनिवेश-आग्रह-निबन्ध-इति पर्यायशब्दाः । सदा निर्बन्धं सदा बन्धरहितं जीवन्मुक्तमित्यर्थः । अकौतुकः कुतूहलरहितः, अस्मितेनाऽनाश्चर्येण उज्झितस्त्यक्तो न भवति किन्तु साश्चर्यः, महर्षिस्तु कुतुकहीनः, अस्मिताख्यक्लेशरहितश्चेति-परीहारः । 'दृक् दर्शनशक्त्योरेकात्मतेवाऽस्मिता' यो. सू. २।६। सर्वज्ञः शिवः, सर्वं जानातीति सर्वज्ञो मुनिश्च । आत्मभूः स्वयम्भूश्चतुराननः । वेदः श्रुतिः कुशमुष्टिश्च, मन्त्रद्रष्टत्वाद्वेदोत्पत्तिस्थानं मुनिः । गदा कौमोदकी, गदो रोगः । सुष्ठु चासौ रागः सुरागः, सुराणामगः सुरागः । मारजिद् बुद्धदेवः-अङ्गीकृतविज्ञानवादः, गृत्समदस्तु न, ब्रह्मवादित्वात् । दमेन दण्डेन सहितः सदमो भीमो भयङ्करो भवति, मुनिस्तु दमेनान्तःकरणजयेन सहितः अतएवाऽभयङ्करः । नराणां समूहो नारं तद् द्यति खण्डयति-इति नारदः कलहकारकः, नराज्जीवादागतं नारमज्ञानम् तद् द्यति खण्डयतीति 'नारदोऽज्ञाननाशन'ः, परात्परमात्मन आगतं नारं ज्ञानं तद् ददातीति नारदः = ज्ञानदाता इति त्रयोऽर्था नारदशब्दस्य । कलिकालकेलिः कलहः । सत्यसमयाः सत्यसिद्धान्ताः, सत्ययुगाश्च, अनेककल्पजीवी मुनिः । जीवनं जलमायुष्यञ्च । अनुभूतो विषमासु हेतिषु बाणशय्यासु-मध्ये वासो येन स तं भीष्ममिव, अनुभूतः

शरत्समयमिव कलुषभावस्य, अनवद्ययज्ञसूत्रं प्रयोगमिव सर्वयागानां, विहितसुहितभावममृतपानमिव तृष्णानां, विभावितदृग्बाधं धूमोद्गममिव मत्सराणां, गृहीताजगरव्रतं कर्कोटकमिव कलेः, सेवितवीतिहोत्रं धूर्जटिललाटतटमिव कामस्य, कृतसन्ततोद्वासं कमलमिव शीतलतायाः, धृततपस्याप्रभावं माघमासमिव सन्तापानां, विशुद्धकायं प्रायश्चित्तमिव पातकानां, भावितभुवनवैरस्यं पारावारमिव सरस्वतीनाम्, अनभ्युपगतबाह्यार्थं शून्यवादमिव रागाणां, निरुपाधि सद्धेतुमिव सच्चरितानां-भगवन्तं गृत्समदमपश्यत्।।७४।।

पार्श्वे च तस्य महेन्द्रपदाधिगमहेतुभिर्हयमेधापूर्वैरिव महोज्ज्वलैर्मणिभिरुद्भासमानेन-दानववृन्दोदीरितदहनविशदिताष्टापदावदातभावेन मुकुटेन सत्कार्येण पञ्चशिखेनेव गौतमविरोधाच्छिरसि धृतेन प्रकाशमानं, दुर्वा-

---

विषमाणां पञ्चानां ज्वालानां मध्ये वासो येन स मुनिः पञ्चाग्निसेवी तम्। धर्मानुशासनस्य 'कर्तारम्' उभयत्र समानम्। घनतमः=मेघान्धकारः निबिडाज्ञानञ्च। यज्ञसूत्रं यज्ञोपवीतम्, यागविषयकश्रौतसूत्रञ्च। सुहितभावस्तृप्तिः पथ्यञ्च। दृग्बन्धो दृष्टिरोधः, धूमेन ध्यानेन च। "कर्कोटकस्य नागस्य दमयन्त्या नलस्य च। ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम्"॥ 'वीतिहोत्रो धनञ्जयः। कामस्य=कामं प्रति, एवं सर्वत्र षष्ठ्यर्थ ऊहनीयः। उद्वासो जले वासः। तपस्यः फाल्गुनो मासः, तपस्या=तपः। कायो देहः प्राजापत्यकृच्छ्रञ्च। भुवनविषयकं वैरस्यं वैराग्यम्। समुद्रे वैरस्यं क्षारत्वम्। न अभ्युपेत आसक्त्या-स्वीकृतः बाह्यार्थो रूपादिविषयो येन स तम्—अत एव रागाणां विषये शून्यवादमिवाऽसद्वादमिव। सच्चरितानां विषये उपाधिरहितं=व्याप्तिपक्षधर्मतादिसहितं, कारणमिव त्रिकालज्ञं गृत्समदनामानं मुनिमद्राक्षीत्।

अग्रज्ञाननिधानं, दशावतारैः सकर्णिकं कुसुमम्।
अभ्युपगच्छतु भगवान् गृत्समदोऽयं त्रिकालज्ञः॥ ७४॥

तस्य च भगवतो गृत्समदस्य तु पार्श्वे=समीपे महेन्द्रं पुरन्दरमद्राक्षीदित्यन्वयः। महेन्द्रासनप्राप्तिसाधनैरश्वमेधयागशतजनितैः पुण्यैरिव अतिदीप्यमानै रत्नैः शोभमानेन—मुकुटेन, पुनश्च 'प्रतिकूलैरपि, दानववृन्दैरुदीरितेन दहनेन पावकास्त्रेण विशदितोऽष्टापदस्य हेम्नोऽवदातभावो विशुद्धभावो यस्मिन् तेन मुकुटेन; पुनश्च महेन्द्रस्य वैयाकरणत्वेन असत्कार्यवादिना नैयायिकेन गौतमेन सह विरोधाद्धेतोः शिरसि धृतेन स्वपक्षपरिपोषकेण सत्कार्यवादिना साङ्ख्याचार्येण पञ्चशिखेनेव पञ्चशिखरेण किरीटेन प्रकाशमानं महेन्द्रमपश्यदिति

सोदत्तशापसाध्वसादिव शेखरीकृतया मन्दारकुसुममालिकया विराजमानं, तत्सौरभानुसारिभिश्च मुकुटघटितैरिन्द्रनीलोपलैरिव मधुकरनिकरैर्गुञ्जद्भि-रुपगीयमानवृत्रवधावदानं, विपुलकृतस्तम्भेनानुरागलग्नेन रुचिविलोचन-कुशेशयकुलेनेवानिमिषप्रचारप्रायेण सर्वाङ्गव्यापिना नेत्रसहस्रेण मुनेः पुर-स्तादुपस्थितं, वेदमिव शाखासहस्रेण दृश्यमानं, करवृत्तिस्वसजातीयान्तरद-र्शनादिव प्रतिमुहुर्ज्वलता, महासुरसमरसंरम्भनिगीर्णमिव हेतिसहस्रमुद्वमता, बद्धकोणेनाप्यशनिना, शतपर्वणापि विघटितदानवेन्द्रहृदयग्रन्थिना, नमु-चिप्रमाथसमयसंबद्धमिव फेनपटलं कररुहप्रग्रहसमूलं समन्तात्संबद्धं बिभ्रता, गोत्रोच्छेदजनितप्रत्यवायान्ववायमिव प्रतिबिम्बितनयननीलनलि-ननिकरं कलयता, स्ववैयर्थ्यसमर्थकजैमिनिविद्वेषास्वीकृतसमवायेन मैना-

---

समन्वयः सर्वत्र बोध्यः । साध्वसं भयम् । अवदातं कृतं कर्म । पुनः कथं भूतं महेन्द्रम्—नेत्रसहस्रेण सहितमत एव शाखासहस्रेण युतं मुनेः पुरस्तादुपस्थितं वेदमिव दृश्यमानम् । कथम्भूतेन नेत्रसहस्रेणेत्याह—विपुलकृतस्तम्भेनेत्यादिना । निमेषव्यापारहीनत्वेन कृतस्तम्भत्वम्, रुचयः कान्तय एव विलोचनानि यस्य कुशेशयकुलस्य तेनेव सर्वाङ्गगोचरेण । पुनश्च—कुलिशेन परिष्कृतकरम् । कुलिशं विशिनष्टि-करवृत्ति इति । करवृत्ति हस्तस्थितं यत्स्वसजातीयान्तरं प्रहरणान्तरं खड्गादि तस्य दर्शनादिव प्रतिमुहुः पुनः पुनः ज्वलता दीप्यमानेन, अत एव महासुराणां समरे संरम्भेण निगीर्णमिवाऽऽयुधसहस्रमुद्वमता वमनं कृत-वता कुलिशेन । 'कोणो मन्दः सूर्यपुत्रोऽसितश्चेति वराहः, समौ सौरिशनैश्चरावि-त्यमरः । कोणेन शनिना, अशनिना शनिभिन्नेनेति विरोधः, बद्धः कोण एकदेशो यस्य, अशनिना दम्भोलिनेति परिहारः । एवमुत्तरत्र । शतपर्वा दानवेन्द्रः कुलिशश्च, प्रमाथो नाशः, 'इन्द्रोऽपां फेनेन जहार, नमुचेः शिर'—इति श्रुतिः । 'न शुष्केण न चार्द्रेण जहार नमुचेः शिरः' इति भागवतम् । गोत्राः पर्वता एव गोत्राणि कुलानि तेषामुच्छेदेन जनितो यः प्रत्यवायः पापं तस्याऽन्ववायमिव परम्परामिव—( वंशोऽन्ववायः सन्तानः ) प्रतिबिम्बितं यत् नयनरूपं नीलनलिनसन्तानस्तस्य निकुरम्बं कदम्बकं तत् कलयता रचयता ( कुलिशेन ) । 'वज्रहस्तः पुरन्दरः' इत्यादिश्रुती-नामर्थवादार्थकत्वं, देवतानां मन्त्रमयत्वम्—इत्यादिसिद्धान्तवादी मीमांसको जैमिनिः शब्दमयत्वेन वज्रस्य वैयर्थ्यं समर्थयति, 'दर्शपौर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादिस्थलेषु—विभिन्नकालिकानामनेकसंख्यकानां यागानां कथमेक-स्वर्गजनकत्वमित्याकाङ्क्षायां—यागजन्यानां पुण्यानां समवायं=समुदायमेकस्वर्ग

कपक्षच्छेदानवाप्तिकृतादनुशयादिव॰ विहितबहुवाहिनीपतिपरिक्षोभेण कुलिशेन परिष्कृतकरम्, असुरपुरपद्मिनीविकारवैदग्धीविशदितकुञ्जरकरत्वाभ्यां-रिपुपक्षप्राणपवनप्रत्यवसानपाटवप्रकटितपृदाकुपतिस्वरूपाभ्यां—वरीयोऽग्रगणनीयाभ्यामपि परिघाभिन्नाभ्यां-भगवद्भ्यां चन्द्रचूडच्यवनाभ्यां स्वयमेव विभावितस्तम्भभावाभ्यां—तनयप्रणयादिव नित्यानुषक्तविजयाभ्यां-नप्तृप्रणयेनेव विहिताङ्गदालिङ्गनाभ्यां—विपुलत्वादिव देवशर्मदयितारक्षणानुगुणाभ्यां—रुचिपरिरम्भानासादनदहनकान्त्येवाभरणमणिभासारञ्जिताभ्यां—

---

प्रति कारणमिति—सिद्धान्तयति, कुलिशन्तु—जैमिनिविद्वेषेण न समवायमवलम्बते—एकाक्येव सर्वं कार्यं करोति। 'समुदायः समुदयः समवायश्चयो गणः'—इत्यमरः। **मैनाकस्तु** हिमाचलतनयः सरित्पतिशरणगमनेन कुलिशादात्मत्राणं विहितवानिति तत्पक्षच्छेदाऽनवाप्तिजनितः पश्चात्तापः कुलिशे, तेनैव हेतुना—वाहिनीपतयः सेनापतय एव वाहिनीपतयः समुद्राः तेषां विहितपरिक्षोभं कुलिशं तेन शोभितकरम्। पुनश्च—**भुजाभ्यां समुद्भासमानं** महेन्द्रमपश्यत्। कथम्भूताभ्यां भुजाभ्याम्—असुरपुराण्येव पद्मिन्यः कमलिन्यः तासां विकारे विकृतविषये या वैदग्धी चातुरी तस्यां विशदितं स्वच्छीकृतं कुञ्जरकरत्वं करिकरसादृश्यं याभ्यां ताभ्याम्। उपमानोपमेयस्थले भावप्रत्ययार्थः सादृश्यं, प्रकारतया तस्यैव भानात्। प्रकृतिजन्यबोधे प्रकारो हि भावः। पुनः कथम्भूताभ्यां भुजाभ्याम् शत्रुवर्गप्राण एव पवनस्तस्य प्रत्यवसाने भक्षणे यत्पाटवं कौशलं तेन प्रकटितं पृदाकुपतिस्वरूपं भुजगपतिस्वरूपं याभ्यां ताभ्यां—( 'सर्पः पृदाकुर्भुजगो भुजङ्गोऽहि'रित्यमरः ) ( सिद्धिश्चैव व्यतीपातो वरीयान् परिघः शिवः—इति योगक्रमः ) वरीयसोऽग्रे प्रथमं गणनीयत्वं व्यतीपाते, न तु परिघे, तस्योत्तरकालगणनीयत्वादिति विरोधः, वरीयोभिः श्रेष्ठैरग्रगणनीयाभ्यां प्रथममाननीयाभ्यां परिघाभ्यामर्गलाभ्यामभिन्नाभ्यान्तद्रूपाभ्याम्। 'परिघो योगभेदेऽस्त्रविशेषेऽर्गलघातयो'रिति मेदिनी। पुनश्च कथंभूताभ्यां—त्रिकालज्ञाभ्यां चन्द्रशेखर—च्यवनमुनिभ्याम् कर्तृभ्यां स्वयमात्मनैव, न तु परम्परया विभावितः कृतः स्तम्भभावो जडत्वमेव स्तम्भभावः स्थूणाभावो ययोस्ताभ्याम्—('स्तम्भः स्थूणा जडत्वयोरिति मेदिनी) 'जडीकृतस्त्र्यम्बकवीक्षणेन वज्रं मुमुक्षन्निव वज्रपाणिरिति' रघुः। **विजयो**ऽर्जुन एव विजयो 'विजितिः' संग्रामे नित्यानुषक्तो महेन्द्रभुजयोस्तत्र हेतुस्तनयप्रणय—उत्प्रेक्षितः, **अङ्गदो** बालिवानरसुतएवाऽङ्गदे केयूरे ताभ्यां विहितं कृतमालिङ्गनं ययोस्ताभ्याम्। आलिङ्गने हेतुरुत्प्रेक्षितो नप्तृप्रणयः। ( वालीन्द्रपुत्रः, सुग्रीवः सूर्यपुत्रः )। देवशर्मणः प्रिया महेन्द्रेण रक्षिता, महाभारतादिप्रसिद्धा, रक्षणाऽनुकूलत्वं विपुलत्वस्येति गुणोत्प्रेक्षणम्। पुनश्च

दम्भोलिभूषिताभ्यामप्यभिदुराभ्यां भुजाभ्यामुद्भासमानं, त्रिभुवनभवनाभ्यन्तरीकरणगोपुरकपाटमप्यनर्गलावष्टम्भं—गिरितटविकटमप्यलब्धस्वरुजोन्नतवेदनं—महासौरभशालिनो हरिचन्दनस्याङ्गरागेण मलयाचलसमाहूतेन सन्ततसमरकर्माभ्यासलग्नेनेव शिलीमुखकुलेन विलसितं—वक्षो वहन्तम्, आदित्यमिव विध्वस्तवृत्तं, धर्ममिव सकलाम्नायाभिनन्दनीयं, नरकासुरमिव प्रमथितादित्यकर्णकुण्डलं, योद्धारमिव स्वीकृतपवित्रशरीरसम्बन्धं, वालकमिव समारब्धसिकतासेतुम्, अर्जुनमिवानुभूतविरोचनवैरभावं, सुमेरुमिव स्वाभिन्नीकृतजम्बुकं, तडागमिव स्वायत्तपुष्करावर्त्तकं, घनकालमिव स्वीकृतचित्रशिखण्डिसंभवगौरवं, धाराधराधिष्ठातारमपि जनितधनञ्जयं, कौशिकमप्यनभिनन्दितत्रिशङ्कुं, वृद्धश्रवसमप्यनभिनन्दितकर्णम्, इन्द्राणी-

---

परिरम्भस्याऽऽलिङ्गनस्याऽनासादनेन दशनस्य कान्त्या इव भूषणमणिकान्त्या रञ्जिताभ्यां भूषिताभ्याम्, पुनः दम्भोलिना कुलिशेन भूषिताभ्यामपि नास्ति भिदुरं पविर्ययोस्ताविति विरोधः ( कुलिशं भिदुरं पविः, दम्भोलिरशनिर्द्वयोः) न भिदुरावभिदुरौ भिदुरभिन्नौ ताभ्याम्, भिदुरभूषिततयोरपि भुजयोर्भिदुरप्रतियोगिताकोऽन्योन्याभावः स्थित एव भुजौ भिदुरौ न इत्यबाधितप्रतीतेः सत्त्वात्, स्वयमभेदकाभ्यां वा, (विदिभिदिच्छिदेः कुरच्—इति कर्तरि कुरच् प्रत्ययः)। पुनः कथम्भूतं महेन्द्रं,—विलसितं वक्षो वहन्तम्। कथम्भूतं वक्षः—त्रिभुवनमेव भवनं तस्याऽभ्यन्तरीकरणे गोपुरकपाटमिव महेन्द्रवक्षोऽर्गलारोधरहितञ्च, त्रिलोकेशत्वात् । गिरितटवद्विकटं तथापि न लब्धा स्वरुजोपविजा उन्नता वेदना येन तत् । 'शतकोटिः स्वरुः शम्ब'—इत्यमरः । गिरितटन्तु लब्धस्वरुजवेदनं भवत्येव । शिलीमुखा बाणा भ्रमराश्च । राशिवृत्तं क्रान्तिवृत्तञ्चादित्यपक्षे, चरित्रं महेन्द्रे । आम्नायो वेदः । नरकेति स्पष्टम् । पवित्रः पूतः पविरक्षकश्च शरीरसंबन्धो यस्य तम् । सेतुर्नाऽऽलौ कुमारके, 'सिकता स्त्री सिकतिले वालुकायान्तु भूमनि' इति मेदिनी। विरोचनो बालिपिता महेन्द्रशत्रुः,लाक्षागृहनिर्माता च महाभारतप्रसिद्धः। स्वतादात्म्यं प्राप्ता जम्बूर्येन तं सुमेरुं, जम्बुको वरुणो येन तमिन्द्रम् । 'जम्बुकः फेरवे नीचे पश्चिमाशापतावपि'—मेदिनी । पुष्करस्य जलस्य आवर्त्तकाः स्वायत्ताः पुष्करावर्त्ता मेघा यस्येन्द्रस्य तम् । चित्रशिखण्डिसंभवो बृहस्पतिः । विरोधे धनञ्जयो वह्निः, परिहारे पार्थः । विरोधे कौशिको विश्वामित्रः त्रिशङ्कुयाजकः, परिहारे शचीपतिः । वृद्धश्रवाः पुरुहूतः, महच्छ्रोत्रञ्च । कर्णः श्रोत्रम्, कुन्तीसुतश्च । इन्द्राणी=इन्द्रवारुणीफलम्, शची च ।

हृदयाभ्यन्तरवृत्तिमप्यकलुषभावं, बलशालिनमपि बलारातिस्पष्टवीरभावं, पाकमपि पाकशासनं, नारदप्रणयिनमपि कृतपर्वतपक्षोच्छेदं, कृताहल्यासङ्गमपि प्राप्तवृषभावं, त्रिदशेश्वरमपि सहस्रनेत्रं, भुवनत्रयाधिपमप्यप्सरःसमुदायसेव्यं, नारायणाग्रजमपि निवर्हितविश्वरूपं-महेन्द्रमद्राक्षीत् ॥७५॥

---

बलं स्थाम, दैत्यभेदश्च बलः । विद्युत्परिणामस्येन्द्रत्वात्, पाकः शक्रः शुक्रशिष्यश्चैकः । पर्वतो नारदसुहृन्मुनिः शिखरी च । 'अहल्या'त्वप्सरो भेदे भार्यायां गौतमस्यचे'ति मेदिनी । वासवो वृत्रहा वृषा, वृषो वृषभश्च । तिस्रश्च ता दशा बाल्ययौवनवार्द्धक्यानि तासामीश्वरः कालः, परमायुषी त्रिभागोना खण्डदशा चेति तिस्रो दशास्तासामीश्वरः सूर्यस्तस्यैव प्राथम्यात्स तु सहस्रकिरणो न तु सहस्रनेत्र–इति विरोधः, त्रिदशानां देवानामीश्वर इति परिहारः । अपां जलानां सरोभिस्तडागैः सेव्यमिति विरोधः, अप्सरोभिः सुराङ्गनाभिरिति परिहारः । नारायणो विश्वरूपः 'स विश्वरूपः' इति श्रुतेः । इन्द्रो नारायणाग्रजो वामनस्योपेन्द्रत्वात्, अतो विश्वरूपनिवर्हणं विरुद्ध्यते । विश्वरूपस्त्वष्टुः पुत्रस्त्रिशिरा मुनिः स पौरोहित्ये वृतो महन्द्रेण गुरोरन्तर्धाने, दैत्यदौत्रत्वेन गुप्तं तत्पक्षपातिनं ज्ञात्वा हतवानिन्द्रः, प्रकृताऽननुगुणं विशेषणमिदम्, एवं विशेषणविशिष्टं महेन्द्रमद्राक्षीत्–राजशेखरः । लिङ्गज्ञानाय प्रथमान्तैः विग्रहो दर्शितः, परिनिष्ठितविभक्त्या परिणामः कार्यः ।

पुरुहूतवर्णनमयं कुसुमं दम्भोलिकर्णिकोपेतम् ।
मुनिदर्शनसमवेतः करोतु पाणौ पुरन्दरस्तुष्टः ॥
मुनिसुरदर्शनफलकं, बीजं धर्माङ्कुरोद्भिन्नम् ।
प्रतिमुखयोगं रचयतु, बिन्दुसमेतं विमर्शाय ॥

इति–श्री–कूर्माचलान्तर्गताल्मोडामण्डलान्तर्वर्ति-वर्सायतग्रामाऽभिजन-काशीस्थ–तारादत्तपन्तविरचितायां 'मन्दारमञ्जरी'टीकायां कार्यसिद्धिफलकमहर्षिमहेन्द्रदर्शनात्मकः प्रथमो भागः ।

अथ ससंभ्रमं तदभिवन्दनोत्सुकेनेव मौलिमणिमयूखच्छद्मना त्वरितमेव स्पृष्टभूतलेन शिरसा, स्वाभरणमणिप्रभाछ्लेन पुरस्तात्प्रधावतेव हृदयेन, तदवलोकतानासादनचिन्तयेवाधोमुखीभवता लोचनयुगलेन, तावुभावपि वृन्दारकवृन्दवन्दनीयौ द्वावपि ववन्दाते ॥७६॥

भगवदभिप्रायवेदिना चान्तेवासिजनेन विहितयथाऽनुरूपाभ्यर्हणौ सविनयं तदभिमुखमासाञ्चक्राते ॥७७॥

ततो मित्रानुपजीविनीभिर्मधुपानुपभोग्याभिरपरिचितपद्माकराभिः प्रसादपरिपूरिताभिरपाङ्गपुण्डरीकपङ्क्तिभिः पूजयन्निव नरपतिप्रतीकानि प्रत्येकं–, प्रसरता सरस्वतीनासीरचरेणावदाततमेन गुणसमुदायेनेव दशनदीधितिक-

---

स्मृत्वा मातापितरौ, गुरून्, गिरःप्रवर्तकं कञ्चित् ।
मुनिसुरवन्दनमुख्यं भागं विवृणोमि मञ्जर्याः ॥ १ ॥

अथ मुनिमहेन्द्रदर्शनानन्तरं तावुभावपि=राजशेखरचित्रभानू (कर्त्तारौ) वृन्दारकाणां वृन्दैर्वन्दनीयौ, द्वावपि=मुनिमहेन्द्रावपि, (कर्मभूतौ) ववन्दाते=प्रणेमतुः । वन्दनप्रकारं विशिष्य प्रतिपादयति, शिरसा, हृदयेन, लोचनयुगलेन, उपलक्षितौ ताविति । ससंभ्रमं, सादरम्, सत्वरञ्च, मौलिमणिमयूखानां प्रथमं भूमिस्पर्शनादुत्प्रेक्षते–तदभिवन्दनोत्सुकेनेवेति । तदपेक्षयाऽपि शिरसः प्राथम्यप्रतिपादनायाऽपह्नुते छद्मेति । (शिरसा) हृदयस्य मणिप्रभायाः प्रथममेतं भूस्पर्शकतया, तदपह्नुत्य हृदयस्यैव प्रधावनमुत्प्रेक्षते स्वाभरणेत्यादिना । (हृदयेन) तयोर्मुनिमहेन्द्रयोरवलोकनतानस्य दर्शनैकाग्रताया आसादनचिन्तया प्राप्तिचिन्तया इव, अधोमुखीभवता लोचनयुगलेन ॥ ७६ ॥

गृत्समदाशयज्ञेन शिष्यवर्गेण कृतोचितपूजौ (कृतमधुपर्कौ) । षडर्घ्या भवन्तिइत्यत्र राज्ञःपरिगणितत्वात् । अतएव माघः—'स्नातकं गुरुमभीष्टसंश्रयं, संयुजा च सह मेदिनीपतिम् । अर्घ्यभाज इति कीर्त्तयन्ति षट्'–इति ॥ ७७ ॥

ततो भगवान्गृत्समदोऽपाङ्गपुण्डरीकपङ्क्तिभिः प्रत्येकं नरपतिप्रतीकानि पूजयन्निव जगाद । अङ्गं प्रतीकोऽवयवः । अपाङ्गपुण्डरीकपङ्क्तीर्विशिनष्टि-लौकिक-पुण्डरीकपङ्क्तयो द्युमणिमुपजीवन्ति विकसनार्थम्, मधुपोपभोग्याः, परिचितपद्माकराश्च, नैता-इति व्यतिरेकेण । मधुपो भ्रमरः, पद्माकरस्तडागः । कथम्भूतो भगवान् ? आशाः प्रकाशयन् । केन ? दशनदीधितिकदम्बकेन । केनेव

दम्बकेन प्रकाशयन्नाशाः—, प्रस्पन्दमानेन दुर्लभवरप्रदानस्पृहासम्पन्नसात्त्विकभावेन कल्पतरुपल्लवेनेवाधरेण, भयान्मूकीभूतपतत्त्रिमधुकरकुलैः श्रवणबद्धावधानैरिव निश्चलविस्फारितकुसुमलोचनैराश्रमानोकहैरवेक्ष्यमाणो, निजातिक्रमशङ्काजातभीतिभिरिव बहुसमयवशीकृतैर्भूतेन्द्रियमनोभिरनुविधीयमानेच्छो भगवान्गृत्समदो जगाद ॥७८॥

'देव ! कच्चिदशेषधर्मालम्बन आम्नाय इव निरामय आत्मा, तदनुसारी स्मृतिसमुदाय इवानाकुलो वाऽवरोधजनः, तदुभयफलं वा सुखहेतुर्धर्म इव सारवानयङ्कुमारः, आत्मसम्बन्धमात्रेण सुखजनकं चित्तमिव वा स्वस्थं राष्ट्रं, बहुप्रयासशोधिता बुद्धय इवानुपहताः प्रजाः, विषयोपभोगनियुक्ता-

---

प्रसरता-गुणसमुदायेनेव । कथम्भूतेनाऽवदाततमेन, कुत्रत्येन ? सरस्वत्या वाग्देव्या नासीरे सेनामुखे—इव वदने चरतीति तेन । पुनः कथम्भूतो भगवान् ? प्रस्पन्दमानेन कल्पतरुपल्लवेनेवाधरेणोपलक्षितः । कथम्भूतेन ? दुर्लभवरप्रदानस्पृहया संपन्नसात्त्विकभावेन । पुनः कथम्भूतो भगवान्—आश्रमानोकहैरवेक्ष्यमाणः । कथम्भूतैरित्यपेक्षायामाह—भयादित्यादि । स्पष्टम् । पुनः कथम्भूतः—भूतानि कर्मेन्द्रियाणि, इन्द्रियाणि ज्ञानेन्द्रियाणि, मनश्चित्तं तैरनुविधीयमाना = अनुस्त्रियमाणा इच्छा यस्य तादृशः । कथम्भूतैः—निजाया इच्छायाः अतिक्रमशङ्कया जाता भीतिर्येषां तैरिव अतएव बहुसमयवशीकृतैः ॥ ७८ ॥

कुशलं पृच्छति देवेत्यादि । देव ! आत्मा निरामयः कच्चित् ?, अवरोधजनो निराकुलः कच्चित् ? अयं कुमारः सारवान् कच्चित् ? वा स्वस्थं राष्ट्रम् ? वा अनुपहताः प्रजाः ? इत्याद्यन्वय ऊहनीयः । अशेषाणां धर्माणां यागहोमदानदमदयादीनामाश्रय आम्नायो वेदः, तदनुसारी मन्वादिस्मृतिसमूहः, स इवात्मानुसारी शुद्धान्तवासिजनः, श्रुतिस्मृत्युभयफलभूतो धर्मः सुखहेतुः, स इव—आत्मावरोधजनोभयफलभूतः सन्तानः, प्रकृते कुमारश्चित्रभानुः, "श्रुतेरिवार्थं स्मृतिरन्वगच्छत्" । राष्ट्रश्च स्वस्थम् ? वा शब्दः सर्वत्र समुच्चयार्थः, समुच्चीयमानस्यान्ते प्रयोगः । कच्चिदित्यस्य प्रतिवाक्यमन्वयः । स्वाऽभिप्रायाऽऽविष्करणे कच्चिदव्ययम् । आत्मनो जीवात्मनः संयोगमात्रेण सुखग्राहकं मनः, तदिव आत्मनो राज्ञः सम्बन्धमात्रेण सुखदायकं राष्ट्रम् । प्रजाश्चाऽनुपहताः कच्चित्, ? बहुभिः परिश्रमैः श्रवणमननादिभिः संशोधिताः, भ्रमप्रमादाद्यविषयिण्यो यथार्थविषयिण्यो बुद्धिव्यक्तय—इव, दस्यु-स्तेनप्रभृतिकण्टकनिराकरणादिभिर्बहुभिः प्रयासैः सम्यक् कुलाचारदेशाचारपालकतया स्थापिताः प्रजाः अनुपहताः, पीड़ा-

नीन्द्रियाणीव वा स्वाधीनान्यधिकारिकुलानि, गूढतरार्थग्रहणोपयोगिनो विचारविशेषा इवानुपहतगतयः, परितोषोपधायकासिद्धयो वा सद्विषयकमनोरथा इवाऽविसंवादिप्रवृत्तयोऽर्थिजनाः,अधोगतिसम्पादकाऽभावप्रतियोगिनः प्रतापविशेषा इव वा ऽहर्निशं दीप्यन्तेऽग्नयः, लोकयात्रानिर्वाहकाणि सद्व्यसनानीव वा न विटैराकुलीकृतानि न्यायस्थानानि, धर्मसमृद्धिनिबन्धनं कोश इव वा न्यायानपेतो दण्डः, सङ्करनिवारणकारणं सदाचार इव वाऽनुपप्लुतो भेदः,सर्वकार्याभ्यन्तरा आत्मान इव वा न कलयन्ति मालिन्यममात्याः,

---

हिताः किम्? बुद्धेरनुपघातस्तु बाधराहित्यम्। यथा विषयाणां रूपादीनामुपभोगे साक्षात्कारे, नियुक्तानि = इतरविषयग्रहणनिवृत्तिपूर्वकं संलग्नानि चक्षुरादीनि स्वाधीनानि न भवन्ति किन्तु जीवात्मेच्छाधीनानि, तथैव सचिवादीनि कर्मचारिकुलानि राजाज्ञाधीनानि सन्ति विषयाणां जनपदानामुपभोगे समाहरणनिरीक्षणकरग्रहणादौ नितरां युक्तानि तत्पराणि भवन्ति, अतः पृच्छति-अस्वाधीनान्यधिकारिकुलानि कच्चिदिति। निगूढतरः = निगूढापेक्षयाऽपि गूढो योऽर्थोऽभिधेयः, तद्विषयकं यद्ग्रहणं साक्षात्कारस्तदुपयोगिनो ये विचारविशेषाश्चिन्ताभेदाः= ज्ञानविशेषास्त इव न—उपहता बाधिता गतिर्ज्ञानं येषान्ते अबाधितबोधाः अबाधितप्रचाराः सिद्धिपक्षे, सिद्धयः प्रभावमन्त्रोत्साहजास्तिस्रः सिद्धयो वा = अपि परितोषाधायकाः कच्चित्, सन्तोषाधायकाः किम्? आत्मादिसिद्धिपर्यन्तमार्थिकं कुशलं परिपृच्छ्य धार्मिकं पृच्छति-सद्विषयकमित्यादिना। शुभकार्यविषयकाः, विद्यमानवस्तुविषयका वा, ये मनोरथा = लिप्साविशेषास्ते सफलप्रवृत्तयो भवन्ति, तथैव भवत्सकाशमागता याचकवर्गाः सफलाऽऽगमना भवन्ति किम्? अतिथिसत्कारविषयकः कुशलप्रश्नः। (प्रसिद्धमूर्द्धज्वलनं हविर्भुजः) 'यस्याऽभावः स प्रतियोगी"। "अग्निहोत्रञ्च जुहुयादाद्यन्ते द्युनिशोः सदा"। अधोगतिसंपादको योऽभावः (अग्निरधोगतिमान्न-इत्याकारकोऽभावः) तथा प्रतापविशेषोऽधोगतिमान्न-इत्याकारकश्च, अतोऽग्निप्रतापविशेषयोरुपमानोपमेयभावः। अग्निहोत्रं प्रतिदिनं प्रचलति किमिति प्रश्नाशयः। लोकयात्रानिर्वाहकाणि मनोविनोदकानि, सद्व्यसनानि विद्याऽभ्यसनादीनि। विटा धूर्त्ताः। न्यायस्थानानि धर्माधिकरणानि। धर्मः समृद्धिमूलं, कोषो धनराशिः, न्यायाऽनपेतो न्याय्यः? दण्डो निग्रहः, सदाचारः शिष्टाचारः, वर्णाश्रमव्यवस्थारक्षकत्वेन सङ्करनिवारणकारणम्। सदाचारे वर्णाश्रमभेदोऽनुस्यूतः। राजनीतौ भेदः—उपजापः, अनुपप्लुतो = निर्विघ्नः किम्? सर्वेषु कार्येषु आभ्यन्तराः अन्तरङ्गरूपाः

प्रशस्तिफलोत्पत्तिहेतुभूतानि भाग्यानीव वा नोपरुद्धवृत्तिकानीन्द्रियाणि न मित्राणि, अधन्यजनव्यावृत्ताः खल्वेते धर्मा ये कतिपयेष्वेव भवादृशेषु दृश्यन्ते। तद्यथा-अधर्मानुपहितमर्मभेदमैश्वर्यम्, अहङ्कारकलङ्कशून्यं विभुत्वं, अप्रकीर्णेन्द्रियगणं तारुण्यं, सदाभ्युदयाऽकदर्थितो गुणग्रामः, मनोवृत्त्येकरूपा बाह्यवृत्तिः, फलाभिसन्धिनिरपेक्षः परोपकार इति। तथाहि—ककुत्स्थः संग्रामसीमनि वृषमधश्चकार, ऋतुपर्णः कलिद्रुमविचारासक्तिरभूत्, नलो वीरसेनान्यकालीनराज्यपदमपासीत्, हरिश्चन्द्रो गाधितनयनिरूपितविपत्तिम-

---

आत्मानः=अन्तःकरणवृत्तयः, न कलयन्ति न धारयन्ति, अमात्याः प्रधानसचिवाः मालिन्यं कालुष्यं, न कलयन्ति किम्=न धारयन्ति किम्? प्रशस्तेः प्रशस्तायाः फलोत्पत्तेः कारणभूतानि भाग्यापूर्वजन्मकृतसुकृतानि इव न चक्षुरादीनि मित्राणि च, उपरुद्धा वृत्तिः स्वविषयग्रहणप्रवणता येषान्तानि तथाभूतानि कच्चित्। एते खलु धर्माः वक्ष्यमाणाः अप्रशंसनीयमनुष्येभ्यो निवृत्ताः, ये भवादृशेषु कतिपयेष्वेव दृश्यन्ते। के इत्यपेक्षायामाह—तद्यथेति। अधर्मेण पापेन न उपहितो न कृतो मर्मभेदो यस्मिन् तादृशमैश्वर्यं स्वाम्यं सुखानुभवश्च। शेषं स्पष्टम्। मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम्, अत आह मनोवृत्त्येकरूपेत्यादि। फलाऽभिसंधिः=फलाकाङ्क्षा। तथाहि—जगद्विख्यातेषूपमानभूतेषु ककुत्स्थाद्विष्वपि न्यूनता दृश्यते इत्यर्थः। "कृतान्त आसीत्समरो देवानां सह दानवैः। पार्ष्णिग्राहो वृतो वीरो देवैर्दैत्यपराजितैः"—भा० ९-१३॥ "वचनाद्देवदेवस्य विष्णोर्विश्वात्मनः प्रभोः। वाहनत्वे वृतस्तस्य बभूवेन्द्रो महावृषः"—भा० ९-१३॥ प्रकृते तु वृषभमधश्चकारेति निन्दा वाच्या। महेन्द्रमधश्चकारेति स्तुतिस्तिरोहिता। वृषो वृषभो धर्मश्च ८।६।१४। त्वन्तु वृषं धर्ममुपरि करोषीति भावः। "ऋतुपर्णो नलसखो योऽश्वविद्यामयान्नलाद्। दत्त्वाऽक्षहृदयं चास्मै" (नलाय) भा० ९-१७॥ 'त्रिलिङ्गस्तु विभीतकः' 'नाऽक्षस्तुषः कर्षपलो भूताऽऽवासः कलिद्रुमः'—इति अमरः। ऋतुपर्णोऽयुतायुसुतोऽयोध्याधिपः सुदासपिता। कलिद्रुमस्य कलहतरुरूपस्य कलिनिवासभूतस्य अक्षस्य, लक्षणया द्यूतस्य च विविधे चारे प्रचारे खेलने—आसमन्तात्सक्तिरनुरागो यस्य तादृशोऽभूत्—त्वन्तु न तथेति प्रशंसा। नलो वीरसेनसुतः, वीरा सेना यस्मिन्स वीरसेनः कालस्तस्मादन्यकालीनं भिन्नकालिकराज्यमपासीत्, त्वन्तु वीरसेनासमकालीनमिति प्रशंसा, वीरसेनात्स्वपितुरपेक्षया-भिन्नकालिकमिति तिरोहितम्। हरिश्चन्द्रः प्रसिद्धः, गाधितनयो विश्वामित्रः।

र्बभूव, भगीरथोऽसमञ्जसजनिरभूत्, अजो रूपान्तरापन्नहरिणीविरहाद्-
आत्मानमजहात्, कार्तवीर्यः सर्वप्रत्यक्षसहस्रदोष आसीत्, जनकविशेषः
करालतां न पर्यहरत्, अम्बरीषः सुदर्शनेन ब्राह्मणमवहेलितवान्, सगरो
बाहुविरहित एवासीत्, दुष्यन्त उपदानवीतनयोऽभवत्, भरतः शकुन्तलो-
पहितभूतिरभूत्, संवरणस्तपतीश्वर इत्येव प्रथां प्राप, कुरुः संवरणयोग्य-
जन्मैवावर्तिष्ट, सुद्युम्नः स्त्रीत्वमनुभूतवान्, मरुत्तः संवर्तप्रथितसप्ततन्तु-

---

भगीरथः प्रथमदिलीपपुत्रः, असमञ्जसात्स्वप्रपितामहात्परम्परया जनिर्जन्म यस्य
तादृशः सन्-असमञ्जसा = अनुचिता जनिर्यस्य तादृशोऽभूत्, तत्त्वन्तु समञ्जस-
जनिरिति । अजो दशरथपिता, रूपान्तरमिन्दुमतीरूपमापन्ना या हरिणी=सुराङ्गना
एव हरिणी मृगी, तस्या विरहादपि किमुत महिष्याः, आत्मानं शरीरमजहात् ।
'तपतः किलदुश्चरन्तपः हरिरस्मै हरिणीं सुराङ्गना'' मिति कालिदासः-(रघुः८)।
कार्तवीर्यः कृतवीरसुतो माहिष्मती(मांडला)पतिः, सहस्रदोषाः सहस्रभुजा
एव दोषाः अपराधास्तादृशः । जनकविशेषो याज्ञवल्क्यशिष्यः करं बलिम्, आ
ईषल्लातीति करालः तस्य भावः करालता = सैव विकरालता ताम् । अम्बरीषो
नाभागसुतः, सुदर्शनेन भक्तानुग्रहार्थविष्णुना दत्तेन चक्रेण, ब्राह्मणं दुर्वाससम्,
अवहेलितवान् तिरस्कृतवान् । सगरो बाहुकसुतः, बाहुना स्वपित्रा विरहितो
हीन एव आसीदुदपद्यत, गर्भावस्थायामेव बाहोः पञ्चत्वप्राप्तेः । भा० ९ ।
दुःष्यन्तः शकुन्तलाप्रियो हस्तिनापुरेशः, उपदानव्याः स्वमातुस्तनयः पुत्रः, दानवी-
तनय-एवं गर्हितः किमुत उपदानवीतनय इति । भरतो दुष्यन्तसुतः, शकुन्तानां
पक्षिणां लोपेनोपहिता कृता भूतिर्विभूतिर्यस्येति निन्दा, शकुन्तलायाम् उपहिता
जाता भूतिर्जनिर्यस्येति तत्त्वम् । संवरणः कुरुपिता, तपती=सूर्यसुता एव तपती
तापकर्त्री तस्या ईश्वर इत्येवप्रथां प्रसिद्धिं प्राप, न तु कोमलेश्वर इत्यादिकाम्,
'योऽजमीढसुतो ह्यन्यऋक्षः संवरणस्ततः । तपत्यां सूर्यकन्यायां कुरुक्षेत्रपतिः कुरुः'-
भा० ९ । कुरुः संवरणसुतः संवरणयोग्यं गोपनीयं जन्म यस्य, संवरणात् स्वपितु-
र्योग्यं जन्म यस्य तादृशः ।'' सुद्युम्नः = इलाऽपरनामको वैवस्वतमनुसुतः प्रति-
ष्ठानपतिः (झूसी), पुरूरवसः पिता माता च स्त्रीत्वं स्त्रीभावमनुभूतवान् । 'तस्मि-
न्प्रविष्ट एवासौ, सुद्युम्नः परवीरहा । अपश्यत् स्त्रियमात्मानमश्वश्च वडवाँ नृप !'-
भा० ९।१।२६। ''ततः परिणते काले प्रतिष्ठानपतिः प्रभुः । पुरूरवस उत्सृज्य गां
पुत्राय गतो वनम्-'' भा० ९ । मरुत्तः—संवर्ते प्रलये प्रथितः सप्ततन्तुर्मखो
येन तादृशः, संवर्त्तेन मुनिना प्रथितः कारितः सप्ततन्तुर्यस्येति तत्त्वम् ।

रासीत्। धन्येयं धरा, यया चिरान्मनु-मान्धातृ-ययाति-प्रभृतिमहामहीभृतां समानकक्षः पतिरासादितोऽसि, पारिमाण्डल्यभृतोऽपि महत्तरास्ते परमाणवो ये भवदीयकलेवरावयवानां समवायिनः, गुणवत्सु गणनार्हास्ते गुणा ये भवति भजन्त्यनुगुणत्वं सुकृतभाञ्जि-अत्रत्यानां वनदेवतानां नयनानि, यैरतिचिराद्भगीरथ इव देवः स्वविषयतां नीत'—इति विरराम ॥ ७९ ॥

राजा तु विस्मयानन्दाभ्यां युगपदुपरुद्धवृत्तिः तदभ्युपगमात्स्वरूपसिद्धिं मन्यमानेनेव प्रमोदाद्बहिः प्रसर्पता, विज्ञानविशेषेणेवात्यन्तमुज्ज्वलेन रदनेन्दुकौमुदीवृन्देन, रागातिशयवत्तया नीरागस्य महामुनेरग्रतो भयादिव वेपमानेनाधरपुटेन, प्रमदसमासादितगद्गदभावया स्वाशुद्धिनिराकरणव्यग्रभूतयेव भारत्या बभाषे। भगवन्! योगजधर्मसन्निकर्षजन्येन लौकिकसन्निकर्षजन्मना च प्रत्यक्षेण गोचरीकृतपदार्थसार्थतत्त्वानां भवादृशां पुरतो निष्प्रयोजनत्वशक्तिविरहाभ्यामवकाश एव दुर्लभश्चर्मचक्षुषां वचनरचनायाः; भगवतो निभालनेनाऽसुलभतरेण विभावितात्मसंभावनैव केवलं तरलयति। महदासङ्गो हि जनयति क्षुद्रजनस्यापि आत्मसंयोग इव मनसो ज्ञानवत्त्वा-

---

राजन्वती धराप्रशंसामुखेन धराऽधिपं सम्भावयति—धन्येयमिति । धन्या पुण्यवती, प्रशंसनीयेत्यर्थः । इयं सूर्योदयास्तावच्छिन्ना तर्जनी भ्रामणनिर्देश्या, **धरा**=सर्वभूतनिवासभूता धरित्री, यया धरया, चिरात् बहुकालात्, मनुर्वैवस्वतः साहचर्यात्, मान्धाता युवनाश्वसुतः, ययातिर्यदुपिता, समानकक्षः सदृशः ये परमाणवः भावत्कशरीरप्रतीकानां समवायिकारणभूतास्तेऽणुपरिमाणभाजोऽपि महान्तो महत्त्ववन्त इति विशेषः, प्रशंसनीया इति परिहारः । परितः सर्वतोमण्डलं वर्तुलं न तु त्रिकोणं चतुरस्रं वा निरवयवत्वात् परमाणुः, तस्य भावः पारिमाण्डल्यं परमाणुपरिमाणम्। शेषं स्पष्टम्। इति = इत्युक्त्वा विरराम—यो जगाद स इति प्रतीयते ॥ ७९ ॥

**राजा तु—भारत्या बभाषे**—इत्यन्वयः। वृत्तिरन्तःकरणव्यापारः। अभ्युपगमः = स्वीकारः, समादरः । प्रमदो हर्षः । गद्गदभावो गद्गदिका । बभाषे—इत्याकाङ्क्षायामाह-भगवन्नित्यादि। सन्निकर्षः=विषयेन्द्रियसंबन्धः, स द्विविधः-लौकिको योगजश्चेति । **गोचरीकृतं** साक्षात्कृतं पदार्थसार्थानां तत्त्वं यैस्तेषां; **निभालनेन** दर्शनेन **तरलं** चपलं करोति तरलयति, वचनरचनायै—इति विभक्तिविपरिणामेनान्वयः । समर्थयति-**महदासंग** इत्यादिना । आत्मा मनसा युज्यते, मन इन्द्रियेण, इन्द्रियं विषयेण, ततः प्रत्यक्षमिति प्रक्रिया ज्ञानजननस्ये-

भिमानम्;एवम्भूते च विषये किं निवेदनीयम्, इदं हि अनुपपादितस्पर्शानर्हत्व-मात्मजजन्मा, अशङ्कनीयो निध्यागमः, अपरिक्षतावयवो युद्धविजयः, इतरानिरूपितमैश्वर्यम्,उत्पन्नमात्रोपभोग्यं फलं,जाड्यसन्तापो भयरहितः प्रकाशः, अनाविर्भूतजीमूतं वर्षम्,अमथितपाथोनाथं पीयूषं, यदस्माद्दशैर्भगवतश्चरण-द्वयसाक्षात्करणं, तत्राप्येवंविधानामाम्नायानामिव प्रामाण्यानपेतानां, मन्दाकिनीप्रथमप्रवाहाणामिव मर्त्यलोकदुर्लभानां, राजरहस्यानामिव मन्त्रस्थानाविर्भावभाजां, प्रामाण्यानामिवानाश्रितदोषाणां, परममहत्त्वभृतामपि सद्-

---

त्याह—आत्मेत्यादि । आत्मा महान्, मुनिरपि महान्, नृपः क्षुद्रः, मनः क्षुद्रम्—अतः साम्यम् । यदस्माद्दशैर्भगवतश्चरणद्वयसाक्षात्कारकरणं तदिदं हि—इत्यन्वयः । अनाप्तपुण्योपचयैर्दुरापा—इत्यादिन्यायेनाह—न उपपादितं स्पर्शाऽनर्हत्वं यस्मिन् तादृशं पुत्रजन्म, जननाशौचवत्त्वात्स्पर्शाऽनर्हम् । चरणद्वयदर्शनन्तु स्पर्शार्हं 'हरत्यघ'मिति न्यायात् । अशङ्कनीयः=अतर्कनीयः, निध्यागमः शेवधिलाभः । फलमाम्रादिकमुत्पन्नमात्रमुपभोक्तुं योग्यं न भवति । जाड्यसहितः प्रकाशो, जलीयश्चन्द्रिकादिः । सन्तापसहितः प्रकाशः सौरादिस्तैजसः, तदुभयरहितश्चरणद्वयसाक्षात्काररूपः प्रकाशः । जीवनं मुञ्चतीति जीमूतो जलमुक्, वृष्टिर्वर्षम् । पाथसां जलानां नाथः सागरः । तत्राऽपि—एवंविधानां भाषितानां भाजनत्वन्तदपि पूर्वोक्तविशेषणविशिष्टमित्यर्थः । भाषितानि भावोपमया विशिनष्टि—आम्नाया वेदाः—यथार्थप्रतिपादकत्वेन प्रमाणम्, भ्रमप्रमादादिराहित्येनाऽबाधितन्तत्, अत आम्नाया अबाधितयथार्थप्रतिपादकतया अपेता अपगता रहिता न भवन्ति—इति प्रामाण्याऽनपेतास्तेषामिव भाषितानाम्—इत्यादिरीत्या व्याख्येयम् । सत्यलोकस्थाजलीयोपादनकारणात्पौराणिकरीत्या धातुः कमण्डलुजलात् प्रवृत्ताया वियद्गङ्गायाः प्रथमाः प्रवाहाः सत्यलोके एवेति मर्त्यलोकदुर्लभाः, तेषामिव भाषितानाम् । राज्ञां रहस्यानि स्वराष्ट्रपरराष्ट्रचिन्तनानि, रहसि गिरिपृष्ठादौ मन्त्रस्थाने—आविर्भवन्ति प्रकाशन्ते तेषामिव मन्त्रस्थाने मन्त्रद्रष्टमुनिहृदयाकाशे परारूपेण-प्रकाशशीलानां भाषितानाम्=पश्यन्तीमध्यमावैखरी-क्रमेण व्यक्तीभूतानां वचनानाम्,—प्रत्यक्षानुमानशब्दादिनिष्ठप्रामाण्यानि भ्रमप्रमादादिदोषैरनाश्रितानि तथैव मुनिभाषितानि । विरोधाभासेन संकिरति—परममहत्त्वमिति । परमहत्त्ववन्तः कालाकाशाऽऽत्मानः, सत्सु द्रव्यगुणकर्मसु वृत्तिमाधेयतां भजन्तीति विरोधः, व्यापकत्वेन तेषामाधारत्वात् पदार्थमात्रस्य, परमञ्च यन्महत्त्वं परोपकारप्रतिपादकत्वं तद्भजन्तीति तेषाम्, अपि च सति सुधियि गृत्समदे वृत्तिं स्वाऽवच्छिन्नहृदया-

वृत्तिभाजाम्, अर्थानुगतानामप्यतदिच्छामूलकानाम्, अन्वयानुभावकानामपि निराकाङ्क्षाणाम्, आसत्तिमतामपि गिरां दूरे वर्तमानानां, योग्यानामपि विवरीतुमशक्यानां, प्रसादपरिष्कृतानामधस्कृतसुधामधुरभावानां—भाषितानां भाजनत्वम्। तथाहि-प्रणयप्रकाशनमात्रमेतदिति विषयसद्भावसापेक्षं तदभिनयमात्रमिति प्रयोजनाभावपराहतमन्यस्मिन्नभिहितेऽन्यदभिहितमिति इन्द्रियजयिन्यनाशङ्कनीयम्, निष्प्रयोजनमेवोक्तमिति वशीकृतमनस्यनुद्भावनीयं, निरभिधेयमेव व्याहृतमिति भूतदयाभाजिविपरीतं, यथाश्रुततात्पर्यकमेवेति स्वीयतादृग्गुणाभावप्रत्यक्षबाधितमथैवान्यथागृहीतमिति अवधानाधिक्यबा-

---

काशनिष्ठाऽऽधारता निरूपिताधेयताम् भजन्तीति तेषाम्। अर्थं वाच्यमनुगतान्यनुसृतानि तेषामपि न तस्यार्थस्येच्छा तन्मूलकानामिति विरोधः, तदर्थलिप्सारहितानामिति परिहारः। राजा मुनिं पश्यतीत्यादौ साकाङ्क्षाणामेव क्रियाकारकवाचकपदात्मकानां भाषितानां (वाक्यानाम्)। अन्वयेन = परस्परसंबन्धेन, अनुभावकत्वं बोधजनकत्वम्—निराकाङ्क्षाणामिति विरोधः, मुनेस्तदर्थवितृष्णत्वेन परिहारः। आसत्तिर्योग्यताऽऽकाङ्क्षा च वाक्यार्थज्ञाने सहकारिकारणानि। आसत्तिः सान्निध्यम्। गिरां दूरे-इति विरोधः, वर्णयितुमशक्यानामिति परिहारः। योग्यानां भाषितानां विवरणं कर्तुं शक्यमेवोत—अशक्यानामिति विरोधः, मुनिवचनस्य गहनार्थत्वेन परिहारः। प्रसादो वाक्यगुणः झटित्यर्थबोधकरूपः, तेन परिष्कृतानामतएवाधःकृतसुधाया अमृतस्य मधुरभावो माधुर्यं यैस्तेषाम्-इति व्यतिरेकः—इति संकरस्त्रयाणाम्। विवरीतुमशक्यानामित्युक्तन्तद्दर्शयति—तथाहीति। प्रणयेत्यादिवाक्यानि काकुवन्ति। इति शब्दः सर्वत्रोक्तार्थव्यावर्तकः। प्रणयस्य प्रकाशकानि यानि वाक्यानि चाटूनि तानि, विषयस्य प्रतिपाद्यस्य विद्यमानतां नाऽपेक्षन्ते, प्रेम्णा मिथ्याऽभिकत्थनरूपत्वात्। एतन्मुनिवचनम् प्रणयप्रकाशनमात्रमिति चेत् 'न, यतः, तत विषयसद्भावसापेक्षम्—इत्यादिरीत्या व्याख्येयानि वाक्यानि। अभिनयोऽत्र वाचिकः, पराहतं बाधितम्। इन्द्रियजयिनि जितेन्द्रिये, अनाशङ्कनीयम् यथार्थवादित्वात्। वशीकृतमनांसि न निष्प्रयोजनं वदन्ति। भूतदयाभाजः साऽभिधेयमेव वदन्ति। निष्कारणपरदुःखप्रहाणेच्छा दया। यथाश्रुततात्पर्यकमेव (गृत्समदवचनं) भवद्वचनमिति प्रतिपादनं—स्वीय आत्मीयो राजकीयः, तादृग्गुणानामेव शब्दप्रतिपाद्यनिर्धारकत्वादिगुणानामभावस्य प्रत्यक्षं तेन बाधितं व्याहतम्। अन्यथाग्रहणं, चित्तस्य व्यग्रत्वे भवति, अवधानस्य चित्तैकाग्रत्वस्याधिक्येन बाधितम्। तद्वत्ताबुद्धिं प्रति तदभाववत्ताबुद्धिः

धितमेतादृशफलहेतुरदृष्टमस्मासु नास्तीति अनुमानं भगवद्वेक्षणहेतुभूता-दृष्टानुमानेन बाधितं; तदेवमपरिच्छेदवदेव हृदयं केवलमगाधसुधाह्रदवीचि-निचयावगाहनमेव करोति, न मनागपि क्वचिदन्यत्र प्रभवतीति मुद्रितवाचि पूर्ववदेवावतिष्ठमाने राजनि, बहुतरमनेहसं सन्निहितत्वमसहमान इवापहता-हङ्कारो महामुनेस्तस्य तेजसा ब्राह्मेण महसां महिम्ना मिहिरः समारुरोह चरमहरिन्महीधरं, जाततत्किरणप्राचुर्या च सन्ध्याऽददर्शदरुणत्वं, दिवसं दिनकरकराभितप्ताया दिवःस्वेदबिन्दव इव तारकाः प्रादुरभवन्, पुरुहूत-विरहासहनायाः पुलोमजाया वेदनानिवेदनार्था तमालदलपत्त्रिकेव घनसार-स्वरसलिखिताक्षरप्राया पूर्वस्यां ककुभि प्रादुर्बभूव तारकादन्तुरान्तरा तिमिरलेखा ॥८०॥

अथ सान्धिवेलक्रियानुरोधादुत्तिष्ठमाने भगवति गृत्समदे, कृतप्रणामौ पुरुहूतमहीभृतौ समं चित्रभानुनाम्ना तपोनिधिनाम्ना तदन्तेवासिना निवे-दितस्य कस्यचिदाश्रमतरोर्मूले विहितयथानुरूपकर्माणौ, तन्निसृष्टेन वन्येन फलमूलादिना संपन्नाभिहारौ पूर्ववृत्ताभिः कथाभिर्गोष्ठीमनुबध्नन्तौ पीयूष-मयीमिव ताराविभावरीमतिवाहयाम्बभूवतुः ॥८१॥

---

प्रतिबन्धिका। एतादृशं मुनिदर्शनतद्भाषितभाजनत्वरूपं यत्फलं तद्धेतुस्तज्जनकं यददृष्टं पुण्यं तदस्मासु राजसु नास्ति। (वयं राजानः) मुनिवचनश्रवण-हेतुपुण्याऽभाववन्तः, रजोगुणप्रधानत्वात्—इत्याकारकमनुमानम्—वयं मुनिवचनश्र-वणहेतुपुण्यवन्तः, पुण्यलभ्यभगवदवेक्षणवत्त्वात्—इत्याकारकेण अनुमानेन बाधितम्, साध्याऽभावसाधकस्य हेत्वन्तरस्य सत्त्वात्। उपसंहरति तदेवमिति। अपरि-च्छेदवदनिश्चयवद्। स्पष्टमन्यत्। अवगाहनमालोडनं करोति न मनागपीति स्प-ष्टम्। इति मुद्रितवाचि राजनि मिहिरश्चरमहरिन्महीधरं समारुरोह-सन्ध्या च अस्तत्वमददर्शत्, (ण्यन्ताल्लुङि रूपम्) तारकाः प्रादुरभू-वन्, तिमिरलेखा प्रादुर्बभूव। तमालस्तापिच्छः बिल्वमध्यपत्रसदृशपत्रवान् तरुः। 'तमालताली वनराजिनीला' इति कालिदासः। अस्माभिस्तु जगदीशयात्रायां साक्षिगोपालचत्वरे दृष्टः। घनसारस्वरसः कर्पूररसः॥ ८०॥

अथ पुरुहूतमहीभृतौ समं चित्रभानुना विभावरीमतिवाहयाम्बभू-वतुः। सान्धिवेलक्रिया=सन्ध्योपासनाग्निहोत्रादिका। ताराःसहितां विभावरीम्—शाकपार्थिवादिः॥

वन्दन—सँल्लापमयं कुसुमं मन्दारमञ्जर्याः।
षोडशराजवराटे समर्प्यते राजचक्राय॥ ८१॥

अन्येद्युर्वैजयन्तजटितारुणमणिप्रभाप्रवाह इव प्रादुर्भावमुपेयुषि क्षपापचयोपचितपाटवे पाटलिम्नि बिन्दुसरोवीचिनिचयान्तरालावगाहनसञ्जातजडिमनि चक्रवाकमिथुनमूर्च्छापनायिनि नलिनदलविबोधनविबुधभावपरिचयार्थमिव परामृष्टपुरन्दरलोचनसहस्रे वहति वैभातिके गन्धवहे, भाविहरिसन्निधानभयादिव व्योमविपिनादपसरति ऋक्षसमुदाये, तिमिरकासरकुले च हिमगिरिगुहागृहोदरगृह्यमाणे प्रसरति स्वाध्यायध्वनौ, जिघत्साप्रसारितजिह्वेषु क्षीरकण्ठेष्विव प्रबुध्यमानेषूषर्बुधेषु, बद्धसमाधौ भगवति गृत्समदे घूकनयनदुर्भगे प्रादुर्भवति भुवनचक्षुषि, मुषितनिमेषेषून्मिषत्सु कुमुदेषु, प्रसरत्यातपे, कृतयथोचितक्रियेण देवेन राजशेखरेण विज्ञाततदन्तर्वृत्तिदिव्यतत्तद्देशावलोकनाकाङ्क्षेण वासवैकवाक्यतया वत्साननुपरोधयँस्तपोधनाननुल्लङ्घयँस्तदभिलाषाननुपपन्नन्नाश्रमसम्बन्धिनो वनचराननोकहाँश्चाप्रमाद्यन्संभाव्यमानासत्तिकेभ्यः क्रूरस्वभावेभ्यो दिव्यसत्त्वेभ्यो विहाय, साहसं, चापलं चेतो नातिदूरे कृतार्थय कौतूहलमित्यनुज्ञातः कुमारश्चित्रभानुः शिरसि निधाय शेखरमिव तन्निदेशं ततो देशादेक एव निरगमत् ॥ ८२ ॥

---

प्रधानकाव्यनेतृचरितमुपक्षिपति—अन्येद्युरित्यादिना। अन्येद्युः क्षपापचयोपचितपाटवे पाटलिम्नि प्रादुर्भावमुपेयुषि वैभातिके गन्धवहे वहति सति,ऋक्षसमुदाये व्योमविपिनादपसरति सति,...भुवनचक्षुषि प्रादुर्भवति सति प्रसरत्यातपे—देवेन राजशेखरेण; वासवैकवाक्यतया—इतो नातिदूरे कृतार्थय कौतूहलमित्यनुज्ञातः कुमारश्चित्रभानुः शिरसि निधाय शेखरमिव तन्निदेशं ततो देशादेक एव निरगमत्। चक्रवाकमिथुनमूर्च्छा रात्रौ वियोगजन्या। हरेः सूर्यस्य सन्निधानमेव हरेः सिंहस्य सन्निधानम्, ऋक्षाणां नक्षत्राणां समुदाय एव ऋक्षाणां भल्लूकानां समुदायः, तिमिरमेव कासरकुलं महिषकुलं, क्षीरकण्ठेषु स्तनन्धयेषु, उषर्बुधेषु वह्निषु। भुवनचक्षुषि सूर्ये। कुमारस्य भ्रमणाऽभिलाषद्योतनार्थं—विज्ञातेत्यादि विशेषणम्। विहाय चापलमित्यस्य विवरणम्—वत्साननुपरोधयन्नित्यादि। अनोकहाँश्च—अनुपघ्नन्—इत्यन्वयः। क्रूरस्वभावेभ्यो दिव्यसत्त्वेभ्यः अप्रमाद्यन्, साहसं चापलञ्च विहाय—इतो नातिदूरे कौतूहलं कृतार्थय इत्यन्वयः। "पूर्वदेशविभागानुकूलो व्यापारो निर्गच्छतेरर्थः, अतो विभागाऽवधेरपादानत्वम्, धातोरकर्मकत्वमर्थान्तरवृत्तित्वात्, उत्तरदेशसंयोगो हि गमेरर्थः ॥८२॥

अतिक्रम्य च तपोवनं बकुलकुलाकुलेन,तमालमालामलिनेन,कर्णिकारसुवर्णाभरणकृतवर्णकेन,स्फुटकुटजजटिलेन,गन्धफलीसम्बन्धकृतप्रदीपानुसन्धानेन,वञ्जुलपुञ्जप्रसञ्जितमञ्जुलभावेन,सन्ततहिन्तालसन्तानेन,वलीमुखकुलकवलीक्रियमाणमहोत्तालभूतलपतिततालफलशकलेन, विकसितकेतकीपरागानुक्रियमाणकर्पूररेणुना, मधुकरातिलङ्घ्यमानकुसुमिततिलकेन, लवलीलताङ्गीकृतलवङ्गतरुसङ्गेन, कुरवकानुकृतकुरुविन्दाङ्कुरेण, गोमेदकान्तिकण्टकायमानकुरण्टकेन, कोकिलकुलकुहरितझाङ्कारितसहकारेण,सिन्दुवारस्तबकविहितमौक्तिकसंस्तवेन, कपिकपिलकपित्थकेन, निर्यज्जन्तुसन्तानारब्ध-

---

अतिक्रम्य च तपोवनं बकुलकुलाकुलेनेत्यादि- बहुविशेषणविशिष्टेन **वनाध्वना** कतिपयनल्वपरिच्छिन्नमध्वानं गत्वा **पुरतः** केतकीपरागादि—तृतीयाबहुवचनान्तविशेषणविशिष्टाभिः कनकबालुकाभिः परिष्कृततीरम्–तमस्विनीभिरित्यादिश्यामत्वबोधकविशेषणविशिष्टाभिस्तमालवीथीभिः—ग्रथितपर्यन्तम् , अथ च प्रतिबिम्बच्छलेनेत्यादिवाक्यप्रतिपादितकर्मत्वविशेषणविशिष्टम्—अन्वर्थसंज्ञं बिन्दुसरोऽभिधानम् महापद्माकरमद्राक्षीत्—संक्षेपान्वयः। तमालस्तापिच्छः श्यामवर्णः। **कर्णिकार** आरग्वधः सुवर्णवर्णकुसुमः( अमलतास )। **कुटजो** गिरिमल्लिका, 'कुरैया' निविडवनो भवति। **गन्धफली** पीतचम्पककोरकः प्रियङ्गुश्च। 'प्रियङ्गौ स्याद् गन्धफली चम्पकस्य च कोरके। वञ्जुलः पुंसि तिनिशे वेतसाऽशोकयोरपि' प्रकृते वेतसः पुञ्जप्रयोगात्। सन्तता निरन्तराः हीनास्ताला तृणराजाः यस्मिन्, हिन्तालशब्दः पृषोदरादिः। 'तालः', हिन्तालः, नारिकेलः, पूगः, खर्जूरः, केतकी, ताली=वनखर्जूरी–इत्यादयस्तृणद्रुमा इत्युच्यन्ते। वलीमुखानां वानराणां कुलैः कवलीक्रियमाणानि महोत्तालानि=महान्ति भूतलपतितानि यानि तालफलानि तेषां शकलानि यस्मिन् तेन **वनाध्वना**। एवं सर्वत्रान्वयो बोध्यः। विकसितकेतकीपरागेण—अनुक्रियमाणः कर्पूरः परागो यस्मिन् तेन। **मधुकराः** भ्रमराः। तिलकः क्षुरकः श्रीमान्—इति वनौषधिः। अक्षदंशक्षमञ्चैव वातलं **लवलीफलम्**–इति चरकः सू० २७। लवङ्गं देवकुसुमं प्रसिद्धम्। **कुरवकः** पीतोऽम्लानः, पीता झिण्टी च। **कुरुविन्दो** मुस्ता, कुरुविन्दं पीतरत्नम्। "कुरुविन्दं रत्नभेदे मुस्ता कुल्माषयोः स्त्रिया'मिति मेदिनी। शोणरत्नं गोमेदमित्युच्यते, शोणोऽम्लानः, शोणा झिण्टी च कुरण्टक–इत्युच्यते। कोकिलानां कुलैः समूहैः कुहरिता गह्वरीकृता झङ्कारिताः सहकाराः प्रशस्तसौरभा आम्रा यस्मिन्। **सिन्दुवारो** निर्गुण्डी। संस्तवः स्यात्परिचयः। **कपयो** वानराः। **कपित्थो** दधित्थः 'कैथ'।

कलकलाडम्बरस्फुटदुदुम्बरफलेन, मनुनेव दर्शितेक्ष्वाकुणा, ग्रीष्मेणेवापोद्-कोल्लासेन, रामेणेवाविर्भूतकुशेन, प्रसन्नेनेव दर्शिताभयेन, दात्रेव विशदि-तानेकगर्मुता, समुद्रेणेव प्रकाशितविष्वक्सेनप्रियेण, रघुणेव धृताजमोदेन, वृन्दावनेनेवारिष्टगन्धन्यक्कृतसुरभिणा, सद्वृत्तेनेवाऽनार्यतिक्तोदयवता, कलि-कालेनेवाऽऽकलितवृद्धदारकेण, सिन्धुतीरेणेव द्रविडालङ्कृतेन, भिक्षुकेणेव दृष्टसमुद्रान्तेन, युधिष्ठिरेण तीर्थप्रयाणेनेव महीयमानलोमशेन, उदधिकच्छे-नेव दृश्यमानविद्रुमलतेन, नगरेणेव हट्टविलासिनीशालिना, स्वर्गेणेव प्रेक्ष-

---

"कपित्थे स्युर्दधित्थग्राहिमन्मथाः" । निर्यन् निर्गच्छन् यो जन्तुसंतानस्तेनारब्धं यत्सकलाऽऽडम्बरन्तेन स्फुटन्ति—उदुम्बरफलानि यस्मिन् तेन—वनाध्वना । मालोपमया विशिनष्टि वनाध्वानम्—**मनुनेवे**त्यादिभिः । वनाध्वा—उपमेयम्, मनुरुपमानम् , दर्शितेक्ष्वाकुत्वं शाब्दं साधर्म्यम् । वैवस्वतमनुमधिकृत्य भागवते नवमे—"श्रद्धायां जनयामास दशपुत्रान्स आत्मवान्। इक्ष्वाकुनृगशर्यातिदिष्टधृष्टकरू-पकान् । नरिष्यान्तंपृषध्रञ्च नभगञ्च कविं विभु"रिति । तत्र श्रद्धा मनोः पत्नी इति च। 'इक्ष्वाकुः कटुतुम्बी स्या'दित्यमरः। ग्रीष्म ऊष्मकः। 'निदाघ ऊष्णोपगम' इत्यमरः। अपोदका=उपोदका (पोई) । **कुशो** रामसुतो दर्भश्च । दर्शितमभयं येन संतुष्टेन, तेनेव दर्शिता अभया हरीतकी येन वनेन । 'नलादयस्तृणं **गर्मुच्छ्**यामाकप्रमुखा अपि, अ० व० १६५। गर्मुत् तृणधान्यभेदः, कुशस्यापि तृणत्वाद् दाता संकल्पार्थं विशदिताऽनेकगर्मुत्, वनमपि तथेति साम्यम्। विष्वक्सेनप्रिया हरिप्रिया, वाराही-कन्दश्च । 'विष्वक्सेनप्रिया गृष्टिर्वाराही बदरेति'चेत्यमरः। **गृष्टिः** 'गीठी' त्युच्यते । **अजो** रघुसुतः, मोदो हर्षः, अजमोदा=उग्रगन्धा। 'अरिष्टः फेनिलः समौ' "रीठी, रीठा"। **अरिष्टो** वृषभासुरः भा. १० अ. ३८। सुरभिर्वसन्तः सल्लकी च, अन्यत्र गावः। अनार्येषु कटूदयवान् सद्वृत्तः पुरुषो भवति, वनन्तु किराततिक्तवान्। 'किराततिक्तो भूनिम्बोऽनार्यतिक्त'श्चेत्यमरः। 'स्याद्वृक्षगन्धा छगलान्त्र्यावेगी **वृद्धदारकः**'—इत्य-मरः। वृद्धानां दारको विदारकः कलिः द्रविडो देशः। 'कर्चूरको द्राविडकः काल्पको वेधमुख्यकः' इत्यमरः (कचूर)। भिक्षुः पर्यटन् दृष्टसमुद्रान्तः, वनन्तु दृष्टा **समुद्रा-न्ता**=स्पृक्का, यवासः कार्पासी च यस्मिँस्तादृशस्तेन । लोमशः कल्पान्तजीवी मुनिः, जटामांसी च **लोमशा**। कच्छो जलप्रायो देशः । विद्रुमलता=प्रवाललता, 'शुषिरा' औषधिश्च । 'शुषिरा विद्रुमलता कपोताङ्घ्रिर्नटी नली'त्यमरः । इह **विलासिनी** वाराङ्गना अञ्जनकेशी च । **रम्भा** अप्सरोभेदः कदली च । मुद्रया मुकुलीभावेन सहितः समुद्रः, तादृशः अन्तःप्रान्तभागो यस्याः सा समुद्रान्ता ।

माणरम्भेण, गजराजेनेव धृतघण्टारवेण, नास्तिकेनेव ऋष्यप्रोक्तानुयायिना, मदालसासन्तानेनेव सालर्केण, स्वर्णकारेणेव विरचितरुचकविन्यासेन, द्यूतगृहेणेव संगतकितवेन, कामुकेनेव सहचरीसंयुक्तेन, गोक्षुरककण्टकविद्धचरणमर्कटचेष्टास्मयमानविद्याधरेण, वनदेवतागीताकर्णनस्तिमितकुरङ्गकेण वनाध्वना–कतिपयनल्वपरिच्छिन्नमध्वानं गत्वा, पुरतः केतकीकुञ्जपरागसिकताभी रजतशर्कराभिरिव करम्बिताभिः कोकमिथुनविरहदहनकणिकाभिरिव भूतिगर्भाभिर्दिने पृथग्भूयावस्थिताभिः, समुद्रभ्रमागताभिरिव वडवानलज्वालहेतिलेखाभिः, कश्मीरजरजोराजिभिरिव सुरमिथुनक्रीडार्थमास्तृताभिः, प्राभातिकभास्वत्प्रभाभिरिव कमलवनानुरागेण स्थिरीभूताभिर्विद्याधराभिसारिकाचरणालक्तकलेखाभिरिव लग्नाभिप्रवालपङ्क्तिभिरिव ह्रदसमुद्राद्बहिर्निर्गताभिरशोककलिकाभिरिव तीरतरुपतिताभिः कलहंसकुलविभ्रमविधायिनीभिः, कमलकिञ्जल्कराजिभिरिव मन्दमारुतविधूयमानाभिः, कनकबालुकाभिः परिष्कृततीरं,–तमस्विनीभिरिव तिमिरप्रायाभिः,बलाहकावलिभिरिव चपलान्तर्भावयोग्याभिः, तमोवल्लिभिरिवाऽपिहितदिगन्तराभिः, धूमावलिभिरिव दर्शनाननुरूपाभिः, राजपट्टभङ्गिभिरिव वनदेवतानुरूपाभिः, प्रलयान्धकाराऽवयवालिभिरिवानासादिततरणितेजोऽभिभवाभिः, विधुन्तु-

---

घण्टारवो घण्टाध्वनिः, शतपुष्पी च । ऋष्यप्रोक्ता शतावरी । ऋष्यो नास्तिकाचार्यः । मदालसा=मार्कण्डेयपुराणप्रसिद्धा राज्ञी, तस्याः कनिष्ठपुत्रोऽलर्कनामा शुक्लार्कश्च ।'शुक्लेऽलर्कप्रतापसौ' वनौषधिष्वमरः।'रुचको बीजपूरे स्यान्निष्के दन्तकपोतयोः' । भूषभेदः स्वर्णकारे, बीजपूरो वने (बिजौरा), कितवो धूर्तो धत्तूरश्च । सहचरी कामिनी पीतवर्णा झिण्टी च, गोक्षुरः = 'गोखरू–इति प्रसिद्धः, अस्य लता भूमौ खचिता इव विस्तीर्णा त्रिकण्टकफलवती न दृश्यते, झटिति न्यस्तविद्धचरणस्य चेष्टाविस्मयकारिणो भवत्येव । विद्याधरा वैमानिका देवयोनयः। कुरङ्गा हरिणाः, ( अनुकम्पायां कन् )–एवं विशेषणविशिष्टेन वनमार्गेण कतिपयनल्वपरिमितमध्वानं गत्वा लङ्घयित्वा । 'चतुःशतहस्तपरिमितमार्गो नल्व इत्युच्यते । पुरतो महापद्माकरमद्राक्षीदिति सम्बन्धः । करम्बिताभिः कनकबालुकाभिरिति संबन्धः। कोकश्चक्रवाकः । कणा एव कणिकाः । कश्मीरजः कुङ्कुमः। अलक्तकश्चरणरागो लाक्षादिभिः–कृतः। कलहंसाः कादम्बाः । तमस्विनीभिरिव तिमिरप्रायाभिस्तमालततिभिरिति संबन्धः । चपला विद्युत्, अभिसारिका च । राजपट्टो राजशासनपत्रम्–मसी कृष्णवर्णम्। विधुन्तुदरस-

दरसनाभिरिव निरुद्धभास्वत्करप्रसराभिः, अज्ञानशक्तिभिरिवावरणयोग्याभिस्तमालवीथीभिर्ग्रथितपर्यन्तं, प्रतिबिम्बच्छलेन तलभागगवेषणार्थिभिरिव वेतसतरुभिरुपशोभितोपान्तम्, अनासादिताधोभागेन महावराहेण वराहान्तरापदेशाद्विहितकायव्यूहेनेवावगाह्यमानं, स्नानार्द्रकलेवरावलग्नकैतकीधूलिधवलैर्गन्धसिन्धुरैरदभ्रैरावतमिव लक्ष्यमाणं, पङ्कसङ्करद्विगुणितकायं, कालिमशालिभिः काननकाशरकुलैः कलितकालकूटं, पुटकिनीः पलाशपुटपातिनीः पयोविप्रुषो मुक्ता इवासंख्या दधानं, कोकनदच्छदच्छायविच्छुरिताभिश्च ताभिरेव विद्रुमावलीभिरिवावलीढं, वारिविहारिभिर्मुखमात्रदर्शनीयैर्मयुतरणैरुच्चैःश्रवसामयुतसिद्धमयुतमिव बिभ्राणं, महातापसान्वयकुञ्जरकुम्भसम्भवमदप्रवाहानिवैकैकेन कल्लोलेन प्रक्षालयन्तं, समुदयमिव सर्वेषां समुद्राणामेककार्यमिव यावताञ्जलावयवानां पयोधिपानव्यसनविस्मारकं, द्वितीयमिव निवासास्पदं वरुणस्य, उदन्वदाचमनाभिमानखण्डनोपायमिवागस्त्यस्य, साधुहृदयमिव स्वच्छभावस्य, समाहारमिव शीततायाः, प्रत्यादेशमिव निदाघदाहानाम्, अनवरतमुच्चरता फेनपटलेनाम्भोनिधीनां गाम्भीर्यमिवोपहसन्तं, सन्ततमुत्पतद्भिरत्युन्नतैस्तरङ्गकोणाघातैर्जलधिविजयोत्सवदुन्दुभिमिव वादयन्तं, दुर्योधनमिव श्रुतानेकशकुनिकथं, भीष्ममिव शिखण्डिव्यवहितसितपत्त्रोपयुज्यमानासंख्यपृषत्कं, द्रोणमिव प्रभञ्जनोद्भूतपार्ष-

नाभिः=राहुसदृशीभिः। आवरणमाच्छादनम्। वेतसतरुभिः स्थलवेतसैः। वराहयूथवत्त्वं प्रतिपादयति—अनासादितेत्यादिना। महावराहो वराहावतारः। अपदेशो व्याजः। यावतां सर्वेषाम्। अगस्त्यस्य—वृत्तित्वं षष्ठ्यर्थः, तन्निरूपकश्च संबन्धः समवायः, तथा च अगस्त्यसमवेतसमुद्राचमनविषयकाऽभिमाननिरासोपायमिवेत्यर्थः। कर्तरि षष्ठी, संबन्धसामान्ये वा। स्वच्छभावः साधुहृदयमहापद्माकरयोः साधारणो धर्मः। इवशब्दः सादृश्यवाचकः। तथा च साधुहृदयनिष्ठस्वच्छत्वसदृशस्वच्छताविशिष्टपद्माकरकर्मकदर्शनानुकूलव्यापारवान्—कुमारः इतिशाब्दबोधो नैयायिकमते। समाहारः समूहः। प्रत्यादेशः प्रत्याख्यानम्। उच्चरता=उद्गच्छता। फेनपटलेन हिण्डीरसमूहेन। कोणाघातैर्ध्वनिसंकरैः। शकुनिर्गान्धाराधीशो दुर्योधनमातुलोऽक्षधूर्त्तः पाण्डवद्वेषी, पक्षिणश्च शकुनयः। शिखण्डी क्लीबो महाभारते प्रसिद्धः, शिखण्डिना व्यवहितः सान्तरालः सितपत्त्रोऽर्जुनस्तेनोपयुज्यमाना त्यज्यमाना, असंख्याः पृषत्का बाणा यस्मिन् तादृशो भीष्मः। तथा शिखण्डिभिर्मयूरैर्व्यवहिता ये सितातपत्रा हंसास्तैरुपयुज्यमानानि

तप्रहारस्पृश्यमानभारद्वाजं, भीममिवागणिताकर्ण्यमानबककोलाहलं, कर्ण मिवोत्कूजितकालपृष्ठं, निदाघदिनमिव दृश्यमानमल्लिकोल्लासं, वर्षासमयमिव कादम्बप्रसवकरम्बितान्तरं, मैनाकमिवाकलितक्रौञ्चं, समरमिव सञ्जात-शरारिसंयोगं, ग्रीष्ममार्गमिवोत्क्रोशमार्गगामिगृह्यमाणोपवनशालं, कालिका-पुराणमिवोपक्रम्यमाणकमठवार्तं, नदीप्रवाहमिव कर्कटसङ्क्रान्तिजनित-रजोयोगं, उपरक्तचन्द्रमसमिवान्वितश्यामावयवपुष्कराह्वासङ्गयुक्तं, घन-

स्वीक्रियमाणानि, असंख्यानि पृषन्ति बिन्दवो यस्मिन् महापद्माकरे । प्रभञ्जनेन महावातेन लक्षणया तत्सुतेन भीमसेनेन—उद्भूता ये पार्षतप्रहारा बाणप्रहारा-स्तैः स्पृश्यमानो भारद्वाजः प्रपितामहो यस्य, ( लोकोक्तिरनुसृता ) 'द्रोणो भार-द्वाजगोत्रजः तादृशं द्रोणमिव । प्रभञ्जनेनोद्भूताः कम्पिता ये पार्षतप्रहारास्तैः स्पृ-श्यमाना भारद्वाजा व्याघ्राटपक्षिणो यस्मिन्पद्माकरे । बको भीमहतोऽसुरः, बकपक्षी च । कालपृष्ठं=कर्णधनुः, कालपृष्ठः कङ्कपक्षी । मल्लिका ( बेला ) । तृणशून्यन्तु मल्लिका । 'भूपदी शीतभीरुश्चे'त्यमरः–ग्रीष्मे विकसति । 'मल्लिका हंसभेदे स्यात्पर्ण-शून्येऽपि मल्लिका । कदम्बस्याऽयं कादम्बः प्रसवः फलम् पुष्पञ्च, 'कादम्बः कलहंसे स्यात्' ( बतक ) । मैनाकस्तु हिमाचलसुत आकलितोऽवलम्बितः क्रौञ्चो द्वीपो येन, तत्समीपे समुद्राश्रयणात् । पद्माकरस्तु—आकलिता आकारिताः क्रौञ्चाः क्रुङ्संज्ञकाः 'करांगुल' इति प्रसिद्धाः पक्षिणो येन तम् । 'क्रौञ्चो द्वीपप्रभेदे स्यात्पक्षिपर्वतभेदयो'रिति मेदिनी । शर-सहितोऽरिः शरारिः, 'शरारिराटि राडिश्चेति' कोषात्–'आडीति' प्रसिद्धः पक्षी च । शरारिः स्त्रीलिङ्गः । उत्क्रो-शन्तीति उत्क्रोशास्ते च मार्गगामिनस्तैः गृह्यमाणा आवासार्थं स्वक्रियमाणा उप-वनस्थशाला=विश्रामशाला यस्मिन् ग्रीष्ममार्गे, अन्यत्र—उत्क्रोशैः कुररैः मार्ग-गामिभिः सद्भिः गृह्यमाणा उपवनस्य=जलसमीपस्य शाला=कुटी यस्मिन् । 'गहनं काननं वनम्' 'जीवनं भुवनं वनम्' उभयत्रामरः । उपक्रम्यमाणा= आरभ्यमाणा कमठस्य कूर्माऽवतारस्य वार्ता कथा यस्मिन् तत्कालिकापुराणन्तदिव, अन्यत्र कमठानां कूर्माणां वार्ता प्रवृत्तिः । कर्कटसंक्रान्तिर्दक्षिणायनसंक्रान्तिः, तस्यां नदीरजोयोगो धर्मशास्त्रप्रसिद्धः । 'सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः । तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः" इति । पद्माकरे कर्कटानां कुलीराणां संक्रान्तिः प्रवेशः, कमठो जलचरो महान्, कर्कटः कीटः–इति भेदः । उपरक्तो ग्रस्तो यश्चन्द्रमास्तमिव, अन्वितो युक्तो श्यामोऽवयवो यस्मिन् तादृशं यत्पुष्करं, रागः आह्वा यस्य तस्य ग्रहणजन्यस्य रागस्य आसंगेन संक्रमेण युक्तं चन्द्रबिम्बं, तदिव अन्वितश्यामाऽवयवानां पुष्कराह्वानां सारसानां पक्षिणामासङ्गेन युक्तो

मिव दात्यूहकुलानन्ध्यमानं, कुरुसैन्यमिव बद्धमद्गुरोपशोभितं, तार्किकमिवाविर्भावितानेकवादिभङ्गं, वार्षिकदिनमिव चित्रशिखण्डिमण्डलावगाहनोपहितनीरधारं, मिथिलाप्रदेशमिव कुशध्वजकरकाभिमर्षणपूतशीताङ्गजीवनं, वासवमिव सर्वतोमुखसंभृतबालखिल्याञ्जलिसहस्रं, भवभूतिकाव्यमिव प्रणतकलहंससेव्यमाननालीकमकरन्दमाधवं, सत्यवद्वनविहारमिव सावि-

---

महापद्माकरः। पुष्करद्वीपतीर्थां हि खगरागौवधान्तरे—हैमः। दात्यूहः कालकण्ठकः—चातकश्च। बद्धो मद्गुरो मत्स्यभेदः पताकाचिह्नत्वेन, तेनोपशोभितं कुरुसैन्यम्, पद्माकरे सम्बद्धा एव मद्गुराः निवासत्वाज्जलचराणां तैरुपशोभितम्। आविर्भावितोऽनेकेषां वादिनां भङ्गः पराजयो येन तादृशस्तार्किकस्तमिव, आविर्भाविता अनेके वादिनो ध्वनिमन्तो भङ्गास्तरङ्गा येन तादृशो महापद्माकरस्तमद्राक्षीत्। 'मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः। वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः—" तेषां मण्डलस्याऽवगाहनोपहिता नीरधारा यस्मिन् तत् वार्षिकदिनं, तदिव चित्रशिखण्डिनां मयूरणामित्यादिसमानम्। दक्षिणतो गङ्गया, पश्चिमतो गण्डक्या, उत्तरत वाङ्गत्या, पूर्वतः कौशिक्या परिच्छिन्ने मगधोत्तरभागस्थो देशो मिथिलाप्रदेशः—उत्तर बिहारेत्यधुना प्रसिद्धः, स च कुशध्वजस्य मिथिलेशस्य करावेव करकौ ताभ्यामभिमर्षणेन स्पर्शेन पूतानि स्नानादिना स्वच्छीकृतानि यानि शीतायाः सीताया अङ्गानि तेषां जीवनभूतः। 'शीता दशाननरिपोः सहधर्मिणी चेति' द्विरूपात्तालव्यादिरपि। प्रयोगश्च विवाहवृन्दावने—'प्राचेतसः प्राह शुभं भगर्क्षम्, शीता तदूढा न सुखं शिशेवे'—इति क्रियापदमपि तालव्यादिः। कुशाश्च ध्वजाश्च करका वर्षोपला कमण्डलवश्च तेषामभिमर्षणेन पूताङ्गानि जीवनानि जलानि यस्मिन्पद्माकरे। सर्वतोमुखेन जलेन संभृता संपूरिता बालखिल्यानां स्वल्पकायानां दिव्यमुनीनामञ्जलयो यस्मै तम्। वसवः किरणाः सन्त्यस्य वासवः सूर्यः, पुरन्दरश्च वसुगणदेवस्वामित्वात्, तमिव सर्वतोमुखं सर्वदिशं सम्यक् भृतानि धृतानि बालानि नूतनानि खिले=अप्रतिहतभवानि खिल्यानि मुन्यन्नानि तेषामञ्जलीनां सहस्रं यस्मिन् तादृशमुञ्छषष्ठाङ्कितसैकतं पद्माकरमद्राक्षीत्। प्रणतेन=नम्रेण कलहंसनाम्ना सेवकेन सेव्यमाना नालीकमकरन्दमाधवा यस्मिंस्तद्भवभूतेः काव्यम् मालतीमाधवनामकं प्रकरणम्, तदिव प्रणतैः कलहंसैः कादम्बैः सेव्यमाना नालीकानामब्जषण्डानां मकरन्दाः पुष्परसा माधवी=माधवीलताभवाश्च सौरभादयो यस्मिन् पद्माकरे। सत्यवान् राजपुत्रः सावित्रीव्रतकथायां द्रष्टव्यः; तस्य तत्कर्तृको वनविहारः काष्ठानयनार्थं वनभ्रमणमिव सावित्र्याः सत्यवतः पत्न्या कराभ्यां गृह्यमाणानि अनेकप्रसूनानि यस्मिन्, सवितृदेवताकामुपासनां कुर्वन्ति ते

त्रीकरगृह्यमाणानेकप्रसूनं, रेवाप्रवाहमिव सहस्रकरसंयोगेनापि अमुक्तनर्मदानुरूपभावं, कृपणदाम्भिकमिव विसमयाभ्यवहारविहितातिथिसत्कारं, कर्षकमिव जलधाराभिषिक्तपौण्ड्रकं, श्रावणमिवोन्मज्जदभ्रमुदयितास्फालितप्रवाहशरं, नदीपुलिनमिव भैरववृषभविषाणोल्लेखनसहस्रसहं, महादानप्रकरणमिव हिरण्यगर्भरथचक्राङ्कप्रचारयोग्यं, मीमांसाशास्त्रमिवोद्भावितमहेश्वरमज्जनानुकूलप्रमाणं, महाभाष्यमिव मुनिभिराकलितसर्वदाक्षेप-

---

सावित्रीकराः (कृञःटः) तैर्गृह्यमाणान्यनेकप्रसूनानि यस्मिन् पद्माकरे। कराः=किरणा हस्ताश्च। शीतत्वं जलक्रीडायोग्यत्वञ्च नर्मदानुरूपभावः। 'क्रीडा खेला च-नर्म च'। विसमयेऽतिथीनामनागमनसमये, अभ्यवहारेण भोजनाडम्बरेण कृतोऽतिथिसत्काराभासो येन दाम्भिकेन तमिव वीनां पक्षिणां समयाऽभ्यवहारेण भाषोच्चारणेन कृतोऽतिथीनां सत्कारो येन। 'तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता'—मनुः। वीनां समये जलफलादिभोजनेन वा विहितातिथिसत्कारम्—पद्माकरम्। 'समयः शपथे भाषासम्पदो'रिति भानुः। 'पुण्ड्रेऽक्षौ पुण्ड्रकः सेव्यः पौण्ड्रकोऽतिरसो मधुः'—इति वाचस्पतिः कृषकपक्षे, त्रिपुण्डकोर्ध्वपुण्ड्रकधारिणः शैववैष्णवादयोऽन्यत्र। 'अभ्रं मेघे च गगने धातुभेदे च काञ्चने'। मुस्ता चाऽभ्रपदवाच्या। उन्मज्जदुद्यदभ्रं यस्मिन्नथ चोदयित आस्फालितश्च प्रवाहो यस्मिन्, (उदयित—इति अयगतावित्यस्मात् क्तः)। भैरवस्य भैरवा वा ये वृषभाः कर्तारस्तेषां विषाणैः करणभूतैर्यदुल्लेखनानि कर्षणानि तेषां सहस्राणां सहनकर्तृ शरन्नद्यास्तोयोत्थितं तीरं, सहनकर्ता पद्माकर—इत्युभयत्र समानम्। तुलापुरुषदानम्, हिरण्यगर्भदानम्, ब्रह्माण्डदानमित्यादि—षोडशमहादानानि, तेषां प्रकरणं प्रतिपादको ग्रन्थो दानखण्डादि, हिरण्यगर्भस्य द्वितीयमहादानपुरुषस्य रथचक्राङ्कप्रचाराणां योग्यं, तदिव हिरण्यगर्भस्य लोकेशस्य रथा हंसाः, चक्राङ्काश्चक्रवाकास्तेषां प्रचारस्य योग्यं पद्माकरम्। मीमांसाशास्त्रं जैमिनीयम्—उद्भावितं सूचितं महेश्वरमत (यवादित्वाद्वत्वाऽभावः) साधकतया परमेश्वरविशिष्टम्, अथ च जनानामनुकूलं सर्वसाधारणत्वात् प्रमाणं प्रत्यक्षप्रमाणं यस्मिन् तादृशम्, महेश्वरस्य परममहतोऽपि परमेश्वरस्य मज्जनानुकूलं ब्रुडनानुकूलं प्रमाणमायामविस्तारादि यस्य तम्। अयं भावः—"सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम्" इति मीमांसाशास्त्रीयं प्रत्यक्षलक्षणम्। अत्र सच्छब्देन ब्रह्मणो ग्रहणे, 'यस्य भासा सर्वमिदं विभाति स चराचर'मिति रीत्या व्याख्यायां व्यापकपरमेश्वरसिद्धिः सम्भवति, अत एवोक्तमुद्भावितमिति, मीमांसकसिद्धान्तस्तु भिन्नः। महाभाष्यम्=व्याकरणमहाभाष्यम्, मुनिभिर्मननशीलै-

तन्त्राह्निकं, केवलजलमयमिव ब्रह्म, विवर्तभूतान्तरहीनमिव प्रकृतिपरिणामम्, अनवस्थामिव वारिपरम्पराणां कैलासारम्भकपरमाणूनां सन्ततहरमौलिचन्द्रकरसंयोगेन जलीयतया परिणतानां कार्यमिव स्थूलजलसमुदायं, प्रतिदर्शमर्कसहवासेन द्रवीभूतानामनन्तानां चन्द्रशकलानामेकत्र सङ्कलितमिव सुधारसनिश्च्योतं, सर्वानुवादमिव यावद्ब्रह्माण्डवर्तिवारीणां, समुद्रान्तरमिव सप्तभिः समुद्रैरेवाऽवयवत्वमापन्नैरारब्धं, मृगतृष्णाभ्रमेषूत्पन्नानामनिर्वचनीयानामनेकेषां जलानां समुदायमिवैकत्र विन्यस्तम्, आपादकमिव श्रुतिप्रसिद्धस्यापां सर्वतादात्म्यस्य न्यासमिवागस्त्यपानभयेन निगूहितानामनेकेषां पयःप्रवाहाणां, कोषमिव भविष्यदम्बुसर्गाणां, निधानमिव पुष्करावर्तकपरिपूरणपर्याप्तानां पयःप्रचयानां, सम्पातमिव विराट्समूहस्वरूपधूर्जटिनृत्यश्रमोत्पन्नस्वेदबिन्दुवृन्दानां, राशिमिव-आदिसर्गोत्पन्नानामम्भसां, कूट-

---

राकलितानि विचारितानि सरति विषयज्ञानानन्तरमिति सर्वः=सन्देहः ( सरतेर्वन् ), तद्यतः खण्डयतस्तादृशे—आक्षेपतन्त्रे पूर्वपक्षसिद्धान्ते येषु तादृशानि आह्निकानि यस्मिन् तादृशम्, अन्यत्र आकलितं आक्षेपेणाऽऽगमनेन तन्त्रेण शास्त्रविधानेन, आह्निकं दैनिकं कृत्यं स्नानसन्ध्योपासनादि यस्मिन्। तटाकस्य महत्त्वादुत्प्रेक्षते—केवलमिति । ब्रह्म व्यापकं चैतन्यं, डलयोरैक्याज्जडमयमित्युत्प्रेक्ष्यते (प्राचुर्ये मयट्प्रत्ययः)। विवर्तभूतं यदन्तरं भेदः, तेन रहितमिव प्रधानस्य परिणामं महान्तम्पद्माकरम् ( प्रकृतेर्महाँस्ततोऽहङ्कार-इत्यादि )। अनवस्था=अविश्रान्तिः, सन्ततं निरन्तरं हरमुकुटस्थचन्द्रकिरणस्पर्शेन जलमयत्वेन परिणतानां कैलासपर्वतोपादानभूतानां कर्तृणां कार्यं जन्यमिव, पुनश्च चन्द्रशकलानां सुधारसनिश्च्योतत्वेनोत्प्रेक्षते, तत्र हेतुमाह—प्रतिदर्शमित्यादि। सर्वेषामनुवादोऽनुकरणम्, स्वयमवयविभिरपि पद्माकरारम्भाय सम्भूय समुत्थानेनाऽवयवत्वमापन्नैरित्यर्थः। मृगतृष्णा मरीचिका। अनिर्वचनीयानां केनाऽपिशब्देन निर्वक्तुमशक्यानां, अपां जलानां सर्वतादात्म्यं सर्वैः पदार्थैरभेदः श्रुतिप्रसिद्धः 'आपो वै सर्व'मित्यादिप्रसिद्धः, तस्य आपादकं समन्वयरूपमिव। समुद्रपानकर्तृत्वेन प्रवाहाणामगस्त्यभयम् । आगामिकल्पे भविष्यन्तो ये जलसर्गास्तेषां कोषमिव। निधानं निधिः। पुष्करावर्तकाः पयोमुचः। प्रचयाः समूहाः। 'जयति स्वेदपृषत्सु'—इत्यादिमङ्गलोक्तमर्थं विशदयन्पद्माकरं विशिनष्टि—सम्पातमित्यादिना। आदिसर्गे अम्भःशब्दवाच्यानि सूक्ष्माणि जलानि जायन्ते, तेषां राशिमिव। कूटमिव पुञ्जमिव। समुद्रादन्यदेशे कथमेतावान् पयोराशिरित्याह-

मिव असंख्यानां खण्डसमुद्राणां, जामदग्न्यशरोत्सारितमिवोदन्वदेकदेशम-वयवान्तरसंयोगेन महत्त्वमापन्नं, समुद्रान्तरमिव मत्स्यावतारस्य नारायणस्य यथास्पृहविहारार्हं, जलमयमिव भगवतो भर्गस्य नित्यं शरीरं, बिन्दुप्राय-सरस्त्वेनान्वर्थसंज्ञं बिन्दुसरोभिधानं महापद्माकरमद्राक्षीत् ॥ ८३ ॥

अचिन्तयच्च चेतसा अहो अभ्युदयस्याभ्युदयान्तरानुबन्धित्वस्वभावः प्रथमतस्तावन्मानुषसञ्चारानर्हस्य देशस्यास्य दर्शनमसंभाव्यम्, तत्रापि मन्त्रकृतां तपोधनानामाद्यस्य सुरासुरशेखरकुसुममालिकापरागकृतोपराग-पदनखसुधादीधितेर्महातपस्विनो भगवतो गृत्समदस्य महेन्द्रेण सहस्थस्य दर्शनं; तत्र च वेदसमानोदर्याणामतिपावनानां सानुग्रहाणामव्यभिचारि-णान्तत्तत्संवादानां समास्वादनं, ततोऽप्यस्यैवंविधस्य महासरसः साक्षात्करणं

---

जामदग्न्य इत्यादि । 'रामास्त्रोत्सारितोऽप्यासीत्सह्यलग्न इवार्णव'—इति कालिदासः । मत्स्यावतारो भागवतेऽष्टमस्कन्धचतुर्विंशेऽध्याये, तस्य विहरणयोग्यं समुद्रा-न्तरमिव । भर्गस्य तेजोमयस्य भगवतो महादेवस्य जलविहारोचितं जलमयं शरीरमिव । मध्ये मध्ये भूमिभागसत्त्वेन बिन्दुप्रायत्वम्, पद्मानामाकरः खनिः पद्माकरस्तटाकस्तमद्राक्षीदिति संक्षेपः ॥

अन्येद्युः पुरतो गत्वा चित्रभानुः कुमारकः ।
भ्रमन्वने बिन्दुसरो ह्यपश्यदिति वर्णितम् ॥
ओषधिवर्णनगर्भं, वनबिन्दुसरःसरोजदलम् ।
कुसुमं सोमाय मुदे समर्पये ह्योषधीशाय ॥८३॥

चेतसा—इति-अचिन्तयच्चेत्यन्वयः । कुमार इति कर्तृपदस्य संबन्धः । चेतसेति करणे तृतीया । इति शब्दो मध्यपतितानां काव्यकथानां क्रमत्वं द्योतयति । चकारः क्रियासमुच्चायकः, क्रियावाचकपदाऽव्यवहितोत्तरं पठितत्वात्, समुच्चीय-माना क्रिया अद्राक्षीदिति, प्रत्यब्रवीच्चैनमितिवत् । अहो—आश्चर्यम्, ('ओदिति' प्रगृह्यत्वात्प्रकृतिभावः ) अभि—उत्पूर्वादिण् गतावित्यस्मादेरच्—इत्यच् प्रत्ययः, ) अभ्युदयस्य=मङ्गलस्य मङ्गलान्तरजनकत्वं नियमः, अभि—आभिमुख्ये उदूर्ध्वंमयो-गतिर्यस्येति विग्रहादन्वर्थता, स एव स्वस्याऽभ्युदयस्य भावः=अभ्युदयशब्दो-च्चारणजन्यबोधे प्रकारः, तथा च तदेवाऽभ्युदयस्याऽभ्युदयत्वं यदभ्युदयान्तर-जनकत्वम् इति फलितम् । तदेव स्फुटयति—प्रथमत इत्यादिनोक्तानि वाक्या-र्थानि कर्माणि पिण्डीभूतानि चिन्ताक्रियाजनकानि—इत्येतदर्थमिति शब्दो द्योत-यति । समानोदर्याणां सगभ्याणां सदृशानाम् । अव्यभिचारिणां सार्थकानाम्,

फलितमेव मे रमणीयावेक्षणस्पृहया, तारल्यमूलिकापि सा दिष्ट्या फलपर्यवसायिन्येव संपन्ना। अहो महत्त्वं सरसः, इदं हि साक्षात्क्रियमाणमप्यश्रद्धेयतया एतावतः प्रकर्षस्य किं विभ्रम, उत स्वप्न, आहोस्विदिन्द्रजालं, किमुत मायेत्येवंविधैर्विकल्पशतैरध्यक्षेऽप्यप्रामाण्यज्ञानमासञ्जयति, किम्पुनराख्यायमानमनुमीयमानं वा श्रोतुरवतरत्येवैवंविधमहत्त्वप्रतिपादके वाक्येऽयोग्यताज्ञानम्, अनुमाने च दृष्टान्तसाध्ययोरप्रसिद्धिः। अहो पर्यन्तत्वं पयःपरमाणूनाम् अपर्यवसानञ्च तदारभ्य द्रव्यस्य मन्ये एतदनुरोधादेव जलमन्त्यावयवि न विहितं विधिना, अथवा नित्य एवाऽयं स्थूलजलविशेषः, अन्यथैतावतामयवयवसंयोगानां जननेनैव विधातुरायुः पर्यवसन्नं स्यात्, तथा च द्रव्यान्तरसृष्टेः को वाऽवकाशो भवेत्, सति चास्मिन्नगस्त्यसहस्रैरपि पातु-

'मुनीनां पुनराद्यानां वाचमर्थोऽनुधावति'–इति न्यायात्। बिन्दुसरसो महत्त्वं प्रतिजानीते-अहो–इति। महत्त्वं प्रतिपादयति–इदं हीति। अश्रद्धेयत्व हेतून् विकल्पान् प्रतिपादयति किं विभ्रम–इति। अध्यक्षेपि प्रत्यक्षेऽपि, एतावतः प्रकर्षस्य (विषयत्वं षष्ठ्यर्थः) अप्रामाण्यज्ञानं जनयति,–किं पुनराख्यायमानं=शब्दतः प्रतिपाद्यमानम्, अनुमानेन च ज्ञानविषयीक्रियमाणञ्चेत्यर्थः। यत्र प्रत्यक्षप्रमाणेन प्रामाण्यग्रहस्तत्र तदुपजीव्ययोरितयोः का कथेत्यर्थः। यत एवंविधमहत्त्वप्रतिपादके वाक्ये श्रोतुरयोग्यताज्ञानमवतरत्येव=जायते एव। अनुमाने च स्वार्थाऽनुमानेऽनुमातुर्मनसि दृष्टान्तस्य साध्यस्य चाप्रसिद्धिरवतरत्येव, परार्थानुमाने च प्रतिज्ञावाक्यश्रोतुर्मनसि सप्तसागरारब्धस्य महतः पद्माकरस्य दृष्टान्ताभावात्, साध्यस्य च परिमाणस्येयत्ताऽनवधारणादप्रसिद्धिरवतरत्येवेत्यन्वयः। 'बिन्दुसरोऽभिधानं पद्माकरो महान्'–इति प्रतिज्ञायां, कियान् महान्, किंवत्? इति प्रश्ने नास्त्युत्तरमिति भावः। जलसृष्टेरपारतां दर्शयति–अहो—इति। पर्यन्तत्वं विश्रान्तत्वं परमाणूनां निरवयवत्वात्सावयवत्वस्वीकारेऽनवस्थाप्रसङ्गः। तदारभ्य द्रव्यस्य जलपरमाण्वारभ्य द्रव्यस्य स्थूलजलस्य अपर्यवसानं विश्रान्तिराहित्यम्, मन्ये=शङ्के, एतदनुरोधादेव पयःपरमाण्वारब्धस्य जन्यजलस्य पर्यवसानाभावादेव विधिना विश्वसृजा जलं पानीयमन्त्यावयवि=द्रव्यान्तराऽजनकं न विहितं=न कृतम्। यथा घटादिः पार्थिवपदार्थः अन्त्यावयवी तथा जलीयं किमपि बिन्दुजातं नान्त्याऽवयवि, बिन्दोरपि बिन्द्वन्तरजनकत्वात्। विकल्पान्तरमुपन्यस्यति–अथवेति। नित्य एव न जन्यः। अन्यथा=नित्यत्वाभावरूपे जन्यत्वे इति। एतावतामपरिसंख्येयानाम्। विकल्पान्तरमुद्भावयति-सति चास्मिन्निति।

मशक्ये मुधैव समुद्राश्रयिभिः कालकेयैस्तत्पाननिबन्धना विपत्तिरुपात्ता । अहो महाभाग्यं मन्दराचलस्य, यो हि सरस्वद्गम्भीरभावपरिच्छेदप्रतिष्ठां प्राप; अस्य हि गाम्भीर्यलेशोऽपि तेन परिच्छेत्तुं न शक्येत, अहो हव्यवहनखेदादनिच्छतोऽग्नेर्बालभावो यः समुद्रं प्राविशत्, अत्र हि कृतप्रवेशोऽथर्वमुनिनापि नोत्थापयितुमशक्यत, मन्ये च प्रतिफलककैतवेन प्रविश्याभ्यन्तरं स्नानावसरलग्नशङ्करशेखरायमाणसुधादीधितिकलाविगलितपीयूषावयवसमुदायमुपादाय धवलपक्षे घर्मदीधितिः पूर्वपरिक्षीणं वर्धयति रोहिणीरमणं नूनमित एव मयूखमृणालिकाप्रणालिकाभिरुदस्य निर्दम्भमम्भांसि रजनीकरो विधुकान्तदृषद्भ्यः कन्दलयति वारिनिस्यन्दवृन्दं, समेधयति च प्रत्युदयमुदन्वन्तमिति नूनमेतन्निर्माणाभ्यासोपयोगिनो हस्तलेखा एव विधेरुदधय इति ॥ ८४ ॥

अथ सन्तापातिशयानुरूपं प्रौढिमानमप्राप्तवत्यपि पतङ्गे, तद्गुणानु-

---

मुधैव वृथैव । कालकेयाः असुरभेदाः । "कालका, दौहृदा, मौर्याः कालकेयास्तथाऽसुराः" इति मार्कण्डेयपुराणम् । तत्पाननिबन्धना समुद्रपानमूलिका । विकल्पान्तरमुपक्षिपति–**अहो महाभाग्यमिति** । सरस्वान् सागरः । कदाचिदगाधे बिन्दुसरसि मन्थनप्रसक्ते अप्रतिष्ठैव तस्य स्यादित्याह–**अस्येत्यादि** । गम्भीरस्य भावो गाम्भीर्यमगाधता । वडवानलस्य समुद्रप्रवेशमुपक्षिप्य व्यर्थयति–**अहो हव्येति, अत्र हीति** । अथर्वा मुनिः, तन्त्रमन्त्रप्रयोगवित् । अन्यं विकल्पमुत्प्रेक्षते–**मन्ये चेति** । **प्रतिफलककैतवेन** प्रतिबिम्बव्याजेन । **धवलपक्षः** शुक्लपक्षः । **घर्मदीधितिः** सूर्यः । **रोहिणीरमणं** चन्द्रम् । चन्द्रकान्तमणिद्रवत्वं चन्द्रोदये । समुद्रपूरस्य वर्धनञ्चोपादाय विकल्पयति–**नूनमित** इति । अनुकम्पितं कोमलं मृणालं **मृणालिका** एव **प्रणालिका** वारिसरणिः । 'द्वयोः प्रणाली पयसः पदव्या'मित्यमरः । **निर्दम्भं** निर्व्याजं ( कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे ) विधुकान्तदृषद्भ्यश्चन्द्रकान्तमणिभ्यः **कन्दलयति** सञ्चिनोति—इति **नूनमिति** संबन्धः । सर्वान्समुद्रान् बिन्दुसरो निर्माणार्थं लिखितप्रतिकृतित्वेन विकल्पति–**नूनमिति** । **हस्तलेखाः** प्रतिकृतयः (नक्शा) । **विधोरि**ति कर्तरि षष्ठी । इति शब्दस्य अचिन्तयच्चेति संबन्धः पूर्वमुक्तः ॥ अत्र विकल्पप्रपञ्चः ॥ ८४ ॥

अथ चित्रभानुः कुमारः–अमानुषोचितासु तद्भूमिषु वीतविभ्रमो बभ्राम–इत्यन्वयः । सन्तापस्य सञ्ज्वरस्याऽतिशयानुरूपमाधिक्यानुरूपं, पतङ्गे

रागेण गन्धगजकलभ इवावगाह्य जलदेवताभिवन्दनपूर्वकं तद्वारि गृहीत्वा चापनीय तृषममृतरसातिशायिना तेन गृहीत्वा च चकोर इवेन्दुदीधितिदण्डमसृणानि मृणालानि रामणीयकातिरेकात्तदवलोकनस्पृहयाऽनुपगृह्यमाणेऽप्यवसाने, गुरूपसर्पणत्वरयाऽऽरयारूढया प्रेर्यमाणो जातसंकल्पश्चतसृष्वपि हरित्सु तदीयतटपरिसरसाक्षात्कारेऽनुपेक्षापूर्वकं तत्र तत्र प्रक्षिपँश्चक्षुश्चित्रभानुरमानुषोचितासु तद्भूमिषु वीतविभ्रमो बभ्राम ॥ ८५ ॥

अथ कौबेर्य्यां ककुभि निरन्तरलग्ननिविडपत्रतया पर्णशालायमानस्य, जलधरखण्डमलिनस्यापि शुचेरपि चादत्तवर्षानवकाशस्य, तपोभ्यासादिवोर्ध्वमुखस्यापि अविषमस्कन्धसंस्थानस्य, बहुफलस्यापि कर्मरहितस्य, अनेकप्रसवस्याप्यनुपगृहीतग्लानेः, पलाशपरिवृतस्यापि सौम्यदर्शनस्य, प्रभूतकाण्डस्याप्यकाण्डोपजातदर्शनस्य, द्विजगणोद्घुष्यमाणानेकशब्दस्यापि

---

सूर्ये, प्रौढिमानं प्रौढतां। गन्धगजो मत्तगजः। कलभः करिशावकः। तेन वारिणा तृषं पिपासामपनीय। अवसाने पर्यन्ते। अनुपगृह्यमाणेऽपि अज्ञायमानेऽपि। आरूढया—उत्कटया गुर्व्याऽपसर्पणत्वरया। 'पर्यन्तभूः परिसरः'। वीतविभ्रमस्त्यक्तविलासः। बभ्राम=इतस्ततो विचचार ॥ ८५ ॥

अथ भ्रमणानन्तरं कौवेर्य्यां ककुभि महतः सहकाराऽनोकहस्य तले श्रियमिव बद्धपद्मासनां, द्वितीये वयसि स्थितामप्यद्वितीयावस्थां, कामपि कन्यकामपश्यत्। सहकारोऽतिसौरभे, अनोकहः कुटः शालः, लक्ष्मीः पद्मालया पद्मा। सहकारतरुं विशिनष्टि—निरन्तरेत्यादिना। 'पर्णशालोटजोऽस्त्रियाम्'। घनतमच्छदनवत्तया कुटीमिवाचरत-इत्यर्थः। 'पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्'। जलधरखण्डः श्यामः, शुचिराषाढ—आदत्तवर्षाऽवकाशः 'अयन्तु तथाविधोऽपि न तथा, उद्देश्यकोटिप्रविष्टविशेषणविशिष्टोऽपि न विधेयकोटिप्रविष्टविशेषणविशिष्टः। अवकाशः स्थानमवसरश्च। ऊर्ध्वमुखः तपस्वी विषमं नतोन्नतं स्कन्धस्यांसस्य संस्थानमवयवसन्निवेशो यस्यास्तादृशो भवति, तरुस्तु उद्देश्यतावच्छेदकावच्छिन्नो न विधेयतावच्छेदकाऽवच्छिन्नः, तरूणामूर्ध्वमुखस्य स्वाभाविकत्वात्, (अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधेस्तरोः) फलं स्वर्गादिकं, कर्म यागादिकं, अन्यत्र फलं सस्यं, कर्म कृत्रिमा चेष्टा, प्रसवः प्रसूतिः फलपुष्पादिकञ्च। ग्लानिः परिश्रान्तिः। पलाशानि पत्राणि तैः परिवृतस्तरुः। पलाशैर्मांसाशिभिः। प्रभूतकाण्डस्यानेकस्कन्धस्य ( 'काण्डः स्तम्भे तरुस्कन्धे' इत्यादि मेदिनी ) अकाण्डेऽसमये, अकस्मादित्यर्थः। द्विजा ब्राह्मणाः पक्षिणश्च।

व्याकर्तुमशक्यस्य, परिचयसंभूतिविश्रम्भै रोमन्थायमाणैरेणशावकैः परिष्कृतपर्यन्तस्य, पलाशपुटकिनीप्रायदेवतासभाजनोपकरणभाजनपरिष्कृतमूलस्य, छायातो बहिरातपप्रकीर्णस्नानवल्कस्य महतः—सहकारानोकहस्य तले श्रियमिव बद्धपद्मासनां, प्रतिष्ठापनीयदेवताप्रतिमामिव तत्कालोन्मीलितविलोचनां, हरिमूर्तिमिव भुजङ्गद्विषि वयसि वर्तमानाम्, अनुपहितविकारं वशीकृतं मानसमिव यौवनं दधानां, रागमयमपि तपस्यप्रतिकूलं बहिर्वल्कलमिवान्तरपि विषमविशिखं वहन्तीं, कालुष्यहीनं सरो जलमिव पावनङ्गुणगणं बिभ्राणां, निवसितारुणवर्णवल्कलतया जाम्बूनदमयीं, वीरुधमिवोद्भिद्यमानवालपल्लवां, तपसि निरतामपि अखिन्नप्रायाकारां, विगतकवरीसन्निवेशाभ्यासेन केवलं समुदायीकृत्य कृतजूटिकेन त्रिषवणस्नानादमुक्तार्द्रभावेन केशकलापेन मदनचामरेणेव प्रयोजनाभावादाबद्धग्रन्थिना शोभमानां, धूर्जटिक्रोधोषर्बुधदग्धस्य कुसुमधन्वनो भस्मावशेषकणसमुदायेनेव तदुज्जीवनाय वदनेन्दुमण्डलसुधयाऽभिषेक्तुमेकत्र समाहृतेन भस्मपुण्ड्रकेण विभूषितभालभूमिं धैर्याबद्धतया मुक्ततारल्येनापि स्वभाववशात्परिप्लवेन चित्रविलिखितेनेव चिरान्मुक्ताञ्जनशलाकेनापि कनीनिकाकान्तिसङ्करात्कलितकज्जललेखेनेव नयनयुगलेन लक्ष्यमाणाम्, अभङ्गुरसङ्गतिलाभाय तपस्यतेव शीलसंवादागतेन चक्रवाकमिथुनेन विमुक्तमुक्ताकलापमृणालोपयोगेन वल्क-

---

व्याकर्तुं प्रकृतिप्रत्ययविभागं कर्तुम् अशक्यस्य अव्यक्तत्वात् । **परिचयः** संस्तवः । **संभूतिः** संभवः सहवासश्च । **विश्रम्भो** विश्वासः । रोमन्थायमाणाश्चर्वितचर्वणं कुर्वन्तो ये—एणशावकाः हरिणशिशवः तैः शोभितप्रान्तभागस्य, **पलाशपुटकिनी**प्रायाणि किंशुकपत्रपुटमयानि तानि देवतापूजनपात्राणि तैः शोभितमूलप्रदेशस्य—छायातोऽनातपस्थानाद्बहिरातपे प्रकीर्णानि विस्तारितानि स्नानसम्बन्धीनि वल्कलानि यस्मिन्-तस्य—**महतः** फलच्छायसमन्वितस्य—( तदेव महत्त्वं यदात्मीयभावः ) अतिसौरभाम्रतरोस्तलेऽधः प्रदेशे = छायायाम् । कन्यकां विशिनष्टि—**श्रियमिवे**त्यादिभिर्द्वितीयान्तैर्विशेषणैः । प्रतिष्ठापनीया स्थापयितुं धृता, **भुजङ्गान्**सर्पान् द्वेष्टि भुजङ्गद्विट् तस्मिन् **वयसि** पक्षिणि गरुडे । अन्यत्र भुजङ्गान् पुरुषस्य शान् द्वेष्टि तच्छीलं तस्मिन्वयसि कौमारे वर्तमानाम् । **यौवनं** यौवनारम्भम्, अतएवाऽनुपहितविकारत्वसार्थकम् । **विषमविशिखं** पञ्चबाणम् । **जाम्बूनदमयीं** स्वर्णमयीम् । **त्रिषवणस्नानं** त्रिकालस्नानम् । उषर्बुधो वह्निः । **भस्मपुण्ड्रकेण** भस्मतिलकेन । 'तारकाक्ष्णः कनीनिका' ।

लोत्तरीयाञ्चलतिरोहितेन स्तनद्वयेन विरोचमानां, चम्पकमालामिवातपपरिक्लिष्टां, प्रदीपशिखामिव पवनेनाघूर्णमानां, काञ्चनकमलिनीमिव तडागादुद्धृतां, सहकारमञ्जरीमिव स्वाश्रयविस्रस्तां, सरस्वतीमिव दुर्वासःशापपरिभ्रष्टां, रतिमिव प्रसूनशरविरहदूनां, दमयन्तीमिव नलविनाभूतां, सत्कवितामिवानभिज्ञजनसमाजेष्ववधीयमानां, स्मृतिमिव सम्यगनुद्बुद्धसंस्कारां, साक्षात्कारिणीं बुद्धिमिव विशिष्यानवगाह्यमानप्रकारां, प्रसरन्तीभिस्तपःपावकहेतिसन्ततिभिरिव काश्मीरजरससवर्णाभिः कायप्रभाभिः परीतां, लङ्केशसाध्वसविधीयमानदहनप्रवेशामिव वेदवतीं, काञ्चनारम्भकैरिव चम्पकभागैरिव कुङ्कुमसमवायिभिरिव मनःशिलोपादानैरिवावयवैर्विहितारम्भां, परनिन्दानिवृत्ततया समशीलतया परिवादिन्या समाश्रितपार्श्वदेशां, द्वितीये वयसि स्थितामप्यद्वितीयावस्थां, सुकन्यामप्यजातच्यवनसम्बन्धां—कामपि कन्यकामपश्यत् ॥ ८६ ॥

---

आतपेन घर्मेण परिक्लिष्टां म्लानां। आघूर्णमानां कम्पमानाम्। विस्रस्तामधःपतिताम्। प्रसूनशरस्य कामस्य विरहेण दूनामुपतप्ताम्। अनभिज्ञजनसमाजे नीरसजनगोष्ठ्याम्। स्मृतिरनुभवजन्या ज्ञप्तिः, सा चोद्बुद्धसंस्कारा प्रकाशते, अनुद्बुद्धसंस्कारा तु मनस्येव लीयते। अयं घट—इत्याकारिका बुद्धिः—घटत्वप्रकारकघटविशेष्यकत्वावगाहिनी तदन्या मुग्धा लोके विषयेन्द्रियसन्निकर्षे सति या बुद्धिः सा प्रकारत्वविशेष्यत्वाऽनवगाहिनी, सैव (निर्विकल्पा)। हेतिः ज्वाला। काश्मीरजः कुङ्कुमः। लङ्केशाद्दशाननात्साध्वसेन भयेन विधीयमानो दहनप्रवेशो यस्यास्तामिव वेदवतीं वैदेहीम्, (एवमेव वा पाठः स्यात्, नायिकान्तरं वा स्यात्)। काञ्चनचम्पकादयः पीताभाः अतस्तदारम्भकैरवयवैर्विहितारम्भामिति विशेषणम्। परितः सर्वतो वदति स्तौति परिवादिनी=वीणा (वदि अभिवादनस्तुत्योः), अतएव तुल्यस्वभावया। द्वितीये वयसि=कौमारे यौवनोद्भेदे अतएव अद्वितीया द्वितीयरहिता अवस्था दशा यस्यास्ताम्, अद्वितीया अपूर्वाऽऽकृतिर्वा। वैवस्वतमनोः शर्यातेः कन्या सुकन्या नामिका, पित्रा च्यवनाय मुनये दत्ता (भा० ९), (मगधेषु गया पुण्या, पुण्यं राजगृहं स्मृतम्। च्यवनस्याश्रमः पुण्यो नदी पुण्या पुनःपुना इति—ग० मा०) 'च्यवते च्यवनः पुमान्' (कर्तरि युच्) कामपि=अज्ञातकुलशीलाम्, कनति दीप्यते—इति कन्या अनुकम्पिता सा कन्यका ताम् अपश्यत्=चाक्षुषसाक्षात्कारविषयीभूतामकरोत् ॥८६॥

कुतूहलाकृष्यमाणमानसश्चानतिदूरादेव स्थित्वा तन्नयनपातयोग्ये प्रदेशे विनयावनम्रेण शिरसा नानावर्णकुसुमोपहारमिव चूडामणिमरीचिच्छलेन क्षिपन्प्रणनाम ॥ ८७ ॥

सात्वदृष्टपूर्वेण श्रूयमाणादप्यतिशयभाजा तस्यानुभावविशेषेण सञ्जातगौरवा 'स्वागतमभ्यागतस्यात्रास्यतामनुगृह्यतामयञ्जन'-इत्यभिधाय, पल्लवमयमासनं तस्य दिशन्ती, पुरतो भूर्जदारुमयं कोकनदकोरकमिव करकं वारिपूर्णं विन्यस्यन्ती, प्रोल्लसद्भिर्नखमयूखजालकैर्मृणालदण्डखण्डानिव पूजाहेतोरुपजहार ॥ ८८ ॥

चित्रभानुस्तु-'भगवति! कृतमभिनिवेशविशेषेण दर्शनप्रसादमात्रपरिपाविते ऽस्मिञ्जने निष्प्रयोजनमेवोपचारान्तरं, संवादसुधारससंपन्नसौहित्ये च पुनरुक्तमिवाभ्यवहारान्तर'मित्युदीर्य, शिष्य इव विशिष्यविनयादविनाभूतः, सन्निहित एव भूतले कृतप्रणामं न्यषीदत् ॥ ८९ ॥

अथ सार्धाभ्युत्थानविशकलितमुत्तरीयवल्कलं कररुहमरीचितन्तुभिर्वक्षसि स्थिरीकृतमिव करेण वामेन विन्यस्यन्ती, दक्षिणेन च विवक्षया विस्पन्दमानं बिम्बाधरं दशनदीधितिकदम्बदन्तुरितं तिरोदधाना, तद्दर्शन-

---

कुतूहलाऽऽकृष्यमाणमानसश्च विनयाऽवनम्रेण शिरसा प्रणनाम। चूडामणिः शिरोरत्नम्॥

बहुविधविमर्शरूपं बिन्दुसरोवीचिसंफुल्लम्।
कन्यादर्शनघटितं कुसुमं गृह्णातु वाणीदम्॥ ८७॥

सा तु 'कन्या तु' सञ्जातगौरवा स्वागतमभ्यागतस्य, अत्रास्यताम्, अनुगृह्यतामयं जनः—इत्यभिधाय, पुरतो वारिपूर्णं करकं (कमण्डलुं) विन्यस्य, प्रोल्लसद्भिर्नखमयूखजालकैः (अभेदे तृतीया) मृणालखण्डानिव पूजाहेतोरुपजहार—इत्यन्वयः। अदृष्टपूर्वेणेत्यस्यानुभावविशेषेणेत्यनेनान्वयः। भूर्जदारुमयानि पात्राणि केदारनाथे सुन्दराणि निर्मीयन्तेऽद्यापि। पूजाहेतोश्चित्रभानुपूजार्थम् उपहृतवती॥ ८८॥

चित्रभानुस्तु शिष्य इव विनयादविनाभूतः सन्निहित एव भूतले कृतप्रणामं (यथास्यात्तथा) न्यषीदत्॥ ८९॥

अथ सा—इति-निगद्य व्यरमत्। अर्धाऽभ्युत्थानं स्त्रीजातिस्वभावः। वामेन करेण वल्कलं विन्यस्यन्ती, दक्षिणेन करेण बिम्बाधरं तिरोदधाना—इत्यन्वयः।

संभ्रान्तमादरातिशयान्निर्गन्तुकामं मन इव निरुन्धाना, नखमरीचिनिचयेन दृश्यमानस्मितेव चिरकालनिरुद्धाया निर्जिगमिषन्त्याः सरस्वत्याः श्रमापनयाय कमलातपत्रमिव कुर्वाणा, निःश्वाससौरभानुबद्धाभिर्मिलिन्दमालाभिर्गुञ्जित-मिषेण विधीयमानवाग्देवतानासीरा, 'महाभाग! धन्योयमद्याश्रमप्रदेशो यो लोकोत्तरानुभावेन भवता समाक्रान्तः, कृतार्थानि वनदेवीनां नयनानि, येषां विषयत्वमायुष्मता समासादितं, फलानुबन्धी ममापि तपःप्रयासो येन भवानतिथिरुपलब्धः; न चास्ति तादृशी शक्तिरस्यारण्यवासिनो जनस्य येनानुरूपसत्कारेणान्तःकरणं परितोषमासादयेत्। दर्शनमात्रेण चानुगृहीते चास्मिञ्जनेऽनुग्रहान्तरमावर्त्तयतु महाभागः। श्रुतं मया मधुमालिन्या नाम-प्रियवस्याया वनदेवतायाः सकाशाद्यथा भारत इव सुपर्वस्पृहणीये भारते वर्षे मगधाधिपतिरपर इव तुराषाट् दानवभयातुराणां देवनारीणां बाष्प-वारिप्रवाहावग्रहो देवो राजशेखरः समं कुमारेण चित्रभानुना भगवतो गृत्समदस्य पादमूलमुपपन्न इति तदनुसारेण चानुपहतशक्तिना कुमारेणे-व तेन कुमारेणैव भवितव्यं महाभागेनेति ममाध्यवसायः प्रादुर्भवन्यथार्थ-कक्षायामर्हति प्रवेशं नवेति' निगद्य व्यरमत् ॥ ९० ॥

स तु देवतानामपि विस्मयाधायिना तैलबिन्दुनेव सहसैव सर्वतोमुखं प्रसरता तेन वृत्तान्तेन संपन्नपरितोषो भगवति! कथं वा महातपसां मनो-वृत्तयो विसंवादिन्यः सम्भवन्ति तथैवेदं यथा निरूपितमार्यया प्राग्भवी-

---

चिरकालनिरुद्धः वह्निर्निर्जिगमिषत्येव। नखमरीचिनिचयेन कमलातपत्रमिव कुर्वा-णा—इत्यन्वयः। मिलिन्दा भ्रमराः। विधीयमानं क्रियमाणं वाग्देवताया नासीरं सेनामुखं यया सा। महाभाग इति संबोध्य धन्यवादं रीत्यन्तरेण प्रतिपादयति—धन्योऽयमित्यादिना। परिचयं प्रकाशयति श्रुतं मया वनदेवतायाः सकाशा-दिति। सुष्ठु पर्वभिः खण्डैः स्पृहणीये महाभारते इव सुपर्वभिर्देवैः स्पृहणीये हिमाचलक्षारसागरपरिच्छिन्ने भारते वर्षे। अवग्रहो वृष्टिप्रतिबन्धः। अध्यवसायो विचारः। यथार्थकक्षायां यथार्थश्रेण्याम्। निगद्य सुव्यक्तमुच्चार्य। व्यरमत् विरताऽभवत् (व्याङ्परिभ्यो रम इति परस्मैपदम्)॥ ९० ॥

स तु...किमित्येवंविधे वयसि तपोनिबन्ध इति—तत्स्वदर्शनेन पापरूपमिव तत्त्वकथनेन संशयरूपमपि मम मालिन्यमपसार्य्यतामिति

यशुभकर्मणां खल्वयमेवंविधो विपाको येन भवादृशैरप्यनुग्रहगोचरत्वमानी-यामहे, सति च महत्समवाये तत्कालोत्पन्नोऽपि शब्द इव तदानीमेव दूरमुपसर्पति विश्रम्भः, अणुमहत्संयोगे च ज्ञानमिव सहसैव समुत्पद्यते धार्ष्ट्यम्, सञ्जाततमासङ्गं च सङ्कुचितमपि बलादेवोल्लास्य कौमुदीव कुमुद-कोरकोदरं समाह्लादयन्ती प्रविशति मानसं दुर्लभवस्तुस्पृहागृह्यमाणे च हृदयेन हार इव सन्मुक्तात्मक इच्छावेशे औचित्या वर्जितः प्रविशन्केन वा वारयितुं शक्यस्तरलभावः, गुरुग्रहावरुद्धं च कुरुव्यूहमिव मनोबलात्प्रवि-शन्नप्यभिमन्युरिव विरोधिभिरवसाद्यत एव विवेकः, तदिदमार्यादर्शनादुत्प-न्ना संभवनाऽतिशयात्प्रकर्षकोटिमारूढा धार्ष्ट्यतारल्याभ्यां सहकृता स्पृहा प्रेरयति मां बलादेव प्रश्ने स्वरसतस्तावदयं देशो मानुषाणामविषय एव अथापि स्वदृष्टान्तेनानुमीयेत, तथापि दिव्यत्वाव्यभिचारिण्या आकृतेः प्रत्यक्षमेव प्रतिकूलमिति न भवत्येवात्रभवत्या मानुषजातीयत्वकोटिका शङ्का, तत्किं वेदवत्येव घृताचीस्वरूपयोग्यया भगवत्या गन्धर्वकुलमनुगृहीतमुत पद्मावत्येव मनोहरिकायाः सख्या कृत्यानुगम्यमानया विद्याधरवंशो विभूषितः, अथ शर्मिष्ठयेव वार्षपर्वणाऽभिन्नया दानवान्वयो बहुमानितः, आहोस्विद्दे-वयान्येव काव्योचितजन्मना ऋषिसन्तानः सनाथितः, किंस्विन्मदयन्त्येव कृतशकुनिसहचर्यया गुह्यककुलमलङ्कृतं, उत देववत्येव जननान्वयेन स्वी-कृतकन्दरमालिकया दैत्याऽन्ववायो मण्डितः। अपि चेह सुखं दुखाभावश्चेति द्वौ पुरुषार्थौ, तदर्थं प्रवृत्तिविषयौ च धर्माधर्मावमुख्यौ, तत्र मोक्षरूपो दुःखाभावस्तत्त्वसाक्षात्कारमात्राधीनः, स च श्रवणाद्यायत्त इति तावदास्तां,

---

व्याहारमुपसञ्जहार। भवादृशैरिति सामान्ये नपुंसकम्। विश्रम्भो विश्वासः धार्ष्ट्यम् = प्रागल्भ्यम्। स्पृहा तरलभावश्चापलम्। विवेकः सदसद्विचारः। अथापि पक्षान्तरे। स्वस्य चित्रभानोर्मम दृष्टान्तेन यथाहं मनुष्यः सन्नत्रा-ऽऽगतस्तथेयमपि काचिन्मानुषी-अत्रागता स्यात्-इत्याकारकेणाऽनुमानेनापि मानु-षीत्वं न सिद्ध्यति-इति भावः, यतः दिव्यत्वाऽव्यभिचारिणी आकृतिः प्रत्यक्षमेव, ( इयं मानुषी न, दिव्याकृतिमत्त्वादित्याद्यनुमानेन ) मानुषीत्वप्रतिकूलतया देवीत्वमेव साधयति अतः पृच्छ्यते मया भवती गन्धर्वकुले जाता, विद्याधरकुले -वा, दानवान्वये वा ? इत्यादयः प्रश्नाः। देवयानी शुक्राचार्यसुता। कुलं पृष्ट्वा शीलं पृच्छति-अपि चेत्यादिना। स च तत्त्वसाक्षात्कारः श्रवणमनननिदि-

सुखन्तु विषयसम्बन्धपराधीनमुत्कर्षापकर्षग्रस्तं स्वरूपतः कारणतश्चानेकविधन्तत्र प्रायेण कन्यकानां गुणवति भर्तर्येवाभिलाषो भवतीत्युत्कर्षसिद्धम्। तत्र भवत्या प्रार्थ्यमानोऽपि दुर्लभ इत्यसंभाव्यं रुक्मिण्या इव गुरुजनानुरोधेन तदप्राप्तिरिति तदर्थमुपायान्तरोपक्रम इत्यप्यविचारितरमणीयमेव। तथा ह्यनुरागस्याऽनर्हविषयतया स्वविरुद्धविषयतया वा गुरुजनः प्रतिबध्नीयात्, तत्राद्यं भवादृशीनामनाशङ्कनीयम्, अनर्हता हि जात्या कर्मणा रूपेण वा स्यात्, सत्यपि वा तपसाऽपि नान्यथयितुं शक्यते इत्यनुपाये

ध्यासनाधीनः। उत्कर्षेण प्राधान्येन सिद्धं प्रसिद्धम्, "वरं वरयते कन्या माता वित्तं पिता कुल"मित्यादि सर्वजनविदितम्। रुक्मिण्याः कृष्णेऽनुराग आसीत् मातापित्रोरनुमतिरप्यासीत्परन्तु ज्येष्ठभ्रातुः रुक्मिणः शिशुपालमित्रस्य महान् प्रतिषेध आसीत्, यदर्थं रुक्मिण्या राक्षसविवाहरूपमुपायान्तरमवलम्बितम्, तव तु न तथेत्याह—**रुक्मिण्या** इति। प्रतिबध्य-( बन्ध्य ) प्रतिबन्धकभावं दर्शयति—**तथाहीति**। विवाहः प्रतिबन्ध्यः, गुरुजनः प्रतिबन्धकः, तथा च गुरुजननिष्ठप्रतिबन्धकतानिरूपकप्रतिबध्यतावच्छेदकत्वमनर्हविषयत्वस्वविरुद्धविषयत्वाऽन्यतरत्वं विवाहानुकूलव्यापाराश्रये वोढरि। विवाहश्च ब्राह्माद्यन्यतमविधिपूर्वक-पित्रादिदत्तकन्यास्वीकृतिपूर्वक—स्वसदनप्रापणाऽनुकूलो व्यापारः। स्वयंवराया अपि पित्राद्यनुमतकुलशीलादिविशिष्टस्यैव वरणविधानान्न दोषः। तथा च वरत्वेनाभिमतनिष्ठमयोग्यत्वं प्रतिबन्धकताबीजम्, अनर्हविषयणी इच्छा भवादृशीनां विवेकिनीनां न संभवतीत्याह—**आद्यमिति**, अनर्हविषयत्वम्। **अनर्हता** च त्रिविधा संभवति—जातिप्रयोज्या, कर्मप्रयोज्या, रूपप्रयोज्या चेति। जातिश्चात्राऽसाधारणो धर्मः, सामान्यरूपो वा, अखण्डोपाधिरूपो वा, देवत्वादिधर्मस्य साङ्कर्य्यग्रस्तत्वेन विवादास्पदत्वात्। कर्म च स्वजातिस्ववर्णनियतमध्यापनरक्षणादिकं, रूपमाकारो मनोहरः, एतेषामतुल्यत्वेऽनर्हता, अत एव कालिदासः—"त्वमात्मनस्तुल्यममुं वृणीष्व"—इति। ननु—"यद् दुष्करं यद् दुरापं यद् दुर्गं यच्च दुष्करम्। तत्सर्वं तपसा साध्य"मित्युक्तेरनर्हत्वनिवारणार्थमेव तप इति चेत्तदपि न संभवतीत्याह—**सत्यपीति**। सती=विद्यमाना—अपि किमुत संभाव्यमाना सा=अनर्हता जातिकर्मरूपप्रयोज्या अन्यथा कर्तुं न शक्यते, अभिलषितसमवेतजात्याद्यन्यथाकरणं प्रति अभिलाषुकसमवेततपोजन्याऽदृष्टस्य हेतुत्वाऽभावात्, सामानाधिकरण्येनैव कार्यकारणभावात्। जन्मान्तरीयान्यथाभावस्तु नात्र विवक्षितः, इतिहेतोरनुपायरूपमेव तपोऽभिलषितजात्याद्यन्यथाकरणे, अतस्तादृशतपश्चरणप्रवृत्तेः पर्य्यवसानमविचार्यकारिता-

प्रवृत्तिरप्रेक्षापूर्वकारितायामेव पर्यवस्यति। द्वितीयन्तु विरोधनिरासद्वारा सत्यपि तस्मिन्गुरुजनस्य विवाहप्रवृत्त्याधायकतया वा संभवदपि विरुद्धरोधनिरासोपायवदपि विरुद्धपरिग्रहवद्गुरुजनानादरपर्यवसन्नत्वसाम्येन तद्वा तादृग्वा न कश्चिद्विशेष इति न सहृदयाशङ्कारोहणार्हम्। स्वाभिलषितस्यैव स्वप्रार्थनकाम्ययाऽयमेतावान्प्रयास इत्यपि शिरोवेष्टनेन नासास्पर्शान्नातिरिच्यते। स्वानभिमताय गुरुजनेन दीयमानया शरीरक्षपणार्थं तपोऽभ्युपगतमित्यल्पायाससाध्ये महत आयासस्याङ्गीकार इति तदेतद्बुद्धिलाघवम्। इहैवाभिमतं कश्चिदनुसरन्त्यास्तदसिद्धयैतादृशकर्मारम्भ इति सोऽयं शान्तिकर्मणि वेतालाभ्युदयः, त्वरिततरमभीष्टमनासादयन्त्या दीर्घकालं तत्प्रतिकूलमेतद्गृहीतमिति वृश्चिकभिया पलायमानस्याशीविषमुखनिपातः, पूर्वम्प्रत्याख्यातस्य कस्यचित्प्राप्त्यर्थमेवमुपक्रान्तमिति घट्टकुट्यां

---

यामेव संभवति। **द्वितीयन्तु** = अनुरागस्य विरुद्धविषयत्वन्तु—न सहृदयशङ्कारोहणाऽर्हम्—इत्यन्वयः। सम्भवदपि गुरुजनस्य विरोधनिरासद्वारा विवाहप्रवृत्त्याधायकतया वा = अथवा तस्मिन् विरोधे सत्यपि पौलोमीपुरन्दरयोरिव कुलशीलादिसम्पन्नतया विवाहप्रवृत्त्याधायकतया विरुद्धो यो विवाहस्तस्य यो रोधः गुरुजनकर्तृकः प्रतिबन्धस्तस्य यो निरासो निवर्तनं तदुपायविशिष्टमपि तपः, विरुद्धस्य कस्यचित्कार्यस्य परिग्रहवन्तो ये गुरुजनाः पूज्यास्तेषां यो ऽनादरः परिभवः, तस्य यत्पर्यवसन्नत्वं पर्यवसानता तत्साम्येन तत्तुल्यतया, **तद्वा** विरुद्धनिरासोपायरूपं वा, **तादृग्वा** विरुद्धनिरासोपायविशिष्टं वा, नात्र कश्चिद्विशेष इति हेतोः सहृदयानामाशङ्कायां सम्भावनायामारोहणार्हं विषयीभवनार्हं न नास्ति द्वितीयमपीति संक्षेपः। विकल्पान्तरमाह—**स्वाभिलषितस्यैवेति**। **शिरोवेष्टनेन नासा स्पर्शनं** द्रविडप्राणायाम—इति प्रसिद्धम्। तस्मिन् हि बाहुना शिरसो वेष्टनमेव भवति। अन्यं विकल्पमाह—**स्वाऽनभिमतायेति**। **अल्पायासः** = अनशनादिः। **बुद्धिलाघवम्** = विवेकराहित्यम्। पुनरपि विकल्पयति—**इह वेति**। **तदसिद्ध्या** = अभिमताऽप्राप्त्या हेतुभूतया, **एतादृशकर्म** = तपश्चरणम्, वेतालो भूतभेदोऽशान्तिकरस्तस्याऽभ्युदयः प्रादुर्भावः। पुनरपि विकल्पयति = **त्वरिततरमिति**। आशीविषो विषधरः सर्पः। पुनरपि घट्टकुटीप्रभातन्यायमुद्भावयति—**पूर्वं प्रत्याख्यातस्येति**। 'कश्चिद्द्रङ्क्षो नृपतिपुरुषैर्ह्रियमानः प्रभाते, राजग्राह्यः कर इह भवन् देय एवात्र कुट्याम्। श्रुत्वा बिभ्यत्प्रवसनरतः सर्वरात्रिं प्रधावन्, तुष्यन् प्राप्तो नृपतिपुरुषैर्घट्टकुट्यां प्रभाते'॥ यदेव परिहार्यं तस्यैवाऽवलम्बन-

प्रभातं चित्तशुद्ध्यनुरोधादेवेदं तप इत्यप्यप्राप्तकालं, स्वधर्माविरोधिन एव तपसस्तदनुगुणत्वं हि श्रूयते श्रुतिस्मृतीतिहासपुराणेषु, स्त्रीणाञ्च बाल्ययौवनवार्धकेषु पितृभर्तृपुत्राधीनत्वमेव परमो धर्मः, नैष्कर्म्यदशापन्नानां नायं नियम इत्यपि बालप्रतारणमात्रम्, जीवन्मुक्तिदशायां परिवादिन्यादिविषयविशेषासक्तेरनुपपत्तेः, एतेन लोकसंग्रहमात्रन्तपोऽर्थ इत्यपि निरवकाशं, विहितकर्मणामेव तदर्थानुष्ठानार्हत्त्वात्, तपोविषयानुषङ्गौ च युगपन्मार्गद्वयेप्यनवकाशौ। अथ पूर्वजन्मसिद्धसाधनसम्पत्तिर्वा, सिद्धादेशो वा, शापो वा, कश्चिदेवंविधप्रवृत्तिहेतुस्तत्कथं साधनं विना तव गम्यं; कथयति चानवरतरोदनोच्छूनं ते नयनद्वयं हृदयस्य कुत्रचिद्व्यासङ्गं मद्वाक्यमाकर्णयन्त्या प्रसर्पन्निःश्वासमारुतो वेपमानश्चाधरदलं, नयनव्यापारविशेषगम्या च चित्तस्य शून्यता स्पष्टमेवाचष्टेऽभीष्टं कञ्चिदर्थं सिद्धिहीनम्, इत्थमनुपपत्तिप्रतिसन्धानसम्बाधं मनो मे न किमपि निर्धारयति-अतः प्रसीदतु भगवती किमित्येवंविधे वयसि तपोनिर्बन्ध इति, न चाशङ्कनीयं किमेतेन ज्ञातेन कार्यमिति, क्लेशयिष्यति हि अनुपेक्षणीयवस्तुविषयोऽयं संशयो निगूढः पाप्मेव

---

मित्यर्थः। घट्टकुटी=करग्रहणशाला। पक्षान्तरमप्राप्तकालत्वेन वारयति—चित्तशुद्ध्येति। 'पिता रक्षति कौमारे' इत्यादि धर्मशास्त्रं स्मारयति—स्त्रीणामिति। 'निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेध'—इत्यस्याप्यनवसर इत्याह—नैष्कर्म्यमिति। बालप्रतारणमात्रमज्ञजनवञ्चनामात्रमिति तदेव साधयति—जीवन्मुक्तिदशायामिति। परिवादिनी=वीणा। पूर्वोक्तेनैव हेतुना लोकसंग्रहपक्षं निरस्यति—एतेनेति। तदर्थं लोकसंग्रहार्थम्। तपश्च विषयानुषङ्गश्चेति द्वन्द्वः। मार्गद्वयं प्रवृत्तिनिवृत्तिरूपम्। अन्यान् तपःप्रवृत्तिहेतून् विकल्पयति—अथ पूर्वेति। पूर्वजन्मसिद्धा या साधनसम्पत्तिः=कारणसामग्री। सततरोदनोच्छूनेन नेत्रयुगलेन हेतुना हृदयानुरागमविषयीभूतं कमप्यनुमाविषयतां नयति—कथयतीति। व्यासङ्गमनुरागम्। स्ववाक्यश्रवणोद्भिन्नदुःखजन्यनिःश्वासादिहेतुभिरभीष्टाऽसिद्धिमनुमिनोति—मद्वाक्येति। सिद्धिहीनमसिद्धम्। पूर्वोक्तैर्नानाविकल्पैः कन्यायास्तपश्चरणाऽनुपपत्तिं प्रसाध्योपसंहरति स्वकीयां वाचो युक्तिम्—इत्थमिति। अनुपपत्तीनां प्रतिसंधानैः संबाधम्=संकटम्। स्पष्टं पृच्छति—अतः प्रसीदतु—इति। निर्बन्ध आग्रहः। स्वकीयजिज्ञासाहेतुमुपन्यस्यति—नचाऽऽशङ्कनीयमिति। यथा भवत्या दर्शनेन पापरूपमालिन्यमपगतं तथा

यावज्जीवं मान्तत्त्वदर्शनेन पापरूपमिव तत्त्वकथनेन संशयरूपमपि मम मालिन्यमपसार्यता'मिति व्याहारमुपसंजहार ॥ ९१ ॥

अथ सा तेन तस्य वचसा पूर्ववृत्तमपि साक्षादिवानुभवन्ती, प्रवाहानुसारेणाविच्छिन्नप्रवाहान्तरेव सरिद्गद्गदरुद्धकण्ठतया वक्तुमशक्तोद्भिद्य निर्गच्छदिव वेगवदश्रुनिरोद्धुमपारयन्ती, निःश्वासोत्कम्पिनि कुचयुगले श्लथवल्कलतया बाहुवीरुधं विन्यस्यन्ती, तिर्यगावर्जितवदनपुण्डरीका, विरहवेदनावेपमानकोकयुगला, विषम-मिलितसुधांशुबिम्बप्रतिबिम्बेवोत्पलिनी, तद्रूपाश्चर्यदर्शनोत्कण्ठयेव नयनमिलितस्य विस्मयातिशयेन द्रवीभवतोऽन्तःकरणस्य वारिमयं परिणाममिव वर्षन्ती, अनेकशः स्नानावसरे विलग्नां बिन्दुसरोवारिधारामिव निःसारयन्ती, तपसि स्थण्डिलशयनसमयेऽन्तःप्राप्तप्रदेशां वर्षतां बलाहकानामासारपरम्परामिवोद्गिरन्ती, भङ्ग्यन्तरेण जीवितमिवोत्सृजन्ती, राहुदंष्ट्राद्वय-क्षत-रन्ध्रनिर्यदरन्ध्रसुधाधाराद्वयमिव वदनचन्द्रं दर्शयन्ती, उभयपार्श्वलम्बमानचामरमिव नासावंशं प्रकाशयन्ती, संसक्तकर्णावतंसकेतकमिव कपोलतलं प्रतिफलितमुक्ताफललतं दर्पणमिव विशदयन्ती-तथा निर्भरतरमरोदीत्—यथा तदुद्बोधकमात्मानं यत्किञ्चित्कारिणमिवापराधिनमिव प्रायश्चित्तीयमिवामँस्त चित्रभानुः ॥ ९२ ॥

अथ समयानुभवाभ्यां मन्दीभूते दुःसहे दुःखावेगे धैर्येण लज्जया तद्वैमनस्यपरिजिहीर्षया च निगृह्य तच्छेषं मुक्ताफलच्छेदस्वच्छेन किसलयान्तरपतितप्रालेयकणक्षोदानुकारिणा कामण्डलवेन वारिणा संप्रक्षाल्य, वदनमनवरतरोदनोपरताश्रुणीव लोचनयुगले बाह्यजलं प्रवेशयन्ती, उत्तरीयवल्कलदुकूलाञ्चलेन संमार्ज्य, तदनुसारेण मन्दीभूतनिःश्वासविकारतयाऽनुपरुद्धकण्ठी तदभिमुखी भूत्वा बभाषे—महाभाग ! महात्मनो जनानपहाय

---

यथार्थकथनेन सन्देहरूपं मनोमालिन्यं दूरीक्रियतामित्याह—तत्त्वदर्शनेनेति । 'व्याहार उक्तिर्लपित'मित्यमरः ॥ ९१ ॥

अथ सा—तथा निर्भरतरमरोदीत्—यथा चित्रभानुस्तदुद्बोधकमात्मानमपराधिनमिवाऽमँस्त-इति सम्बन्धः । शेषं स्पष्टम् ॥ ९२ ॥

अथ समयाऽनुभवाभ्यां मन्दीभूते दुःसहे दुःखावेगे...तदभि-

कस्य वा परस्य स्वारसकी समुदेति परदुःखहेतुजिज्ञासा, संक्रामति हि स्वच्छतरे दर्पणे बिम्बमिव प्रतिबिम्बरूपेण सहृदयानां न्यूनानतिरिक्तेन स्वरूपेण परात्मसमवेतमपि दुःखं, सहृदयजनाय निवेदयिष्यमाणस्य च दुःखस्य मन्दीभविष्यतो निर्वाणाभिमुखस्य प्रदीपस्येवायमेव स्वभावो यदुद्दामतयैव द्योतत इति नेह महानुभावेनात्मनोऽतिक्रमलवोपि शङ्कनीयः ॥ ९३ ॥

श्रूयतामयमापातरमणीयः परिणामविरसः कण्टकिनः पनसफलस्येव मन्दाया मम दुरदृष्टस्य परिणामः। अस्ति भगवता बलसूदनेन गुणगौरवोपग्रहेण गन्धर्वसार्वभौमपदप्रदानप्रकाशितप्रसादातिशयो दुर्योधनबलनिवातकवचकुलदाहधनञ्जयो विचित्रपौरुषानुबन्धश्चित्रसेनो नाम गन्धर्वराजः, तस्य सुन्दोपसुन्दासुरयोरन्योन्यप्रयोज्यनिधननिबन्धतया भुवनविदितसौभाग्यभूमावप्सरोवंशतिलकायमानायां तिलोत्तमायामुत्पन्नां मदयन्तिकां नाम दुहितरं मामवगच्छतु महाभागः। अत्रैवान्तरे विद्याधरेन्द्रश्चन्द्रकेतुर्नयनानन्दघनसाराञ्जनलेखया देव्या चन्द्रलेखया सह विशिष्टापत्यकाम्यया भगवतीं गुहजननीमम्बिकां प्रपेदे। कदाचित्तु स्वप्नदशायां सा साक्षादाविर्भूय

---

मुखी भूत्वा बभाषे। किं बभाषे—इत्याकाङ्क्षायामाह—महाभाग ! महानुभावेनात्मनोऽतिक्रमलवोपि नाऽशङ्कनीय—इति। शेषं स्पष्टम् ॥ ९३ ॥

क्षमापयित्वाऽभिमुखीकृत्य चातीतामात्मकथामुपक्षिपति—श्रूयतामिति। मम दुरदृष्टस्य परिणाम—इत्यनेनान्वयः। **अस्ति चित्रसेनो नाम गन्धर्वराजः—तिलोत्तमायामुत्पन्नां मदयन्तिकां नाम तस्य दुहितरं मामवगच्छतु महाभागः।** गन्धर्वराजं महाभारतप्रसिद्धैरवदानैर्विशिनष्टि भगवता बलसूदनेनेत्यादिना। दुर्योधनबलञ्च (वनवासे) निवातकवचकुलञ्च तयोर्दाहे, धनञ्जयो वह्निरर्जुन इति ध्वनिः। तिलोत्तमां पद्मपुराणप्रसिद्धया कथया परिचाययति—सुन्दोपसुन्दयोरिति। सोदरयोरसुरयोः (सह तपस्यतोः सुरपतिप्रहित-तिलोत्तमार्थे मिथो युध्यमानयोः) अन्योऽन्यप्रयोज्यं यन्निधनं तस्य निबन्धतया = कारणतया—भुवनेषु विदितं = ख्यातं यत्सौभाग्यं तस्य भूमौ = आश्रयभूतायाम्। स्वसख्या मन्दारमञ्जर्या जन्मादिकथां प्रस्तौति—अत्रैवान्तरे = **ममोत्पत्यवसरे विद्याधरेन्द्रश्चन्द्रकेतुः विशिष्टाऽपत्यकाम्यया भगवतीं गुहजननीं**=स्कन्दमातरम् **अम्बिकां प्रतिपेदे**=शरणं प्रपन्नः। स्पष्टमन्यत्। **कदाचित्तु स्वप्नदशायां सा** = **गुहजननी साक्षादाविर्भूय** स्वश्रवणाव-

प्रसादद्दुग्धोदन्वदुत्कलिकाभिरिव हरचूडामणिचन्द्रमण्डलादाचान्ताभिरुद्श्वन्तीभिश्चन्द्रिकाभिरिव प्रसन्नतराभिरपाङ्गभङ्गिभिरिव स्नपयन्ती, स्वश्रवणावतंसपदाभिषेकधन्यां मन्दारस्य मञ्जरीं मकरन्दबिन्दुच्छलेन तद्वियोगखेदजनितान्बाष्पपृषतानिव वर्षन्तीमादाय जगदभयदान-वदान्येन दक्षिणेन गजवदनकुम्भस्थलसमास्फालनसङ्क्रान्तसिन्दूररागेणेव स्वभावारुणेन पाणिना मधुकरगुञ्जितव्याजेन गृहीतवराक्षरामिव पुरस्ताद्भक्तिनम्रस्य तिष्ठतो बद्धाञ्जलेर्जयशब्दमुखरस्य चन्द्रकेतोरादरप्रसारिते प्रमोदोत्कम्पिनि करे समर्पयामास ॥९४॥

स तु तां शिरसि निधाय, तदानीमेवान्तर्हितायां सकलविबुधाभ्यर्हितायां भगवत्यां जगदम्बिकायां वहिर्निर्गम्य, तत्प्रसादमुपघातकेभ्यो रक्षितुकामः स्फटिककुट्टिमप्रतिबिम्बितबालनलिनीवल्लभमण्डलेऽरुणमणिमयभाजनभ्रमेण निदधान एव तत्क्षणाद्विगलितनिद्रो विशृङ्खलप्रमदार्द्रचेतास्तेन स्वप्नवृत्तेन देवीं चन्द्रलेखामप्यानन्दयाम्बभूव । अन्यदाऽनतिचिरादेव तस्मात्कमलाङ्कितकरा श्रीरिव दुग्धोदधेः, अग्निशिखा दीप्तदेहा सतीव तुषारशैलात्, कविविद्यासञ्चारहेतुर्देवयानीव दानवाचार्यात्, विबुधाभिलषणीया दमयन्तीव विदर्भराजाद्भीमात्, नीलोत्पलपरिमलललिता पाञ्चालीव दहनान्तरादाविर्बभूव कन्या भुवनत्रयललामभूता चन्द्रिकेवश्चन्द्रलेखोदरात्; तस्याश्च स्वप्नानुरोधेन नामानुरूपे समये मन्दारमञ्जरीति नाम सङ्केतयामास ॥९५॥

---

तंसपदाभिषेकधन्यां मन्दारस्य मञ्जरीं भक्तिनम्रस्य चन्द्रकेतोः करे समर्पयामास । तस्या अम्बिकाया वियोगेन यो खेदो दुःखं तज्जनितान् बाष्पबिन्दून् । स्पष्टमन्यत् ॥९४॥

स तु = चन्द्रकेतुः, तां = मन्दारस्य मञ्जरीं, शिरसि निधाय–अन्तर्हितायामम्बिकायां वहिर्निर्गम्य–तत्प्रसादं निदधान एव तत्क्षणाद्–विगलितनिद्रः 'सन्' तेन स्वप्नवृत्तेन देवीं चन्द्रलेखामपि–आनन्दयाम्बभूव । अन्यदा = वर्षाऽभ्यन्तरे चन्द्रलेखोदरात्कन्यका प्रादुर्बभूव, तस्याश्च स्वप्नानुरोधेन नामाऽनुरूपे समये मन्दारमञ्जरीति नाम सङ्केतयामास । कविविद्या=कविता । दानवाचार्यः शुक्रः । नामानुरूपे नामकरणयोग्ये ॥९५॥

अथातिवहति नातिवहावनेहसि स्नेहसिच्यमानमानसाभ्यां पितृभ्यामपत्यान्तरविरहादेकप्रवाहीभूतप्रयत्नाभ्यामभ्यधिकमाधीयमानोपचारयोरावयोरीषन्मात्रावशेषबालभावयोर्गुणवद्भर्तृसमागमं मनसि कृत्य पित्रनुज्ञाप्रयुक्तयोः सहचरीभिः सह सकलसौभाग्याधिदेवतां भगवतीं सर्वमङ्गलां परितोषयितुमेतत्प्रदेशमागम्यापौरुषेयप्रतिष्ठां दाक्षायणीसाक्षात्कारपूर्वकं परितोषयन्त्योर्दिव्यत्वेन साजात्यं, समाने वयसि वृत्तिः, शीलसंवादो, दैशिकं सामानाधिकरण्यञ्चेत्येतैः प्रत्येकमेव सख्यहेतुभिर्मिलितैः सद्भिरसंख्येयगुणं महत्सौहार्दमुदजृम्भत। तत्प्रसङ्गेन चात्र चिरतरं विहृत्य दिवसावसाने चक्रवाकवत्परस्परविरहेण सन्तप्यमाने चावां पूर्वदिवसीयवार्तानुध्यानेन भाविदिवसकेलिकलाकलापसमाकलनकल्पनया च कथञ्चिदतिवाह्यातिदीर्घायमानां निशीथिनीं, प्रातरेव परस्परं संयुज्य नानाविधैः केलिकलापैः सुखं समासीने हैमवतीपरिचर्याप्रसङ्गेनातिवाहयाम्बभूविम भूयांसं समयम्॥९६॥

अथैकदा—रावण इवोपहितपलाशपुष्पोत्कटोल्लासे, भीमसेन इव सौग-

---

अथ न अतिवहौ—अनेहसि—अतिवहति सति गुणवद्भर्तृसमागमं मनसि कृत्य, पित्राज्ञाप्रयुक्तयोः सर्वमगलां परितोषयितुमेतत्प्रदेशमागम्य, परितोषयन्त्योरावयोः = मदयन्तिकामन्दारमञ्जर्योरसंख्येयगुणं महत्सौहार्दमुदजृम्भत। दाक्षायणी=सती, सर्वमङ्गला=उमा इति मूर्तिद्वयम्। गन्धर्वत्वविद्याधरत्वयोर्धर्मयोर्भेदादाह—दिव्यत्वेनेति। साजात्यं, सवयस्कत्वं, समानशीलवत्वं, समानाऽभिजनवत्वञ्च समुदितानि मैत्रीप्रयोजकानि—इत्यत उक्तं—मिलितैः सद्भिरिति। तत्प्रसंगेन = सख्यप्रसंगेन, दुर्गापूजाप्रसंगेन, सुखं समासीने 'आवाम्' भूयांसं समयमतिवाहयाम्बभूविम। रात्रौ स्वस्वसदननिवासेन भिन्नदेशवत्वं चक्रवाकसाधर्म्यम्। आवाम्=सख्यौ। अनुध्यानेन... कल्पनया च उपास्यदेवतानुरागो दर्शितः। हैमवती—ग्रहणेन "तत्रोदेशे उमां हैमवतीं ददर्श"—इत्युपनिषत्प्रमाणीकृता। अतिशयेन बहु=भूयान् (बहोर्लोपो भू च बहोः इतिभूरादेशः प्रत्ययादेर्लोपश्च) तं भूयांसमित्यनेनात्यन्तविकृतशब्दप्रयोगेण भाविनीष्टसिद्धौ विकृतिः सूचिता, अतएव वाक्यसमाप्ति-सूचकक्रियावाचकानन्तरं प्रयोगः॥९६॥

अथ-एकदा—बिभ्रति प्रादुर्भावं सुरभिमासे.....कलयति क्षितिवलयं मलयमारुते, नित्यवदेव पर्य्याप्य—सपर्य्यादिकमार्य्योपचारं

न्धिकाहरणकृतमनुष्यधर्मनलिनीप्रवेशे, कमल इव कर्णिकारचितशोभे, बृहत्कथानिबन्ध इव प्रकटपाटलिप्रसङ्गे, युवतिवदन इव साभ्रतिलके, कृष्ण इव कालीयकानुभूयमानसंरम्भे, प्रतारक इव जातरूपसंपत्कोविदारकूटे, मलय इव कृतमालोदयरमणीये, कुसुमितसहकारानोकहकूजत्कोकिलकुलकलकलाकुले, विकसितकुरवकोदरासीनमधुकरविडम्ब्यमानराकानिशाकरान्तर्वृत्तिकलङ्कलावण्ये, अशोकतरुदोहदाभिमुखवरवर्णिनीजनचरणाभिघातरणदरुणमणिनूपुरानुक्रियमाणमधुपशिञ्जितमनोहरतदीयकुसुमावतारे,

---

**कुमार्य्यो वनीय-कामनीयक-दिदृक्षया वशमुपनीयमानाः-सममावाभ्यां यथा-निजस्पृहं विजह्रुः।** वसन्तसमये प्रादुर्भवति सति, मलयाऽनिले क्षितिवलयं व्याप्नुवति सति, कन्यकाः पूजा-स्तुति-पाठ-गीत-प्रदक्षिणाकां सर्वमङ्गलासेवां नित्यवदेव समाप्य, काननकमनीयतादर्शनेच्छया 'प्रयोजिकया' स्वाधीनीकृताः सत्यः आवाभ्याम् ( मदयन्तिकामन्दारमञ्जरीभ्याम् ) सह यथेच्छं क्रीडन्तिस्म। अस्य गद्यस्य पूर्वार्धे सुरभिमास उपमेयम्, रावणादय उपमानानि, ( उभयत्र 'यस्य च भावेन भावलक्षण'मिति सप्तमी) इवादयो वाचकाः सादृश्यस्य साधारणा धर्माः क्वचिदर्थतः श्लिष्टाः, प्रायस्तु शब्दतः। उत्तरार्धे मलयमारुतो वर्ण्यः, मन्द-सुगन्ध-शीतलताव्यञ्जकानि-भावलक्षणसप्तम्यन्तानि विशेषणानि। वसन्तवर्णनेन कालस्योद्दीपकता, मलयमारुतवर्णनेन देशस्य कालस्य च दर्शिता। श्लिष्टपदानां कोषाः प्रायः पूर्वभागे लिखिताः। उपहितः जनितः पलाशानां मांसाशिनां पुष्पेण = विकाशेन—उत्कटस्तीव्र उल्लासो हर्षो यस्य तस्मिन् रावणे-इव-जनित-किंशुककुसम-तीव्रविकाशे—सुरभिमासे—( 'पुष्पं विकासकुसुमस्त्रीरजःसु नपुंसकम्'—मेदिनी ) 'आज्ञप्तोच्छिष्टयोः क्लीबमुत्कटस्तीव्रमत्तयोः' इति च मेदिनी॥ "सौगन्धिकन्तु कल्हारे पद्मरागेऽपि कत्तृणे। पुंल्लिङ्गो गन्धपाषाणे सुगन्धिव्यवहारिणि। नलिनी पद्मिनी, व्योम-निम्नगा कमलाकरे। नपुंसकं नीलिकायाम्, न पुंसि सरसीरुहे"। सौगन्धिका स्वयंवरा च। हरणम् = नयनम् वहनम्, आहरणमन्यत्र। **कर्णिकया** रचिता शोभा यस्मिन्। कर्णिकारैः चिता=वर्धिता। **बृहत्कथानिबन्ध** उपलभ्यमानस्य बृहत्कथा-सारस्य, कथासरित्सागरस्य च मूलभूतो महर्षिकात्यायनविरचितो ग्रन्थः। तत्र **पाटलि**वर्णनम् तत्पुत्रवर्णनञ्च। अन्यत्र पाटलिः कुबेराक्षो, लोध्रभेदश्च। **अभ्रं** धातुभेदः, अभ्रपुष्पञ्च, नामैकदेशग्रहणात्। मलये **कृतमाला** नदी, "क्वचित्क्वचिन्महाराज! द्रविडेषु विशेषतः। ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी"—इति भागवतात् १२। वसन्ते कृतमाल आरग्वधः।

युवतिजनश्रवणावतंसपदापन्नचम्पककलिकानुगम्यमानचिकुरनिकरान्धकार-दीप्यमानदीपिकाविलासे, मुकुलव्याकुलबकुलकुले, प्रकटितपाटलापटलपाटवे, ग्रथितयूथिकायूथे, किंशुककोरकखण्ड्यमानशुकतुण्डपाण्डित्ये, मधुमधुरमाधवीविधीयमानपुष्पन्धयसम्बन्धे, बन्धुजीवानुबन्धबन्धुरे, वनलक्ष्मीकनककर्णिकारमणीयकर्णिकारे, सिन्धुवारसन्दर्भसुन्दरे, कुन्दकलिकाकलितवनदेवीस्मितविभ्रमे बिभ्रति प्रादुर्भावं सुरभिमासे, विरहविधुरविदेहनन्दिनीसहचरीभूतलङ्कोपवनाशोकलतिकाप्रवालपरामर्षिणि लवङ्गभङ्गसौरम्भाङ्गीकारिणि निविडितद्रविडकामिनीकपोलफलक-पुलकप्ररोहे, मलयजोन्मलनमिलितपरिमलशालिनि जर्जरितसह्यनिर्झरे, विरहपाण्डुपाण्ड्यवधूगण्डमण्डलावलम्बितालकलतातरलताविधायिनि आन्दोलितताम्रपर्णीततटवितताम्रपर्णे, समास्फालितकावेरीकल्लोलजाले, कार्णाटिकारतिनाटिकासूत्रधारे, पम्पाकल्लोलसंपातानुभाविनि गोदातरङ्गोदारसीकरशालिनि मालवीकुचकलशालङ्करणनिधुवनश्रमवारिबिन्दुपयमुक्ताफलजालकापहारिणि, कुम्भसंभवतपोवनावगाहनाधिगतमेवाग्निहोत्रधूमलेखया, सह्यशिखरासङ्गादनुगतयेव बलाहकलेखया, मलयपर्वतात्पानव्यसनादनुसरन्त्येव विरहिनिवहमोहनदृष्टसामर्थ्ययाऽसितभुजङ्गनायिकया विन्ध्यसम्बन्धलग्नयेव गन्धसिन्धुरगण्डस्थलदानजलपृषत्परम्परया, बलादारुध्यनीयमानयेव मानिनीमनोमानलोहशृङ्खलया, सौरभानुसारादवलग्नया मधुकरमालयाऽनुस्रियमाणे केरलीकेशपाशसञ्चारेष्वनुभूतकृपाणपत्रवनप्रवेशे चैत्रचन्द्रमुखीनाभिमण्डलप्रवेशेषु प्राप्तपातालग्रहान्तर्भावे, महाराष्ट्रवरारोहानिवहवक्षोरुहावरोहणेषु समधिगतगिरिशिखरपाते, प्रियतमपरिरम्भपुलकितलाटललनाकलेवरपरिमलनेषु साक्षात्कृतकण्टकशयननिवासे, कार्णाटकामिनीकर्णावतंसकेतकीकिसलयाकलनकलासु प्रत्यक्षितकरपत्त्रपाटनप्रयासे, विरहिनिवहनिबर्हणजनितपातकविपाकमिवानुभवति, राम इवाकलितसुवेलाचलकल्लोलिनीकलकलोल्लासे, चन्दनवन इव परिशोलितमलयमेखलाकलापे, वर्षासमय

---

युवतिजनश्रवणाऽवतंससंपदमापन्ना या चम्पककलिका तयाऽनुगम्यमानः— चिकुरनिकरान्धकारे-दीप्यमानदीपिकाया विलासो यस्मिन् । पुष्पन्धया भ्रमराः। कावेरी नदी कवेर पर्वतात् । तृतीयान्तपदप्रतिपाद्यैः पदार्थैरनुस्रियमाणे–मलय-

इव विहितदर्दुरमुखारवोद्गमे, नीललोहित इव स्पृष्टाग्निशिखोत्करमञ्जुल-
लाटाङ्गने, रामसैन्य इवानुज्झितचन्दनगन्धमादनसद्भावे, समुद्रतरङ्ग इव
प्रवालोल्लासकारिणि, हैहयाधिपताविवावगाहक्षोभितरेवाप्रवाहे, दशमुख-
इवोपहितमाल्यवदनुसारे, देवकीहृदय इव प्राप्तकृष्णोत्कलिकान्तरे, तापस
इव विहितप्रस्रवणसानुपरिचये, केसरिणीव रयस्फुरितकेसरे, अहल्याहृदीव
धृतमहेन्द्रागमतरलभावे, बलाराविव बलात्कृतगौतमीसमासङ्गकेलौ, यूनीव
सह्यसदारामासङ्गे, बालकृष्ण इव कदम्बक्रीडाकृतामोदे, नलसेताविवोपरिष्टा-
देव कृतसागरतरङ्गपरिष्वङ्गे, किरात इव साक्षात्कृतऋक्षवद्वनविहारे, चन्द्र-
मसीव वियुक्तहृदयं कवलयति कलयति क्षितिवलयं मलयमारुते, नित्य-
वदेव पर्याप्य सपर्यादिकमार्योपचारं कुमार्यो वनीयकामनीयकदिदृक्षया
वशमुपनीयमानाः सममावाभ्यां यथानिजस्पृहं विजहुः ॥ ९७ ॥

अथ विषयसंवादस्य स्पृहाप्रवाहहेतुतया दूरमतिक्रामति दिदृक्षारस-
सन्तानेऽयं मञ्जरीरजोविरूपिततत्सौरभानुबन्धिमधुकरप्रारब्धप्राकृतरूपक-
कुहूकण्ठकुहरितमनोहरशिखरः सहकारतरुः, एष ज्वलदुल्मुककलापभ्रम
कलुषितमत्तचकोरकचञ्चुचुम्ब्यमानकोरकोऽशोकानोकहः, अयममन्दनिस्प-
न्दमानमकरन्दविन्दुसन्दोहसुन्दरः कुन्दनिकुञ्जः, इयमसाधारणगृध्नुमधु-
पनिरुद्धधवलभावा माधवीलता, इयमालिखितप्रायसमालिह्यमानसुमनस्क-
मधुपालिमूलकमालिन्यशालिनी नवमालिकापालिः, इयमियत्तारहितस्पृहा-
ग्रहसहकृतद्विरेफालिसमास्फालिता शेफालिका, एष तमालमालान्तरालकृता-
लयतया कोरकसञ्चयकञ्चुकितः संपादितशम्पाभ्युदयसंपच्चम्पकपादपः,
अयं मुकुलसंपदवधूतमधुमदविधुरवधूकपोलमधुरभावो मधूकतरुः, अयं
कण्टकग्रथितचरणनिश्चलशिलीमुखग्रहणलोलवलीमुखावलिविधूयमानकण्ट-
कविद्धकरकृतचमत्कृतिरङ्कोलद्रुमः, एष विमर्दसहतया चिरमपेतग्लानिभिर-
लङ्कारोचितैः कुसुमैरुपहितचिरण्टिकाप्रीतिः कुरण्टककुटः, असौ नित्यम-

मारुते । **गौतमी**=अहल्या, गोदावरी नदी च । **ऋक्षवद्वनं**=भल्लूकविशिष्टं वनम्,
अन्यत्र ऋक्षवान् पर्वतो नर्मदा दक्षिणतीरस्थस्तस्य वनम् । सुगममन्यत् ॥ ९७ ॥

**अथ**—विषयसंवादस्य स्पृहाप्रवाहहेतुतया दूरमतिक्रामति दिदृक्षा-रससन्ताने—
अयं सहकारतरुः, एष अशोकाऽनोकहः, अयं मधूकतरुः, अयमङ्कोलद्रुमः, एष
कुरण्टककुटः, असौ कर्णिकारकः, इदं तरुलतम्, अयं वेतसलतामण्डपः, एष

सौरभतया गत्यनिवर्त्तमानैरन्यैश्च भ्रमादभिमुखीभवद्भिर्भ्रमरभारैरशून्य-परिसरप्रवेशनिर्गमो वर्णिकामात्रसारः कर्णिकारकः, इदं कुसुमपरागसिक्तिलं तरुतलम्, अयमविरलदलान्तरालयोग्यः पवनप्रवेशोऽनवकाशितांशुमदंशुजालो वेतसलतामण्डपः, एष कुसुमसमूहनिरन्तरो दहन इव धूममलिनो मधुकरोपजीवनीयो बन्धुजीवकः, अयमन्धकारमेचको निरस्तबकशोभस्तबकशोभनो लक्ष्यमाणनक्षत्रलक्षदन्तुरशरदन्तरिक्षसदृक्षो मुनिवृक्षगुच्छः। कुवलयावलि! वलयावलिभिरलिभियोत्तरलिताभिराकुलयसि कोकिलकुलम्, अम्बुजमुखि ! जम्बुबुद्धिमुग्धकीरमुखकीर्यमाणकुचालङ्करणनीलोपलानिव नलीं लोपलापिनी नाकलयसि, मुक्तावलि! मुक्तासि मुक्तावलिसंकटात्, सहकारि! समञ्जसय सहकारमञ्जरिग्रहग्रहिलस्य शयकुशेशयस्य, रसमञ्जरि! मञ्जीररसितानुसारिकलहंसकुलवारणाय कलहंसकाऽऽकुला किमसि जलधरधियामाधायिनीमनुसर कथंचिद्बहुलनिशीथिनीमिव तमालवीथिकां, कुन्दकलिके! कलिकेलिरसादपसरन्ती वीरुधा निरुद्धासि किमिति कोपतरलतारकं भ्रुकुटिभङ्गुरभालं च मां निभालयसि, नवमालिके! मालिके पतितं तमालपत्रातपत्रलीलं शिथिलं कुन्तलकलापमपसारय, शिखण्डिनि! खण्डितबिम्बाधरापि करवर्त्तिना शुकेन नाम नावबुध्यसे, कुरङ्गिके ! कुरबकतरुरेवैष दैवात्समासादितोयं भावनोद्भावितवल्लभविभ्रमात्परिरभसेव, कुलमालिके! हृदयमेवाकुलमालिभ्यो निगूहसि मन्ये शून्यनयनसञ्चारानुमि-

---

बन्धुजीवकः, अयं मुनिवृक्षगुच्छः। कुवलयावलि! आकुलयसि कोकिलकुलम्, अब्जमुखि......नाकलयसि। मुक्तावलि! मुक्तासि मुक्तावलिसङ्कटात्। वनविहरणच्युतमुक्ताहारां प्रति सख्याः परिहासः। सर्वत्रैवम्। मुक्तावलिधारणरूपात् सङ्कटात्। सहकारि! शयकुशेशयस्य समञ्जसय। सहकारमञ्जर्या ग्रहे = ग्रहणे ग्रहिलस्य आग्रहवतः शय एव कुशेशयस्तस्य समञ्जसय। कर्मणः शेषत्वविवक्षायां षष्ठी। विवक्षाप्रयोजकं शय शय इति यमकम्। "पञ्चशाखः शयः पाणिः"। "सहस्रपत्रं कमलं शतपत्रं कुशेशयम्"—इत्यमरः। कलैरव्यक्त—मधुरराविभिः हंसकैः पादकटकैराकुला किमिति जलधरधियां मेघबुद्धीनामाधायिनीं तमालवीथिकामनुसरेति–रसमञ्जरि! अनुसर कथञ्चित्तमालवीथिकाम्। कुन्दलतिके...किमिति मां निभालयसि। नवमालिके! कुन्तलकलापमपसारय। शिखण्डिनि! नाऽवबुध्यसे। कुरङ्गिके! परिरभसे—इव। कुलमालिके!

तमीयमानमानसविकारा कलयापि नाकलयसि बाह्यं ग्राह्यजातमित्येवंविधैः कुतूहलबहलैर्नर्मानुबन्धिभिश्चालापैरनपेक्षितपरस्परं स्वस्वस्पृहानुसारेण विरहन्तीषु सर्वासु दैवादहं समानविषयकाकाङ्क्षानुरोधादनुज्झितसहचारया वयस्यया कलावत्या सार्धमन्यतमं दिग्भागमुपगृह्य गच्छन्ती पुरत एवैकीभूतमिव वार्षिकबलाहककुलं, तेजोमात्रानुच्छेद्यमिव तिमिरस्तोमं, कालायसप्राकारमिवान्धकाराणां समुदायतापन्नमिव काननकुञ्जरकूटं, भूमिपतितमिव शरदन्तरिक्षैकदेशं, सार्वदिकमिव घनसमयनिशीथं, निरन्तरलग्नविटपच्छन्नभागं तमालगहनमद्राक्षम् । प्रविश्य च वनपरिभ्रमणसुलभेन परिश्रमेण तदवलोकनजन्मना बालभावबहुलेन च कुतूहलेन कलेवरे चान्तःकरणे च युगपदेव गृह्यमाणेदं गम्यत इदं गम्यत इत्यभिनिवेशेनाऽऽभरणमणिकिरणापसार्यमाणतिमिरेण मार्गेण दूरतरमपक्रान्ता किञ्चिदिव सजातसाध्वसा जीवनसद्भावेपि गर्भवासमिवानुभवन्ती प्रवेशावधेर्देशस्य भूयांसं विप्रकर्षं विज्ञाय कुत्रचित्किञ्चिद्विरलदलान्तरप्रविष्टतनुतरतरणिकिरणशलाकाभिस्तत्पर्यन्तं भूमिं सन्निहितामवगम्य जातविश्रम्भाऽभिमुखेनैवाध्वना निर्जिगमिषन्तो तदानीमेवाहमनार्या इमामार्यामश्रौषम्—

"समुपहिताञ्जनवत्सलनयनव्यापारभृङ्गविभ्रमभूः ।
मदयति कस्य न हृदयं मदयन्ती दृश्यमानेयम्" ॥९८॥

---

कलयाऽपि नाकलयसि बाह्यं ग्राह्यजातम्—इत्येवंविधैः कुतूहलबहलैर्नर्मानुसारिभिश्चालापैरनपेक्षितपरस्परं स्वस्वस्पृहानुसारेण विहरन्तीषु सर्वासु—दैवादहं वयस्यया कलावत्या सार्धमन्यतमं दिग्भागमुपगृह्य गच्छन्ती—पुरत एव—**तमालगहनमद्राक्षम्, प्रविश्य च** परिश्रमेण कुतूहलेन युगपदेव गृह्यमाणा, 'इदं गम्यते'—इत्यभिनिवेशेन दूरतरमपक्रान्ता, किञ्चिदिव 'जातसाध्वसा' प्रवेशावधेर्देशस्य भूयांसं विप्रकर्षं विज्ञाय कुत्रचित्किञ्चिद्विरलदलान्तरप्रविष्टतनुतरतरणिकिरणशलाकाभिस्तत्पर्यन्तां भूमिं सन्निहितामवगम्य—जातविश्रम्भा अभिमुखेनैवाऽध्वना निर्जिगमिषन्ती तदानीमेव—अहमनार्या—इमामार्य्यामश्रौषम्—

"समुपहिताञ्जनवत्सल–नयनव्यापारभृङ्ग–विभ्रमभूः ।
मदयति कस्य न हृदयं, मदयन्ती—दृश्यमानेयम्"—इति ।

अत्र गुच्छान्ते प्रथमे भागे—इदमादयः प्रत्यक्षत्वावच्छिन्ने शक्ताः ।

अथ तमालगुल्मव्यवधानेन चक्षुःसंयोगविरहात्तद्विषयकचाक्षुषाभाववन्तमात्मानमेव दृष्टान्तयित्वा, स्वभिन्नस्य स्वविषयकचाक्षुषाभावेऽनु-

---

सहकारतरुप्रभृतयः कर्तारः पञ्चदश मञ्जरीरजोविरूपित्वादिभिर्विशेषिताः। कुवलयावलि! इत्यारभ्य सम्बुद्धयन्तानि पदानि क्रियाभिरन्वितानि। इत्येवंविधै-रित्यारभ्य कुमारिकावनविहारोपसंहारपूर्वकं प्रकृतानुसरणम्। यथा निजस्पृहं विजह्युरिति प्रतिज्ञातं, तत्प्रकारदर्शनाऽधिकारार्थकोऽथशब्दः, विषयस्य संवाद उपभोगः, स चाऽभिलाषपरम्पराकारणकः। दिदृक्षासन्तानः दर्शनेच्छापरम्परा। मञ्जरीणां रजसा विरूपिताः—तत्सौरभाऽनुबन्धिनश्च ये मधुकराः तैः प्रारब्धं यत् प्राकृतरूपकं कुहूकण्ठकुहरितं तेन मनोहराणि शिखराणि यस्य स सहकारतरुः। एवमुत्तरत्र व्याख्येयम्। माधवी रूक्षपत्रा लता वसन्तादारभ्य शरत्पर्यन्तं पुष्प्य-ति। पालिः लताग्रम्। शेफालिका=सुवहा रात्रौ पुष्प्यति। मधूक-महीरुहः इति पाठः समुचितः। अङ्कोलः=अङ्कोटः=निकोचकः पर्यायाः। तरुलतमि-त्यत्र समाहारद्वन्द्वः। मुनिवृक्षस्याऽगस्त्यस्य गुच्छः स्तबकः। अलिभिया=भ्रमर-भिया, उत्तरलिताभिः=चलायमानाभिः वलयानां कटकानाम् आवलिभिः=श्रेणीभिः शिञ्जन्तीभिरित्यर्थः। कोकिलानां समूहमाकुलयसि? इति काकुः। आकुलयसि किम्—इत्यर्थः, एवमुत्तरत्र। समुपेति—सम्यगुपहितेनार्पितेन अञ्जनेन वत्सले प्रेमपूरिते कमनीये ये नयने तयोः व्यापारश्चालनमेव भृङ्गस्तस्य विभ्रमस्य भूःस्था-नम्—इयं मदयन्ती दृग्गोचरं गता सती कस्य हृदयं मनो न मदयति—अपि सर्वस्य रागवतो विरागवतश्चेत्यर्थः। लतापक्षे—समुप...नयनव्यापारवत्—ये भ्रमरास्तेषां विशिष्टभ्रमणस्य स्थानम् इयं पुरतो वर्तमाना मदयन्तीरूपा॥ ९८॥

अथ—तस्मादतिमलीमसाद् गुल्मात् (गुल्मसदृशात्तमालगहनात्) निरगाम्, निर्गम्य च किमिदमिति व्याकुलहृदया कयोश्चित्पुंसोः संवा-दमश्रौषम्। अथ आर्याश्रवणानन्तरं कयोश्चित्पुंसोः संवादमश्रौषमित्य-न्वयः। कथं तपःस्विन्याः कन्यायाः अपरिचितपुरुषसंवादश्रवणमिति शङ्कां परिह-रति—चक्षुः संयोगविरहादिति। तत्र हेतुस्तमालगुल्मव्यवधानम्। ननु कयो-श्चित्संवदतोः पुरुषयोश्चक्षुःसंयोगो मयि नास्तीति कथमज्ञायि त्वया—इत्याकाङ्क्षाया-माह—तद्विषयकेत्यादि। यथा—अहं पुरुषद्वयविषयकचाक्षुषप्रत्यक्षाभाववती तथा पुरुषद्वयं मद्विषयकचाक्षुषप्रत्यक्षाभाववत्, तमालगुल्मव्यवधानात्, 'येनेन्द्रियेण यद्द्रव्यं ज्ञायते तन्निष्ठा जातिस्तदभावश्च तेनेन्द्रियेण ज्ञायते' इति नियमात्—मदय-न्त्याः पुरुषद्वयविषयकचाक्षुषाऽभावः प्रत्यक्षः, (अहन्तौ न पश्यामीति प्रत्ययात्) तमेतं स्वकीयचाक्षुषप्रत्यक्षाभावं दृष्टान्तयित्वा स्वभिन्नस्य=पुरुषद्वयस्य, स्ववि-

मीयमानेऽपि, विद्यमाने च तस्य शब्दस्य पुरुषीयत्वानुमाने रागवशादारोप्य, तत्राहार्यमप्रामाण्यज्ञानं परिगृह्य, शब्दनिष्ठवैजात्यानुमितां तद्दिशं स्वनामसंवादात्सखीजनसन्निधानशङ्किनी परित्यज्याभिमुखमध्वानं दक्षिणभागेन पुरस्तादुपसर्पन्त्या कलावत्या पाणिभ्यामुभयपार्श्वप्रेरिततमालदलया विहितमार्गा तस्मादतिमलीमसाद्गुल्मात्सौदामनीव वारिधरोदरान्निरगाम्; निर्गम्य चेतस्ततो निरूपयन्ती सखीजनमनाकलय्य किमिदमिति व्याकुलहृदया मदनभिमुखदिग्द्वारकघनतरमाधवीनिकुञ्जान्तरितयोरदृश्ययोः कयोश्चित्पुंसोः संवादमश्रौषम् ॥ ९९ ॥

"वयस्य ! लतामिमां मदयन्तीरूपकेण रूपयता त्वया कौतुकं महन्मयोद्भावितं कथय तां पौराणिकीमाद्यन्ततःकथां, कालकलाचेयं निदाघदारुणा विश्रामयोग्यश्चायं देश" इति। अहमपि तदाकर्ण्य जातप्रवृत्तिविसंवादापि कमनीयकथाङ्कुरितकौतुका बहिरेव निलीय तावदस्थाम् ॥ १०० ॥

अथापरस्तत्र जलधरस्तनितगम्भीरेण स्वरेण परितो निकुञ्जवर्तिनो मयूरानुत्कन्धरानादधानोऽदृश्यमानोप्यपरिचीयमानोपि मदीयं श्रोत्रमिवान्तःकरणमपि कथारसेनेवाकाण्डोदयिना प्रणयामृतेनापरिमितेन स्तिमितय-

---

षयकः = मदयन्तीविषयकः = एते मां न पश्यत इत्याकारकः, चाक्षुषाऽभावोऽनुमीयमानः। तथाहि-'एतौ मद्विषयकचाक्षुषाभाववन्तौ, तमालगुल्मव्यवधानात्,मद्वत्', एतादृशे अनुमाने जायमानेऽपि, तस्य शब्दस्य=आर्योच्चारणादिध्वनेः पुरुषसंबन्धित्वानुमाने वर्तमाने च, 'अयमार्योच्चारणशब्दः पुरुषीयः, पुरुषीयस्वरवत्वात्, यन्नैवम् तन्नैवम्' इत्याकारकेणाऽनुमानेन तयोः पुरुषत्वनिश्चयेऽपीति भावः। ननु–आनुमानिके पुरुषनिश्चये कथं तदभिमुखं निर्गता इत्याकाङ्क्षायामाह—**रागवशात्** 'आर्योच्चारकं जानीया'मित्याकारकलालसावशात्, तत्र = आनुमानिके पुरुषत्वनिश्चये, आह्रियते आनीयते रागद्वेषादिभिरिति आहार्यम्-अस्वाभाविकं, कृत्रिममप्रामाण्यज्ञानमयथार्थज्ञानमारोप्य प्रादुर्भावयित्वा, शब्दनिष्ठमार्याध्वनिवृत्तियद्वैजात्यं विलक्षणता तदनुमितां दिशं परिगृह्य तन्मार्गमवलम्ब्येत्यर्थः। सुगममन्यत्। लज्जापरिहाराय **मदनभिमुखेत्यादि** ॥९९॥

**वयस्य! ततः आद्यन्ततः पौराणिकीं कथां कथय, विश्रामयोग्यश्चायं देश इति स्पष्टम्। अहमपि तदाकर्ण्य बहिरेव निलीय तावदस्थाम्।**
स्पष्टम्। जातः प्रवृत्तेर्मदभिमतीया वार्तायाः, विसंवादो विप्रलम्भो यस्याः। 'विप्रलम्भो विसंवाद'–इत्यमरः ॥ १०० ॥

**अथाऽपरस्तत्र...कथां कथयितुमुपक्रान्तवान्।** लताभिराकर्ण्यमानां

न्नुद्वेलयंश्च विस्मयवारिधिमधुपाधूतविटपविगलन्मकरन्दसीकरकैतवेन प्रमदबाष्पविप्रुष इवातिस्थूला बह्वीरुत्सृजन्तीभिर्विस्मयविशेषविकसितानि लोचनानीव कुसुमानि बिभ्रतीभिर्मन्दमारुतावेल्लितोपरितनविटपतयोत्तमाङ्गानीव विधुन्वतीभिर्वनलताभिरिवाकर्ण्यमानां, मञ्जुतरमधुकरगुञ्जितमिषेणादृश्यमानाभिर्वनदेवताभिरिवाभिनन्द्यमानां, प्रतिश्रुदपदेशेन सन्निहितगुहाभिरिवानूद्यमानां, विषयवैलक्षण्येन जातकुतुकाभिर्निकुञ्जदलान्तरमात्रप्रकाशितमुखाभिर्दिग्भिरिव श्रूयमाणां कथां कथयितुमुपक्रान्तवान् ॥१०१॥

अस्ति पृथिव्यां परमपावनम् अवतारइव ब्रह्मभुवनस्य, जननस्थानमिव धर्मस्य, सत्त्वमिव सत्यस्य, अविच्छेद इव कृतयुगस्य, शौनकप्रभृतीनां महामुनीनामाश्रयो विविधद्रुमखण्डरमणीयं नैमिषाभिधानमरण्यं; यत्राद्यापि व्याकोशकुसुममयनयनसहस्राः पवनसम्मिलितपल्लवा द्रुमा भगवन्तं दधीचमुपतिष्ठमानस्य वृत्रजिघांसया वज्रनिर्माणाय तत्कीकसकामस्य पाकशासनस्य स्मारयन्ति पुराणतपोधनान्। कदाचित्त्ववतीर्णे माधवे मासि कुसुमितास्वमितासु युवतिष्विव लतासु सर्वजनोन्मादके समये सुरेन्द्रशिल्पिनो विश्वविदितप्रभावस्य रविश्वशुरस्य विश्वकर्मणो दुहिता, केवलेन लावण्यगुणेनेव विहितावयवसन्निवेशा, रतिरिव गृहीतावतारा, सौन्दर्याधिदेवतेव मूर्तिमती, यौवनसम्पदिव सञ्चारिणी चित्राङ्गदा नाम यदृच्छया सहचरीभिः सह स्वर्लोकं सम्पदिव वनं दिदृक्षमाणा तदुपागमत् । तां च सरस्वतीतीरेषु लतानिकुरम्बेषु विश्रब्धं विहरन्तीं सुचरितानुकृतदेवस्य सुदेवस्य तनयो राजाऽजाकृपाणीयन्यायेन तत्रागतो द्वितीय इव मीनकेतनो, द्वयोरेकीभूत इव नासत्यो, गृहीतजन्मान्तर इव पुरूरवाः. सुरथसंज्ञो ददर्श;

---

वनदेवताभिरभिनन्द्यमानां, गुहाभिरनूद्यमानां, दिग्भिःश्रूयमाणामित्युत्प्रेक्षणम् । कथा=इतिवृत्तम्। कथनं वर्णनम्। उपक्रम आरम्भः । अतो न पौनरुक्त्यम् ॥१०१॥

**अस्ति पृथिव्यां नैमिषाऽभिधानमरण्यम्, यत्राऽद्यापि...पाकशासनस्य स्मारयन्ति पुराणतपोधनान्।** नैमिषं 'हरदोई' मण्डले गङ्गानिकटे। **कदाचित्तु—अवतीर्णे माधवे मासि—विश्वकर्मणो दुहिता चित्राङ्गदा नाम तद् ( वनं ) उपागमत्।** अजाऽऽगमनमिव कृपाणपतनमिव अजाकृपाणीयमाकस्मिकत्वम् अकस्मादित्यर्थः। द्वयोर्नासत्यमूर्त्योरेकीभूत एवयं प्राप्तः। पुरूरवाः=

परस्परदर्शनादव्यवहितोत्तरमुहूर्त एव च तयोर्विशिष्यविषयज्ञानानपेक्षाना-दृतप्रत्याख्यानावमानकक्षोऽनवेक्षितसम्भलीमुखोऽन्योन्यमनुक्तगुणगौरवोऽन-ङ्गीकृतगुरुजनगौरवोऽनालोचितप्रत्यवायोऽनाकाङ्क्षितप्रपञ्च उपायान्तरैरव्य-वहितोऽवहेलितसहचरीसमूहो धारावाहिकः समयक्रमानपेक्षी कोप्यनुरागा-नुबन्ध आविरभवत् । येन सा तदभ्यर्थनानन्तरमेव पितुरनुरोधेन वार्य-माणाऽपि वयस्याभिरगणयन्ती दृष्टादृष्टविरोधैः सह तद्वचांसि तद्वशैव भूत्वा तदभ्यर्थनान्नातिचक्राम । अथ कृतानुमतावपि तस्यामननुभूतसुरतसुख एव सुरथः सुरशिल्पिना स्वातिक्रमनिबन्धनेन यस्मादनादृत्य मामतिक्रम्य च पुरातनं कन्यकाधर्मं स्वातन्त्र्यमात्रेण पतिं वृतवत्यसि तेन विवाहो भर्तृ-योगो वा न ते भविष्यतीति वाचि व्याहृतायां तत्प्रणुन्ना देवी सरस्वती विश्वामित्रवाक्येन वशिष्ठमिव तं राजानं त्रयोदशयोजनान्तरं तरङ्गैरपज-हार । सा तु स्वस्यानपहारेण राज्ञश्चापवाहनेन स्वभाग्यानि गर्हयन्ती मुहू-र्तादेवातर्कितोपनिपातया दुर्निवारया मूर्च्छया हृतचैतन्यासीत् । ततस्ससं-भ्रमादितस्ततः प्रचलितासु तत्प्रतीकारकामासु वयस्यासु दैवादागतचैतन्या-सुरवर्धकिकन्या देहन्यासमेव तत्समयन्याय्यं मन्यमानाऽनन्यापेक्षा सती सरस्वत्यामेव न्यपातयदात्मानम् । सापि तस्याः स्वावच्छिन्नमपि प्रियतम-

---

सोमपौत्रो बुधसुतः । दर्शनीयोपमानभूता एते । **परस्परदर्शनाव्यवहितमुहूर्त एव च तयोः धारावाहीकः समयक्रमाऽनपेक्षी कोप्यनुरागाऽनुबन्ध आविरभवत्** । कक्षाः श्रेणीः । 'कुट्टिनी सम्भलीसमे' अमरः । **धारावाहीको** निरन्तरः समयाऽनपेक्षी विलम्बाऽसहः । कोप्यनिर्वचनीयः । **येन सा वयस्याभिः वार्यमाणाऽपि तदभ्यर्थनां नातिचक्राम** । वारणे हेतुः—पितुरनुरोधः। स्वच्छन्दः, स्वयंवरश्चेति—गान्धर्वो विवाहो द्विविधः । स्वच्छन्दे दोषबाहुल्यात्पित्राद्यनुमतः स्वयंवर एव निर्विवादः, अत एव श्रीहर्षः "कतिपयदिवसैर्वयस्य यावः स्वयमभि-लष्य वरिष्यते वरीयान्"—इति पितुर्मुखेनैव स्वयंवरं प्रतिपादितवान् । "नापे-क्षितो गुरुजनो न त्वये"त्यादिना कालिदासः स्वच्छन्दत्वे दोषं दर्शितवान् । स्वातन्त्र्ये दोषं दर्शयति—अथेति । **अथ कृतानुमतावपि तस्याम्, देवी सर-स्वती तं राजानं तरङ्गैरपजहार** । तत्र हेतुः पितुः सुरपतिशिल्पिनो व्याहृतिः । तत्प्रणुन्ना = विश्वकर्मवचनप्रेरिता, देवी सरस्वती नदी नैमिषस्था । विश्वामित्रेति दृष्टान्तः दे० भा० म० भा० च । **सा तु मूर्च्छया हृतचैतन्याऽऽ-सीत्** । ततः सा सरस्वत्यामेव न्यपातयदात्मानम् । साऽपि = सरस्वत्यपि तरङ्ग-

संयोगं क्रोधादसहमानेव तरङ्गवेगाच्चित्राङ्गदां गोमत्या सह सङ्गमयामास, सापि तत्साहसमसहमानेव तथैव प्रचुरश्वापदपादपे विपिने पातयाम्बभूव। तत्र च प्राणान्परिजिहासन्तीं यदृच्छया नभसि संचरन्नञ्जनसंज्ञो गुह्यकराजोऽवतीर्य सौजन्यादनिबन्धनबन्धुर्दयार्द्रहृदयः समाश्वास्य, 'भद्रे ! मैवमात्मानं हासीः प्रतिपद्यस्व यमुनातीरे भगवन्तं श्रीकण्ठं ततो लप्स्यसेऽभीप्सित'मिति समाश्वास्य यथाभिलाषमगमत् ॥१०२॥

सा च सञ्जातप्रियतमसमागमप्रत्याशा यथोद्दिष्टं देशं गत्वा दिग्द्विरदानोदितां नदीमिव समुदायत्वमापद्य स्पन्दमानां, नीलोत्पलपलाशमालिकामिव वसुन्धरया स्वहृदये धार्यमाणां, भागीरथीविरहदूनस्य विहायसो द्रवीभूतस्य कैश्चिदवयवैरारब्धां, तन्मिलनाभिलाषेण वहन्तीमिवैकां मूर्तिं धृतसमधिकब्रध्नसाध्वसां, तिमिरसन्ततिमिव तत्कन्यारूपेण परिणताम्, अनन्ते संसारे परिवर्तमानानामनन्तानां जीवानां कर्मलेखनार्थमिव परमेश्वरस्य मसीद्रवसन्ततिम् अन्तर्गतकालीयकहालाहलानलज्वालाजालविकारेणेवाऽऽचूलमूलं मालिन्यमापन्नां, सरस्वत्सरित्सरोभ्यो निपीतां हरिदश्वोदरवृत्तितिमिरसन्ततिमिवानुदिननिपीयमानतमःसंसर्गेण मालिन्यमापन्नां, यमस्वसृतयेव प्राप्तकालस्वभावां, सर्वतःप्रतिफलिततीरतमाल-

वेगात्—चित्राङ्गदां गोमत्या सह सङ्गमयामास। गोमती नदी कूर्माचलान्निःसरन्ती गङ्गासरय्वोर्मध्ये वहन्ती काश्या उत्तरे मार्कण्डेयसन्निधौ गङ्गायां संगच्छते। तदानीं सुरथस्य सरस्वती प्रवाह एव विद्यमानत्वात्स्वावच्छिन्नेति। साऽपि गोमत्यपि। तस्याः चित्राङ्गदाया अविचार्यकारित्वमसहमानेव–विपिने पातयाम्बभूव। श्वापदाः क्रूराः सत्त्वा व्याघ्रादयः। तत्र च–अञ्जनसञ्ज्ञो गुह्यकराजो दयार्द्रहृदयः समाश्वसिहि प्रतिपद्यस्व यमुनातीरे भगवन्तं श्रीकण्ठं ततो लप्स्यसेऽभीप्सितमिति समाश्वास्यागमत् ॥१०२॥

सा च यथोद्दिष्टं देशं गत्वा भगवतीं यमुनामपश्यत्। यमुनां विशिनष्टि—दिग्द्विरदेत्यादिना श्यामत्वप्रतिपादकेन विशेषणनिचयेन। स्पन्दमानामिति प्रयोगेण यमुनाप्रवाहस्य स्वभावो दर्शितः। स्वहृदय–इति भूमध्यस्थत्वेन। विहायसो–मूर्तिमित्यनेनान्वयः, (मालिन्यं व्योम्नि)। ब्रध्नः सूर्यः। कन्येति 'कालिन्दी सूर्यतनया मसीद्रवस्य सन्ततिः परम्परा धारेत्यर्थः। कालीयको नागः। आचूलमूलमाद्योपान्तम्। हरिदश्वः सूर्यः। 'कृतान्तो यमुनाभ्राता शमनो यमराड् यमः। यमुना च यमस्य सा। कालः श्यामलमेचकाः'। प्रतिफलितं प्रतिबिम्बितम्।

सन्तानामिव कस्तूरिकोदकमयीमिव कज्जलजलस्वरूपामिव राजजम्बूरसतरङ्गिणीमिव बलाहककुलकेलिमिव निशीथिनीयूथवीथीमिव नीलोपलखनिमिव पराशरत्रासादद्यापि धृतनीहारनिवहमालिन्यां, जलमयीं धूर्जटिमूर्तिमिव कण्ठतटकालकूटकान्तिसन्तानेन स्वच्छतया सर्वावयवसंक्रान्तेनाकलितमेचकभावां, क्रीडत्कृष्णकायप्रभाभारेणेव प्रसारिणा सर्वतःपरिक्षिप्तां, सतीविरहसन्तप्तसन्देहसम्बन्धेन प्राप्तासितभावामिव स्वर्वाहिनीम्, अनवरतधाराधरश्यामलितदिग्विभागां मूर्तां प्रावृषोधिदेवतामिव वहन्तीम्, अनिलान्दोलनादुल्लसद्भिरुल्लोलकल्लोलजालैर्विहायसो नीलभावमिव भर्त्सयन्तीं, तरङ्गवेगोद्गतैश्च गमनोन्मुखैर्मुक्ताफलावदातैरुदबिन्दुभिः स्वस्मिन्मग्नोत्थितानां पापपरिहारपूर्वकं स्वर्गगमनमिव दर्शयन्तीं, कल्लोलमालानां परस्परास्फालनेन स्फुटीभवद्भिश्च स्फटिकरजःशीकरैः फेनपटलैरशेषतीर्थानां पावनभावमिवोपहसन्तीम्, अभ्रभ्रममिलिताभिरिव बकावलिभिरलङ्क्रियमाणां, कारण्डवमण्डलमण्डिताम्, अप्रत्यूहदात्यूहव्यूहकृतकोलाहलां, जलदभ्रमाकुलनीलकण्ठकुलक्रियमाणाकाण्डताण्डवपाण्डित्यां, शरद्गगनमतिमिलितराजहंससंसदवतंसाम्, अखिलमुनिजनाननीयां, महापातकनिवहापहारिणीं भगवतीं यमुनामपश्यत् ।। १०३ ।।

तत्तीरभुवश्च महतो मनुष्यसंचाररहितस्य यामुनजलसेकोपाधिकनीलिमशालिभिरिव निविडदलच्छन्नैरनेकजातीयैरनोकहसमूहैस्तिरोहितमही-

---

कस्तूरिका मृगमदः । कज्जलं धूमजन्यम् । राजजम्बूः फलेन्द्रः । बलाहको मेघः । पराशरो वेदव्यासपिता । नीहारः कुहरः । धूर्ज्जटिर्नीललोहितः । सती दाक्षायणी शिवपत्नी स्वर्वाहिनी गङ्गा शिवजटाजूटस्था अतः संबन्धः । 'स्त्रियां प्रावृट्' । अधिदेवताऽधिष्ठात्री । भर्त्सयन्तीं तर्जयन्तीम्, तिरस्कुर्वन्तीमित्यर्थः । सामान्यतः कालिन्दीजलस्य श्यामलत्वप्रतीतावपि वस्तुतोऽभास्वरशुक्लस्य सत्तामुत्प्रेक्षते–**तरङ्गे**त्यादिना । यमुनाजलस्य वियति विक्षेपे श्यामत्वपरित्यागादाह-**पापपरिहारे**ति । स्फटिकरजोयुक्ताः शीकराः स्फटिकरजः शीकराः । कारण्डवो मद्गुः । दात्यूह कालकण्टकः । संसद् गोष्ठी । निवहः = समूहः । भगवतीं निखिलैश्वर्यशालिनीं यमुनामपश्यत् ॥ १०३ ॥

**तत्तीरभुवश्च महतः सर्वतोमण्डितस्य विपिनस्यैकदेशे देवतायतनस्य प्रविश्याऽभ्यन्तरं भगवन्तं नीलकण्ठनामधेयं प्रणम्य परिक्रम्य**

तलस्य मत्तमातङ्गगण्डस्थलकण्डूमिलितमहोदकसुरभिगन्धाहूताभिश्च महापादपपरिसरेषु बद्धमण्डलाभिर्दिगन्तरतिरोधायिनीभिर्मधुपमालाभिर्नभस्यपि समारभ्यमाणेतरयमुनाप्रवाहस्य, वीरस्येव कृतसिंहासनादस्य, क्रौञ्चाचलस्यैवान्तर्गतसहायसहितमहिषस्य,वृन्दावनस्येवेतस्ततः सञ्चरत्कृष्णसारदेशस्य, नन्दनस्येव हरिसञ्चारोचितस्य विपिनस्यैकदेशे केतकपरागपरम्पराभिर्गङ्गाधरगात्रसङ्गतभस्मधूलिभिरिव ताण्डवरसोद्धूताभिर्भ्रियमाणस्य सिन्दुवारस्तबकैरुज्वलतरैरक्षतैरिव पूर्यमाणकुन्दमुकुलैर्मुक्ताफलैरिव कीर्यमाणस्य पवनोद्धूताभिः केतकदलद्रोणीभिर्धवलपताकाभिरिव सर्वतो मण्डितस्य देवतायनस्य प्रविश्याभ्यन्तरं भगवन्तं सुरासुरमुनिमनुजमाननीयमजरामरमपरिमेयमकुण्ठसामर्थ्यं श्रीकण्ठनामधेयं प्रणम्य, परिक्रम्य च दक्षिणतो नीलतनुना नीललोहितेनेव स्वयमुपयुज्यमानपरिमलस्य तत्स्पर्शादिव कण्टकितस्य खरतरकपिकररुहोल्लिखितफलभरनम्रस्यान्यतमस्य बिल्वतरोर्मूले समासीनं,चरणप्रणामसमयलग्नया शशिशेखरचरणनखरखण्डेन्दुचन्द्रिकयेव तत्पारिजातस्रजो रजोलेखयेवोज्वलतरया भस्मपुण्ड्रकया मण्डितभालतलम्, अनिलरयप्रसञ्चिताभिश्च पशुपतौ साक्षात्प्रवेशमलभमानाभिस्तत्प्रतिनिधितयेव तत्र संलग्नस्य केतकरजोराजिभिरुपरञ्जिताभिर्मन्दाकिनीवारिसीकरविभूषिताभिर्भगवन्तं, भवानीपतिमिव जटाभिर्भ्राजमानं, कृष्णाजिनसंवृततनुं, नीलजलदान्तरालवृत्तिमिव सहस्रकिरणं, सुधादीधितिमिव वसुधा-

---

च, दक्षिणतोऽन्यतमस्य बिल्वतरोर्मूले समासीनं जातवेदसमिवोपात्ततापसवेषं भगवन्तम् ऋतध्वजमवेक्षाञ्चक्रे। विपिनं विशिनष्टि–महतो-विस्तीर्णस्य। उत्प्रेक्षते यामुनजलेति। मधुपमालानां कृष्णत्वात् सुरसरणावपि यमुनाप्रवाहान्तरमुत्प्रेक्षते–मत्तेत्यादिना। असनं क्षेपणमासः, असु-क्षेपणे वीरपक्षे। आसनमासः, आसु-उपवेशने सिंहपक्षे, नादः समानः, बहुव्रीहिः। महिषोऽसुरः, महिषाः सैरिभाः। सञ्चरता कृष्णेन सारः सारवान् देशो वृन्दावनस्य। सञ्चरन्तः कृष्णसारा अजिनयोनयो येषु तादृशा देशाः प्रदेशा यस्य विपिनस्य। नन्दनं सुरपतिविहारवनम्। हरिः सुरेशः, मृगेशश्च। देवायतनं विशिनष्टि–केतकेत्यादिना। सिन्दुवारादयो व्याख्याताः। पताका वैजयन्ती। सुराऽसुरादिसेवितत्वेन पक्षपातरहितत्वम्, अतएव परमेश्वरत्वम्। श्रीकण्ठः–हिमवतः परिसरे यमुनातटे। बिल्वतरुं विशिनष्टि-नीलतनुनेत्यादिना। समासीनमित्यादीनि द्वितीयान्तानि,

मवतीर्णं,जातवेदसमिवोपात्ततापसवेषं भगवन्तमृतध्वजमवेक्षाञ्चक्रे॥१०४॥

तयाऽभिवादितोऽनुयुक्तया निवेदितस्ववृत्तान्तश्च स महातपस्वी ऋतध्वजः क्रोधादुषर्बुध इवोद्बुद्धो यस्माद्धर्मज्ञम्मन्येन विबुधाधमेन तेनैतावत्यपि वयसि वराय तनयामप्रयच्छता प्रत्युतेयमभिमतं योग्यञ्च पतिं वृण्वानाऽनपराधैव शप्ता तस्मादङ्गीकरोतु प्लवगभावमिति वाचि व्याहृतायां शप्त्वा विश्वकर्माणं, वत्से ! मा विषादं कार्षीः, गच्छ च कृच्छ्रतप्तगात्राऽपि सप्तगोदावरं, तत्र सकलभुवनमहनीयमहामहिमानं हाटकेश्वरं हरं सेवमाना तावदास्व यावत्तत्रापराः स्तिस्रः कन्याः समायान्ति ततो भवितव्यं भवतीनां सहैव विवाहमहोत्सवेनेति विससर्ज चित्राङ्गदां –

"न सोऽस्ति कश्चित्त्रिदशोऽसुरो वा यक्षो न मर्त्यो रजनीचरो वा ।
इदं हि दुःखं मृगशावनेत्र्याः संमार्जयेद्यः स्वपराक्रमेण ॥"

इति विलिख्य श्रीकण्ठायतने श्लोकं, निर्वापिततापा कवोष्णीभूतमानसा सा पयोष्णीं महानदीमगमत् ॥१०५॥

---

(वाक्यार्थविशेषणप्रतिपादकानि) ऋतध्वजमित्यस्य विशेषणानि । अवेक्षाञ्चक्रे= ईक्षदर्शनाङ्कयोः, भ्वा.आ. लिट्, इजादेश्चेत्याम् ॥१०४॥

तया चित्राङ्गदया, अनुयुक्तया=ऋतध्वजेन पृष्टया, निवेदितस्ववृत्तान्तश्च ऋतध्वजो विश्वकर्माणं शप्त्वा, वत्से ! मा विषादं कार्षीः गच्छ सप्तगोदावरं, तत्र हाटकेश्वरं हरं सेवमाना तावदास्व यावत्तत्राऽपरास्तिस्रः कन्याः समायान्ति, ततो भवितव्यं भवतीनां सहैव विवाहमहोत्सवेन,–इति 'न सोऽस्ति'–श्लोकं श्रीकण्ठायतने विलिख्य चित्राङ्गदां विससर्ज, सा–निर्वापिततापा सती कवोष्णीभूतमानसा पयोष्णीं महानदीमगमत् । कृच्छ्रेण तप्तं गात्रं यस्याः सा तादृश्यपि । सप्तानां गोदावरीणां समाहारः । गोदावर्य्यां उत्तरतः पयोष्णी-वेणी-वारिधारा मिलन्ति, पूर्वत-इन्द्रावती, दक्षिणतो द्विधा मञ्जीरेति सप्तनदीसमाहारः ( विशेषतोऽस्मदीयगोलसूत्रे ) । हाटकेश्वरं मनोरथसिद्धिकरम् । 'न सोऽस्तीति'–इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः । मन्दिरेषु मनोरथलेखनशैली वर्ततेऽद्यापि । पूर्वमत्युष्णीभूतं सत् कवोष्णीभूतं मन्दोष्णीभूतं मानसं यस्याः । 'पयोष्णी तप्ततोयदा', अस्याः सङ्गमे सप्तगोदावरम् ॥१०५॥

विश्वकर्माऽपि तदभिधानसमनन्तरमेव ययातिरिव निरुद्धवृत्तिकेषु, त्रिदिव निवासनिबन्धनेषु कर्मसु वलीमुखकलेवरो हनुमानिव परिभ्रश्य-न्नभ्रतलाददभ्रतालतमालमालूरशालिन्याः शालूकिन्यास्तीरे पपात। तत्र च भूयांसं समयमभिव्याप्य कापेयानुरूपया वृत्त्या वर्तमानो जातुचिद्गात्रगौरवा-भोगेनावगीतमन्दराचलं कन्दरमालिनं नाम दानवेन्द्रं मुदिरमिव सौदामन्या कन्यया त्रिभुवनरम्ययाऽनुगम्यमानमालोक्य तामपहरन्गृहीतचन्द्रहासेन क्रोधाद्विहितभयावहाट्टहासेन महासुरेणानुबध्यमानो निर्वाहममन्यमानो हिमालयपरिसरे गत्वा श्रीकण्ठवने देववतीं निक्षिप्य दानवेन्द्रखड्गधारायामिव कालिन्द्यामेव दुर्निवारवेगायामापगायामापतत् ॥ १०६॥

अथ विहिततदुभयान्वेषणेऽन्यतरस्याप्यनासादनेन दुहितरं कथाव-शेषामवधार्य निजालयं पातालमेव प्रयातवति-अमन्दरयाऽश्रुमालिनि कन्द-रमलिनि यमुनया दूरतरमपवाहितो यदृच्छयोन्मज्ज्य तामन्वेष्टुकामस्त्वष्टा तत्परिभ्रष्टात्मदर्शनेन प्रमुह्यगुह्यकेन्द्रमन्तरिक्षे सञ्चरन्तमञ्जनं नाम खञ्ज-नावमानप्रसञ्जनयोग्यनयनया दानवेन्द्रदुहितुः प्रतिरूपभूतया तनयया वेद-वत्याऽनुभूयमानसहभावं निभालयमानोऽत्यन्तसारूप्यदोषेण श्रीकण्ठायतने

---

**विश्वकर्माऽपि—वलीमुखकलेवरोऽभ्रतलात्—शालूकिन्यास्तीरे पपात।** ननु स्वर्गनिवासहेतूनां कर्मणां विद्यमानायां कथं शापेन भूतलनिवास आर-भ्यते—इत्यत आह—**निरुद्धवृत्तिकेष्विति।** तथा च—शापस्य भोगजनक-प्रारब्धकर्मव्यापारप्रतिबन्धकत्वादन्तरैव शापफलभोगः सम्पद्यते। **तत्र च—कापेयाऽनुरूपया वृत्त्या वर्तमानो जातुचित् कन्दरमालिनं दानवेन्द्रं कन्ययाऽनुगम्यमानमालोक्य तामपहरन् महाऽसुरेणानुबध्यमानो देववतीं श्रीकण्ठवने निक्षिप्य कालिन्द्यामेवापतत्।** चन्द्रहासः खड्गः। अनुबध्यमानः = अनुरुध्यमानः। **देववती** कन्दरमालिनः कन्या भाविनी जाबालिपत्नी ॥१०६॥

**अथ दुहितरं कथावशेषामवधार्य पातालमेव प्रयातवति कन्दर-मालिनि यदृच्छयोन्मज्ज्य त्वष्टा ( वानररूपः ) गुह्यकेन्द्रमन्तरिक्षे सञ्चरन्तम् अञ्जनं नामदानवेन्द्रदुहितुः ( देववत्याः ) प्रतिरूपभूतया तनयया वेदवत्याऽनुभूयमानसहभावं निभालयमानः—भ्रान्ततरात्मा तामादित्सुराद्रवत्।** भ्रान्तौ हेतुरत्यन्तसादृश्यम्, तच्च देववतीवेदवत्योर्यथा नाम्नि तथैवाऽऽकारेऽपीति बोध्यम्। उपादित्सायां हेतुः—**श्रीकण्ठायतनेत्यादि।**

विन्यस्ता दानवतनयैव साऽमुना स्वर्गमानीतेति भ्रान्ततरात्मा तामुपादित्सुराद्रवत् ॥ १०६ ॥

तस्यां तु मद्यन्त्यां दमयन्त्यामिव शबरेण तेन कपिनोपादातुमिष्यमाणायामेव भयातिरेकाद् हिरण्वत्यां नाम स्रोतस्वत्यां निपतितायामवधारिततन्निधनश्च गुह्यकेन्द्रोऽञ्जनाचलं गत्वा व्रतेनैव समयं गमयाम्वभूव ॥ १०७ ॥

मद्यन्ती तु तया हिरण्वत्या महावाहिन्या प्रवाहवेगेन दूरतरमपवाह्यमाना दैवादवाप्ततीरभूमिस्तावताप्यायासेन देहमजहत: स्वान्प्राणान् गर्हयन्ती सुकृतकुशलप्रजं कोशलदेशमासाद्य तादृशेनासाद्यमाना दु:खेन, गत्यन्तरविरहादहानि कानिचिद्गच्छन्ती मरकतमणिसमूहमिव पद्मरागमिश्रितं, शुककुलमिवैकत्र पुञ्जतामापन्नं,बहलदलनिचितं हरित्पदसम्वन्धेन दिश इव शाखाभिस्तिरयन्तम् , अत्युच्चशिखरतया पुष्करद्वीपवर्तिनं न्यग्रोधमिव स्पर्द्धया तत एव दिदृक्षमाणं,संवर्तसमयवटसंघर्षेणेवान्तर्गमिततापसबालकम् , अभ्रव्याप्ता-

---

दानवतनयैव सा—इत्यन्ता भ्रान्तिः, अमुनेत्यादि भ्रान्तिपोषकम् । अतस्मिँस्तद्बुद्धिर्भ्रान्तिः, भ्रान्त्याश्रयो भ्रान्तः, अतिशयितः स भ्रान्ततरः—तादृशः आत्माऽन्तःकरणं यस्य । आद्रवत्—आङ्पूर्वाद् द्रुगतावित्यस्माल्लङ् ॥१०६॥

शवरेणोपादातुमिष्यमाणायां दमयन्त्यामिव ( नलत्यक्तायां भीमसुतायामिव ) तस्यान्तु = वेदवत्यान्तु, कपिना विश्वकर्मणा, उपादातुं ग्रहीतुमिष्यमाणायामेव भयाधिक्याद्-हेतोः मद्यन्त्याम् = पर्जन्यसुतायां, हिरण्यवत्यां नाम महास्रोतस्वत्यां निपतितायाम्—अवधारिततन्निधनश्च गुह्यकेन्द्रः ( अञ्जनः ) अञ्जनाचलं गत्वा व्रतेनैव समयं गमयाम्वभूवेत्यन्वयः । वेदवती वानरेणापहृता, मद्यन्ती भयान्नद्यां निपतिता, अञ्जनेन तयोर्निधननिश्चयोऽभिमत-इत्यर्थः ॥ १०७ ॥

मद्यन्ती तु—दैवादवाप्ततीरभूमिः कोशलदेशमासाद्य, महान्तं रोहण- (वट) महीरुहमपश्यत् । सुकृतकुशलाः प्रजा यस्मिन्—कोशलदेशमयोध्याप्रान्तं, तालव्यप्रयोगोऽनुप्रासानुरोधात् । उत्तरकोसलत्वेऽपि सामान्यतः प्रयोगः कोसलः, महाकोसलः, दक्षिणकोसलः, उत्तरकोसलश्चेति—(षट्त्रिंशद्गढ़) छत्तीसगढ़ जबलपुर—नागपुराऽयोध्याप्रदेशेषु प्रयुज्यन्तेऽधुनापि शब्दाः । गच्छन्ती = भ्रमन्ती । 'पालाशो हरितो हरित', 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' । हरित्पदवाच्यत्वमुभयोः सम्बन्धः । वाच्यभेदाद् वाचकभेदेपि समानानुपूर्वीकत्वमादायैकपदवाच्यत्वं विवक्षितम् । पुष्करद्वीपः सप्तमः । न्यग्रोधमिवेति—उत्प्रेक्षाछलेनपर्य्यायकथनम्-एवं वट—इति । संवर्षः स्पर्धा । अभ्रेण व्याप्तमम्बरतलं येन तम् ।

म्बरतलं, स्वसमावेशाननुरूपमिव मत्वा रसातलाभिमुखप्ररोहसहस्रं महान्तं रोहणमहीरुहमपश्यत्। श्रमवशविवशतया च हिमगिरिगह्वरशिशिरां तदीयामेव च्छायामाश्रित्य समासीना तिर्यगूर्ध्वमधस्ताच्च कौतुकोत्तरलं चक्षुः प्रक्षिपन्ती तदीयामन्यतमां शाखामाश्रित्य वर्तमानं संवर्त्तजातवेदसमिव पिङ्गलजटाजालज्वालाकलापमातपप्रवेशानुचितमपि वटाभ्यन्तरप्रदेशं, विभातविभावसुप्रभापिञ्जरितमिव सञ्जनयन्तम्, अननुभूतच्छायासुखतया तदनुभवस्पृहया तदन्तःप्रविष्टमिव भास्वन्तं, तेजःसंसर्गस्पृहयालुतयेवान्तगतान्यतमशाखया गृहीतं, पश्चाद्विकमपि तपसां सर्ववेदानां तेजसां च पारे विद्यमानं बालकं तापसाकारमुदीक्ष्य यदृच्छावशात्प्रयुक्तपृच्छा, तेनापि 'महामुनेर्ऋतध्वजस्य तनयोऽहं केनचिद्वानरेण बलीयसा निर्भर्त्स्याकाण्ड एव बद्धोऽस्मि, अभिहितं च तेन महर्षिणा प्रागेव पञ्चवर्षशतानि वर्षं बन्धनमनुभविष्यसीति, अपि च दृढतरं वटशाखया सह जटा इव व्याप्य परितुष्टेन तेनैव दशदिग्व्यापी केनचिदनुच्छेद्यो वज्रमयः पञ्जर इव कृतोऽयं लतायन्त्रपाश' इत्येषा मम वार्ता। भवती पुनः का कुतो वेति तेनोत्तरिता कृतानुयोगा च जातविस्मया बभाषे—'भगवन्नहमस्मि गुह्यकाधिपतेरञ्जनस्य प्रम्लोचाभिधायामप्सरसि संभूता मदयन्ती नाम मन्दायतिः कन्या, उत्पन्नमात्रायामेव मयि किल मुद्गलो नाम समुद्गतत्रैकालिकविज्ञानो महर्षिर्नियतमनया महाराजमहिष्या भवितव्यं किन्तु कुमारभावेऽनुभवनीयो महान्संशय इत्याह, तदुत्तरमेव दिव्यानां दुन्दुभीनां निनादो द्रुमाणां च कुसुमवर्षमाविरभवत्, येनान्येपि तदुक्तौ दृढतरप्रामाण्यनिश्चयभाजनमभूवन्' इत्युक्त्वा कपिकृतोपद्रववृत्तान्तमप्यालपत्॥ १०८॥

---

**श्रमवशविवशतया च** तदीयामेव च्छायामाश्रित्य, चक्षुः क्षिपन्ती, तदीयामन्यतमां शाखामाश्रित्य वर्तमानम् बालकं तापसाकारमुदीक्ष्य, यदृच्छावशात्प्रयुक्तपृच्छा, तेनापि महामुनेर्ऋतध्वजस्य तनयोऽहमित्युत्तरिता, भवती पुनः का? कुतो वेति कृताऽनुयोगा च बभाषे। किं बभाषे—इत्याकाङ्क्षायामाह—**भगवन्......कुसुमवर्षमाविरभवत्**। येनान्येपि तदुक्तौ (गालवोक्तौ) दृढतरप्रामाण्यनिश्चयभाजनमभूवन्नित्युक्त्वा **कपिकृतोपद्रवमप्यालपत्**। प्रमाजनके प्रमाणे प्रामाण्यमव्यभिचरितत्वम्, तद्विषयको निश्चयः प्रमातरि, तत्र हेतुस्त्रिकालज्ञानां सुराणां दुन्दुभिध्वानादिनाऽनुमोदनम्। कपिःशप्तो विश्वकर्मा॥ १०८॥

अथ बालेनाप्यबालिशबुद्धिशालिना जाबालिना 'भद्रे ! नियतं समानहेतुकेन तव मम च व्यसनेन समाननिवर्तकेनापि भवितव्यं, तत्प्रयाहि वैवस्वतस्य स्वसारं स्रोतस्विनीं, तत्तीरस्थं भगवन्तं श्रीकण्ठमर्चयितुमुपसन्नस्य तपोनिर्जितसकलभुवनस्य भगवतः स्नातऋतध्वजस्य सकाशे सर्वमिदं स्वकीयं तथा मदीयमुदन्तजातमावेद्य, स एवासंशयं भ्रंशयिष्यति द्वयोरपि महातापहेतुमापदमिमा'मिति समादिष्टा, दिष्टानुबन्धेन सर्वं तथैवान्वतिष्ठत् । ऋतध्वजादेशाच्च तत्रैव चिरं सञ्जातसख्यया दैत्यतनयया देववत्या सह तमेव भगवन्तं बालेन्दुशेखरं सेवमाना तस्थौ ॥ १०९ ॥

अथ ऋतध्वजो जाबालिवृत्तमवधार्य तमुन्मोचयितुकामो गत्वा गुणगरीयसीं नगरीमयोध्यां, सर्वधर्मेष्वनाकुलमतिमिक्ष्वाकुमर्थयित्वा, प्रकृतकर्मसमर्थं शस्त्रास्त्रविधिपारदृश्वानं शकुनिसंज्ञं तदात्मजन्मानं तेन सह तं प्रदेशमागमत्, यत्राऽनुन्मोच्यपाशजालान्तर्वर्ती जाबालिरभवत् ॥११०॥

अथ स ऐक्ष्वाकः शकुनिरकनिष्ठो धनुर्विद्यायां विधाय धनुरधिज्यं तल्लताय-

---

अथ जाबालिना=ऋतध्वजतनयेन भद्रे ! नियतं तव मम च व्यसनेन समानहेतुकेन भाव्यम्, समाननिर्वतकेन च, तत्प्रयाहि भगवन्तं श्रीकण्ठमर्चयितुम्, भगवत ऋतध्वजस्य सकाशे सर्वमिदं निवेद्य, स एव द्वयोरपि महातापहेतुमिमामापदं भ्रंशयिष्यति—इति समादिष्टा तथैवान्वतिष्ठत् । वैवस्वतस्य स्वसा यमुना । स्नातश्चासौ ऋतध्वजः कर्मधारयः । 'ऋत्यकः' समासेऽप्ययं प्रकृतिभावः । 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्तथाह्वयः ।' ऋतध्वजादेशाच्च तत्रैव चिरं देववत्या सह भगवन्तं सेवमाना तस्थौ मदयन्ती गुह्यकाऽधिपतिसुता प्रम्लोचाप्सरःसंभवा—इति संगतिः ॥ १०९ ॥

अथ ऋतध्वजोऽयोध्यां गत्वा—तं प्रदेशमगमत्, यत्र जाबालिरभवत् । अवधार्य मदयन्तीमुखाच्छ्रुत्वा निश्चित्य, उन्मोचयितुं कामोऽभिलाषो यस्य ( तुं काममनसोरपीति मकारलोपः ) । योद्धुं संप्रहर्तुं शक्या योध्या, न योध्याऽयोध्या, वैवस्वतेन मनुना स्वज्येष्ठपुत्राय—इक्ष्वाकवे निर्मिता राजधानी । 'मनुना मानवेन्द्रेण या स्वयं निर्मिता पुरी'ति वाल्मीकिः । इक्ष्वाकुं प्रति तदात्मजन्मानं शकुनिं प्रार्थयित्वा याचित्वा । प्रकृतकर्म जाबालिबन्धनमोक्षणम् । तेन सह शकुनिना सह । नोन्मोचयितुं शक्यं यत्पाशानां जालं तन्मध्यवर्ती ॥११०॥

अथ स शकुनिस्तल्लतायन्त्रजालं चकर्त । तत्कार्यं समपारयत् । इक्ष्वा-

न्त्रजालमप्रतीपं चकर्त, पञ्चभिश्च हायनशतैस्तत्कार्यमपार्यपौरुषः समपारयत्। ततो बाह्यबन्धने छिन्ने ऋतध्वजेन सह तमेव रोहणमधिरुह्य शाखातो जटाबन्धं त्याजयितुं विहितबहुप्रयासोऽप्यनासादितप्रयत्नसंवादो राजपुत्रोऽवरुह्य तस्मादमुह्यन्पौरुषे रुषेव गृहीतोऽपरिहीणप्रभावैर्मार्गणैस्तां शाखां त्रिधा चिच्छेद। जाबालिस्तु तन्मध्यभागं जटालग्नमेवोद्वहन्नवरुरोह रोहणशिखरात्, अभ्यवादयच्च तातम् ॥ १११ ॥

अथ श्रीकण्ठायतन एवाऽवतिष्ठमाने देववतीमदयन्त्यौ कदाचिदागतेनाऽधिगतनीरागतेन स्ववृत्तान्ताकर्णनाङ्कुरितकरुणेनाऽनभिहितमृषालवेन मुनिना गालवेन सार्द्धं जनकातिरेकार्तिकीलितहृदौ कार्तिकीस्नानार्थमधन्यदुष्करावेक्षणं पुष्कराक्ष्यौ पुष्करारण्यमीयतुः ॥ ११२ ॥

स तु तीरभूमावेवावस्थाप्यानभिद्रुह्यन्गुह्यकदानवेन्द्रदुहितरौ तपस्विनामुत्तमो मध्यमं पुष्करमतिदीप्तवपुः करकलितकुशो मनाक् सधूम इव कृशानुर-

---

कोरपत्यं पुमानैक्ष्वाकः ( दाण्डिनायनेत्यत्र निपातितः ) । अप्रतीपमिति क्रियाविशेषणम् । **ततो** बाह्यबन्धने छिन्ने जटाबन्धं त्याजयितुं तां शाखां त्रिधा **चिच्छेद** । जाबालिरवरुरोह, अभ्यवादयच्च तातम् । न परिहीणः प्रभावो येषान्तैर्बाणैः ( 'कृत्यच' इति णत्वम् ) । तातमृतध्वजम् ॥ १११ ॥

**अथ श्रीकण्ठायतने एवावतिष्ठमाने 'देववतीमदयन्त्यौ' कदाचिदागतेन मुनिना गालवेन सार्धं पुष्करारण्यमीयतुः** । अधिगता ज्ञाता नीरागता वीतरागता यस्य तेन, पुनश्च स्वयोः ( देव०मद० ) वृत्तान्ताकर्णनेनाङ्कुरिता करुणा दया यस्य तेन, न अभिहिता मृषालवोऽसत्यलेशो येन । जनकयोः स्वपित्रोरतिरेकेण राहित्येन ( वियोगेन ) या आर्तिः पीडा तया कीलितं हृद् हृदयं ययोस्ते । पुनश्च पुष्कराणीव अक्षीणि ययोस्ते पुष्काराक्षिण्यौ कमलनयने । कृत्तिकायुता पौर्णमासी कार्तिकी तस्यां स्नानार्थम् । अधन्यैरकृतसुकृतैर्दुष्करमवेक्षणं दर्शनं यस्य तम्—पुष्करस्य मरुदेशस्थितस्य तीर्थस्य नाम्ना प्रसिद्धमरण्यम्—ईयतुर्जग्मतुः ।;भारते द्वात्रिंशदरण्यानि पुण्यानि, हेमाद्रिप्रयोगे द्रष्टव्यानि॥११२॥

**स तु भगवान् गालवः करकलितकुशः पुष्करमवजगाहे, शुश्राव च तत्र मत्सीनां समालापम्** । गुह्यकोऽञ्जनः, दानवेन्द्रः कन्दरमाली, तयोर्दुहितरौ देववतीमदयन्त्यौ कर्मभूते अनभिद्रुह्यन्ननुकम्पमानः, सहसा तीर्थेऽवगाहने शङ्कास्पदत्वात् । द्रुह्यगुह्येत्यनुप्रासप्रसक्त्याऽयं प्रयोगः ( सम्भवति समन्वयप्रयोगे व्यतिरेकप्रयोगोऽन्याय्यः ) । उत्तमो मध्यममिति विरोधाऽऽभासः । मध्यमं मध्यं निर्मल-

कृशानुभावो भगवान् गालवोऽवजगाहे, शुश्राव च श्रवणीयचरितस्तत्र मत्स्यं प्रति मत्सीनां समालापं—

"कन्याद्वयेन सममप्यसमप्रभावो यद्गालवो जनसमाजमुपाजिहीते ।
तोयान्तरेऽपि सह सञ्चरति प्रियाभिर्नातिक्रमो भवति भाति तिरश्चि कश्चिन्"॥

ततस्तत्राऽपि कृतपदां किंवदन्तीमेवंविधामवधार्य वहन्मन्दाक्षममन्दानुशयः परिजिहीर्षन्कन्यकासन्निकर्षं महातपस्विपरिरम्भातिशयादात्मनः पुण्यत्वातिशयं प्रार्थयमानेनेव पुष्करेण बहिर्भवितुमदीयमानावकाशो महायोगबलसहायो विहायोन्मज्जनार्हमपि समयं निमग्न एवाऽतिष्ठत् ॥११३॥

अथ निवृत्तायां यात्रायां जनविरहात्सावकाशेषु सरस्तीरप्रदेशेषु भगवदागमनं प्रतीक्षमाणयोर्देववतीमदयन्त्योरवतिष्ठमानयोरितरस्मिन्नि-

---

जललाभाय । अकृशोऽनुभावस्तपःसामर्थ्यं यस्य । श्रवणीयं श्रोतुमर्हं चरितं यस्य । **समालापं** मिथोभाषणम् । किं शुश्रावेत्याह—**कन्येति** । असमोऽद्वितीयः प्रभावः इन्द्रियनिग्रहजन्यं सामर्थ्यं यस्य जितेन्द्रियत्वेन ख्यातः गालवोऽपि लोध्रवत्स्वच्छताहेतुर्मुनिवर्योऽपि ( 'गालवो मुनिभेदे स्याद्—लोध्रवृक्षेपि कीर्तितः' ) कन्ययोरजातोपयमत्वेन दीप्तिमत्योर्बालयोर्द्वयेन युगलेन ( न स्वीयया, नाप्येकया ) समं साकं (न तु पृथक्) यद्=यस्मात्, जनानां न तु तरूणां समाजं मेलकम् (न तु प्रकोष्ठं) उपाजिहीते=अभीप्सितत्वेनाभिमुखं समर्यादमागच्छति, तत्–प्रियाभिः स्वीयाभिर्वल्लभाभिः, तोयान्तरेऽपि जलमध्ये–एत्र न बहिर्जनसमक्षम्, सह सञ्चरति साकं विहरति–भवति भवच्छब्दप्रयोगयोग्येऽस्माकं वल्लभे त्वयि जात्या तिरश्चि तिर्यग्योनिजे, "लज्जा तिरश्चां यदि चेतसि स्याद्" इत्यादिसूक्तिभाजने कश्चिद् धर्मादिविषयकः अतिक्रमो व्यतिलङ्घनं न भाति न भासते, न प्रतीयते–इत्यर्थः । **ततः परिजिहीर्षन् कन्यकासन्निकर्षं निमग्न एवावतिष्ठत्** । **तत्राऽपि** स्थलेऽपि । किंवदन्तीं जनश्रुतिम् । मन्दाक्षं लज्जाम् । आत्मनः पुष्करस्य तीर्थस्य, पुण्यातिशयं प्रार्थयमानेनेति 'साधूनां दर्शनं पुण्यं तीर्थभूता हि साधवः' इति नियमात् ॥११३॥

अथ निवृत्तायां यात्रायां, भगवदागमनप्रतीक्षमाणयोर्देववतीमदयन्त्योः, हाटकेश्वराद् यात्राप्रसङ्गाद् आगतायां चित्राङ्गदायां, तज्जिज्ञासया वर्तमानायां काचिद्दिव्यकन्यका ( वेदवती ) वैश्वकर्मणीमभिगम्य विदितवृत्तान्ता सती तदनुयुक्ता ( चित्राङ्गदया पृष्टा सती ) स्ववृत्तान्तं निवेदयाम्बभूव–सखि ! अहमस्मि पर्जन्याऽभिधानस्य गन्धर्वस्य कन्या, जननी च मे घृताची, साऽहमेकदोदयगिरौ विहरन्ती केनचिद्वलीमुखेन, अयि दानवपुत्रि देववति ! मया श्रीक-

कटे तटे हाटकेश्वरायात्राप्रसङ्गादागतायां चित्राङ्गदायां तज्जिज्ञासया वर्तमानायां काचिद्दिव्यकन्यका तस्या असहायतामसहमानेव वैश्वकर्मणीमभिगम्य विदितवृत्तान्ता सती तदनुयुक्ता स्ववृत्तान्तं निवेदयाम्बभूव—'सखि! अहमस्मि सुरासुरजन्यविदितविक्रमस्य पर्जन्याभिधानस्य गन्धर्वस्य कन्या, जननी च मे घृताची नाम निराकृताऽचिरद्युतिच्छविरप्सराः। साऽहमेकदा यदृच्छयोदयगिरौ विहरन्ती काकतालीयमिलितेन बलीयसा केनचिद्वलीमुखेन 'अयि दानवेन्द्रदुहितर्देववति! मया श्रीकण्ठवने विन्यस्ता त्वं केन पुनरधिरोहिताऽसि स्वर्गं'मित्यभ्यधीये। अहन्तु तेन पूर्वापरसङ्गतिज्ञानविरहादसंबद्धेनेव भासमानेन तद्वाक्येन सन्निहितोपरागेवेन्दुकलामलिनायमानमुखरागा 'महाकपे! नाहं देववती किन्तु वेदवती, न चाहं त्वया प्रथमं कुत्रचिन्नीता, नाऽपि केनचिदिहानीते'ति वेपमाना भयगद्गदाक्षरमभ्यधाम्। ततो नामाद्यवर्णव्यत्यासं कृत्रिममिव मन्यमानेन तेनानन्यसाध्येन ग्रहीतुमिष्यमाणा तत्समयोपपन्नसन्निधानं ज्वलन्तमिव जातवेदसं कुसुमोत्करकरम्बितं मुहूर्तबन्धुं बन्धुजीवमध्यरुक्षम्। स कपिरपि क्रूरकर्माचरणाभिहतिरुग्णमर्माणं निर्माय तं महामहीरुहमनूहितस्नेहोऽनवगम्यमानकारणश्च मया सममेव

---

ण्ठवने विन्यस्ता त्वं केन पुनः स्वर्गमधिरोहिताऽसि—इत्यभिधीये (कर्मणि प्रत्ययः), अहन्तु—नाहं वेदवती किन्तु देववती—इत्यभ्यधाम्, ततः तेन ग्रहीतुमिष्यमाणा बन्धुजीवमध्यरुक्षम्, स कपिरपि मया सह तं (बन्धुजीवं) समुद्रमुद्दिश्य प्राक्षिपत्, मयि निपतन्त्यां केनचित्स शाखी त्रसरेणुमात्रावशेषो विहितः, ततो महाऽनिलेन तथाऽहमपवाहिता यथा क्वचिद्वनोद्देशे न्यपतम्—इत्यभिधाय च सहैव चित्राङ्गदया तीरान्तरस्थे देववतीमदन्यत्यौ विज्ञातुकामा समागमत् (काचिद् दिव्यकन्यका)। **सरः** पुष्करं, भगवदागमनं गालवस्योन्मज्जनम्, **तज्जिज्ञासया** के इमे इति। **तस्याः**=चित्राङ्गदायाः। असहायतामेकाकिताम्। **वैश्वकर्मणीं** विश्वकर्मसुतां चित्राङ्गदाम्, निराकृता प्रत्याख्याता अचिरद्युतेर्विद्युतश्छविः कान्तिर्यया सा। 'प्रत्यादिष्टो निरस्तः स्यात्प्रत्याख्यातो निराकृतः' इत्यमरः। काकतालीयमिलितेन=अकस्मादागतेन। **अयि**: **प्रश्ने**। इत आरभ्य वानरस्य भ्रमोक्तिः। **अहन्तु**=वेदवती तु, **सङ्गतिज्ञानविरहात्**, देववतीं श्रीकण्ठायतने विन्यस्यन् सादृश्यान्मामेवाधुना देववतीं मन्यमानो—भ्रान्तोस्ति—इत्याकारकज्ञानाभावात्। **व्यत्यासं** दकार-वकारयोर्विपर्ययम्। बन्धूको बन्धुजीवकः, हिमालये जागेश्वरादिषु

निर्दयस्तं समुद्रमुद्दिश्य प्राक्षिपत । बाहुभ्यां गृहीतबन्धुजीवविटपायां मयि निपतन्त्यामहो महदेतदसमञ्जसं यदि गन्धर्वदुहिता महामहिम्नोऽश्वमेधादिमहाक्रतुसहस्रावभृथपवित्रतनोर्मनोरात्मजन्मनो महाराजर्षेरिन्द्रद्युम्नस्य महिषी सहायविरहाद्विहाय विहायस्तलं महीतले निपततीत्युच्चैस्तरां क्रोशत्सु सिद्धेषु केनचिन्मार्गणानां गगनमात्राभिमुख्यमात्रानुमीयमानमानुषभावेन महाद्भुतकर्मणा शरसहस्रैरनपराध्यद्भिरस्पृशद्भिश्च मम गात्राणि क्षणमात्रादेव स बन्धूकशाखी विशाखीयं विक्रममनुकुर्वता त्रसरेणुमात्रावशेषो विहितः । ततस्तु तत्कालोपनतेन तेन कपिनेव महानिलेन तस्य वीरस्य विक्रममिव दिगन्तान्नेतुमीहमानेन महावेगवता तथाऽहमपवाहिता यथा नाकूपारकल्लोलान्तरालेनाऽपि तस्य महावीरस्य समीपे किन्तु कचिन्निर्जने वनोद्देशे न्यपतम्' इत्यभिधाय च सहैव चित्राङ्गदया तीरान्तरस्थे देववतीमदयन्त्यौ विज्ञातुकामा समागमन् ॥ ११४ ॥

अथ मदयन्तिका 'सखि वेदवति ! इयं सा देववती दानवेन्द्रस्य कन्दरमालिनो दुहिता यद्विभ्रमात्कपिनाऽहमपि त्वमिव कामपि दुःसहवेदनां दहनशिखामिवैतां दशामनुप्रवेशिते'त्युक्त्वा तत्सर्वमादितो न्यवेदयत् । ततस्तु चित्राङ्गदा 'सख्यः ! पश्यत दैवस्य दुर्निवारत्वं, भूयाँश्च नः समयो दुर्दशामापन्नानां तथापि दुस्त्यजा एवामी विडम्बनैककुशला मनोरथा इवातिदीर्घप्रवाहिनः प्राणाः, आदिष्टं च भगवता ऋतध्वजेन यथा दानवगुह्यकगन्धर्वकन्यकानां त्वया सह समागमे सर्वाः सिद्धार्था भविष्यन्तीति तद्भवत्योऽपि

द्रष्टव्यमस्य वनम्। 'बन्धूककानननिभामिति' दुर्गाध्यानम्। अध्यरुक्षम्=रुह-लङ्-क्सः। अहो-इत्यारभ्य-निपततीत्यन्तं सिद्धानामाक्रोशानुकरणम् । केनचित् = इन्द्रद्युम्नेन राज्ञेति ज्ञेयम् । त्रसरेणुश्चूर्णम् । तस्य वीरस्य बन्धूकच्छेदकस्य-इन्द्रद्युम्नस्य । वनोद्देशे पुष्करारण्ये । विज्ञातुम् इमे के इति बोद्धुमभिलाषो यस्याः सा वेदवती समागमत् । तत्सर्वमादितः तस्यान्तु मदयन्त्यामिवेत्यारभ्य-जाबालिवचनाद् ऋतध्वजसमीपगमनपर्यन्तम् वृत्तान्तम् ॥११४॥

अथ मदयन्तिका सखि वेदवति ! इयम् ( मत्समीपस्था ) सा देववती, यद्विभ्रमात् कपिना-अहमपि त्वमिव कामपि-एतां दशामनुप्रवेशिता-इत्युक्त्वा सर्वमादितो न्यवेदयत् । ततस्तु-चित्राङ्गदा-सख्यः ! पश्यत दैवस्य दुर्निवारत्वम्, आदिष्टञ्च भगवता ऋतध्वजेन यथा—दानव-गुह्यक-गन्धर्वकन्यानां त्वया सह समागमे सर्वाः सिद्धार्था भविष्यन्तीति, तद्भवत्योऽपि-मया सह हाट-

तद्वचसि बद्धप्रामाण्यबुद्धयो मया सह हाटकेश्वरमवाप्य तदर्हणयैवाऽनेहस-मतिवाहयन्त्विति' ताभिरमनुता सप्तगोदावरं गत्वा तथैवाऽन्वतिष्ठत्॥११५॥

अथ भगवानृतध्वजो जाबालिशकुनिभ्यां सह मदयन्तीं गवेषयन्क-दाचिच्छालकपुरं प्राप्तः, श्रुततदागमनवार्तेन च राजर्षिणा इन्द्रद्युम्नेन सह पुरोहितेन नगरान्निर्गत्य कृतयथोचिताभ्यर्हणस्तदन्वेषणेऽस्माकं साहा-यकेनानुग्रहीतुमर्हसीत्यादिष्टवान्। सोऽपि 'भगवन्! मयाऽपि कदाचिदन्तरि-क्षान्निपतन्तीं वृक्षावलम्बिनीं दहनहेतिमिवोज्ज्वलतरां काञ्चिदङ्गनामालोक्य गन्धर्वतनयेयमिति भाविस्वसम्बन्धव्यपदेशं च नभश्चराणामाक्रोशतां मुखा-दाकर्ण्य तं वृक्षं तद्रक्षापूर्वकं लाघवबलात्खण्डयता, पुनश्च तामन्वेषयता न क्वापि तस्याः प्रवृत्तिरुपलब्धा तन्मयैव सह समानव्यसनाभिनिवेशिना स्वाभिमतापि मृग्यतामि'त्यभिधाय, सपुत्राय तपोधनाय, भ्रातृपुत्राय शकुनये च तत्कार्यपर्याप्ताँस्त्रीन् रथान् दत्त्वा स्वयमपि तुरीयमादाय स्यन्दनं तैः सहैव त्वरितो निरक्रामत्॥११६॥

अथ ते चत्वारोऽपि समारोपितनिर्णया भ्रमन्तो वसुधावलयं कदाचि-द्गन्धमादनमासाद्य तत्र दिव्यजनमात्रसञ्चारयोग्यमनाकलितं कलिना, अनि-भालितं मालिन्येन, अविषयीकृतं विषयवासनाभिः, असनाभीकृतं दुर्वास-नाभिः, अदृष्टपूर्वं दुष्टभावेन भगवतोर्नरनारायणयोर्निवासानुरूपं प्रविश्य बदर्याश्रमं, तदानीमेव रथचर्याश्रममपहाय कञ्चित्कृशमपि महातेजस्विनं, तपस्विनमपि गम्यमानमहावीरभावम्, एकमपि गुणगणसद्वितीयं, निःसङ्ग-मप्यत्यक्तविषयविशेषस्पृहं तपस्यन्तं पश्यन्तो, निवेदितस्वीयगोत्रनाम्नि इन्द्रद्युम्ने, तस्मिँश्च विज्ञाते च तयोः पितृव्यभ्रातृव्यभावरूपे सम्बन्धे, सर्वेऽपि ते खर्वेतरेणोल्लासेन हृदयेष्वगृह्यन्त॥११७॥

---

केश्वरमवाप्य तदर्हणयैव—अनेहसमतिवाहयन्त्विति-ताभिरनुमता सप्तगोदावरं गत्वा—तथैवान्वतिष्ठत्। तद्वचसि ऋतध्वजवचसि, प्रामाण्यबुद्धयो विश्वासवत्यः सत्यः। इति सप्तगोदावरे कन्याचतुष्कः॥११५॥

अथ भगवान् ऋतध्वजो जाबालिशकुनिभ्यां सह मदयन्तीं गवेषयन्-शालक-पुरं प्राप्तः, (तत्र) राजर्षिणा इन्द्रद्युम्नेन कृतार्हणः तमादिष्टवान्, सोऽपि तेभ्य-स्त्रीन् रथान् दत्त्वा स्वयमपि तुरीयं रथमादाय (वेदवतीमन्वेष्टुं) तैः सहैव त्वरितो निरक्रामत्॥११६॥

अथ ते भ्रमन्तः प्रविश्य बदर्याश्रमं, सुदेवसुतं सुरथं नृपं तपस्यन्तं ददृशुः॥११७॥

अथ जाबालिना सह ऋतध्वजः सुरथेनाभिवादितोऽनुगृहीतं ह्ययथाभिहिताभिराशीर्भिरभिहितवान्—'राजन्! यदर्थमेवं प्रयासेनाऽऽकुलीकृतोऽसि सा चित्राङ्गदा गमिता गोदावरीतीरवासिनं मया हाटकेश्वरं तदविलम्बेन तत्रैव सर्वे साधयामः, अचिरादेव तत्र तिसृभिरितराभिर्दिव्यकन्यकाभिः सहैव तस्याश्चतुर्भिर्वरैः सह पृथक्परिणया भवितार'इति तैः सह प्रतस्थे। अत्रान्तरे उदयाद्रौ वेदवतीं मार्गमाणा रथमार्गविभ्रंशाद्विभ्रमन्तमिन्दुमिव दर्शयन्तीं, तदुत्कलिकयेतस्ततो वदनं साचीकुर्वाणा घृताची विचिन्त्य प्राचीमवाचीं च दिशमन्यतो गवेषयन्ती प्लवगवेषमासाद्य विश्वकर्माणं परमार्थकपिमेव तं मन्यमाना तमप्राक्षीत्—'किमङ्ग! भवानद्राक्षीदिह क्वचिदुद्देशे मदीयां दुहितरमिति'। स तु तां घृताचीति प्रत्यभिजानन्निजावदाने जातानुशयोऽनभिधायैव तस्यामार्तायां तद्वार्तां देववतीमेव तां मन्यमानो 'यमुनापरिसराश्रिते श्रीकण्ठायतने मया देववती विन्यस्ते'त्यवोचत्। साऽपि तस्य भ्रमनिबन्धनं नामाद्याक्षरव्यत्ययं विशेषमप्रयोजकमाकलय्य, तद्वचसि गृहीतप्रामाण्या 'मार्गमादेशये'ति तं प्रार्थ्य, व्रजन्तं तमेवानुव्रजन्ती कौशिकीं यावदभ्येति तावदेव दुर्निवारवेगैर्मासत्रिकैरिव चतुर्भी रथैरुह्यमानाः पञ्चऋतव इव ऋतध्वजादयस्तमेवोद्देशमासाद्य स्नातुकामाः कौशिकीतीरभुवमवतेरुः ॥११८॥

अथ तस्याः पुरस्सरमायान्तमालोक्य शाखामृगं प्रत्यभिजानन् जाबालिस्तं राजसमाजे ऋतध्वजं जनकं जगाद—'तात! स एष समायाति पुनरपि महामर्कटो येन वटोद्देशे जटोपग्रहेणाऽहं बद्ध' इति, तदाकर्ण्य शकुनिरतत्कुसृष्टिसमाकलनया कृतकोपो 'भगवन्! प्रसीद, देहि निदेशं मदीयमार्गणावलीढजीवनोऽयं वलीमुखापसदः शतपर्वणाऽभिहत इव पर्वतः पततु काश्यपीतलमिति' व्यजिज्ञपत् ॥ ११९ ॥

---

अथ ते सर्वे ऋतध्वजवचनात् सप्तगोदावरगमनाय प्रतस्थिरे। अत्रान्तरे वेदवतीं गवेषयन्ती घृताची प्लवगवेषं विश्वकर्माणमासाद्य तमप्राक्षीत्, स च भ्रान्तः देववतीमेव वेदवतीं मन्यमानः श्रीकण्ठायतने विन्यस्तेत्यवोचत्। साऽपि तेन कपिना सह व्रजन्ती यावत्कौशिकीं (नदीं) प्राप्नोति तावदेव ऋतध्वजजाबालिशकुनीन्द्रद्युम्नसुरथा रथेभ्यः स्नातुमवतेरुः ॥ ११८ ॥

अथ तमालोक्य जाबालिः परिचिन्वन्तं वानर–शकुनि–इन्द्रद्युम्न-सुरथानां समाजे स्वपितरं ऋतध्वजं जगाद 'स एव मर्कटो येनाहं बद्ध' इति। तदाकर्ण्य

ऋतध्वजस्तु सागर इव स्वभावत एव क्षोभाद्यभाववानगाधहृदयो दयोल्लासमृदुरनिबन्धबान्धवो दीनानां, 'नृपतिपुत्र! परिहर क्रोधं, न विषयोऽयं दोषस्य तस्य तु केनापि समापतिष्यतः प्रवाहस्येव प्राग्भावीयविपाकस्य प्रसारिणः पन्थानो विधिनाऽपि नाऽपिधातुं पार्यन्ते न पश्यामि तपस्विनोऽस्य कमप्यपराधलवमिति' तमाज्ञापयामास। तावदेव विश्वकर्माऽपि विज्ञाय तं स्वकीयरूपविपर्यासहेतुमग्रगण्यं तपोधनानामृतध्वजाभिधानं शापावसानकामनया प्रार्थयिष्यमाणः समीपमागम्य प्रणम्य बद्धाञ्जलि'र्भगवन्ननुगृह्यतामयं भृत्यजनो निदेशभरणदानेने'ति तथैवाग्रतस्तस्थौ ॥ १२० ॥

अथ भगवानवेक्ष्य प्रसन्नया दृशा पुण्डरीकस्रजमिव तस्य प्रसादीकुर्वन् स्मितसुधया समाप्लावयन्निव समादिदेश—'कपीन्द्र! त्वया किलाऽस्य वत्सस्य जाबालेर्वटशाखया सह बद्ध्वा जटास्तद्बहिर्महान् लतायन्त्रपाशः सम्पादितः; अनेन चैक्ष्वाकेण शकुनिना पञ्चभिर्वत्सरशतैः स बाह्यपाशः कृतहस्ततया निकृत्तः, जटानुबन्धी विटपस्तु त्रिधा छिन्नः, तस्य च मध्यमभागस्थजटाविभागः कथमपि कर्त्तुं न शक्यते, शिरसैव तं वहताऽनेनातिवाहितं हायनसहस्रं, तदुन्मोचय तद्ग्रन्थी'निति ॥१२१॥

अथ यदाज्ञापयति भगवानिति शिरसि निधाय तदादेशं त्रिदशशिल्पिना नातिवंहीयसैवानेहसा जाबालेर्जटासु विटपाद्विघटितासु तत्सौष्ठवेन तुष्टो महामुनिर्वरेण त्वष्टारं छन्दयामास। ततो वरदानाऽभिमुखे ऋतवाचि ऋतध्वजे सिद्धमनोरथमात्मानं मन्यमानो महेन्द्रवर्धकिर्मुकुलितेन करद्वयेन विज्ञापयामास—'भगवन्! भवदीयादेव शापादिमां पापां दशामापदमापन्नं चित्राङ्गदाया जनकं त्वष्टारं मामवेहि, इमां च स्वभावचपलां योनिमासाद्य एवंविधानि दुर्विपाकानि पापीयांसि कर्माणि भूयांसि निर्मितानि, तद्भगव-

---

कृतकोपः शकुनिः ऋतध्वजं व्यजिज्ञपत् देहि निदेशं मदीयबाणैर्गतप्राणोऽयं पततु महीतलमिति ॥ ११९ ॥

ऋतध्वजस्तु मृदुहृदयः (कर्मविपाकं पश्यन्) न पश्यामि तपस्विनोऽस्य कमप्यपराधमिति विज्ञापयामास। ततो विश्वकर्मा शापावसानाय प्रार्थयाञ्चक्रे ॥१२०॥

भगवान् ऋतध्वजो जाबालेर्जटाग्रन्थीनुन्मोचय इति समादिदेश ॥१२१॥

स मुनेर्निदेशं सम्पादयामास, मुनिर्वरेण छन्दयामास, स चेमां योनिं विहातुमिच्छामीत्यभिधाय व्यरमत् ॥ १२२ ॥

दनुग्रहेण सहैव स्वसञ्चितैर्दुष्कर्मभिरिमां योनिं विहीयमानामिच्छामि, भवन्ति च कृतापराधेष्वपि दयार्द्रहृदया भवद्विधा महात्मान' इत्यभिधाय व्यरमत् १२२

ऋतध्वजस्त्वस्यामप्सरसि घृताच्यां सञ्जन्य तनयमेकमापत्स्यसे प्रकृतिमेतद्दशाऽर्जितानि च वृजिनानि व्रजिष्यन्ति निःशेषतो विलयमिति श्रुतवति, दिवमुत्पतितायां घृताच्यां तामेवानुसृतवति कृतप्रणामे त्वष्टरि परितुष्टैर्जाबालिप्रभृतिभिश्चतुर्भिराश्रमैरिवानुगम्यमानो धर्म इव मूर्तिमान्मुहूर्तादेव प्राप्य बहलजलप्रवाहविहितकोलाहलं, कोलाहलपर्वतकुतूहलाकुलतया तत्र सम्यग्विश्रम्य, पवनादप्यतिजवनैर्वनायुजैर्वाजिभिरुह्यमानः सहसैव हाटकेश्वरपरिसरमाजिहीत । तस्मिन्नेवावसरे चित्राङ्गदा नवघनस्तनितगम्भीरं शब्दमाकर्णयन्ती तदनुसारेण नियुक्तनयनाऽभिमुखमापततश्चतुरः स्यन्दनानुदीक्ष्य कन्दलितकौतुका निरूपयन्ती तदधिरोहान्वारोहाः प्रत्यभिज्ञोत्पन्नपुलकप्ररोहाः सहचरीस्तिस्रोऽपि व्याजहार—'निभालयन्तामालयस्तदा स्मरोत्तालया बालया मया यः स्वयमेव हृदयदयितो वृतः स एष नवजलधरशकल इव भुवमवतीर्णो मनोनयननन्दनो नन्दनः सुदेवस्य, यस्त्वयं जटाधरोऽधरितोषर्बुधानां धाम्नां निधानं धूर्जटिरिव त्रिपुरवधबद्धावधानो रथारूढः स एष आम्नायानां तपसाञ्चैकमधिकरणं भगवानृतध्वज' इति । ततो मदयन्ती विशिष्य निरूपयन्ती 'य एष बालवेशः पीयूषमयूखशेखर इव परो बद्धजटस्तापसकुमारः स एष नूनं तस्यैव भगवतोऽपत्यं जाबालिर्यो मया वटतरौ मन्दादृष्ट्या संदानितो दृष्ट आसीदि'त्यभिधाय, प्रत्यभिज्ञाने सत्यपि तमपहायादृष्टानुरोधाच्छकुनावेव निबद्धदृष्टिरासीत् । देववती तु मधुपपालिरिव कुसुममालिकायां जाबालिमुखभूमावेवालिखितचक्षुरा-

---

ऋतध्वजस्तु घृताच्यामेकतनयं जनयित्वाऽस्माच्छापान्मोक्षसे—इत्याह, स घृताच्या सह दिवमुत्पपात,—ऋतध्वजो जाबालिप्रभृतिभिः सह हाटकेश्वरं प्राप । प्राप्य च यथाविधि चित्राङ्गदा—वेदवती—मदयन्ती—देववतीनां सुरथेन्द्रद्युम्नशकुनिजाबालिभिः साकं विवाहान् क्रमशः कारयामास पित्रादीनाहूय, विवाहानन्तरमाहूतान् विसर्जयामास, ते च स्वस्वमास्पदं प्रत्यपद्यन्त"—इत्यभिधाय—'अस्ति पृथिव्यां परमपावनमित्यारभ्य यः कथामुपक्रान्तवान् तमालगहने स व्यरमत्-'' इति मन्दारमञ्जर्याः सख्याः प्रथमाया मदयन्त्या उक्तिः चित्रभानुं प्रति—इति पूर्वापरसङ्गतिः सम्यग् विभा-

सीत् । वेदवती पुनरिन्द्रद्युम्ने चन्द्रमसि चकोरीव चमत्कारादपचलं लोचनाञ्चलमुदञ्चयाञ्चकार ॥१२३॥

अथ तं प्रदेशमागम्यावगाह्य च गौतमीं विहितहरिहराभ्यर्हणेषु बहिः सहासीनेषु तेषु चित्राङ्गदा मदयन्त्यादिभिः समागम्य जाबालिना सह ऋतध्वजं सादरमभिवादयाम्बभूव । चिरादालोकितामपि परिचित्य चित्राङ्गदामृतध्वजसुरथयोर्मध्ये, आद्यस्य वत्सलभावेन द्वितीयस्य रतिहृदयदयितेन गृहीतं हृदयमासीत् । तावदेव च तमुद्देशमासाद्य कृतस्नानादिकर्माणौ घृताचीविश्वकर्माणौ दिग्भिरिव चतसृभिश्चित्राङ्गदादिभिः सह दिगीश्वरैरिव चतुर्भिः सुरथादिभिः सह सविनयं सेव्यमानं कुशध्वजमिव ऋतध्वजमुद्वीक्ष्यमाणावभ्युपगम्य यथावदभ्यवन्दिषाताम् । ततो मातृदुहित्रोर्घृताचीवेदवत्योः परस्परप्रेक्षणात्प्रमोदमानयोश्चित्राङ्गदायाः पुरःस्थितेऽपि पितरि त्वष्टरि तच्छापानभिज्ञानेन प्रत्यभिज्ञानवैकल्याद्देववतीमदयन्त्योस्तु जनकासन्निधानादेव वैमनस्यमवगम्य ऋतध्वजो 'वानरेन्द्र ! प्रदेशादस्मात्सत्वरं गत्वा गुह्यकराजमञ्जनं, गन्धर्ववर्यञ्च पर्जन्यं, दानवेन्द्रं च कन्दरमालिनं, महर्षिञ्च गालवं समाहूयेहानये'ति तमादिक्षत् ॥१२४॥

सोऽपि कपिर्वेगादुपगम्याञ्जनाचलं, स्वर्गं, रसातलं,माहिष्मतीञ्च,निवेद्य च महर्षेर्निदेशमृतध्वजेन सह चतुरोऽपि तानचिरेण संघट्टयाञ्चकार । कृतऋतध्वजप्रणामेषु तेषु गालवो मदयन्तीदेववत्यौ पुष्करे पुरा प्रोज्झिते प्रेक्ष्य प्रीतिं परमां प्राप । अञ्जनादयोऽपि प्रत्येकं मदयन्त्यादिकास्तिस्रोऽपि पुनरुज्जीविता इव ता अपि तत्प्रेक्षणेन तादृशमेवात्मानं मन्यमाना मेदुरं प्रमदसमन्वयमन्वभूवन् ॥१२५॥

---

वनीया । व्याख्या स्पष्टा स्वयं मननीया, कथासंक्षेपोऽत्र कृतः । मयाऽपि कदाचिद्—इत्यादिका कथा सखि ! अहमस्मि...इत्यारभ्य निर्जने वनोद्देशे न्यपतम्—इत्यस्याः कथाया वक्तृबोद्धव्यभेदादनुवादः सन्दर्भशुद्ध्यर्थः, अतो न पौनरुक्त्यं दोषाय प्रत्युत गुणाय ( अत एव कालिदासः 'शशंस वाचा पुनरुक्तयेव' न तु पुनरुक्तया बोद्धव्यभेदात् ) । वृक्षोऽत्र बन्धूकः । सर्वे—उद्भिदश्चतुर्धा भवन्ति—वृक्षाः लताः, क्षुपाः, तृणानि च, अतः कचिल्लतादिबन्धूकवर्णनदर्शने च न व्यामोहः कर्तव्यः । वृक्षबन्धूको हिमालयप्रदेशेषु 'बुरौंजा' इत्युच्यते । गन्धमादनः

अथ चित्राङ्गदां जनकानवेक्षणेन विमनायमानां प्रेक्ष्य भगवान्जगाद
ालवः—'पुत्रि पितरं न पश्यामीति मास्मोपतापं प्राप, स एव शाखामृग-
ातिरेव तव पिता, स्वातन्त्र्यनिमित्तकात्तच्छापात्त्वमिव प्रियविप्रयोगं तच्छा-
निबन्धनाद्भगवत ऋतध्वजस्य शापादसावपि प्लवगरूपं समापन्न' इति ।
ातस्तु प्रमोदोचितेऽपि समये तमकाण्डोपनतमुत्पातमिव पितुः स्वरूपविपर्यासं
ेक्ष्य चित्राङ्गदाऽनवरतवहद्बाष्पवारिप्रवाहाऽऽविलवदनाम्बुजा बद्धाञ्जलि
भगवन्ननुगृहाण गर्भितभागधेयां मां स्वोपकारमभीप्सन्त एव प्राणिनोऽपत्यो-
ात्तिं प्रार्थयन्ते, मया तु निमित्तभूतया विहाय दिव्यभावं पितैव तिरश्चीं
ोनिमापातितः, तदुपहासैकहेतुममुं देहहतकं स्पृहयामि हातुमि'ति ऋतध्वजं
ायाचे । ततस्तु 'वत्से ! मा विषादं विधेहि, पर्यवसित एवास्य शापः, घृताच्यां
ानयजननमेव तस्योत्तरावधि'रिति जल्पितवति ऋतध्वजे चित्राङ्गदानुरोधेन
ा सर्वेऽपि त्वष्टुःशापान्तं प्रतीक्ष्यमाणास्तत्रैव तावदवतस्थिरे ॥१२६॥

अथ समासेदुषि दशममासे प्रसूतायां घृताच्यां स्वरूपमापन्ने सुपर्व-
शिल्पिनि, तेन चाऽनुध्यानमात्रेण नानाजातीयदेवयोनिसहाये समाहूते तुरा-
ाहि स्वर्ग इव द्वितीये दृश्यमाने गौतमीप्रदेशे भगवानृतध्वजः पूर्वानुरा-
ाऽनुरोधेन चित्राङ्गदां सुरथाय, विशेषविषयकसिद्धादेशवशाद्वेदवतीमिन्द्र-
ुम्नाय, मुद्गलोदितनरेन्द्रदयितापदसंवादान्मदयन्तीं शकुनये, परिशेषाच्च
्ववतीं जाबालये समादिश्य तासां पितृभिर्यथोदितान्परिणयान्पर्यापया-
ास । वासवादींश्च दिवौकसो विशिष्याऽत्रप्रदेशे भवद्भिः सन्निधेयमिति प्रार्थ्य
वेसर्जयामास । विश्वकर्मा-ऽञ्जन-पर्जन्य-कन्दरमालिनस्तु त्रीनृतध्वज-गालव-
ाबालीन् जाबालीन्द्रद्युम्नशकुनिसुरथास्तु सह भार्याभिरुभयानपि
ान्प्रणम्य, विश्वकर्मादयो दुहितृसहितान् जामातॄनृतध्वजादयस्तु तानुभया-

हेमालयशाखापर्वतः बदरिकाश्रमाश्रयः । महाचीनदिष्टमध्यवर्ती 'खिङ्गाङ्'
ति प्रसिद्धः—वर्षपर्वतोऽपि गन्धमादननामधेयः, सोऽत्र न विवक्षितः, 'प्रविश्य
ादर्याश्रममि'त्युक्तेः । इन्द्रद्युम्नः पितृव्यः, सुरथो भ्रातृव्यः, गजेन्द्रमोक्षण-दुर्गा-
ाठोक्ताभ्यां भिन्नाविमौ । कौशिकी नदी—स्वर्णकौशिकी रजतकौशिकी ताम्रकौशिकी
ृतकौशिकी दुग्धकौशिकीत्यादिभेदात्सप्तधा नैपालराज्ये हिमवतः परिसरे
मेलिता मिथिलादेशस्य पूर्वसीमाभूता कुरुक्षेत्रतो द्वादशदेशान्तररेखाभूता
कौशिकीति लोकेऽपि प्रसिद्धा ।

नप्याशीर्भिरभिनन्द्य, ऋतध्वज-गालव-जाबालयोऽपि परस्परं यथाऽनुरूपमुपचर्य स्वं स्वमास्पदं प्रत्यपद्यन्ते''त्यभिधाय व्यरमत् ॥१२७॥

अथ—अहो प्रभूताद्भुता विविधानुबन्धेयं वार्ता, एवंविधानुभावो भगवा-

चित्रभानु-मदयन्तीसंवादः। तदन्तर्गतः—कयोश्चित्पुंसोः संवादः॥

| नाम कन्या | पितृनाम | जातिः | पितृस्थानं | परिणेता |
|---|---|---|---|---|
| १ चित्राङ्गदा | विश्वकर्मा | देवः | स्वर्गः | सुरथो राजा सुदेवपुत्रः |
| २ देववती | कन्दरमाली | दानवः | पातालम् | जाबालिः ऋतध्वजपुत्र |
| ३ मदयन्ती | अञ्जनः | यक्षः | अलका | शकुनिः-इक्ष्वाकुसुतः |
| ४ वेदवती | पर्जन्यः | गन्धर्वः | उदयगिरिः | इन्द्रद्युम्नः वैवस्वतसुतः |

विवाहस्थानं सप्तगोदावरं यत्र हाटकेश्वरः [ हैदराबादराज्ये ]

| संयोजका मुनयः | स्थानानि | परिचयश्च। |
|---|---|---|
| ऋतध्वजः | श्रीकण्ठेश्वरः | यमुनातीरे हिमाचलपरिसरे |
| गालवः | पुष्करतीर्थम् | अजमेर इति प्रसिद्धे नगरे मरुभूमौ |
| मुद्गलः | मदयन्तीजन्मसमये | |
| जाबालिः | ऋतध्वजपुत्रः, जटाबन्धवान् | अयोध्याप्रदेशे मदयन्त्या दृष्टः |

वानरः सुरशिल्पी, ऋतध्वजशप्तः संघटनविघटककारकः, ऋतध्वजदूतभूतः।
नैमिषं श्रीकण्ठशिवः, सायोध्याहाटकेश्वरः।
पुष्करञ्चेति तुष्यन्तु स्वर्पणात्कुसुमाञ्जलेः ॥१२३—१२७॥

अथ—इति चिन्तयन्त्यामेव मयि स एव युवा तं द्वितीयं, सुबाहो! भवानिदानीं कुत—इत्यपृच्छत्। मयि=मदयन्त्याम्, स एव= 'समुपहिताञ्जनवत्सले'त्याद्यार्यापाठक एव, द्वितीयम्=कथाश्रोतारम्। किञ्चिन्तयन्त्यामित्याकाङ्क्षायाञ्चिन्ताया आकारमाह=अहो—इत्यादिना। प्रभूतमत्य-

न्मीनकेतनो यच्चित्राङ्गदाऽवज्ञाय पितरं, हेलयित्वा सहचरीहितोपदेशं, दृष्टमात्राय सुरथाय राज्ञे स्वात्मानमर्पयामास । अथवा नेदमाश्चर्यं, मम हि अदृष्टेप्यश्रुतेऽपि कस्मिँश्चिदस्मिन्पुंसि प्रसभमेवाभिलाषः प्रादुर्भूय भूमिका भूयसीर्भजते । न जाने दैवादवलोकने कया कया वा विधया विडम्बनीयास्मि विधिनेति चिन्तयन्त्यामेव मयि स एव युवा तं द्वितीयं 'सुबाहो ! भवानिदानीं कुत' इत्यपृच्छत् । सोप्याचचक्षे-'गुह्यकेन्द्र मानसकेतो ! विज्ञायत एवात्रास्माभिर्यदानवेन्द्रस्य कन्दरमालिनो दुहिता देववती जाबालेः परिग्रह'इति । कदाचित्तु तपस्यतः कन्दरमालिनो देवदेवस्य त्र्यम्बकस्यानुग्रहाद्विजयध्वजो नाम महानुभावस्तनय उत्पन्नो, येन सहस्राक्षपुण्डरीकाक्षप्रभृतयो दाक्षायणीतनयाः समरसीमनि भूरिवारान्पराङ्मुखीकृता इति सकलभूतानुभूतोऽनुभावः । जाबालेश्च तस्यामेव देववत्यां तपोनिधिर्नाम्नाऽन्वर्थनामा कुमारः कदाचिदुदपादि, यो भगवद्गृत्समदसकाशात्सर्वान्साङ्गान्सरहस्याँश्च वेदान् सकलाश्च विद्या दधार । तयोश्च

---

द्भुतमाश्चर्यं यस्यां सा । विविधः=नानाप्रकारकोऽनुबन्धः कार्यकारणभावो यस्यां तादृशी, इयं =पूर्वोक्तेन चक्रेण प्रकाशीकृता वार्त्ता=कन्याचतुष्कविवाह-वार्ता । अहो-एवं प्रकाराऽनुभावो भगवान् कामदेव-इति यदुक्तं तद्विवृणोति-**यच्चित्राङ्गदेति** । अहो-इत्यस्योभयत्राऽन्वयः । 'आत्मौपम्येन जीवोऽयं प्रमाणमधिगच्छति' इति-नियमादाश्चर्यपक्षं व्यावर्तयति-**अथवेति** । **मम हि**=मदयन्त्या तु—**कस्मिंश्चिदा**र्यापाठके, भूमिका = कक्षा । कया कयेति वीप्सायां द्वित्वम् । विधया=रीत्या । विडम्बनीया=प्रतारणीया । विधिना=दैवेन—इत्याकारेण चिन्तां कुर्वत्यामेव-स युवा अपृच्छत् । **सोप्याचचक्षे** । स द्वितीयः सुबाहुः किमाचचक्षे इत्याकाङ्क्षायामाह-**गुह्यकेन्द्र मानसकेतो !** कन्दरमालिनो दौहित्रं विजयध्वजस्य भागिनेयं देववत्या गर्भजं जाबालेरौरसं भगवतो गृत्समदस्यान्तेवासिनं तपोनिधिमानेतुं **कन्दरमालिनैव** प्रहितोऽस्मि तन्नजाने तपोनिधिरनुनयमनुमन्यते न वेत्याचचक्षे । कन्दरमालिनः सकाशात्, जन्यजनकभावे वा षष्ठी । त्र्यम्बकस्य कर्तरि षष्ठी, त्र्यम्बककर्तृकादनुग्रहात् । सहस्राक्षः = इन्द्रः । पुण्डरीकाक्षः = उपेन्द्रः । दाक्षायणी=देवमाताऽदितिः । भूताः = प्राणिनः । "शिक्षा कल्पो व्याकरणं निरुक्तं छन्द एव च । ज्यौतिषञ्च षडङ्गानि कथितानि मनीषिभिः-" इति वेदाङ्गानि । उपनिषदो **रहस्यानि** । विद्याः = दर्शनादयः । भगिन्या अपत्यं भागिनेयः "स्त्रीभ्यो ढक्' । मातुर्भ्राता मातुलः "पितृव्यमातुल-

भागिनेयमातुलयोस्तपोनिधिविजयध्वजयोर्धर्मं प्रत्यानुकूल्यप्रातिकूल्याभ्यां शीलविसंवादादार्थिके सत्यपि परमार्थतो हृदयानुबन्धविरहे योनिद्वारकसम्बन्धस्य दुष्परिहरतया बाह्यं स्नेहार्हं व्यवहारमावहतोर्जगाम भूयान्समयः। कदाचित्तु महासुरसेनापरिवृतो निर्गम्य महीतलाद्विबुधाधिपेन सार्धं योद्धुमर्धपथ एव तेन सह सन्ध्यर्थं तपोनिधिना बोध्यमानोपि विजयध्वजो यदा तत्प्रार्थनां न प्रतिपेदे तदाऽसंभाष्यभाषणाभिप्रायेण शुद्ध्यर्थं भास्वन्तं निभालयमानेन जातकोपेन तेनोक्तं 'यन्मदावलेपकलुषहृदयतया न श्रद्दधासि ग्राह्यवचनानामाप्तानां पीयूषप्रायानुपदेशान् तदवतरिष्यति कोऽपि लोकोत्तराऽनुभावो योऽपहरिष्यति तवामुं महान्तमहङ्कारहालाहलदाहमिति'। विजयध्वजस्तु तज्जल्पितमप्रयोजकमिवाभिजानन्दत्त्वा महेन्द्रनगर्यामभ्यवस्कन्दं विजित्य सर्वान्दिवौकसो रसातलमेव प्राविशत् ॥ १२८ ॥

अथातिवहत्सु बहुतरेष्वहस्सु दौहित्रादर्शनाद् दूयमानेन कन्दरमालिना तमानेतुं प्रहितोस्मीति तन्न जानेऽनुमन्यते वा तपोनिधिरनुनयं न वेति ॥ १२९ ॥

---

मातामहपितामहाः'' इति–डुलच् प्रत्ययान्तो निपातितः । **तयोश्च—**बाह्यं स्नेहार्हं व्यवहारमावहतोर्भूयान् समयो जगाम ( इति गद्यान्तर्गतं खण्डगद्यम् )। तपोनिधिर्मानवत्वाद् धर्मं प्रत्यनुकूलः, विजयध्वजो दानवत्वाद् धर्मं प्रति प्रतिकूलः। अतएव तयोः शीलवैषम्यम्। तदेव हार्दाऽभावे हेतुः। अतएव बाह्यानुरागमात्रेण व्यवहारनिर्वाहः। तत्र हेतुर्यौनसंबन्धः=मातुलभागिनेयभावः मूलपुरुषकन्दरमालिनाऽऽरब्धः। तस्य दुष्परिहार्यत्वं पिण्डदत्वेनांऽशहरत्वेन च। सामानाधिकरण्यं हि भागिनेयस्य मातामहपक्षे मातुलेन पिण्डदत्त्वे। 'पुत्रदौहित्रयोर्लोके न विशेषोऽस्ति कश्चने'ति स्मृतेश्च। पूर्णवैमत्ये हेतुमाह —**कदाचित्तु—** इत्यारभ्य —**हालाहलमित्यन्तेन**। असंभाष्यत्वं विजयध्वजस्य धर्म-प्रतिकूलत्वेन, प्रार्थनानङ्गीकारकरत्वेन च। सूर्योपस्थानात्पापक्षयः। **कोऽपि**=चित्रभानुतुल्यः। दानवप्रमादमाह-**विजयध्वजस्तु-रसातलमेव प्राविशत्** ॥ १२८ ॥

अथ—'तनयकुशलयोगे तातपादा यतन्ते' इति न्यायेन कन्दरमालिना—इति=तपोनिधिविजयध्वजयोर्वैमनस्यमपाकर्तुं तं तपोनिधिम् आनेतुं 'स्वगृहं' प्रहितोऽस्मि=सुबाहुः। 'न वेति' सन्देहः सूचयति द्वितीयकोटिदृढिमानम्। अयि पाठकाः–'**सङ्गच्छध्वं संवदध्वं संवो मनांसि जानताम्**' ॥

अथ निजचरितं विवृण्वतीयं वनगहनानन्तरकुञ्जवर्तियूनोः।
मनसिजपरिबोधमूलहेतुं, विशदयतिस्म पुरा तु गुह्यकेन्द्रम् ॥ १२९ ॥

अथ यावत्तौ ततो निकुञ्जाद्बहिरागन्तुमीहेते तावदेव चिन्तयन्त्येवाऽहं पल्लवग्रहणाय प्रसार्यमाणानां कराणामभिघातेन प्रचलितानां वलयावलीनां कलकलं चरणकर्मणा क्वणतां तुलाकोटीनां च कोलाहलं च समाकर्ण्य चक्षुर्व्यापारयन्ती तदनुसारेण यावद्गच्छामि तावत्कुसुमसमूहसंवर्मितात्ततो वनगुल्मात्तेनापरेण सह निःसृतं सुरभिसहायमिव मूर्तिमन्तं मकरकेतनं, सौभाग्यपताकामिव शिरसावतंसीकृतां सहकारमञ्जरीमुद्वहन्तं, वर्षोपलस्थूलमुक्ताफलमयेन वदनचन्द्रस्पन्दमानसुधाविन्दुवृन्दसन्दर्भितेनेव दाम्ना कृतवैकक्षकं, विद्यावलस्तम्भितेनेवासितकुम्भीनसेन वनविहारगृहीतेन तमालपल्लवेनेव करवालेनेवालङ्कृतकरकमलं, प्रकोष्ठपद्मरागदीधितिजालजटिलेन च संभाव्यमानवैषम्यस्यानुपहतफेनपटलावदातस्योष्णीपबन्धस्य साम्यमापादयता दक्षिणेन पाणिना तत्र क्षणमात्रवीक्षणीयं महारजनरागमिव प्रसञ्जयन्तम्, इतस्ततः प्रसृताभिरलङ्करणमणिकिरणपरम्पराभिर्विरजोम्बरसंवीततया तत्र प्रवेशमलभमानाभिर्बहिरेव भ्रमन्तीर्विजातीयकुसुमरजोराजिभिरिव राजमानम्, उत्तप्ततपनीयावदातदेहतया नीललोहितललाटतटज्वालावलिभिरिव लिह्यमानं मीनकेतनं, पुरूरवा एवायमिति दृढतरप्ररूढविभ्रमाभिनिवेशया गृहीतसर्वाङ्गयोर्वश्येव सञ्जनिताऽनवच्छेद्याऽनु-

---

अथ—यावत् तौ ततो निकुञ्जाद्बहिरागन्तुमीहेते तावदेव—चिन्तयन्त्येवाऽहं—कलकलं कोलाहलं च समाकर्ण्य चक्षुर्व्यापारयन्ती–तदनुसारेण यावद्गच्छामि–तावत्–कुसुम-समूहसंवर्मितात् ततो वनगुल्मात्, तेनाऽपरेण सह—निःसृतं—**मानसकेतुमालोकयम्**–इत्यन्वयः। मृदुध्वनिपरम्परा कलकलः, कठोरा कोलाहलः। करचरणभूषणशिञ्जितानां तत्क्रियाभेदाद्भेद औचित्यादुन्नेयः। मानसकेतुं विशिनष्टि–सुरभिः कुसुमाकरः सहायो यस्य पुष्पधन्वनः, 'पुष्पधन्वा रतिपतिर्मकरध्वज आत्मभू'रित्यमरः। सहकारोऽतिसौरभो रसालः। 'वर्षोपलस्तु करका'। स्पदि किञ्चिचलने। सन्दर्भितं ग्रथितम्। वैकक्षकः=यज्ञोपवीतवत्परिहित पुष्पस्रक्, 'वैकक्षकन्तु तत्, यत्तिर्यक्क्षिप्तमुरसि'–इत्यमरः। **करवालः** खङ्गस्तमुपमिनोति **विद्येति**। असितकुम्भीनसः कृष्णसर्पः। तमालस्तापिच्छः। प्रकोष्ठः कूर्परादधः। महारजनरागो लाक्षारागः। 'रेणुर्द्वयो स्त्रियां धूलिः पांसुर्ना न द्वयो रजः'। तपनीयं सुवर्णम्। पुरूरवाः=सोमपौत्रः। उर्वशी=पुरूरवसः पत्नी। अनवच्छेद्या=अपरिच्छेद्या। प्रभा=छविः। ऊहः सम्भावनात्मकस्तर्कः। अपोहोऽ-

भावशक्तिगुरुकया प्रभया परिरभ्यमाणं, किमयं मीनकेतनो न वेत्यवधारयितुं सुरभिसमयेन नियुक्तैस्तदङ्गलग्नैरलिकुलकोलाहलच्छलादूहापोहमिव प्ररोहयद्भिः कुसुमसमूहैरन्यतरकोटिमनवधारयद्भिरिवानुच्यमानदेहं, पवनोपनीतकुसुमकिञ्जल्कपिञ्जरतयाऽङ्कुरितकान्तिकायमिव सर्वतः कपोलफलकावलम्बिनश्च मरकतमणिमयस्य श्रवणाभरणस्य शुकच्छदच्छविनोभयतः प्रसारिणा किरणगणेनोभयपार्श्वधृतेन शिरीषकुसुमेनेव गर्भितं, क्षयदोषचिकित्सिषया कृतोदवासं तपस्यन्तं तदानीमेवोत्थितं शैवालशकलाङ्कितं राकाशशाङ्कमिव वदनं बिभ्राणं, सौरभ्यलोभादभितो भ्रमद्भिर्भ्रमरैर्भ्रूशोभाभरसंभृतभङ्गस्य रतीश्वरशरासनसम्बन्धिनः शैथिल्यशालिनः शिञ्जिनीसन्निवेशस्य शकलितभावमिव दर्शयन्तं, श्रवणान्तावलम्बिना च सिन्दुवारमुकुलजालकेन वनविहारखेदोदितानां स्वेदबिन्दूनां कुञ्जच्छायाश्रयणादिना कृतप्रतीकाराणामुत्तरावस्थाविशेषेणेव मद्दर्शनानन्तरमेव पूर्वरूपेणैव परिणाममासादयिष्यता भासमानम् ,अरुणमणिमयीमिवाशोकमुकुलमालिकां मद्दर्शनादव्यवहितोत्तरमेव विकसिष्यन्तीमनुरागपरम्परामिव विश्राणेन गोपुरक-पाटनधृतपाटवेन वक्षसा लक्ष्यमाणं, नारायणमिव नन्दनशोभनासिकं, मलयमिवाविर्भवत्कुसुमसमयाशुगं, शिवमिव लक्ष्यचक्षुःश्रवःसंयोगं, वेलापरिसरमिव

---

सम्भावनात्मकस्तर्कः। प्ररोहयद्भिः=रुहबीजजन्मनि प्रादुर्भावे चेत्यस्माण्ण्यन्ताच्छताभिस्। रुहः पोन्यतरस्यामिति पो न। पिञ्जरतया=पीतवर्णतया। शुकच्छदच्छविना=कीरतनूरुहरुचिमता। चिकित्सितुमिच्छा चिकित्सिषा रोगप्रतीकारेच्छा तया। उदके वास उदवासः। तपश्चरति तपस्यति, ( कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ) इति चरत्यर्थे क्यङ्, तपसःपरस्मैपदञ्चेति परस्मैपदम्, ततः शत्रन्ताद्द्वितीया तपस्यन्तम्। मद्दर्शनानन्तरमिति वक्त्री मदयन्ती, श्रोता ( बोधव्यः ) चित्रभानुः। कुत्सितानि वैरिस्वामिकत्वेन निन्दितानि यानि गोपुराणि तानि गोपुरकाणि तेषां पाटनेन दलनेन लब्धं पाटवं येन तेन वक्षसोरसा। 'नन्दनं वासवोद्याने', नन्दनो, हर्षके, सुते'। आसनमासिका=रोगाख्यायां ण्वुल् बहुलमिति भावे ण्वुल्। नन्दने शोभना आसिका यस्य। नन्दनो नन्दो विष्णुगणः तस्यैव शोभा =शोभना नासिका यस्य। कुसुमसमये वसन्ते, आशुगा भ्रमराः बाणाश्च। लक्ष्यो दृश्यः चक्षुःश्रवसः सर्पराजस्य संयोगो यस्य शिवस्य तमिव लक्ष्यो दर्शनीयः चक्षुषः लोचनस्य श्रवसः कर्णस्य च संयोगो यस्य प्रकृतस्य मानसकेतोः। तिमिरवद्द विभासिनस्ताला एव तालका यस्मिन्—वेलायाः समुद्रतटस्य परिसरे प्रान्ते,

तिमिरविभासितालकं, सुगतशास्त्रमिव भासमानालीकं, विनायकमिव सपुष्करकरं, राजहंसमिव मृणालदण्डभुजं, सूर्यमिवानुगतच्छायं, कर्मारम्भमिव पेयारुणैकदन्तवसनं, गन्धगजमिव मदवारिक्लिन्नगण्डमण्डलं, चन्द्रमसमिव मृगराजोदरं, क्षेत्रगणितमिव दृश्यभुजान्तरं, दिवसमिव—अरुणकरमिलितचक्रं मानसकेतुमालोकयम् ॥१३०॥

मम तु दृश्यमानमात्रे सुधादीधिताविव तस्मिन्नकस्मादेव पुरुहूतहरित

---

तिमिरेण नीलतिलकेन विशेषेण भासिता अलकाश्चूर्णकुन्तला यस्य मानसकेतोः। सुगतानां बौद्धानां शास्त्रं दर्शनं भासमानमलीकं शून्यत्वं यस्मिन् । विभासमानमलीकं भालं यस्य । 'अलीकालीकौ भाले' । पुष्करं शुण्डाग्रम् , सरोजञ्च । मृणालदण्डं भुङ्क्ते मृणालदण्डभुक् तं राजहंसमिव, मृणालदण्ड इव भुजौ यस्य तम् । छाया सूर्यस्त्री कान्तिश्च । पेयं रक्षणीयमर्पणीयमेकदन्ताय शूर्पकर्णायाऽरुणशोभे वसने वस्त्रे यस्मिन्कार्यारम्भे—'रक्तवस्त्रयुगं देव देवाङ्गसदृशप्रभमि'ति मन्त्राऽनुगुणत्वात् । अन्यत्र पेयं रक्षणीयं परिधेयमित्यर्थः ) पा रक्षणे, अचो यत् ईद्यति) । मदवारि दानजलम् मृगमदजलञ्च, क्लिन्नमार्द्रम् (क्लिदु-आर्द्रीभावे क्तः)। मृगराजः शश उदरे मध्ये यस्य शशाङ्कस्य, राजत्वारोपः चन्द्राश्रितत्वादेव। अन्यत्र मृगराजस्य सिंहस्योदरमिवोदरं मध्यं यस्य मानसकेतोः । क्षेत्रस्य चतुरस्रस्य त्रिकोणस्य वा पदार्थस्य भूभागस्य वा भुजयोः कोणयोरन्तरमन्तरालं मध्यं यथा दृश्यमानं प्रत्यक्षं तथा दृश्यमानं दर्शनीयं भुजयोः प्रवेष्टयोरन्तरालं यस्य मानसकेतोः, 'भुजबाहू प्रवेष्टो दोः' । दिवसं वासरम्—अरुणस्य सूर्यस्य करैः किरणैः मिलितं संगतं चक्रं यस्मिन् तादृशम्, तथैव अरुणौ यौ करौ हस्तौ तयोर्मिलितं चक्रं चक्रचिह्नं यस्य तं गुह्यकेन्द्रं मानसकेतुमपश्यम्—इति संक्षेपः ॥

गुह्यकमानसकेतोर्दर्शन—विवृतेः प्रसन्नः सः ।
गुह्यं पदार्थजातं मनसि नितान्तं विकासयतु ॥१३०॥

मम तु—तस्मिन्—अकस्मादेव राग उज्जगाम । लज्जा अकिञ्चित्करतामश्चतिस्म । शीलेन समं कलेवरमाचकम्पे। धैर्यं नाऽसहत मुहूर्तमप्यवस्थातुम् । प्रावर्तन्त निःश्वासमातरिश्वानः । सस्यन्दिरे प्रस्वेदपृषताः । पुलक-कञ्चुकितं कुचद्वयमकम्पत । निर्जगाम 'मय्ययमनुरागवान्न वा'—इति संशयः । विहितहृदयप्रवेशे च प्रियतमे, तस्य द्वितीयः सहचरोऽपि मा प्राविक्षद्—इत्यभिप्रायवानिव पाणिररुणद् हृदयमार्गम् । अनुभूते च दयितप्रवेशोत्सवे प्रमोदोत्कम्पितः पाणिः पूर्णपात्रमिव हृदयात् प्रसह्य मौक्तिकहारमपजहार । हृदयपरिभ्रष्टानि मुक्ताफलानि भूतलमवललम्बिरे—इत्यन्वयसंक्षेपः । पुरुहूतहरितः पूर्वदिशः ।

इवोज्जगाम रागः, नित्यानुवर्तिन्यपि सहचरीवाकिञ्चित्करतामञ्चति स्म लज्जा, जातुचिदजिहासितमपि शीलेन समं कलेवरमाचकम्पे, पूर्वपरिगृहीतमपि तदानीमेव मया दीयमानानुमतिनेव तरलभावेन बलादवधीर्यमाणं धैर्यं नासहत मुहूर्तमप्यवस्थातुं, हृदयाभिमुखमायातं वल्लभजनं प्रत्युत्थातुकामा इव प्रावर्तन्त निःश्वासमातरिश्वानः, प्रियतमप्रवेशमङ्गललाजाञ्जलय इव सस्यन्दिरे कुन्दमुकुलस्थूलाः प्रस्वेदपृषताः, प्रियतमप्रवेशसमये समासादितप्रियपरिरम्भपीयूषमिव पुलककञ्चुकितं कुचद्वयमकम्पत, सहसैव हृदयमवगाहमानस्य प्रियतमस्य गरीयसाऽनुरागेण विरोधिनिर्णयेनेव निराकृतो निर्जगाम मय्ययमनुरागवान्न वेति संशयः, विहितहृदयप्रवेशे च प्रियतमे एतत्समक्षमेवंवीक्षणाद्येवंविधं प्रियविषयकमप्येवंविधमनुचितमित्येतादृशज्ञानविषयत्वेन तस्य द्वितीयः सहचरोऽपि मा प्राविक्षदित्यभिप्रायवानिव तत्कालस्खलितोत्तरीयसिचयाञ्चलसमाकलनच्छलेन हृदयमार्गं पाणिररुणत्, अनुभूते च दयितप्रवेशोत्सवे हृदयात्प्रसह्य पूर्णपात्रमिव प्रमोदोत्कम्पितः पाणिर्मौक्तिकहारमपजहार, हृदयपरिभ्रष्टानि सद्वृत्तानि अवदाततमानि

---

उज्जगाम=आविर्बभूव। नित्यमनुवर्ततेऽनुसरति तच्छीला। अञ्चतिस्म=गच्छतिस्म, अञ्चुगतौ। जातुचित्कदाचिद्। हातुमिष्टं जिहासितं ( ओहाक् त्यागे इत्यस्मात्सन्नताक्तस्ततो नञ् समासः ) समं=साकम्। कलेवरं शरीरम्। आ=ईषत्, चकम्पे चचाल (कपि चलने)। अवधीर्यमाणम्=अनाद्रियमाणम्। नाऽसहत= नाऽमृष्यत्, निःश्वासमातरिश्वानः, निःश्वाससमीरणाः। सस्यन्दिरे=प्रसुस्रुवुः (स्यन्दू प्रस्रवणे) प्रस्वेदपृषताः=स्वेदबिन्दवः। पुलकैः=रोमाञ्चैः कञ्चुकितं वर्मितम्। अयं मय्यनुरागवान् न वा, अदृष्टपूर्वत्वात्—इति संशयाऽनुमितिः। अयं मय्यनुरागवानेव, सहसैव हृदयाऽवगाहनवत्त्वात्—इति निश्चयानुमितिः। संशयनिश्चययोर्बाध्यबाधकभावः स्पष्टः, दाह-विरोधिनिर्णयेनेति। निराकृतो निःसारितः। कम्पकार्यं दर्शयति पाणिररुणदिति। तदपह्नुते-समाकलनच्छलेनेति। तत्रापि हेतुगर्भमुत्प्रेक्षते-अभिप्रायवानिवेति। अभिप्रायमनुवदति—विहितेति। एतत्समक्षं=सहचर ( सुबाहु ) समक्षम्। वीक्षणाद्यारभ्याऽनुचितमित्यन्तशब्दप्रतिपाद्यं स्व (मदयन्ती) समवेतं समूहालम्बनधारावाहीकत्वादिविशिष्टं यज्ज्ञानं, तद्विषयत्वमेतच्छब्दप्रतिपाद्यस्य सहचरस्येति बोध्यम्। मा प्राविक्षदिति-उभयोश्चाक्षुषप्रत्यक्षे समाने चित्ताऽऽसङ्गः सुकेतावेवेति तत्त्वम्। पूर्णपात्रं कर्मान्तदेयं तण्डुलपूर्णं पात्रं तदिव। सद्वृत्तानि सच्चरित्राणि। अवदाततमानि=विशुद्धत-

फलानुपधानेन जातलज्जानि विनयबीजानीव मुक्ताफलानि भूतलमवललम्बिरे ॥१३१॥

सोऽपि युवा विस्मयप्रमोदमेदुरैर्मद्वयवातिरिक्तवृत्तिसंयोगानुकूलक्रियारहितैर्विकसितकुशेशयसंशयाधानकुशलैरन्तर्वृत्तिनापि रागातिशयेन व्यञ्जकत्वसम्बन्धेनोपरज्यमानैः केतकीकुसुमानुकारिभिः कुमुदोदरमेदुरकौमुदीमदभिदुरैर्विशकलितहिमवालुकारजोमहिमभिरारोचितैकभ्रूलताशालिभिर्घूर्णमानपक्ष्मभिर्विस्तारितपुटैरीषत्तरलतारकैर्निवेदयद्भिरिव हृदयवृत्तिं,

---

मानि । ललम्बिरे = लम्बन्तेस्म, लबि = अवस्रंसने ( भानुमानुपपयोधि ललम्बे इति माघः ) । अत्र मानसकेतुविषयकमदयन्तीनिष्ठः पूर्वरागो नयनप्रीत्यादिकः सात्त्विकभावान्तो दर्शितः पताका–नायिकामुखेनैव ॥ १३१ ॥

'आदौ वाच्यः स्त्रिया रागः पुंसः पश्चात्तदिङ्गितैः' इति नियमादथ पुंसोऽनुरागमाह–**सोऽपीति । सोपि युवा–विस्मयप्रमोदमेदुरैरक्षिपातैर्मामुदीक्ष्यमाणो मदनबाणोच्चयस्य लक्ष्यतां गत-इव अलक्ष्यत**–इत्यन्वयः । अत्र सर्वेषां तृतीयान्तानामक्षिपातैरित्यनेनान्वयः । विस्मय-प्रमोदाभ्यामाश्चर्यसंमदाभ्यां मेदुरैः परिपूर्णैः मम=वक्तृत्वविशिष्टाया 'मदयन्त्या' अवयवेभ्योऽप्यघनेभ्योऽतिरिक्तं भिन्नं, यत्सर्वं कुसुमकिसलयादिदर्शनीयं वस्तुजातं, तद्वृत्तिस्तन्निष्ठः—यः कश्चिसंयोगः सन्निकर्षः संबन्धः, तदनुकूलास्तज्जनिका याः क्रियाः=इतस्ततश्चालनरूपास्ताभिः = रहितैः हीनैरेकतानैरित्यर्थः । विकच-शतपत्र-सन्देह-जनन-प्रवीणैः = निर्निमेषैरित्यर्थः । रागस्यानुरागस्यातिशयेनाऽऽधिक्येनोपरज्यमानैः रागवद्भिः । ननु–अन्तःकरणस्थेन रागराशिशतेनाऽपि बहिःस्थितानामक्षिपातानामनुरञ्जनमनुपपन्नं, रागरज्यमानयोः सबन्धाऽभावात् । नहि–घटान्तर्वर्तिना रागद्रोणेनाऽपि घटबहिर्वेष्टितः पटः पटुरजककोटिभिरपि रञ्जयितुं शक्यते, संयोगादिसंबन्धाऽभावादित्याह–**अन्तर्वृत्तिनापीति** । समवायसम्बन्धेन रागस्य स्नेहस्यान्तःकरणनिष्ठत्वेऽपीत्यर्थः। अतिशयेन हेतुना स्वल्पस्य रञ्जनसामर्थ्याभावात् । न केवलं संयोग-समवायस्वरूप-कालिका एव-सम्बन्धाः संबद्धत्वनियामका अपि तु-अन्योऽपि सम्बन्ध–इत्याह—**व्यञ्जकत्वसंबन्धेनेति** । अन्तःकरणवृत्तिरागनिष्ठ-व्यङ्ग्यत्वनिरूपितव्यञ्जकत्वसंबन्धेनोपरक्ततामापन्नैरक्षिपातैः पातविशिष्टैरक्षिभिरित्यर्थः । तथा च पातस्य क्रियात्वेन कथमुपरक्तत्वम् 'गुणादिर्निर्गुणक्रियः' इति नाशंकनीयम् । प्रभाङ्गरैः केतकीकुसुमानुकारिता । कुमुदोदरे मेदुरा संभृता या कौमुदी तस्य मदमभिमानं भिन्दन्ति–इति भिदुरास्तैः ( विदिभिदिच्छिदेः कुरच् ) । हिमबालुका कर्पूरः । आरोचितमुन्नतीकृतम् । हृदयवृत्तिं चित्तासङ्गम् ।

व्यञ्जयद्भिरिव मदनातिप्रसङ्गम्, असंयुक्तैरपि परिष्वङ्गसुखमिवानुभवद्भिः, स्वाभ्युपगममिव गमयद्भिः, परिग्रहमिव प्रार्थयमानैरक्षिपातैर्मामुदीक्ष्यमाणो मदनबाणोच्चयस्य लक्ष्यताङ्गत इवालक्ष्यत ॥ १३२ ॥

तथाहि तस्यापि मदनागमनिवेदनादनासादितविरामा मलयानिला इव चन्दनामोदिनो मुखमारुताः समुदीयुः, रसार्द्रे हृदि दीप्यमानस्य मदनजातवेदसो धूमवीरुध इव तत्सौरभानुसारिण्यो मधुकरततयः समलक्ष्यन्त, मलयमारुताहतः सहकारतरुरिव कुसुमसुकुमारः कायः कम्पमाकलयाञ्चकार, तदवलोकनविकाराकुलां मां प्रजिहीर्षतः स्फुरदीर्ष्यस्य मकरकेतनस्येव कम्पमानः कोपकलुषः कलितकरवालकः करः समालोकि, मार्गणगणनिचितगात्राभ्यन्तरेऽनवकाशतया बहिरेव लग्ना रतिरमणप्रहिताः कुन्द-

---

व्यञ्जयद्भिः द्योतयद्भिः। अलक्ष्यत—मया—इति शेषः। स्पष्टमन्यत् ॥ १३२ ॥

**तथा हि तस्याऽपि—मुखमारुताः समुदीयुः। कायः कम्पमाकलयाञ्चकार। करः कम्पमानः समालोकि। स्वेदबिन्दवः प्रादुर्बभूवुः। पुलककुलं विपुलमुल्ललास—इति संक्षिप्तोऽन्वयः।** मदनस्य मन्मथस्य, आगमस्योद्भवस्य निवेदनात् कारणात् न आसादितः प्राप्तः विरामो विश्रान्तिर्यैस्तादृशा मलयानिला इव मम प्रतिपादिकायाः अनागमस्याऽलाभस्य निवेदनात् कारणात् नाऽऽसादितो विरामो विश्रमो यैस्ते मुखमारुताः समुदीयुः। दूरस्थया त्वया मुखमारुताः समुदीयुरिति कथं ज्ञातमित्याह—**रसार्द्रेत्यादि**। यथा—रसेन जलेन आर्द्रे क्लिन्ने काष्ठे दीयमानस्य जातवेदसो ज्वलनस्य संबन्धिन्यो धूमततयो दृश्यन्ते, तथा—रसेनाऽनुरागेणार्द्रे द्रवीभूते हृदये नयनप्रीतिविषयीभूतया मया दीयमानस्योद्भाव्यमानस्य मदनाग्नेः संबन्धिन्यो निःश्वासमारुतवीरुधस्तत्सौरभानुसारिण्यो, मधुकरततयः समलक्ष्यन्त—इति—निःश्वासमारुतोदयज्ञाने हेतुः। अत्राऽयमनुमानप्रयोगः-अयं सुरभिनिःश्वासोदयवान्, तत्सौरभानुसारिमधुकरगणानुस्त्रियमाणत्वात्, यत्र यत्र मधुकरानुस्त्रियमाणत्वं तत्र तत्र सौरभवत्त्वम्। अयं रसार्द्रहृदयवान्,अविरतनिःश्वासवत्वात्, यत्रैवम् तत्रैवम्। पुनश्च अयं मदनार्द्रहृदयः, मद्विषयकाक्षिपातवत्वे सति मदनागमवत्त्वात्। हेत्वाभासा वारणीया भवद्भिः। सुकुमारः कोमलः। तस्य मानसकेतोर्दर्शनेन जातो यो विकारस्तेनाकुलां व्याप्तां मां हर्तुमिच्छतः स्फुरन्ती=द्योतमाना ईर्ष्या यस्य तस्य कामदेवस्येव 'करः' कलितो ग्रहीतः करवालोऽसिः येन (शेषाद्विभाषा इति कः), अतएव कोपेन कलुषोऽनच्छः करः कम्पमानः समवलोकि—मया प्रेक्षिकया तदानीम्। प्रतिपादिकयेदानीम् मार्गणानां बाणानां गणैः समूहैः, निचितं संभृतं यद् गात्रं वपुस्तस्याभ्यन्तरेऽन्तरालेऽनवकाशतया स्थानाभावेन बहिरेव

कलिका इव स्वेदबिन्दवः प्रादुर्बभूवुः, मदनोदयदोहदमहिम्नाऽसमीक्षितसमयान्तरात्कदम्बपादपादिव कलेवरात्कोरकनिकुरम्बकमिव पुलककुलं विपुलमुल्ललास ॥१३३॥

तथाभूते च तस्मिन् व्यतिकरे मन्दारमञ्जरीप्रभृतयः सर्वाः सहचर्यस्तस्यैव वनस्यान्यतमस्मिन्नुद्देशे समुदितां मां कलावतीं च पर्येषयन्त्यस्तत्रैव समाजग्मुः । ताश्च समायान्तीः समीक्ष्यमाणया कलावत्या 'भर्तृदारिके मदयन्तिके ! समागता भर्तृदारिका मन्दारमञ्जरी सहचरीसमूहसहाया; सुमहाँश्चावयोरनेहा वनविहारानुषङ्गादिहातिक्रान्तः, तदनुसरावः सखीजन'मित्यभिहिता, स्वप्नाऽनुभूयमानहृदयदयितसमागमेव जातप्रबोधा, ऐन्द्रजालिक-

---

बाह्यभागे एव लग्नाः सक्ता रतेरनुरागाधिष्ठात्र्या रमणेन कुसुमबाणेन प्रहिताः प्रेषिताः याः कुन्दस्य माध्यस्य कलिकाः=कोरकास्ता इव स्वेदस्य श्रमवारिणो बिन्दवः पृषताः प्रादुर्बभूवुः प्रचकटुः । स्वेदं वर्णयित्वा रोमाञ्चं वर्णयति—**मदनोदयेत्यादिना** । समीक्षितं प्रतीक्षितं यत्समयान्तरं तस्मात् । 'कलिका कोरकः पुमान्' । निकुरम्बं कदम्बकम् । पुलककुलं रोमाञ्चकदम्बकं विपुलं बृहत् उल्लास=उज्जगाम । अत्र सात्त्विकाभावाः सर्वे दर्शिताः। 'स्तम्भःस्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः । वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विकाः स्मृताः'—इति साहित्यदर्पणे ॥१३३॥

**तथाभूते च तस्मिन् व्यतिकरे मन्दारमञ्जरीप्रभृतयः सर्वाः सहचर्य्यस्तत्रैव समाजग्मुः ।** तत्र समागमे हेतुः पर्येषयन्त्यो मार्गयन्त्यः, मां मदयन्तीम्, सहचरीं कलावतीञ्च । इतस्ततः स्वेच्छया भ्रमन्तीनां कुत्र समुदाय अभूदित्याकाङ्क्षायामाह—**तस्यैव वनस्येत्यादिना** । अन्यतमस्मिन्नुद्देशे= कस्मिंश्चित्प्रदेशे । **ताश्च समायान्तीः समीक्ष्यमाणया कलावत्या** भर्तृदारिके मदयन्तिके, समागता भर्तृदारिका मन्दारमञ्जरी सखीसमूहसहाया **तदनुसरावः सखीजनम्**—इत्यभिहिता—स्वप्नाऽनुभूयमानहृदयदयित-समागमेव—जातप्रबोधा दृष्टिं कष्टसृष्टया बलवत्प्रतिलोममाकृष्य **सहचरीणां परिसरमन्वसरम्**—इत्यन्वयसंक्षेपः । 'राजा भट्टारको देवस्तत्सुता भर्तृदारिका' । अनेहाः=समयः । सर्वमङ्गलासपर्यार्थं कुसुमाऽवचयस्य प्राधान्याद् वनविहारस्याऽऽनुषङ्गिकत्वमत उक्त-**मनुषङ्गादिति** । अत्रेदं बोध्यम्—'श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः । दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते । 'श्रवणन्तु भवेत्तत्र दूत-वन्दि-सखी-मुखात् । इन्द्रजाले, च चित्रे, च साक्षात् स्वप्ने, च दर्शनम्''—इति लक्षणलक्षितः साक्षा-

मायासमासादितवल्लभपरिरम्भेव तत्र मिथ्येति बुध्यमाना, चित्रफलकलिखितप्रेयांसं परमार्थतया पश्यन्तीव तत्र सञ्जातप्रामाण्यव्यतिरेकनिश्चया, सन्निदधता तद्विच्छेदेन जातानुतापा, तन्नयनान्तैरन्तरा मिलद्भिर्लुण्ठितामिव तत्कुन्तलकलापान्धकारेण जातदिग्भ्रमामिव तद्वदनकान्तिप्रवाहेणापह्रियमाणामिव तदीयरदनदीधितिप्ररोहेषु गुम्फितामिव प्रसारितकिरणकरैस्तदाभरणमणिभिर्निगृह्यमाणामिव मत्समवेताभिस्तदभिमुखाभिरुत्कलिकाभिः प्रेर्यमाणामिव श्रवणयुगेन स्वाभ्यन्तरे प्रवेशितामिवात्मनैव सह निर्गतं मनः सूक्ष्मतया पर्येषयन्तीमिवानासाद्य प्रतीक्ष्यमाणाम्, अपरिमुक्तस्वस्थाना-

---

दर्शनजन्यः—मानसकेतुमदयन्तिकयोरन्योन्याऽनुरागो दर्शितः, इत आरभ्याऽप्राप्तिर्दृश्यते, अभिलाषादयश्च दशा यथायथं दर्शिताः, दर्शयिष्यन्ते च, ततश्च विप्रलम्भस्य भेदः पूर्वरागः सम्यङ् मननीयः सहृदयैः। अत्र यूनोः साक्षाद्दर्शनमिति च न विस्मर्तव्यम्, प्रत्यक्षानुभूयमानदयितसमागमे सति तन्मयतया, सखीजनमनुसरावः इति कलावतीवचनश्रवणानन्तरम् 'अहं का, क्व मे सख्य' इत्याकारे प्रबोधे जाते विरहस्योपस्थितत्वेन तदेव प्रत्यक्षात्मको दयितसमागमः स्वाप्निकत्वेनेन्द्रजालिकत्वादिना चोत्प्रेक्ष्यते मदयन्तिकया स्वयं चित्रभानुसन्निधौ। **तत्र** चाक्षुषप्रत्यक्षात्मके समागमे, **मिथ्येति** मृषेति। एवं चित्रफलकलिखितप्रियस्य स्वाधीनतया विरहाभावात्परमार्थता, प्रत्यक्षदृष्टस्य विरहविच्छेदादपरमार्थता। तत्र प्रत्यक्षदृष्टे जातः प्रामाण्यस्य व्यतिरेकोऽभावस्तस्य निश्चयो यस्यास्तादृशी सती, सन्निदधता=सन्निहितेन, तस्य मानसकेतोः विच्छेदेन विरहेण जातोऽनुतापः पश्चात्तापो यस्याः तादृशी सती—अहम्—दृष्टिमाकृष्याऽन्वसरमित्यन्वयः। अथ दृष्टिं विशिनष्टि—**तन्नयनान्तै**रित्यादिना। द्वितीयान्तानि सर्वाणि दृष्टिविशेषणानि। तस्य मानसकेतोर्नयनान्तैर्नेत्रप्रान्तैः अन्तरा=मध्ये मिलद्भिः संगच्छमानैः लुण्ठितामिव चोरितामिव, (तच्छब्दार्थः सर्वत्र प्रेष्ठो मानसकेतुः) कुन्तलानां चिकुराणां यो कलापः समूहस्तस्य (जन्यत्वं षष्ठ्यर्थः) योऽन्धकारस्तेन जातो भूतो दिशां विषये भ्रमो भ्रान्तिरप्रमा यस्यास्तां दृष्टिमित्यादि स्वयमूहनीयम्। अपह्रियमाणामिव=कृतापहरणामिव। गुम्फितां ग्रथिताम्। निगृह्यमाणां कृतनिग्रहाम्। प्रेर्यमाणां कृतप्रेरणां। **स्वाऽभ्यन्तरे** कर्णविवराऽभ्यन्तरे। अभ्यन्तरप्रवेशितायाः बहिरागमः कष्टसाध्य-इत्यर्थः। आत्मनैव=दृष्ट्यैव सार्कं निर्गतं मानसकेतुप्रतीकदर्शनार्थं निर्गतम्, "आत्मा मनसा युज्यते, मन इन्द्रियेण इन्द्रियं विषयेण, ततः प्रत्यक्षमिति" नियमसिद्धमर्थमुत्प्रेक्षते—**पर्येषयन्तीमि-**

नीन्द्रियान्तराणि कथमितोऽपरिपूर्णमनोरथैव प्रतिनिवृत्त्य गच्छन्ती द्रक्ष्यामीति महतीं ह्रियमिव वहन्तीम्, अहमिहैवास्मि त्वं प्रतिनिवर्तस्वेति मनसा विसर्ज्यमानामिव तत्परित्यक्तुमपारयन्तीं, तन्मात्रप्रवणस्वभावामिव दिगन्तरेण परिस्पन्दमानां, मध्यवर्तिना मदनान्धकारेणेतो विच्छिन्नामिव स्वस्थानागमनमार्गमनासादयन्तीं, तदीयदेहप्रभाभिः संभूय समारब्धतेजो-

---

वेति । अनासाद्य=अप्राप्य, मनसोऽणुत्वेन दृष्टेरविषयत्वम् । प्रतीक्ष्यमाणां=मानसकेतुप्रतीकेष्वेव विलम्बमानाम् । अथ च अहं दृष्टिः स्वस्थानं चक्षुर्गोलकं परित्यज्य विषयदेशं गच्छन्ती तत्र चाऽपरिपूर्णमनोरथैव सती प्रतिनिवृत्त्य इतः स्वस्थानं गच्छन्ती सती–अपरिमुक्तस्वस्थानानि=न परिमुक्तं त्यक्तं विषयग्रहणलोलुपतया स्वकीयं स्थानं कर्णशष्कुल्यादिरूपं यैस्तानि, अन्यानि च तानि-इन्द्रियाणि श्रोत्र-त्वक्-रसनघ्राणरूपाणि कर्मभूतानि, कथं केन मुखेन द्रक्ष्यामि पश्यामि–इत्याकारिकां बृहतीं लज्जां धारयन्तीम्,—'दृष्टिम्' । अत्रेदं बोध्यम्—चक्षुरिन्द्रियं विषयदेशं गत्वा विषयं गृह्णाति, तदितराणि–स्वदेशप्राप्तं विषयं गृह्णन्तीति नैसर्गिको नियमः । यथा कश्चित्प्रतिगतो विषयान्तरमकृतकार्यः स्वबान्धवदर्शनं परिहरति तथेति दृष्टेः । "अहं"=मन इहैव मानसकेतुप्रतीकेष्वेव–अस्मि=भवामि=विद्ये=वर्ते=तिष्ठामि, त्वं दृष्टिः प्रतिनिवर्तस्व प्रतिगच्छ, इति=एवं प्रकारेण मनसा=दर्शेन्द्रियस्वामिना चेतसा विसर्ज्यमानामिव प्रतिनिवर्त्यमानामिव तन्मनः कर्मभूतं परित्यक्तुं हातुमपारयन्तीमसमर्थाम्, 'दृष्टिम्'—मनोनिवर्तनं विना दृष्टेर्निवर्तनमसंभवमित्यर्थः, पूर्वोक्तनियमात् । दर्शेन्द्रियवृत्तिर्मनोवृत्त्यधीना इत्यत आह–तन्मात्रेति । मनोमात्रसंभजनस्वभावामिव दिशोः मानसकेतुमदयन्त्योः पार्श्वयोरन्तरेण मध्ये चलन्तीम् । मध्यवर्तिना कामान्धकारेण, इतो मम मदयन्त्याः सकाशाद् विच्छिन्नामिव, तत्रैव संलग्नामित्यर्थः । अतएव स्वस्थानगमनमार्गमप्राप्नुवन्तीम् । अयं भावः—दृष्टिः स्वस्थानाद् विषयदेशं धारारूपेण गच्छति, न तु स्वस्थानं परित्यजति–अत उत्प्रेक्षितं–विच्छिन्नामिवेति । आलोक एव दृष्टेः प्रसर अत उक्तमन्धकारेणेति । व्यवधानं दृष्टिप्रतिबन्धकमत उक्तम्–मध्यवर्तिनेति । एवमन्यत्रापि विचारणीयं धीमद्भिः । तदीयेति । मानसकेतुसंबन्धिशरीरकान्तिभिर्मिलित्वा रचिततेजोरूपद्रव्यान्तरामिव अतएव तस्मादपूर्वलब्धाद् द्रव्यान्तरात्पृथक्त्वं, स्वस्याः अप्राप्नुवन्तीम्, प्रभारब्धतेजोद्रव्यस्य दृष्टिरूपतेजोद्रव्यस्य चैकत्वादित्यर्थः साजात्यात, 'सामान्यमेकत्वकरमिति' नियमात् । प्रभातेजसोर्भेदः सर्ववादिसिद्धः, अत उक्तम्–समारब्धेति । प्रेष्ठप्रतीकेभ्यः किञ्चित्प्रति-

द्रव्यान्तरामिव पृथग्भावमनासादयन्तीं, किञ्चित्प्रतिनिवृत्तामपीतःप्रतिष्ठमानैर्निःश्वासानिलैः प्रत्यावर्त्याऽर्द्धमार्गादेव बलादेव तत्रैव नीयमानाम्, उद्भूतरूपवद्भिस्तदवयवैरनुद्भूतरूपकौतुकादिवावष्टभ्यमानां, तदङ्गसङ्गाकलितानन्दानुभवादिवामन्दमप्यस्पन्दमानां, कलिन्दनन्दिनीमिव स्वविषयस्वारस्यानु-

---

निवर्तितुमारब्धामपि—इतः = प्रेयसीसकाशात्प्रस्थानं कुर्वद्भिः, निःश्वाससमीरणैः कर्तृभिः अर्धमार्गादेव परावर्त्तयित्वा बलादेव बलात्कारादेव तत्रैव प्रेष्ठप्रतीकप्रदेशेष्वेव प्राप्यमाणाम्। उद्भूतरूपस्यैव दृष्टिगोचरत्वादाह—उद्भूतं प्रकाशमानं रूपं विद्यते येषां ते तैः तस्य दृष्टिगोचरस्य प्रियस्याऽवयवैः = प्रतीकैः, कर्तृभिः, अवष्टभ्यमानामवरुद्ध्यमानाम्। अवरोधने हेतुमुत्प्रेक्षते-अनुद्भूतरूपमजातस्वरूपं यत्कौतुकं प्रियविषयकत्वाचप्रत्यक्षं तस्मादिव, विशिष्टत्वाचप्रत्यक्षस्यैव पूर्णरतिशब्दवाच्यत्वात्, तत्रैवौत्सुक्यस्य पर्य्यवसानात्। तस्य प्रेयसः=अङ्गानामवयवानां सङ्गेन संयोगेन (दृष्टेर्द्रव्यत्वेनाऽवयवैः संयोग—उत्पन्नः 'द्रव्ययोरेव संयोग' इति नियमात्) आकलितः प्राप्त आनन्दस्य विशिष्टसुखस्य—अनुभवो भोगस्तस्मादिव मन्दमपि= किञ्चिदपि न स्पन्दमानां न चलन्तीम्। स्पदि किञ्चित्—चलने, तत्राऽपि मन्दमपीति विशेषणम्। प्रथमन्तावदिदमवगन्तव्यम्—कलिन्दपर्वतो धन्वदेशसमानोत्तरदक्षिणरेखायां हिमाचलस्य शाखापर्वतः, तत उद्गता यमुना यदि समानरेखानुरोधाद्व वहेत् तर्हि तस्या विषयो मरुभूमिः, परन्तु तत्रत्या पर्वतश्रेणी वायव्याग्नेयाऽऽयता—अतो यमुना आग्नेयाऽभिमुखी वहन्ती प्रयागे जाह्नव्या सङ्गच्छते। एवं शतद्रुर्नैर्ऋत्याऽभिमुखी सिन्धुना नदेन सङ्गच्छते, तत्रत्यपर्वतश्रेणेस्तदनुकूलत्वात्। अतएव मरुदेशो नदीरहितः, सरस्वती तु हिमाच्छादितप्रदेशान्न निःसरति किन्तु मरुपर्वतश्रेणेः, अतो न तस्यां प्रभूतं जलं, यदस्ति तदपि बालुकाच्छन्नम्। न विस्मर्तव्यमिदं भौगोलिकं विज्ञानम्। शिल्पविज्ञानमाह—यदि अनेककोटिद्रव्यव्ययेन पर्वतश्रेणिभञ्जनचयनसेतुबन्धनखननपूर्वककुल्यारचनरूपा कष्टसृष्टिः क्रियेत तर्हि बलात्कारेण प्रतिलोममाकृष्येत यमुना मरुदेशाभिमुखं, तद्वत्कष्टसृष्ट्या दृष्टिमाकृष्येत्यर्थः। अक्षरार्थस्तु—तदाऽऽभिमुख्ये स्वविषयाभिमुख्ये मरुदेशाभिमुख्ये (विषयसप्तमी) नैव वलमानाम्=नैव चलन्तीम् (वल=सञ्चलने भ्वा.आ.) (न-वलते वलतेऽभिमुखन्तवेति माघप्रयोगः) स्वविषयस्य स्वदेशस्य यत्स्वारस्यं स्वरसवत्ता (स्वकीयो रसः स्वरसः स्वाभाविको रसः, प्रकृते घनरसः) तस्यानुरोधात् = तदभिलाषादिति भावः। बलवत्प्रतिलोममाकृष्यमाणां कलिन्दनन्दिनीमिव 'श्यामां' दृष्टिम्,—तदाभिमुख्ये-नैव, वलमानां चलन्तीम्। स्वविषयस्य कन्यात्वेन पित्राद्यायत्तत्व—सखीजन-

रोधात्तदाभिमुख्येनैव वलमानां, वलवत्प्रतिलोममाकृष्य कष्टसृष्ट्या दृष्टिं सहचरीणां परिसरमन्वसरम्। दिदृक्षारसादुत्कलिका-वलितग्रीवायाश्च जीवापहारी बलाहक इव चकोरीचन्द्रमसोरावयोरन्तरावर्त्ती पत्रपुष्पनिरन्तरोदरो दुरात्मा कुरण्टककुट एव मार्गमावृणोत् ॥ १३४ ॥

अहं तु गच्छन्ती सखीविच्छेदमारभ्य तत्समागमपर्यन्तं तदीयमुदन्तमपृच्छन्ती स्वीयमपि वृत्तं तासामनिवेदयन्ती दिवसान्तरापेक्षया भूयसो विलम्बस्य वृत्ततया स्वनगराभिगमनत्वरातुरमनस्तया ताभिरप्यपर्यनुयुज्यमानाऽऽद्यन्ततोऽपरित्यक्तपार्श्वामपि कलावतीं मया सहाऽऽगता न वेत्त्यनाकलयन्ती, कुत्र गतास्मि, किं तत्र कृतं, किं वृत्तं, किमागतास्मि, कुत्र गच्छामि, किमधुना विधेयं, का वा पुरस्तात्प्रतिपत्तिरित्यादिकं किमपि मनस्यनालोचयन्ती, न जानामि कथं सखीभ्यस्तादृशीं दशामपालपिषं, किं ताभिर्ज्ञायमानामपि तादृशीं दशामुपेक्षितवत्येवास्मि, उत ता एवान्यमानसतया न तामज्ञासिषुः, कथं वा मन्दारमञ्जरीं व्यसर्जयमित्यादि; केवलं

परिहासपरिहारादिरूपस्य—अनुरोधात् बलवत्–क्रियाविशेषणम्, सबलात्कारम्, कष्टसृष्ट्या पर्वताकारारूढानुरागत्यागकल्पनया, दृष्टिं प्रतिलोममाकृष्य सखीनां समीपमगमम्—इति संक्षेपः। द्रष्टुमिच्छा दिदृक्षा स एव रसस्तस्मात्—हेतोः, उत्कलिकया = उत्कण्ठया वलिता भुग्ना ग्रीवा शिरोधिर्यस्यास्तादृश्याश्च मे जीवं जीवनं जलमात्मानञ्चापहरति नयति ( अतः श्यामः ) नाशयति अतो दुरात्मा, यथा—जलापहारित्वे श्यामो मेघः चकोरीचन्द्रमसोर्व्यवधायकस्तथाऽऽवयोरन्तरावर्त्ती पत्रपुष्पनिरन्तरोदरत्वेन घनः कुरण्टकवृक्षो दृष्टिव्यवधायक आसीदिति गद्यपुच्छार्थः। 'अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः'। 'तत्र शोणे कुरबकस्तत्र पीते कुरण्टकः', उभयत्राऽमरः ('चकोर्यश्चन्द्रिकाऽऽचामजीविता'–इति हृदयालवः) मार्गं दृष्टिमार्गम्-आवृणोदरुणत् ॥

चक्षूरागः कविना, दर्शित एषोऽत्र दार्शनिकः।
विवृतस्तथैव हि मया स्वदनीयः स्वादमर्मज्ञैः ॥ १३४ ॥

**अहन्तु—किमपि मनस्यनालोचयन्ती, केवलं–परिजनेन स्वभवनं प्रवेशिता ऽभूवम्।** प्रविश्य च वासवलभीम्, निःसहान्यङ्गकानि शयनतले विमुच्य स्वगतमेवैवं व्यभावयम्। वनविहारारम्भे सखीनां विच्छेदः, समागमोऽवसाने। उदन्तं = वृत्तान्तम्। अपर्य्यनुयुज्यमाना = अपृच्छ्यमाना। अनाकलयन्ती = अविचारयन्ती। प्रतिपत्तिः कर्तव्यताविचारः। ( एतेन वर्तमाने-अप्रतिपत्तिलक्षणा जडता दशा सूचिता ) उत = आहोस्वित्। तां दशाम्।—इत्यादि

यथास्वमधिकारमशून्यं संपादयता परिजनेन स्वभवनं प्रवेशिताऽभूवम्। प्रविश्य च वनविहारखेदव्यपदेशेन विनिवारितपरिजना वासवलभीम्, अबाष्पकृष्यमाणानीव पाट्यमानानीव पच्यमानानीव कथ्यमानानीव दह्यमानानीव च्छिद्यमानानीव विमुच्य शयनतले निःसहान्यङ्गकानि यादृशी तेन दृष्टास्मि तामेवावस्थां बहुमन्यमानेव स्वयमणुमात्रमपि विशेषमनादधाना किञ्चित्तथैव स्थित्वा मुहूर्तमाहार्येण धैर्येणोहापोहक्षममात्मानं कृत्वा तत्कालोल्लिख्यमानाभिरनल्पाभिः कल्पनाभिः स्वगतमेवैवं व्यभावयम् ॥१३५॥

अहं तावदनेन दुरात्मनाऽसाध्यव्याधिना कुसुमायुधहतकेन महता ग्रहेणेव प्रसह्य गृहीतास्मीति स्वयमेव साक्षात्क्रियते, नात्र प्रमाणान्तरमपेक्ष्यते, नापि स्वरूपं सन्दिह्यते, नाप्यप्रामाण्यमाशङ्क्यते, स्वरूपञ्च तस्य

न जानामीत्यनेनान्वेति। अधिकारं नियोगम्। अशून्यमरिक्तम्। संपादयता = कुर्वता। व्यपदेशेन = व्याजेन। अबाष्पं यथा स्यात्तथा कृष्यमाणानीव = आकृष्यमाणानीव। पाट्यमानानीव=विदीर्यमाणानीव। क्वथे निष्पाके। दह भस्मीकरणे। छिदिर् द्वैधीकरणे। सर्वत्र कर्मणि प्रत्ययः। निःसहानि = स्रस्तानि, अनुकम्पनीयानि अङ्गानि अङ्गकानि, अनुकम्पायां कन्। तेन=मानसकेतुना। आहार्येण=आरोपितेन कृत्रिमेणेत्यर्थः। ऊहापोहक्षमं तर्कवितर्कयोग्यम्। आत्माऽत्र मनस्तस्यैव विकृतत्वेन समाधेयत्वात्। उल्लिख्यमानाभिः स्फुरन्तीभिः। अनल्पाभिर्बहुभिः। कल्पनाभिः=चित्तवृत्तिभिः। स्वगतं मनसि, एवं वक्ष्यमाणप्रकारेण व्यभावयम्=अचिन्तयम् ॥ १३५ ॥

अहन्तावदनेनाऽसाध्यव्याधिना प्रसह्य गृहीतास्मि इति स्वयमेव साक्षात्क्रियते, नाऽत्र प्रमाणान्तरमपेक्ष्यते, नापि स्वरूपं सन्दिह्यते-इत्येवंप्रायाः प्रस्तुतप्रतिकूलाः प्रादुर्भवन्तो विकल्पा—दुर्निवाराः इत्यन्वयः। अहं मदयन्तिका। अनेनाऽनुभूयमानेन। मनोजन्यत्वे सति मनोभेदित्वं दुरात्मत्वम्। औषधैरप्रतीकार्यत्वेनाऽसाध्यत्वम्। दीर्घनिःश्वासादिजनकत्वेन व्याधित्वम्। कुसुमानामुद्दीपकत्वेन तदायुधवत्वं कामस्य। अकार्यकरत्वेन हतकत्वम्। शनि-स्कन्दाऽपस्मार-पूतना-दिवत् सतततीव्रवेदनादायकत्वेन ग्रहसादृश्यम्। प्रसह्य=बलात्कारेण गृहीताऽस्मीति—स्वयमात्मनैव साक्षात्क्रियते = अनुभूयते, नाऽत्र विषये स्वानुभवातिरिक्तप्रमाणमभिलष्यते, स्वानुभवस्येतरप्रमाणापेक्षया प्रबलत्वात्। नाऽपि तस्याऽऽकारः सन्देह-विषयीक्रियतेऽनुभवसिद्धत्वादेव। नाऽपि तस्य ग्रहणेऽप्रामाण्य-

निरूप्यमाणम्, अर्थविशेषविषयकःस्पृहाविशेष एव । स च स्वविषयसिद्धिम-पेक्षमाणस्तत्पर्यन्तमपर्यन्तकथनानिदानं न ददाति कदाचिन्मुहूर्तमपि सुखमव-स्थातुं, तत्सिद्धौ च स्वसमवेतस्पृहाविषयसमवेता स्वविषयकस्पृहाप्यपेक्षणीया, उभयसाध्यस्य हि विधेयस्यान्यतरव्यतिरेके नियतैवानुत्पत्तिः; तद्वृत्तेश्च

शङ्का, ग्रहणस्यानुभूयमानत्वात् । नायकविषयकस्पृहाविशेषः नायिकासमवेत-कामस्य स्वरूपम् । नायिकाविषयकेच्छाभेदो नायकनिष्ठकामस्य स्वरूपम् । स च= स्पृहाविशेषः,—स्वविषयसिद्धिम् = स्वनिष्ठविषयितानिरूपितविषयत्वाऽवच्छिन्नस्य निष्पत्तिम्—अपेक्षमाणः = अहमेका—अयमेकः, आवां द्वौ भवेव—इत्याकारिका या अपेक्षाबुद्धिस्तद्विषयतां कुर्वन्—इति दार्शनिकसरणिः । स्वविषयस्य स्वाऽभि-लषितकार्यस्य सिद्धिं साफल्यम्, अपेक्षमाणः प्रतीक्षमाणः—इत्यापातरमणीया सरणिः । एवं सर्वत्र ध्येयम् । नास्ति पर्यन्तकथनं नास्ति निदानं यस्य तादृशं तत्पर्यन्तम् = सिद्धिपर्यन्तं कालम् । कदाचिद् दिवा रात्रौ वा सुखमवस्थातुं सुखपूर्वकवर्तितुं न ददाति स स्पृहाविशेषः कर्ता । अत्रेयं प्रक्रिया—प्रथमदर्शने अयं रमणीयः, अनेन रमेय—इत्याकारिकेच्छाविशेषः कामः,—इत्युच्यते, स च धारावाहीकतया वर्तमानः, एवं लभेय—इत्याकारिकामिच्छां विषयीकुरुते, सेयमिच्छाविषयिणीच्छापि धारावाहीकतया वर्तमाना न विरमति—स्पृहणीय-लाभपर्य्यन्तम्, सा च बुभुक्षा–पिपासा–निद्रा-प्रभृतीनां सर्वासामिच्छाव्यक्तीनां प्रतिबन्धिका, अतो न सुखं कामिनः कमनीयलब्धिपर्यन्तम्, अतएव कवय—आहुः— "नयनप्रीतिः प्रथमं, चित्तासङ्गस्ततोऽथ सङ्कल्पः । निद्राच्छेदस्तनुता, विषयनिवृत्ति-स्त्रपानाशः ॥ उन्मादो–मूर्च्छा मृतिरित्येताः स्मरदशा दशैवं स्युः"—इति । तस्मा-दुक्तम्—न ददाति मुहूर्तमपि सुखमवस्थातुमिति । अथ च सिद्ध्युपायं संक-ल्पयति मदयन्तिका—तत्सिद्धौ चेति । स्वेच्छाविषयीभूतस्य नायकस्य लब्धौ, नायकेच्छाऽपि प्रतीक्षणीया इत्याह—स्वस्यां नायिकायां समवेता समवायसम्बन्धेन वर्तमाना या स्पृहा लाभेच्छा तस्यां यो विषयः नायकः प्रकृते मानसकेतुः, तस्मिन् सम-वायसम्बन्धेन वर्तमाना या स्वविषयिका नायिका=मदयन्तीविषयिका स्पृहा = इच्छा साप्यपेक्षणीया, अपोह्य = सुवितर्क्य, ईक्षणीया द्रष्टव्या, उभयेच्छाया—अपेक्षितत्वात् । हि=यतः उभयसाध्यस्य=नायक–नायिकानिष्पाद्यस्य विधेयस्य=कार्यस्य सङ्गमस्य, संयोगस्य, सम्भोगस्य वा, अन्यतरस्य नायकस्य नायिकाया वा व्यतिरेचनं व्यतिरेकोऽ भावस्तस्मिन् सति—अनुत्पत्तिरजनिरसिद्धिर्नियता एव नियमेन स्थिता एव । तर्हि नायकनिष्ठा स्वविषयिणी स्पृहा प्रमीयतामिति चेदाह- तदिति । तस्मिन्नायके वृत्तिर्वर्त्तनं समवेतत्वं यस्यास्तस्याः स्पृहायास्तु इच्छायास्तु—( चस्त्वर्थः ) मयि

स्पृहायाः प्रत्यक्षेण मद्वृत्तिना विषयीकरणमनुपपन्नं, नहि परात्मसमवायिनो गुणाः परसमवेतप्रत्यक्षेण गोचरीक्रियन्ते, अनुमानमेव हेतुविरहात्पराहतं, दर्शनमात्रं तावदनैकान्तिकं, वीतरागाणामपि हि रमणीये पुरोवर्तिनि विषये समुदेति दिदृक्षा, सकामत्वेन विशेष्य दर्शनस्य साधनीकरणन्तु साध्यविशेष-दोषग्रस्तम्, एतदनुमानात्पूर्वं सन्दिह्यमानमेव हि सकामत्वं कथङ्कारं विशे-षणनिश्चयसापेक्षे साधने प्रक्षेपमर्हेत्। लोचनोल्लासादीनां च स्फुटमेव विस्म-

---

वृत्तिः स्थितिर्यस्य तादृशेन प्रत्यक्षेण चक्षुरादीन्द्रियसन्निकर्षजन्येन प्रमाणेन विषयी-करणं गोचरीकरणम् = ग्रहणं = ज्ञानमनुपपन्नमुपपत्तिहीनम् = युक्तिरहितम्। उप-पत्तिमाह—नहीति। परस्य मानसकेतुनाम्नः शरीरस्य = अधिष्ठाता य आत्मा जीवात्मा तस्मिन्समवायिनः = समवायसम्बन्धेन वर्तमाना ये गुणाः=ज्ञानेच्छा-कृत्यादयः 'कर्मभूताः' ते मदयन्तिकात्मसमवेतचाक्षुषादिप्रत्यक्षप्रमाणेन कर्त्रा न ज्ञायन्ते, सन्निकर्षाभावात्। परस्मिन् परात्मनि समवेतं यत्प्रत्यक्षं इत्यादिविग्रहः पूर्ववत्। अनुमानेन तर्हि प्रमितिविषयीक्रियेत, स्वस्पृहणीयसमवेता स्पृहा इति चेद् अनुमानमेव पराहतम् = अलब्धप्रसरम्, हेत्वभावात्, कुतस्तेन गोचरीकरणम्। ननु—अयं मद्विषयकस्पृहावान्, मद्विषयकदर्शनवत्वात्, मालतीदर्शनकर्तृकमाधववत्—इत्याकारकानुमाने अस्ति दर्शनं हेतुः, दर्शनमात्रं तावदनैकान्तिकं = व्यभिचरितम् कुत इति चेत्? हि = यतः—विशेषेण, इतो = गतो रागो विषयलिप्सा येषां तपस्विनां मुमुक्षूणां ते वीतरागाः निस्पृहास्तेषामपि रमणीये लोचनाऽऽकर्षके विषये = वस्तुनि पुरोवर्तिनि सति चक्षुरिन्द्रियसन्निकृष्टे सति द्रष्टुमिच्छा दिदृक्षा समुदेति = समुत्पद्यते, अतो दर्शनं, व्यभिचरितो हेतुः। ननु अयं मद्विषकस्पृहा-वान्, सकामदर्शनवत्वात् इति विशिष्टे हेतौ न व्यभिचारः, वीतरागदर्शनस्य सकामत्वाऽभावात्,—इति चेत्—सकामदर्शनवत्त्वं, स्पृहावत्त्वञ्चाऽभिन्नमेव 'विशिष्टं शुद्धान्नातिरिच्यते' इति नियमात्, 'इच्छाकाङ्क्षा स्पृहेहा तृट् वाञ्छा लिप्सा मनोरथः, कामोऽभिलाषस्तर्षश्चेति'—स्पृहा-कामयोः पर्यायत्वेनाऽभिन्नार्थत्वात्। तथा च स्पृहा-वत्त्वे साध्ये सकामदर्शनवत्वस्य, हेतुत्वेनोपन्यासः साध्यविशेषदोषग्रस्तः, साध्य-साधनयोरभेद—इति भावः; वह्निमान्, विशिष्टवह्निमत्वादितिवत्। अथ च अयं मद्विषयकस्पृहावान्—हि = यतः, एतस्मादनुमानाद् = अनुमानत्वेनाभिमतात् बोधा-भासात् पूर्वं पूर्वक्षणे सकामत्वं सन्देहविषयीभूतमेव, अतः केन प्रकारेण विशेषणनिवेशेन निश्चयसापेक्षे साधने = हेतौ दर्शने सकामत्वं विशेषणरूपेण प्रक्षेपं निवेशम् अर्हेत् = लब्धुं योग्यो भवेत्। नेति भावः। अयं मद्विषयकानुरागवान्, लोचनोल्लासवत्वात्—इत्यनुमानप्रयोगे च, अयं मद्रूपविषयकाश्चर्यवान् मयि

यादिसाधारण्यं, बाष्पकम्पपुलकादयोपि न रत्यन्वयव्यतिरेकानुविधायिनः । अथापि मिलितैर्विशेषैः कथञ्चिद्रतिरनुमीयेत तथापि तस्याः कथं मद्विषयकत्वमवधारणीयं; सम्भवत्येव हि तस्या मद्विषयकत्वमिव कलावतीविषयकत्वमपि, तद्विषयकरतिमत्त्वञ्च न तद्रतिविषयत्वनियतम्, एवं तद्विषयकरत्यभाववत्त्वमपि न तन्निष्ठरतिविषयत्वाभावव्याप्यं, येन तन्निष्ठरतेर्मद्विषयकत्वं कलावतीविषयकत्वविरहो वा सिध्येत् । वस्तुगत्या तन्निष्ठरतिविषयवत्कलावतीवृत्तिरत्यभावोऽपि अयोग्यप्रतियोगिकत्वान्न तावदध्यक्षः । नाप्य-

---

चक्षुःसन्निकृष्टायां नयनविस्फारवत्वात्–इत्याद्यनुमानेषु साधारणालोचनविस्फारादयो हेतवः । तथा च साधारणोऽनैकान्तिको हेत्वाऽभासः । अयं मद्विषयकरतिमान्, मद्दर्शने सति बाष्पवत्वात्, कम्पवत्वात, रोमाञ्चवत्वादित्यादयोऽपि हेतवः न केवलं रतेः = स्पृहाया अनुमापकाः किन्तु उत्साहादीनामपि, प्रतिभयादिदर्शनेपि तेषामुद्भवात्, तथा च बाष्पकम्पादिमत्वे रतिमत्वम् इत्यन्वयः—रत्यभावे बाष्पकम्पाद्यभावः–इति व्यतिरेकश्च नाऽनुविधत्तो रतिम् नानुसरतः, न साधयत–इति भावः, वीरभयानकादावपि सत्त्वात् । अथ चेत्–अयं मद्विषयकरतिमान् मद्विषयक–लोचनोल्लासमत्वे सति, बाष्पकम्पपुलकादिमत्त्वादिति विशिष्टेन हेतुना–कथञ्चित्क्लिष्टकल्पनेन रतिरनुरागः स्पृहा अनुमितिविषयीक्रियेताऽपि **तथापि** मानसकेतुनिष्ठरतेरनुमानेपि—तस्याः मानसकेतुनिष्ठरतेः मद्विषयकत्वम् = मदयन्तीविषयकत्वं, कथम् = केन प्रकारेण, अवधारणीयम् = निश्चेतव्यम् । हि = यतः तस्याः = मानसकेतुनिष्ठरतेः मद्विषयकत्वमिव = मदयन्तीविषयकत्वमिव, कलावतीविषयकत्वमपि सम्भवत्येव–सहैव दर्शनविषयत्वात्। तद्विषयकरतिमत्त्वञ्च= मानसकेतुनिष्ठं—कलावतीविषयकानुरागवत्त्वमपि कलावतीनिष्ठाऽनुरागविषयतया समनियतं न, अन्यतररागस्यापि सम्भवात् । यथाऽनुरागस्य व्याप्यव्यापकभावाऽभावः–तथाऽनुरागाऽभावस्यापि व्याप्यव्यापकभावो नेत्याह–**एवमिति** । पूर्वोक्तप्रकारेण कलावतीविषयकाऽनुरागाभाववत्त्वमपि—कलावतीनिष्ठानुरागविषयत्वाभावेन व्याप्यसमनियतन्न, ( अन्यतररागाऽभावस्यापि सम्भवात् )। **येन** समनियतत्वेन हेतुना–मानसकेतुनिष्ठानुरागस्य **मद्विषयकत्वम्** मदयन्तीविषयकत्वं सिद्ध्येत, **वा** अथवा—कलावतीविषयकत्वाऽभावः सिद्ध्येत् । **वस्तुगत्या** = वस्तुतः मानसकेतुनिष्ठाऽनुऽरागविषयो यथा न प्रत्यक्ष –इति पूर्वं प्रतिपादितः, तथैव— कलावतीवृत्तिस्नेहस्य अभावोऽपि न तावदध्यक्षः = प्रत्यक्षः, अभावप्रत्यक्षे प्रतियोगिनो योग्यता अपेक्षिता, रत्यभावस्य प्रतियोगिनी रतिरेव न प्रत्यक्षयोग्या।मनोवृत्तिरूपत्वेनाऽमूर्त्तत्वात् । अतो न प्रत्यक्षः । नाऽप्यनुमेयोऽनुमानगम्यः, कलावती-

नुमेयः, तद्वृत्तिलिङ्गाभावस्यापि तदानीं मयाऽननुभवादित्यविचारितरमणीयमेवैतत्। एवमावयोरन्यतरस्या वीक्षणेन सादृश्यसम्बन्धेन साजात्येन वा स्मृतप्रियतमान्तरस्य तस्यैव तद्विषयकरत्युद्बोधादपि सर्वमिदमन्यथासिद्धमिति यत्किञ्चिदेवैतत्। उपमानं पुनरेतादृशे विषये निरवकाशमेव। तद्धि वाच्यवाचकभावं, कदाचित्कार्यकारणभावं वा परिच्छिनत्ति न त्वन्यदिति। मर्यादाशब्दोऽपीदानीमनवसर एव। अथापि सर्वमिदमपर्यालोच्य तद्वृत्तिरतौ

---

वृत्ति–रत्यभावसाधक–हेत्वभावस्य च मया मदयन्त्या तदानीं मानसकेतुदर्शनावसरे–अननुभवात् = अननुभूतत्वात्—इति हेतोः, एतत् = कलावतीवृत्तविषयकानुमानमविचारिते सति रमणीयम्, विचारिते तु तुच्छम्, हेत्वभावात्। एवं= कलावतीवृत्तानुमानरीत्या—सर्वमिदमन्यथासिद्धमिति यत्किञ्चिदेवैत्। आवयोर्मदयन्तीकलावत्योर्मध्येऽन्यतरस्याः एकस्याः वीक्षणेन दर्शनेन—एकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति नियमात्सादृश्येन सम्बन्धेन वा = अथवा साजात्येन स्त्रीत्वमात्रेण सम्बन्धविशेषेण स्मृतिविषयीभूता अन्या आवयोर्भिन्ना प्रियतमा प्रियतमान्तरम् यस्य मानसकेतोस्तस्यैव तद्विषयकरत्युद्बोधादपि अस्मद्दर्शनस्मृतप्रियतमान्तरविषयकाऽनुरागोद्बोधादपि इदं पूर्वोक्तं सर्वमनुमितिप्रामाण्यावलम्बनम् अन्यथा = प्रियतमान्तरस्मरणजन्यरत्युद्बोधात्सिद्धम् = निष्पन्नम्। अयं भावः–"रत्याद्युद्बोधका लोके विभावा काव्यनाट्ययोः। आलम्बनोद्दीपनाख्यौ तस्य भेदावुभौ स्मृतौ"–इत्युक्तेः प्रथमन्तावत्कार्यकारणभावो विचारणीयः मानसकेतुनिष्ठरतेरुद्बोधिका अहं वा–अन्या वेति, तत्र न निश्चीयते अहमेवेति, कलावत्या अपि मया सहैव दृष्टिगोचरत्वात्, नापि कलावतीति निश्चीयते हेत्वनुपलम्भात्, नापि–आवयोरन्यतरेति निश्चेतुं शक्यते, आवयोर्दर्शनेन स्मृतायाः पूर्वानुभूतायाः प्रियतमायाः—उद्बोधकत्वसंभवात्–तथा च स्मृतप्रियतमाया उद्बोधकत्वेन अस्मन्निष्ठत्वेनाभिमतमुद्बोधकत्वं पञ्चमीमन्यथासिद्धिकोटिं प्रविशतीति कुतोऽनुमानप्रपञ्चः–इति–मदयन्त्याः सङ्कल्पविकल्पाः। उपमानन्तु—एतादृशे=मानसे विषये निरवकाशमेव, रतेरुपमातुमशक्यत्वात्, हि=यतः, तदुपमानं प्रमाणं अरण्ये ग्रामे वा सास्नारहितगोसदृशप्राणिदर्शनेन 'सृमरो, गवयः,' 'शशः,' इत्यादि मृगभेदनामज्ञानवतः अयं गवयः इत्याकारकार्थज्ञानाऽभावतः गोसदृशो गवय—इति श्रुतसादृश्यस्य शिक्षितस्य जनस्य–'अयं गवयः,–गवयो गवयपदवाच्यः–इत्याकारकज्ञानोदयेन वाच्यवाचकभावनामानं शब्दार्थयोः संबन्धं परिच्छिनत्ति = गवयशब्दवाच्यत्वेनेतरं व्यावर्त्तयति। कदाचित्स्थूणादिसादृश्येन काननस्थशालदर्शने तयोः कार्यकारणभावमुपमित्या परिच्छिनत्त्युपमानम्—अन्यत्तु किमपि न परिच्छिनत्ति, सादृश्यज्ञानमूलत्वेन दुर्बलत्वात्। तर्हि शब्दः प्रामाण्येनावलम्ब्यतामिति

स्वविषयकत्वमारोप्य व्यवह्रियते, तथापि किमीदृगन्यायः कन्याजनस्य, किमुपहासानामुपायः, किं जनापवादानामुपादानं, किं कुलस्थितेरननुकूलं, किमालिभ्योऽपि मालिन्यहेतुः, किं प्रमादक्रमादरः, किं भ्रान्तिविजृम्भितं, किं चापलानामनपलापः, किमनार्यजनकार्यं, किं लाघवस्योल्लाघत्वसम्पादनं, किमश्लाघनीयताया द्राघीयस्त्वकरं, किं साध्वीनां साध्वसावहं, किं कुलटाकक्षायां निकटावस्थानं, किं धर्मावहितसंसदो बहिर्भावः, किं गुरुलोकस्यानालोकनं, किं नास्तिकवादानामनुवादः, किमाचारविपर्यासस्य पर्यायः, किमजितेन्द्रियतायाः पताका, किं मनोलम्पटतायाः पटहघोषः, किमकारणमात्मप्रतारणं, किमशिष्टानुमाने दृष्टान्तान्तर्भावः, किं स्वसद्भावसमाख्यायाः प्रत्याख्यानं, किं साहसस्य माहात्म्यं, किं विनयबीजस्यासामञ्जस्यमित्येवम्प्रायाः प्रस्तुतप्रतिकूलाः प्रादुर्भवन्तो विकल्पा दुर्निवाराः ॥१३६॥

---

चेदाह—मर्यादापालक-प्राणित्वचनन्तावत्प्रमाणं न शब्दमात्रम्, अत्र तु मानसकेतोरेव विश्वसनीयं वचनप्रमाणत्वेनाऽपेक्षितम्—तत्तु—इदानीमनवसरमेव, संल्लापाऽभावात् । एवञ्च—मन्निष्ठाऽनुरागविषयः—मद्विषयकाऽनुरागवानिति निश्चेतुं न शक्यते केनापि प्रमाणेन । अथापि—कामान्धतया सकलमिदं प्रमाणप्रपञ्चमविचार्य-मानसकेतुनिष्ठानुरागे-स्वविषयत्वं मदयन्तीविषयकत्वमाहार्यं = असन्तमप्यभिमत्य व्यवहारः क्रियेत, तथापि—किमीदृगन्यायः कन्याजनस्य,—इत्यादयो धार्मिका नैतिका लौकिकाश्च प्रादुर्भवन्तो विकल्पा दुर्निवाराः । स्पष्टा काव्यसरणिः । उपायः साधनम् । उपादानं मुख्यं कारणम् । अननुकूलं प्रतिकूलम् । अनपलापोऽनिह्नवः । ( उल्लाघो निर्गतो गदात् ) अत्र लाक्षणिकः प्रयोगः । द्राघीयस्त्वमतिदीर्घत्वम् । साध्वसं भयम् । कक्षा श्रेणिः । निकटावस्थानं समीपाऽवस्थानम् । धर्मेऽवहिता सावधाना या संसद् = सभा तस्याः सकाशाद् बहिर्भावः बहिर्भवनम् । अनालोकनम्-अप्रतीक्षा । अनुवादः पुनरावृत्तिः । पर्य्यायः परिपाटी । पटहघोषो ढक्कानादः । प्रतारणं वञ्चनम् । स्वैरं चरन्त्योऽशिष्टाः, जबलादिवत्—इत्याद्यनुमाने दृष्टान्तभूतासु स्वैरिणीषु परिगणनं-किमिति भावः । सद्भावसमाख्यायाः सज्जनत्वप्रसिद्धेः प्रत्याख्यानम् = खण्डनम् । साहसस्य = अविचार्य्यकारितायाः—असामञ्जस्यमसङ्गतत्वम् । इत्येवंप्रायाः सङ्ख्यातीताः प्रस्तुतस्य पित्राद्याज्ञया वर्तमानस्य कन्याजनस्य प्रतिलोमा मनसि प्रस्फुरन्तो विकल्पाः निवारयितुमशक्याः ॥१३६॥

अथ रागौत्कट्यादेवैतानप्यविद्यमानसमान्कृत्वा प्रवर्तितव्यं तदा फला-नुपधान एवमेवात्मा विगर्हितो विहितः स्यात्, न खल्वनुरागमात्रेण विषय-प्रापकमदृष्टमनुमेयं, शाल्वराजानुरक्तायां भीष्मेणापहृतायामम्बिकायामन्यत्र च बहुशस्तदभावदर्शनात्। फलानुपधानं च तेन प्रत्यादेशाद्वा प्रतिबन्धकान्त-राद्वा समापतति। तत्राद्ये न केवलं तन्मात्रमपि त्वविदग्धभावोऽपि भूयानेव संभावनीयः। द्वितीयेऽपि दोषान्तराणि विशदानि दुर्निवाराण्येव। अथ फलसन्देहस्य प्रवृत्ति प्रत्यविरोधितया सर्वदोषानभ्युपगम्य मार्गमेनमसम-ञ्जमपि संश्रयेयंस्तदा फलस्य स्वतः प्रवृत्त्यविषयतया तदुपाय एव प्रवर्ति-तव्यम्। स च दूतीसंप्रेषणादन्य इदानीं नोपपद्यत एव, दूत्यार्थं च यदि काचि-

पूर्वोक्तानां सर्वेषां विकल्पानामनालोच्य प्रवर्तने—प्रवृत्तिसाफल्यविषया विकल्पा विविच्यन्ते—अथ रागस्योत्कटतया, एवम्, इमान् दुर्निवारान् विकल्पान् अपि—अविद्यमानतुल्यान् कृत्वा प्रवर्तितव्यं मया तदा फलस्य कार्यस्य (सङ्गस्ये-त्यर्थः) अनुपधाने = अनिष्पत्तौ, एवमेव=कार्यसिद्धिं विनैव आत्मा मदयन्ती-लक्षणः निन्दितो निर्मितो भवेत्। विषयप्रापकम् = अभिलषितलब्धिकरम्, अदृष्टम् = दैवम्, अनुमेयम्—अनुमातुं शक्यम्। अत्र दृष्टान्तः शाल्वेत्यादि। शाल्वराजः शिशुपालसखा (भीष्मः शान्तनवो वीरः क्षत्रियब्रह्मचारी स्वजयशु-ल्कलभ्यां काशिराजदुहिताम् अम्बिकां वीराणां ह्रासदर्शनाद् स्वयं विजित्य विचित्र-वीर्य्येण स्वभ्रात्रा सह विवाहयामास, ततो धृतराष्ट्रो जातः इति महाभारते।) अन्यत्र पुराणेषु बहुशो बहुषु स्थलेषु तदभावस्य=सत्यनुरागे विषयप्रापकत्वाऽभावस्य—दर्शनात्, तदानीन्तनानां प्रत्यक्षत्वात्, आधुनिकानां शब्दप्रमाणगम्यत्वात्। अत्राऽयं प्रयोगः—अनुरागमात्रं न सङ्गसाधकम्, अदृष्टसापेक्षत्वात्, अम्बिकावत्। फलाऽनुपधाने बाधकहेतूनाह—तेन=अस्मन्निष्ठाऽनुरागविषयीभूतेन प्रत्याख्यानात्, अथवा—बाधकान्तरात्सम्भवति। (सति कारणसामग्रीसन्निधाने, कार्याऽभावसा-धको हेतुः प्रतिबन्धक इत्युच्यते, यथा सत्यपि ज्वलनसंयोगे दाहाऽभावसाधकश्च-न्द्रकान्तमणिः, सत्यप्यनुरागे शाल्वाम्बिकासङ्गाऽभावसाधको भीष्मकर्तृकमम्बिका-हरणम्)। तत्र=प्रत्यादेश-प्रतिबन्धकयोर्मध्ये, आद्ये = प्रत्यादेशे सति, तन्मात्रं फलाऽनुपधानमात्रम्, अविदग्धभावः—अचातुर्यम्। द्वितीये=प्रतिबन्धके सति—दोषान्तराणि=दैन्यपरिहासादीनि विशदानि स्फुटानि। अथ सर्वदोषान्—अभ्युपगम्य—एनम्='अनुसरणरूपम्' मार्गं सश्रयेः, तदा तदुपाय एव प्रवर्त्तितव्यम्। स च (उपायः) दूतीसंप्रेषणरूपः, तत्र च नानाविकल्पाः, ततश्चो-

दन्या सहचरी नियुज्येत तदविज्ञातपूर्ववृत्तायास्तस्या इदमकाण्डकूष्माण्ड-प्रकाशनमेव स्यात् । तं जनमनभिजानानाया एव तत्र नियोगे च द्वितीय-मप्यनुपादानोपादानदूषणमेव प्रकाशितं स्यात् । यदि तु तदानीन्तनव्य-तिकराभिज्ञा कलावत्येव प्रेर्यते तदापि यदि दृष्टमदृष्टं वा हितमीहमाना मां निवारयति, स्वयं वा मत्प्रार्थनां नानुमन्यते, तदा स्वलाघवमात्रं प्रकाशितं स्यात् । तदुत्तरं सख्यन्तरनियोगे च तद्दोषतादवस्थ्यं, तदुपदेशमगृह्णाना च प्रथममेव कथं सख्यभङ्गोपालम्भभाजनं भवेयम् ॥१३७॥

---

पालम्भभाजनं भवेयम् इति भावार्थः । इष्टसाधनताज्ञानम्, कृतिसाधनताज्ञा-नञ्च प्रवृत्तिं प्रति कारणम् । वल्लभसङ्गो मदिष्टसाधनम्, स च मत्कृतिसाध्यः—इत्याकारके ज्ञाने सति, वल्लभसङ्गो मत्कृतिसाध्यो न—इत्याकारकमेव ज्ञानं प्रति-बन्धकम्, न तु वल्लभसङ्गो मत्कृतिसाध्यो वा न वा—इत्याकारकस्य सन्देहस्य प्रतिबन्धकत्वम्, अत आह —**फलसन्देहस्येति** । अभ्युपगम्य स्वीकृत्य । अस-मञ्जसम् = असमीचीनम् । स्वर्गकामो यजेत—इत्यादौ वैदिके वाक्ये, तृप्तिकाम ओदनं भुञ्जीत—इत्यादौ लौकिके वाक्ये, श्रद्धालोः श्रोतुः स्वर्गसाधने यागे तृप्तिसाधने ओदनपाकलाभादौ प्रवृत्तिर्दृश्यते, न तु कामनाविषयीभूते स्वर्गे तृप्तौ वा प्रवृत्तिः, अतः सर्वत्र उपाय एव प्रवृत्तिविषयः, उपेयस्तु कामनाविषय—इत्यत आह—**फलस्येति** । फलस्य प्रियसमागमस्य, स्वतः = साक्षात्, प्रवृत्तौ = कृतौ, अवि-षयतयाऽगोचरतया, तस्य फलस्योपाये प्राप्तिसाधने प्रवृत्तिः कर्तव्या 'मया'। स च उपायः, नोपपद्यते न युज्यते । दूत्याः कर्म दूत्यं तस्मै प्रयोजनायेदं दूत्यार्थं= दूतीकर्मकर्तुं च, अन्या = कलावतीतो भिन्ना, न विज्ञातं पूर्ववृत्तं मानसकेतु-दर्शनरूपं यया तस्या—इदं = दूतीकर्मप्रकाशनम्, अकाण्डेऽनवसरे कूष्माण्डस्य भयाश्चर्यादिजनकस्य देवयोनिविशेषस्य प्रकाशनमेव स्यात्—पूर्वाऽपरप्रकरणज्ञाना-ऽभावादाश्चर्यादिजनकमेव स्यात् । **तं जनं** मानसकेतुम्, अनभिजानानाया=अज्ञा-तवत्याः कस्याश्चित्, तत्र = दूत्ये । नियोगे प्रेषणे । अनुपादानस्याऽकारणस्य, उपा-दानं स्वीकारः, तदेव दूषणम् । यदि तु—व्यतिकरः = आकस्मिकदर्शनादिरूपः संपर्कः । स्वस्या मदयन्त्याः मम, लाघवं तुच्छत्वम् । तदुत्तरं = कलावतीसविधे निवे-दनानन्तरम् । तद्दोषस्य लाघवप्रकाशनस्य, तस्या अवस्थाया भावस्तादवस्थ्यम्, पुनरपि लाघवप्रकाशनं तथैव स्थितमित्यर्थः । तदुपदेशं = कलावत्युपदेशम् । अगृ-ह्णाना चास्वीकुर्वती च । उपालम्भस्याऽऽक्षेपस्य भाजनं पात्रं विषयः कथं भवे-यम्—इति दूतीसंप्रेषणविषया विकल्पाः ॥१३७॥

अथ तद्व्यतिरेकेण मम जीवनदौर्लभ्यं संभावयन्ती स्नेहावेशगृहीता प्रार्थनां प्रतिपद्येत तदा किं सन्दिशामि, तदानीमेव मे त्वयि गरीयाननुरागो जागर्तीति—एकतरमात्रनिष्ठत्वादप्रयोजकं. त्वन्निष्ठानुरागदर्शनात्सन्दिशामीति—स्वरूपासिद्धिशङ्काग्रस्तं, त्वद्विरहात्प्राणानपि जिहासामीति—मत्सङ्गमानभिलाषेण न तस्यानिष्टसाधनताज्ञानजननोपायः , त्वया विना प्राणान्धारयितुं न पारयामीति स्वदोषोद्भावनं, स्वयमेवोपगच्छामीति लोपयति स्वकीयं प्रेक्षावत्त्वं, मामुपगृहाणेत्यनपेक्षितविधानं, भवता कुतो नाहमपेक्षितेति निरनुयोज्यानुयोगः, अत्रागम्यतामिति तदनर्थिप्रवृत्तिजननाऽननुरूपं,भजन्त्यहं त्वया न प्रत्याख्येयेति स्वकार्याभिनिवेशमात्रं, मदर्थे पितरं प्रार्थयस्वेत्य-

---

यदि कलावती मां निवारयति, स्वयं वा मत्प्रार्थनां नानुमन्यते—इत्युक्तम्—तत्पक्षं व्यावर्तयति—अथेति। तद्व्यतिरेकेण = दूत्यं विना। प्रतिपद्येत=स्वीकुर्वीत -"कलावती" तदा स्वीकाराऽवसरे-किं सन्दिशामीति—सन्देशविषयका विकल्पाः स्फुरन्तः सूचिताः। तदानीमेव तमालगहने दर्शनाऽवसर एव, मे मदयन्त्याः, त्वयि=मानसकेतोर्विषये, गरीयान् अत्यारूढः, अनुरागः स्नेहः, जागर्ति=जागृतोऽभूत्—( वर्तमानसामीप्ये भूते लट्। 'क्रियान्तराव्यवहितत्वं हि क्रिययोः सामीप्यम्')—इत्याकारकं सन्दिष्टमप्रयोजकमसाधकम्, अन्यतरमात्रे कामिनीमात्रे वृत्तित्वात्, 'कामिनीकामुकोभयनिष्ठो हि रागः सङ्गमसाधकः'। त्वन्निष्ठो मानसकेत्वात्मसमवेतो योऽनुरागः स्नेहस्तस्य दर्शनात्–प्रत्यक्षात् सन्देशं प्रहिणोमीत्याकारकं वाक्यं, स्वरूपस्य=मदयन्तीविषयक-मानसकेतुनिष्ठानुरागस्य केनापि हेतुना असिद्धत्वात्स्वरूपाऽसिद्धिशङ्कया कवलितम्। त्वद्विरहान्मासकेतुविरहात्, मदिति मदयन्ती। 'स्निग्ध एव प्राणजिहासायामनिष्टं मन्यते नेतरः'। 'मदयन्तीप्राणजिहासा ममाऽनिष्टसाधिका' इत्याकारकस्य मानसकेतुनिष्टस्य ज्ञानस्योत्पत्तिसाधनं न ममेदं वचनं, मत्सङ्गमाऽनभिलाषात्। अन्यं विनाऽन्यस्य प्राणाऽधारणं स्वधैर्याऽभावसूचकमित्याह—त्वयेति। 'न रत्नमन्विष्यति मृग्यते हि तत्' इति सूक्तानुसारात्स्वयमेवोपगच्छामीति सन्देशो लोपयति सन्देशदाव्याश्चेतनाम्, 'प्रेक्षोपलब्धिश्चित् संवित्प्रतिपज्ज्ञप्तिचेतनाः'। प्रेक्षणं प्रेक्षा, 'गुरोश्च हलः' इत्यप्रत्ययः। अनपेक्षितस्याऽनलभिलषितस्य विधानं विधिः, अपेक्षितमेव विधीयते नाऽनपेक्षितमिति नियमः। अपेक्षिता = अभिलषिता, निरनुयोज्यस्य = अप्रष्टव्यस्य, अनुयोगः पृच्छा, 'प्रश्नोऽनुयोगः पृच्छा च'। अनिच्छुप्रवृत्तिजननसमर्थेन सन्देशेन भवितव्यं किमुताऽभिलाषुकप्रवृत्तिजननसमर्थेनेति नियमादाह—अत्रागम्यतामित्यादि। अननुरूपमयोग्यम्। उभयार्थप्रतिपादकः संदेशः कार्यानुकूलः, अत आह—स्वकार्य-

नेकसाकाङ्क्षं, तदनपेक्षैव भवन्तं भजामीति तद्दृष्टान्तेन तद्भिन्नभजनस्याप्यनुमापकतया प्रकृतप्रतिकूलप्रायं, मद्वाक्यमन्यथा न संभावनीयमिति शपथमात्रम्, अहन्त्वय्येवानुरक्तेति अगृहीताप्रभावे निश्चयाननुकूलं, स्थिरप्रकृतिरस्मीत्यज्ञानरूपासिद्धिग्रस्तं, सखी यथा वदति तथा विश्वसितव्यमिति स्वयमसन्देशात्तत्रानुरागविरहपर्यवसन्नं, यथोचितं तथाविधीयतामिति प्रस्तुतस्वातन्त्र्यविरुद्धम्, तदैवाहं भवता कुतो न गृहीतेति स्वतोप्यापत्तिः, दशामेतां

---

स्याभिनिवेश आग्रहस्तन्मात्रम्। साकाङ्क्षमसमर्थं भवतीति–आह–**अनेकेत्यादि**। परम्परया शास्त्रकार्यसिद्धेरननुकूलत्वादित्यर्थः। नाऽनुरागो विलम्बमपेक्षते-इत्याह–**तदनपेक्षेति**। **तान्** पित्रादीन्, न अपेक्षते इति **तदनपेक्षा** एव सती भवन्तमनुरागविषयीभूतम्, भजामि = भजन्त्यस्मि इत्याकारकं सन्देशवचनं प्रस्तुतप्रतिकूलप्रायम्, यथेयं मां भजति तथा–अन्यमपि भजन्ती सम्भाव्यते—पित्राद्यनपेक्षत्वेन स्वायत्तत्वात्, नहि कन्यायाः पित्राद्यनपेक्षत्वमुचितम्, 'बाल्ये पितुर्वशे तिष्ठेदिति' स्मृतेः। शपनं **शपथः**, 'नहि कामिनां शपथे प्रामाण्यम्'। त्वय्येवाऽनुरक्ता नान्यस्मिन्- इत्याकारकं वाचिकं निश्चयाऽजनकम्, अज्ञातासभावत्वात्, आप्तवचनस्यैव निश्चयजनकत्वात्। स्थिरा दृढा प्रकृतिः स्वभावो यस्यास्तादृशी मदयन्त्यस्तीति वचनम्–अहं चञ्चलं प्रकृतिरस्मि सन्देशप्रेषकत्वादित्याकारकाऽज्ञानरूपासिद्धिकवलितम्, 'नहि स्थिरप्रकृतिः स्वयं परिणयाय चेष्टते'। वाचिकं हरन्ती वयस्या यथा कथयति तथा भवता विश्वसनीयमिति वाचिकम्–तद्विषयकाऽनुरागाभावे पर्यवस्यति–स्वयमसन्दिष्टत्वात्, नह्यनुरागः परवचनात्प्रत्येतव्यः।

तुज्झणआणे हि अअं, मम उण–मअणो दिवापि रत्तिपि।
णिक्किव दावइ वलिअं तुहहत्थमणोरहाइँ अङ्गाइँ,—

इत्यादौ स्ववचनादेवाऽनुरागप्रतीतेः, अत एव–तथैव प्रतिवचनम्—'तपति तनुगात्रि मदनस्त्वामनिशं मां पुनर्दहत्येवे'त्यनुरूपम्। **यथोचितं** 'स्वदशाविज्ञापनपूर्वकम्' इति = इत्याकारकवचनमिति सर्वत्रार्थः। प्रस्तुतं वर्तमानं यत्स्वान्त्र्यं स्वाधीनता, मदनपरवशत्वात् तेन सह विरोधवत्। 'कुतः कामार्तानामौचित्यविचारः प्रकृतिकृपणानाम्'। **तदैव** प्रथमाऽनुरागे एव अहं कामुकी भवता कमनीयेन कुतः कारणाच्च क्रोडीकृता–इत्येवं प्रतिपत्तिः स्वतोप्यापत्तिप्रतिपादिका। नहि स्वतः स्वापदमुद्भावयेत्। **दशाम्** अवस्थाम्, **एताम्**=चिन्ताशङ्कादिकाम् मन्निष्ठाम्, कुतः कारणात् मूढत्वाद्वा क्लीबत्वाद्वेत्याद्याक्षेपः। अदोषे दोषाभाववति दोषाणामज्ञत्वादीनामारोप आहरणम्–न जानासीति कटाक्षेण।

मदीयां कुतो न जानासीति अदोषे दोषारोपः, त्वद्गुणैः प्रसभमाकृष्टास्मीति स्वदूषणपरिहाराभासः, अन्यथाऽनुपपन्नजीवनां मां परित्रायमाणो महता धर्मेण योक्ष्यस इति स्वयमुपक्रान्तधर्मातिक्रमायाः परप्रतारणमात्रम्, मदुपग्रहेण भवदीया अपि गुणा अनुगृहीता भविष्यन्तीत्यात्मगौरवप्रकाशः, उपस्थितमनिषिद्धं वस्तु न प्रत्याख्येयमिति स्वपरिग्राहणप्रकार इति। कुत्र वा तया प्रयातव्यं, सत्यप्यनुरागे तत्रैवावस्थाननियमो हि मय्येव व्यभिचारी, तत्रान्विष्य तदलाभे प्रश्नपरम्परया यत्र स प्राप्यते तत्रैव प्रयातव्यमित्यभ्युपगमे तु एकाकिन्यास्तस्यास्तावत्पर्यन्तं गमनमप्यशक्यं, चिरकालसाध्यतया चास्यार्थस्य यदि तावत्पर्यन्तमहं प्राणान्धारयितुं न पारयेयं, यदि

---

'अदोषे दोषाऽनारोपणं सौमनस्यहेतुः'। त्वद्गुणैः कमनीयत्वादिभिः प्रसभबलात्—आकृष्टास्मि वशीकृतास्मी—इति वचनम्—अहन्तु धैर्य्यवती, तवैव गुणास्तादृशा यैरहमप्याकृष्टा इति द्योतयति—अतः स्वकीयानां दूषणानां परिहारमाभासयति। **अन्यथा** = भवदनुकम्पां विना अनुपपन्नमयुक्तजीवनं यस्यास्तां मां मदनदमितां मदयन्तीं जीवनदानेन रक्षन् महता पुण्येन युक्तो भविष्यसि इत्याकारकं सन्देशवचनं परवञ्चनामात्रम्, स्वयं धर्मोल्लङ्घनारम्भवत्वात्, 'अतिक्रान्तमर्य्यादो न परमुपदिशेत्'। **मदुपग्रहेण** मम गन्धर्वराजदुहितुरन्वर्थनामधेयाया मदयन्त्याः स्वीकारेण अनुगृहीता = उपकृता, 'मिथः फलविधायको भवति योग्ययोः सङ्गमः' इति न्यायात्, आत्मगौरवप्रकाशः स्वगुणप्रख्यापनम्, "इन्द्रोऽपि लघुतां याति स्वयं प्रख्यापितैर्गुणैः"। उपस्थितं=प्राप्तम्, अनिषिद्धं = धर्मार्थकामशास्त्रैः न निवृत्तिविषयत्वेन बोधितं, वस्तु = धर्म्यम्, अर्थ्यं, काम्यञ्च, न प्रत्याख्येयम्=मनसा वचसा कर्मणा वा स्वीकाराऽभावविषयतां न नेयम् इति वाचिकम्—स्वकर्मकं यत् परिग्रहणं स्वीकरणं प्रयोज्यनिष्ठं तदनुकूलो व्यापारः परिग्राहणम्, तस्य प्रकारो विधा, 'न स्नेहग्राह्यं छलेन ग्राहयेत्' इति हेतोः, तदा किं सन्दिशामीति पूर्वेणान्वयः। इति वाचिक—विषया विकल्पाः। अथोपसंहरति गद्यार्थं गम्यस्थानविषयकविकल्पेन—कुत्र वेति। कस्मिन् स्थाने कलावत्या गन्तव्यं वा इति सन्देहेन सह विकल्पं बोधयति—किं सन्देष्टव्यं कुत्र वा गन्तव्यमिति। ननु—अनुरक्तस्याऽनुरागाधिकारणे स्थितिः मनसोऽन्यविषयत्वेनेन्द्रियसंयोगाऽभावेन, तेषां चेष्टारहितत्वात्—इति तत्रैवाऽवस्थाननियम इति चेन्न—नियमस्य मय्येव व्यभिचरितत्वात्। यथाहं तस्मिन्ननुरक्ता न तत्र स्थिता, तथा सोऽपि न तिष्ठेत्—इति सम्भावनाया जागरूकत्वात्। तत्र तमालगहने, तदलाभे = मानसकेत्वलाभे, इति इत्याकारकपक्षस्वीकारे, एकाकिन्या असहायायाः, तस्या दूत्याः। प्रयासः परिश्रमः। इति

वा स जनो नानुमन्येत तदाऽविनयप्रकाशनमात्रपर्यवसायी सर्वोऽप्ययं प्रयासः स्यादित्यनुपाय एवायम् । तत्किं वरं प्रथममेवोपेक्षिताः प्राणाः, उताङ्गीकृत्य यथोक्तं दोपजातं यथासम्भवं विधातव्यः प्रयत्न इति संशयापन्नायामेव मयि अप्रतिपत्तिमुग्धं हृदयमिव मदीयमुपायविरहान्मिहिरमण्डलमस्तगमनं प्रत्येव परिकरं बबन्ध ॥ १३८ ॥

ततः स्वल्पसमयमात्रावस्थायिनी रागबहुला मदीया जीवनसंभावनेवाऽऽविरभवत्सन्ध्या, किञ्चिन्मात्रसंचारिणो मदीयाः प्राणा इवार्यम्णः किरणा मन्दतामगाहन्त, विरलायमानप्रकाशो मदीयकल्पनाभिनिवेश इव विरराम दिवसः, तत्तदनुपपत्तिप्रतिसन्धानेन प्रियतमलाभसंभावनेवोद्गच्छता तमसा तिरोधीयत माहेन्द्री हरित्, तन्मात्राभिनिवेशितया मदीयान्यर्थान्तरगोचराणि ज्ञानानीवामुकुलायिषत कमलानि, विमुक्तवल्लभा मदवयवा इव चक्रवाकयुवानो विभेदमासादयामासुः, इतस्ततः कृतसञ्चारा मामकमनोरथा इव पत्ररथा निलयाऽभिमुखा बभूवुः, तमोमात्रसाध्यप्रकाशा मत्साहसवृत्तय इव तारकाश्चकाशिरे, मामकीनमर्यादातिक्रमस्पृहावगमोत्पद्यमानविगानधिय इव समावृण्वन्ककुभो मुखानि, मया स्थैर्याय दीयमाना इव रसमयाः परितः प्रेक्षाम्बभूविरे जलाञ्जलयः, जनान्तराऽनधिगम्यं द्वीपान्तरमिव

---

हेतोः, अयं दूतीसंप्रेषणोपायः कार्याऽसाधकतया—उपायाऽभाव एव, अतः प्राणधारणे एव संशय—इत्याह—तत्किं वरमिति । 'देवाद् वृते वरः श्रेष्ठे त्रिषु क्लीबे मनाक् प्रिये' । प्रथममेव प्राणा उपेक्षितव्याः, उत विधातव्यः प्रयत्न—इति विप्रतिपत्तिः संशयहेतुः । अप्रतिपत्त्या अन्यतरपक्षनिश्चयाऽभावेन—मुग्धं मोहविशिष्टं मम मदयन्त्याः स्वान्तमिव सूर्यबिम्बमुपायस्याऽवलम्बनस्य विरहात्—अभावात् अस्तप्रयाणार्थमेव सन्नद्धं बभूव ॥ १३८ ॥

ततः—सन्ध्या आविरभवत्, अर्यम्णः किरणाः मन्दताम्—अगाहन्त, दिवसः विरराम, माहेन्द्री दिक्—तमसा तिरोधीयत, कमलानि—अमुकुलायिषत, चक्रवाकयुवानः—विभेदमासादयामासुः, पत्ररथा निलयाऽभिमुखा बभूवुः, तारकाश्चकाशिरे, ककुभः = दिशः—मुखानि समावृण्वन्, परितः प्रेक्षाम्बभूविरे जलाञ्जलयः, ममैव हृदयं प्राविशत्—निदाघदाहः, वारि जाड्यं—समवाप—इति सन्ध्यासमयवर्णनीयमुपमानजातं प्राकरणिकं विरहिणीवृत्तमुपमेयमुन्नेयम् । मामकीना = मदीया या—मर्यादाऽतिक्रमस्य स्पृहा तृट् तस्या अवगमेन बोधेन—उत्पद्यमाना विगानधीः निन्दित-विषयणी बुद्धिर्यासान्ता इव, ककुभः काष्ठाः । जलाञ्जलयः सूर्य्यार्घदानाय ।

ममैव हृदयं प्राविशन्निदाघदाहः, सरसीभूतं च मत्सर्वाङ्गमिव वारि समवाप जाड्यम् ॥ १३९ ॥

अथाहमुत्कलिकाभिरुत्क्षिप्यमाणेव कथञ्चिदुत्थाय मानस-साक्षात्कार-सामग्र्याः सर्वत्र साम्येऽपि चाक्षुषस्वसंविद्विषयसन्निकर्षादिविरहादसंभाव्यमानत्वेऽपि तत्र देशे तदानीं तस्य सद्भावाऽनवधारणेऽपि केवलं तस्यां दिशि वल्लभो वीक्षित इत्येतावन्मात्रनिबन्धनेनानुरागेण तामेव दिशमुद्दिश्य शून्यां दृशं न्यादिशम्। क्रमेण च रोदसीसरसीमवगाहमानस्य तिमिरमहावराहस्य दन्तिदन्तमुशलानुकारकुशला द्राघीयसी दंष्ट्रेव प्रकाशसंभिन्ना समदृश्यत माहेन्द्री हरित्। विहितमहासाहसोत्साहां मामुपहसन्त्या हितं स्पृहयन्त्याः सहचर्या इव पाकशासनदिशोऽवदातं वदनमुदैक्षि ॥ १४० ॥

---

वारि = जलम्। जाड्यं शैत्यम्, जडतामन्यत्र। शेषं स्पष्टम् ॥ १३९ ॥

अथाऽहं—तामेव दिशमुद्दिश्य शून्यां दृशं न्यादिशं, क्रमेण च—माहेन्द्री हरित् प्रकाशसंभिन्ना समदृश्यत, पाकशासनदिशो वदनम्—अवदातमुदैक्षि। **उत्कलिकाभिः** = उत्कण्ठाभिः, **उत्क्षिप्यमाणेव** = ऊर्ध्वं प्रेर्यमाणेव। उत्थाय पर्यङ्कात्, मानसो यः साक्षात्कारः प्रत्यक्षात्मको मनोरथवाहः-चिन्तनमित्यर्थः, तस्य सामग्री दृष्टश्रुताऽनुध्यानं तस्याः अनुभूताऽननुभूतस्थले तुल्येऽपि, चाक्षुषी चक्षुरिन्द्रियजन्या या स्वसमवेता संवित्तिः संवित् तस्यां यो विषयो गोचरः, तेन सह सन्निकर्षस्य=संयोगादेः सबन्धस्य, तन्निष्ठस्य लिङ्गज्ञानस्य चाऽभावात् चाक्षुषप्रत्यक्षविषयत्वेन सम्भावयितुमयोग्येऽपि, तत्र देशे तमालगहने तस्य मानसकेतोः सद्भावस्य=विद्यमानत्वस्य, अनवधारणेऽपि=अनिश्चयेऽपि, वल्लभः = मानसकेतुर्दृष्ट एतावन्मात्रमूलकेन स्नेहेन, **न्यादिशम्** = नितरामादिशम्। **क्रमेण च** रोदसी एव सरसी-तामवगाहमानस्य, तिमिरमेव महावराहः सूकराऽवतारस्तस्य, दन्तिदन्तानां यानि मुशलानि तेषामनुकरणे कुशला—अतिदीर्घा—दंष्ट्रा इव प्रकाशेन मिश्रिता-महेन्द्रदेवताका दिगदृश्यत। विहितः कृतः, साहसे= धाष्टर्ये=अविचारितकारितायां वा। 'साहसन्तु दमे दुष्करकर्मणि'। 'अविमृश्यकृतौ धाष्टर्ये'-इति हैमः। उत्साहः= उद्योगो यया तां माम्—उपहासेन निवारयन्त्याः, हितंमभिलषन्त्याः—सख्या इव आयुर्वेदोपकारकस्य पाकक्रियाबोधकस्य शास्त्रस्य प्रथमशिक्षकस्य वृद्धश्रवसो दिशो मुखमलक्षि'मया'। कर्मणि लुङ्। चन्द्रोदयारम्भः, 'उद्दीपनविभावास्ते रसमुद्दीपयन्ति ये' ॥१४०॥

अथाहमचिन्तयं प्रवृत्तैवेयं कुमुदानामिव मदनोन्मादानां विकासयित्री, कमलानामिव सर्वव्यवहाराणां निरोधहेतुः-प्रलयवेलेव भगवती विभावरी । अस्यां च पूर्वसिद्धानुरागाणां दूतीद्वारेण दत्तसङ्केतानामपि मिलनसन्देहो हृदयमवस्कन्दति, मम पुनर्मन्दभाग्यायाः सर्वमप्यसिद्धमिति चिन्तयन्त्यामेव मयि सर्वविकल्पानपास्यन्ती केतकीकिसलयकरा चन्द्रमूर्तिरिव कलावती समलक्ष्यत । सा तु विदग्धतया तैस्तैरन्यथानुपपद्यमानैर्लिङ्गैः सन्निहित-संभाव्यमानजीवनावसानामवगम्य तां मदीयामवस्थां तत्र परिहासादिव्या-पारान्तरव्यवधानं प्रधानविरोधीति मन्यमाना, तद्विरहे दाहहेतुं देहमपहाय रूपान्तरेण परिणताऽन्यतमा चन्द्रकलेव कलेवरं सुधामधुरेणाभिधानेन समाह्लादयन्ती, 'भर्तृदारिके ! एष भवत्या वल्लभस्य लेख' इत्यभिदधानैव सर्व-सन्देहविदारकं करपत्रमिव करवर्तिकेतकीपत्त्रमादरप्रसारिते मम पाणौ समर्पयामास । अहन्तु मत्प्राणापहरणप्रणयिभिर्जालान्तरप्रविष्टैः पाटच्चरैरिव चान्द्रमसैर्मरीचिभिः समानाभिहारेण विलुण्ठ्यमानामिव जीवितहेतुं तां पत्रिकां बद्धावधानेन करेण समवधाय वाचयन्ती विगीतभागधेया गीति-मिमां तत्र लिखितामपश्यम्-

"त्वं विश्वसिहि न वेदं किमिहाभिहितेन भूयसा भवति ।
प्राप्तावप्राप्तौ वा त्वन्मार्गस्यानुसारिणः प्राणाः" ।। इति ।।१४१।।

तदानीमेव च प्रसभं मां प्रियं प्रति प्रस्थापयितुकामेन भगवता

---

अथाऽहमचिन्तयम्—प्रवृत्ता-एवेयं भगवती विभावरी,-अस्यां च—दत्तसं-केतानामपि मिलनसन्देहो हृदयमवस्कन्दति ( किं पुनर्मम )-इति चिन्तयन्त्यामेव मयि—कलावती समलक्ष्यत, सा तु—भर्तृदारिके ! एष भवत्या वल्लभस्य लेख-इत्यभिदधानैव करवर्तिकेतकीपत्रम्—आदरप्रसारिते करे समर्पयामास, अहं तु गीतिमिमां तत्र लिखितामपश्यम् इति संक्षेपः । मदनोन्मादानां मदनविकारा-णाम्, सर्वव्यवहाराणां सर्वचेष्टानाम्,'रात्रिः स्वप्नाय भूतानां, चेष्टायै कर्मणामहः'-इति स्मृतेः । प्रलयवेलाया रात्र्याश्च सर्वव्यवहारनिरोधकत्वं साधर्म्यम् । अवस्क-न्दति=आक्रम्य शोषयति । अपास्यन्ती=निराकुर्वती । अभिदधाना कथयन्ती । करपत्रं=क्रकचः । स्पष्टमन्यत् । गीतिरपि स्पष्टा, प्रसादगुणवती । विश्वसिहि-श्वस प्राणने, लोट् , हिः, रुदादिभ्यः सार्वधातुके इतीट् ॥१४१॥

तदानीमेव—कामेन—मृणालमयवेत्रयष्टय-इव, मदीयावयवेषु विधुदी-

कामेन मृणालमयवेत्रयष्ट्य इव वातायनविवरान्तर्गता विधुदीधितयो-ऽदीयन्त मदीयावयवेषु। अनन्तरञ्च विभाव्यमानया तया पत्रिकयेव चन्द्रि-कया मदीयं हृदयमिव मौक्तिकच्छेदविच्छुरितमिव क्षीरोदन्वदूर्मिसंवर्मि-तमिव कुमुदसमुदयमेदुरमिव मृणालदण्डमण्डितमिव हिमवालुकाधूलिधव-लितमिव व्यवधानविधुरसमाराधितसुधाधारमिव त्रिभुवनं बभूव। ततो वल्लभाभिसारे कृतपरिकराप्यहमात्मीयां द्वितीयां हृद्वृत्तिमिव विकल्पैराकु-लीक्रियमाणा तामप्राक्षम्, 'प्रिय सखि ! हृदयादबहिर्भूतायास्तव सकाशा-त्किमिव रहस्यं रक्षणीयं, तवायमावयोरप्रस्तावोपनम्रः प्रत्यक्ष एव पुष्पचा-पपरिणामः। तत्किमेवंविधे विषये तत्सन्देशवदुपेक्षणीया अमी दुस्त्यजाः प्राणाः, उत विधाय धैर्यधिक्कारम्, अननुरुद्ध्य साध्वीधर्मम्, अवधीर्य साधुवा-दाधिकारं, विसृज्य जलाञ्जलिं लज्जायाः, साहसहव्यवाहे शलभीकृत्य शीलं, केवलं प्रसूनबाणमेव प्रमाणयन्त्या तदनुगुणमाचरणीयं, रागान्धा आपात-मात्रप्रतिभासा मे हृदयवृत्तिः, त्वं त्वविकलविवेकाद्दीर्घदर्शिनी हितैषिणी च केन वाऽन्येनाहमुपदेश्या, कस्य वा वचसि मया विश्वसितव्यं तन्निरूप्य तारतम्यमादितः प्रभृति सर्वमभिधेहि। साऽहं साहसमीहमानाऽपि यथा रहस्येनोपहतेन नोपहस्ये लोकैरिति'। सा तु पूर्वापरप्रतिसन्धानमाहात्म्या-त्तदभिसारमेवोत्तरपक्षयन्ती समाचचक्षे ॥१४२॥

---

धितयोऽदीयन्त। अनन्तरञ्च—चन्द्रिकया व्यवधान-विधुर-समाराधित-सुधा-ऽऽधारमिव त्रिभुवनं बभूव। ततोऽहं ताम्=कलावतीम् अप्राक्षम्, प्रियसखि ! तत्किमेवंविधे विषये···आचरणीयम्—तन्निरूप्य तारतम्यमादितःप्रभृति सर्व-मभिधेहि—यथाऽहं नोपहस्ये लोकैरिति। सा तु—पूर्वाऽपरस्य ( वृत्तस्य ) प्रतिस-न्धानस्य **माहात्म्यात्**कारणात् तस्य वल्लभस्याऽभिसरणमेवोत्तरपक्षं कुर्वती **समा-चचक्षे** इति संक्षिप्तान्वयः। विच्छुरितं मिश्रितम्। संवर्मितम्=आच्छादितम्। हिमवालुका कर्पूरम्, व्यवधानेन विधुरं रहितं यथा स्यात्तथा समाराधितो यः सुधायाः—आधारस्तमिव, त्रिभुवनं बभूव। आवयोः सख्योरप्रस्तावेन प्रसङ्गं विनैव उपनम्रः=उपस्थितः, अयमनुभूयमानः पुष्पचापस्य परिणामः, तव प्रत्यक्ष एव—इत्यन्वयः। उत=पक्षान्तरे—अथवा इत्यर्थः। साहसरूपे हव्यवाहे वह्नौ। स्वस्य विचाराऽयोग्यतामाह—**रागान्धा** इति। आपातमात्रं प्रतिभासो बोधो यस्यास्ता-दृशी, चित्तवृत्तिः। तारतम्यं=न्यूनाऽधिकभावः पूर्वापरानुसंधानञ्च। अभिसरण-मभिसारः, भावे घञ्। चक्षिङ् व्यक्तायां वाचि, कर्तरि लिट्॥१४२॥

"भर्तृदारिके! तदा खलु सखीजनानुरोधात्तत्रश्चलितायां भवत्यां भवत्यास्तस्मिन् रागाभिनिवेशस्य महतो दर्शनेनाऽव्यवहितमेव महदत्याहितमूहमाना सखीसमूहं भवदनुसारं चानादृत्यानन्तरकृत्यमेव मनसि कृत्य तदन्तःकरणरहस्यं बुभुत्समाना 'अनवहिते! सहचरीरनुसर्तुं सत्त्वरतया नाकलयसि सरभसपरिवर्त्तनेन करतले समासज्य भज्यमानामपि नित्यमपर्णापरितोपणोपकरणजपोपयोगिनीमिमां क्षीरोदात्सुधया सहोत्थायिनीं मुक्ताफलाक्षमाला' मिति कल्पितकोपकुञ्चितभ्रूलतं यथा भवती नाकर्णयति स एव तु शृणोति तथा भवतीमुपालभमाना तदानीं तदवलोकनव्यग्रायास्तव भूमिपतितानि कानिचिन्मुक्ताफलान्यवचेतुकामा पश्यन्ती तदीयसाकाङ्क्षतासदसद्भावनिर्णयमुद्दिश्य किञ्चिदिव व्यलम्बिषि। तत्रान्तरे स कन्दरमालिना दौहित्रमानिनीषता प्रहितो दूतो दूरादेव सकुतूहलाश्चर्यमनुपेक्षापूर्वकं देवीं मन्दारमञ्जरीमेव सविशेषं पश्यन् मानसकेतोरनुमतिमुपादाय यथाभिमतां दिशमुपगृह्य गतवान्॥१४३॥

स तु साकाङ्क्ष इव लक्ष्यमाणः किमियं पृच्छ्यमाणा सती वक्ष्यति मदभिमतं न वेति सन्दिहानः स्वयमेव मत्पार्श्वमुपेत्य ममाऽवसरं प्रतीक्ष्यमाण इव तस्थौ। मया तु सञ्जाततदनुरागनिश्चयया समागते तस्मिन् सर-

---

**भर्तृदारिके!** तदा भवत्यास्तस्मिन् रागाऽभिनिवेशस्य दर्शनेन तदन्तःकरणं बुभुत्समाना—अनवहिते! नाऽऽकलयसि करतले समासज्य भज्यमानामपि मुक्ताफलाक्षमालामिति भवतीमुपालभमाना—कानिचिन्मुक्ताफलान्यवचेतुकामा तदीयसाकाङ्क्षतासद्भावनिर्णयं पश्यन्ती निर्णयमुद्दिश्य किञ्चिदिव व्यलम्बिषि। अत्रान्तरे स दूतो यथाऽभिमतां दिशमुपगृह्य **गतवान्**। अव्यवहितम्=अविलम्बितमेव ( कालिकमत्र व्यवधानं न दैशिकम् ) अत्याहितम्=अनर्थागमम्। ऊहमाना तर्कयन्ती। बुभुत्समाना=जिज्ञासमाना। **अनवहिते!** इत्यारभ्य... **मुक्ताफलाक्षमालामित्यन्तं** कलावत्या उपालम्भवचनम्। **कल्पित**...इत्यारभ्य उपालम्भवचनभाषणप्रकारः। **भ्रूलतमित्यन्तं** क्रियाविशेषणम्। स एव शृणोतीत्यनुरागपरीक्षार्थम्। व्यलम्बिषि=विलम्बमकार्षम्। लबि अवस्रंसने लुङ् इट्। एतस्मिन्नवसरे कन्दरमालिना दानवेन्द्रेण दौहित्रं तपोनिधिम् आनेतुमिच्छता प्रेषितः स पूर्ववर्णितः 'सुबाहुः', देवीं दिव्यगुणसम्पन्नां,न तु कृताभिषेकामद्याप्यविवाहितत्वात्, उपगृह्य=अवलम्ब्य गतवान् अगमत्॥१४३॥

**स**–मानसकेतुस्तु–मत्पार्श्वमुपेत्य तस्थौ, **मया तु**—समागते तस्मिन् सवि-

भसं परिवृत्त्योत्थाय सविनयं स्वकीयामाकाङ्क्षां निगूहन्त्या, 'गुह्यकेन्द्र मानसकेतो ! महाद्भुतपुराणाख्यानव्याख्यानाऽनुगृहीतोऽयं जनो यदि कस्यचिन्निदेशस्याऽपि दानेन पुनरनुजिघृक्षितस्तर्हि न सम्भावनीयमेव यथासम्भवमितस्तदनादरनिबन्धनं वैमनस्यम्। आवाभ्यां हि वनशोभादर्शनप्रसङ्गेन सखीसार्थाभ्यां पृथग्भूताभ्यां ताभ्यः प्रथममेवेदं देशमासेदुषीभ्यां मदयन्ती—नामसंवादेनेमां भर्तृदारिकां चिन्वानां सहचरीणां भ्रान्त्या भवद्भ्यामध्यास्यमानाल्लतानिकुञ्जाद्बहिरुपेत्य शब्दवृत्तिपुरुषीयत्वानुमापकजातिविशेषेण पूर्वसंपन्ने स्वज्ञानेऽगृहीतभ्रमभावाभ्यां विषयचमत्कारापहृतमानसाभ्यां निभृतमेव स्थित्वा तत्कथापीयूषमाद्यन्ततः समास्वादितमि'त्यभिहिते स्वप्रवृत्तिसंभाव्यमानकण्टकाङ्कुरदन्तुरितदेहो जगाद ॥१४४॥

"कल्याणि ! तदिदं काकतालीयं नाम यद्भवत्सख्या नामसंवादाद्युवयोरिहाभ्यागमनं तदैव तत्कथाप्रस्तावश्चेति तद्यदि स्वीयामनुरुध्यसे प्रमादाद्वा

---

नयं गुह्यकेन्द्र मानसकेतो !—महाद्भुतपुराणाख्यानेनाऽनुगृहीतोऽयं जनः, यदि—कस्यचिन्निदेशस्याऽपि दानेन पुनरनुजिघृक्षितस्तर्हि यथासम्भवमितस्तदादरमूलकं सौमनस्यमेव सम्भावनीयम्। आवाभ्यां हि निकुञ्जाद्बहिरुपेत्य निभृतमेव स्थित्वा तत्कथापीयूषमाद्यन्ततः समास्वादितम्— इत्यभिहिते—स्व-प्रवृत्ति-सम्भाव्यमान-कण्टकाङ्कुरदन्तुरितदेहो जगाद। सन्दिहानः संशयं कुर्वन्। **उत्थायेति** मुक्ताफलावचयनायाधोमुखत्वात्। निगूहयन्त्याः गोपायन्त्याः। **पुराणाऽऽख्यानं** पूर्ववर्णितं कन्याचतुष्काख्यानम्। **तदनादरेति**—तस्य निदेशस्याऽवहेलनमूलकं वैमनस्यं विमनस्कता, नैव सम्भावनीयम् = सम्भावनाविषयमपि न कार्यम्, किमुताऽनुभवविषयत्वमिति। आवाभ्यां मदयन्तीकलावतीभ्याम्। सार्थाभ्याम्=मन्दारमञ्जरी सार्थः, मदयन्ती सार्थश्चेति सार्थद्वयम्। पुष्पावचये—इतस्ततो विकीर्णम्। नामसंवादेन 'समुपहिताञ्जनवत्सले'त्यत्र कन्याचतुष्कान्तःपातिमदयन्तीनाम्ना समानानुपूर्वीकतया श्रवणेन। शब्दवृत्तिः शब्दनिष्ठः पुरुषीयत्वाऽनुमापकः पुरुषसम्बन्धित्वानुमानहेतुः जातिविशेषः गम्भीरस्वरादिव्यङ्ग्यः समवेतसमवायसम्बन्धेन श्रावणप्रत्यक्षविषयस्तेन। निभृतं=तूष्णीम् = गुप्तम्। स्वस्य प्रवृत्त्या वार्तया संभाव्यमाना ये कण्टका रोमाञ्चाः तेषामङ्कुरैः दन्तुरितो देहो यस्य तादृशः सन्, जगाद ॥१४४॥

**कल्याणि**—कल्याणत्वविशिष्टा स्त्री कल्याणी ( पिप्पल्यादिः ) तत्सम्बुद्धौ। काकतालीयम् = आकस्मिकम्। युवयोर्मदयन्तीकलावत्योः। तत्कथाप्रस्तावः कन्याचतुष्ककथाप्रस्तावः। तद्—यदि स्वीयां प्रतिज्ञामनुरुध्यसे—तद्विधात्रैवेत्यादिना

परमार्थतो वा विहितां प्रतिज्ञां, यदि वा साप्तपदीनं सतां सख्यमिति प्रसिद्धिं पारम्पर्यागतां प्रमाणयसि, निरूपयसि वा मयाऽभिधीयमानमनुरूपं, पश्यसि वा तदात्वायत्योरवदातं, गणयसि वा जगतामनवगीतं, मार्गसि वा धर्ममार्गमुपयातुम्, अभिसन्धानविषयीकरोषि वा निबन्धनबान्धवताप्रसिद्ध्यनुबन्धं, तद्विधात्रैव स्वयङ्कृतप्रस्तावेऽस्मिन्कार्येऽनुभूयतां सहकारिभावः । तद्यथा विदितमेव भुवनेषु तिर्यगिव गन्धवहस्य, ऊर्ध्वमिव पावकस्य, प्रवणमिव वारिणो, विषयग्रामं प्रत्येवाभिमुख्यमिन्द्रियाणाम्, अप्रतिषेध्यश्च पवमानस्येव पारिप्लवत्वं मनसः, निसर्गमधुराणां च पदार्थानामध्यक्षितमात्राणां स्वविषयकस्पृहोपाधानेऽनुपहतैव शक्तिः, जनयति च तारुण्यावतारो वारुण्या हरित इव प्रदोषो हृदयस्य रागोद्गमम् । परमेश्वरेष्वप्यप्रतिहतप्रसरश्चायं दुर्वारो मनोभवहतकः, प्रसिद्धान्येव चास्य तानि तान्युच्छृङ्खलानि विलसितानि । तथाहि द्रुहिणस्य दुहितुरप्यपरिहारः, मधुसूदनस्य जलन्धरवधूव्रतविध्वंसनं,

---

इत्यन्वयः । सप्तभिः पदैर्विभक्त्यन्तैः शब्दैः, पादन्यासैर्वा अवाप्यते इति 'साप्तपदीनं सख्यम्' इति निपातनात्सिद्धम्, सम्बन्धमाभाषणपूर्वमाहुरिति स्पष्टीकृतम् । निरूपयसि = साधयसि । मया मानसकेतुना । तदात्वं वर्तमानः कालः, आयतिरागामिकालस्तयोः । अनवगीतमनिन्दितम् । मार्गसि = मृगयसे, मार्ग अन्वेषणे, अनित्यण्यन्ताश्चुरादयः । व्रज मार्गसंस्कारगत्योः, मृग अन्वेषणे—इत्यपि । अभिसंधानमनुसंधानम् । निबन्धनेन = उपकारेण या बान्धवता तस्याः प्रसिद्धेरनुबन्धं विषयम् । विषयप्रयोजनसम्बन्धाधिकारिणोऽनुबन्धा—इत्युच्यन्ते, बन्ध बन्धने—इत्यस्मात्करणाधिकरणयोर्घञि निबन्धाऽनुबन्धशब्दौ साधनीयौ । सहकारिभावः सहायता । वस्तुस्वभावं दर्शयति-तद्यथेति । गन्धवहो वायुः । पावको वह्निः । प्रवणं नीचैर्गमनं वारिणो जलस्य । तथा—इन्द्रियाणां चक्षुरादीनां विषयग्रामः रूपादिः । पारिप्लवत्वं चञ्चलत्वम् । अध्यक्षितमात्राणां दृष्टमात्राणाम् । स्वमध्यक्षितं रमणीयं वस्तु, तन्निष्ठविषयतानिरूपितविषयिताऽवच्छिन्ना या स्पृहा लिप्सा तस्या उपधाने जनने शक्तिः सामर्थ्यमप्रतिहतैवाऽकुण्ठितैव । यथा—प्रदोषो रजनीप्रारम्भः—वारुण्या वरुणदेवताकायाः हरितः ककुभः रागोद्गमं = रक्तत्व-प्रादुर्भावं जनयति तथा—प्रकृष्टदोषवान् तारुण्यावतारः यौवनोदयः चेतसोऽनुरागोद्गमं करोतीति भावः । न केवलमस्मदादिष्वेव-अपि तु-परमेश्वरेष्वपि-अप्रतिहतशक्तिः कामदेवः । हत एव हतकः 'सरवा' 'मुर्दा' इत्यादिनिन्दाप्रतिपादकभाषाशब्दसमानार्थतया प्रयुज्यते देवभाषिते । उच्छृङ्खलानि=उद्दण्डानि । निदर्शयति तथाहीति । द्रुहिणः स्वयम्भूः । दुहिता चतुर्णां वेदानां दोहनकर्त्री वाग्देवी प्रथमं

शशिशेखरस्य महर्षियोषिद्दूषणं, हरिहयस्याहल्याविहारः, वरुणस्य मित्र-भार्यापहरणं, पवमानस्य पृथापरिग्रहः, वशिष्ठस्याक्षमालामपि परिहर्तुमक्ष-मालाभः, विश्वामित्रस्य मेनकौष्ठरसाधिगमनेन कौतुहलं, बादरायणस्य दासी-परायणत्वं, यवक्रीतस्य परावसुप्रियाप्रयाणं, कण्डुनाम्नः प्रम्लोचया मलिम्लु-चवदन्तःकरणापहरणं, शातकर्णेः पञ्चसु स्वर्गणिकासु गरीयानभिषङ्गः, विभाण्डकस्य मृग्यामृष्यशृङ्गोत्पादनम्, ऋष्यशृङ्गस्य लोमपादप्रहिताभि-

---

चतुराननेन स्वमुखेभ्यूत्पादिता तत्रैव निबद्धा, तद् दृष्ट्वा प्रथमजानां महर्षीणामाश्चर्य-मासीत्—अतएव–'वाचं दुहितरं तन्वीं हरन्तीं प्रसभं मनः। अकामां चकमे क्षत्तः सकाम, इति नः श्रुतम्'। भा०स्क०३ इत्यत्र मैत्रेयो नः श्रुतमित्याह। तन्वीं परारूपां पश्यन्तीरूपाञ्च। प्रसभं मनोहरन्तीमिति—मध्यमावैखरीरूपाम्। अकामामिति–नहि वाक्कमपि कामयते, कामयते तामेव सर्वे–इति। एवं प्रकृतार्थ आपाततः, परमार्थस्तलावगाहेन सर्वत्र बोध्यः। जलन्धरोऽसुरः, जालन्धरनगरीनायकः, तस्य वधूः वृन्दा परम-पतिव्रता, देवासुरसंग्रामे जलन्धरस्याऽजेयत्वहेतुमन्वेषयता दैत्या-रिणा तस्या व्रतफलं पूरयता तद्भावानुरूपमेव दर्शनं दत्तम्, प्राप्तं तया पातिव्रत्यपुण्य-फलं, परपुण्योपजीवी हतो जलन्धरः सुरैः, परावर्त्तितं स्वाराज्यं, गताः स्वराष्ट्रे परासु रमणलोलुपा असुराः, जाता वृन्दा तुलसी नारायणचरणारविन्द—चञ्चरी-केति पद्मपुराणम् का. मा.। शशिशेखरस्य—दारुकानने समिदाहरणाय गता महर्षियोषितः काकतालीयन्यायेन महान्तं शिवं लिङ्गं दृष्ट्वा चकितास्तत्रैव तस्थुः, ततस्ता मृगयन्तो महर्षयो दृष्ट्वा नग्नं शिवं शेपुः पततु तवेदं लिङ्गमिति, पतितञ्च तदध ऊर्ध्वञ्च ववृधे·तदुक्तं 'सरोजयोनिरम्बरे रसातले तथाऽच्युतः। तव प्रमाणमी-क्षितुं क्षमौ न तौ बभूवतुः'। काशीखण्डे द्रष्टव्यम्। हरिहयस्य=सहस्राक्षस्य। अहल्या=गौतमपत्नी। प्रसिद्धम्। वरुणस्य महाभारते स्पष्टम्। पवमानस्य वायोः पुत्रो भीमसेनः प्रसिद्धः कुन्तीगर्भजः। 'अक्षमाला वसिष्ठेन सन्नीताऽधमयोनिजा–इति मनुः। अक्षमायाः=असहिष्णुतायाः। विश्वामित्रस्य मेनकायां शकुन्तला प्रसिद्धा महाभारते–पुराणेषु च। बादरायणस्य देवव्रताऽऽज्ञया नियोगजातो दासीसुतो विदुरः प्रसिद्धः महा०। यवक्रीतो मुनिर्महाभारते। कण्डुनामा च तत्रैव। प्रम्लोचा अप्सराः। शातकर्णेर्मुनेः। 'पञ्चाप्सरो–नाम विहारवारि'। 'पुरा स दर्भाङ्कुरमात्रवृत्तिश्चरन् मृगैः सार्धमृषिर्मघोना। समाधिभीतेन किलोप-नीतः, पञ्चाप्सरोयौवनकूटबन्धम्–रघु० १३।३९ ।विभाण्डकः=ऋष्यशृङ्गपिता। ऋष्यशृङ्गः शान्तापतिः। लोमपादो मगधेशो दशरथसखा। कथा रामायणमहा-भारते, भट्टिकाव्ये च। स्वस्य शिरोभिः समाराधितः नीललोहितः शशिशेखरो येन

वीरवधूभिरपहरणं, स्वशिरःसमाराधितनीललोहितस्य लङ्कापतेर्जनकनन्दिनीनिमित्तं विध्वंस इति । कस्य वायं समसुप्तिसमयोदितद्वादशार्कतेजःपुञ्जदुर्विषहः पञ्चशरः स्वशरान्न गोचरयति । मम हि तदपाङ्गभङ्गिश्रृङ्खलानियन्त्रितमिव दुराकर्षं मनः, तदीयकेशकलापकादम्बिनीकलनादिव तिरोहितो विवेकविवस्वान्, तत्पयोधरदर्शनकृताभिभवा इव न स्फुरन्ति दिशः, तद्भालतिलकबिन्दुगुलिकाताडनभीत एव बलादेव पलायितो धैर्यराजहंसः, तद्रोमराजिरजनीविरज्यमानेव विघटिता मतिचक्रवाकी, तद्रशनादामनिगलितेव, तत्कर्णपाशबद्धेव, तद्गुणगणाकृष्टेव, आप्लाविताऽशेषदिशि तद्रुचिसरस्यां मग्नेव, गम्भीरतरे नाभिबिले निविष्टेव, कठिनतरे कुचशैलतटे निविष्टेव, तदधिरोहणखिन्नेव, बाहुलतयोः सञ्जातोद्बन्धनेव, नखाग्रसूचिषु स्यूतेव, ग्रैवेयकभूषासु तद्रत्नैः सह प्रत्युप्तेव, ग्रीवायां रेखानिम्नोन्नतायां स्खलितेव, प्रकोष्ठदेशे मिथः संयुज्यमानैर्वलयीभूतैः प्रतिरोधिभिर्निरुद्धेव, मसारमणिमेचकयोस्तरलयोस्तारकयोः पक्ष्माभिघातेन निखातेव, कुन्तलेषु जातान्धकारेव, आस्वादिततदङ्गलावण्येव न विषयान्तरसेवनमाद्रियते दृष्टिः, तदाश्रितलज्जया सहैव सजातीयतया स्थातुं लज्जमानमिव मन्दताङ्गतं मन्दाक्षम्, तत्स्मितज्योत्स्नापरामृष्टमिव मुकुलायितं कौलीनशङ्काकमलं, लोकोत्तरेण तत्सौन्दर्येण विरोधितया लुण्ठि-

---

लङ्कापती रावणः । विध्वंस–इति–उच्छृङ्खलानि विलसितानि—इति तथा ह्रीत्यनेनान्वयः । अयं पञ्चशरः कस्य वा प्राणिनः स्वशरान् उन्मादन–तापन–शोषण–स्तम्भन–संमोहनान् न गोचरयति न विषयीकरोति—अपि तु सर्वस्य, यतः समेषां जीवानां (समं तुल्यकालं) यः सुप्तिसमयो महाप्रलयः तस्मिन्नुदिता ये द्वादशार्कास्तेषां तेजःपुञ्जवद् दुर्विषहः सोढुमशक्यः । कस्य–इति सामान्यतः प्रतिपादितमर्थं विशेषतः समर्थयति **मम हीति** । तस्याः मदयन्तिकाया अपाङ्गभङ्गिभिरेव श्रृङ्खलारूपैः निमन्त्रितं बद्धमिव मम मनः हि यतः—आक्रष्टुमशक्यमतः कस्येत्यादिना संबन्ध आकाङ्क्षाभास्यः सर्वेषु समर्थकवाक्येषु । एवमुत्तरत्र तिरोहितश्छन्नः । यथा मेघदर्शनेन दिशो न स्फुरन्ति न भासन्ते मनसि तथा तस्याः पयोधरयोर्दर्शनेनेति श्लेषः । धैर्यरूपो **राजहंसः** । मतिरेव **चक्रवाकी** । तद्रशनादामेत्यादिवाक्यानां हि मम दृष्टिः न विषयान्तरसेवनमाद्रियते–इत्युत्तरेणान्वयः । मसारो=हरित् । तदाश्रिता मदयन्तीनिष्ठा या लज्जा तया सह स्थातुं लज्जमानमिव (मम) मन्दाक्षं व्रीडं मन्दत्वं प्राप्तम्, लज्जात्वाऽवच्छिन्नत्वेन समानजातिमत्वात् । अतः सर्वदैव मन्दत्वप्राप्तिरप्युचिता, 'तया स्खलितलज्जं दृष्टं मयाऽपीति भावः' । ज्योत्स्ना = चन्द्रिका । कौलीनमपवादस्तस्य शङ्कायाः कमलत्वारोपः । **लोकोत्तरेण**=अद्वितीयेन ।

तमिव क्षीणतामुपेतं दाक्षिण्यं, तत्कुचकाञ्चनाचलीयात्युच्चताहृतावकाश- मिव न संभाव्यते गाम्भीर्यं, धृतमहत्ताटङ्केनोल्लिख्यमानमिव न तादृगनुबन्ध- वदनुसन्धानं, तन्नयनाञ्जनजम्बालमलिनीकृत इव गलितः सँस्कारसमुदायः, पक्ष्मविपिनपिहितेन केनापि परिगृहीतपरिच्छद इव नोपसर्पति परिच्छेदः, तन्न मामर्हसि दोषेण प्रत्यवस्थातुमस्यामवस्थायां वर्तमानं, तद्यदि दुर्वारतया सार्वत्रिकस्य पुष्पचापप्रसरस्य भवत्याः सहचर्यपि एतावत्पर्यन्तमीदृशमेव दशाविशेषं तर्हि सिद्धमेव विद्धि प्रकृतमर्थम्। अथ तस्या वा दैवस्य वाऽनिच्छया कदाचिदयं प्रयासः फलानुबन्धी न स्यात्तथापि मदापत्प्रतीकार- प्रवृत्तिपुण्यं पाणितलपरिवर्त्त्येव भवत्या" इत्यभिधाय दानोदकद्रवानुका- रिणा तत्कालकल्पितेन तमालकिसलयरसेन विलिखितश्लोकमिदं केतकीदलं स्वहृदयमिव मम करे चकार ॥१४५॥

अहं तु तावता विलम्बेन विच्छिन्नासु भवदादिषु तस्य तादृशेन रतीशाभिनिवेशेन संपन्नपरितोषा परिगृह्यानुपहताक्षरलेखं तदीयं लेखं कार्य- गौरवात्तेन किञ्चिदनुगम्यमाना पूर्वोत्पन्ने त्वदीयमदनविकारानुमाने गृही- तप्रामाण्या, भ्रमाद्वा, प्रमादाद्वा, बुद्धिलाघवाद्वा, तदार्तिदर्शनाद्वा, संप्रत्येव त्वदानयनं प्रतिज्ञाय सत्वरमुपागतास्मीत्येषा प्रवृत्तिः" ॥ १४६ ॥

---

दाक्षिण्यम् = औदार्यम्। दक्षिणे सरलोदारौ—इत्यमरः। गाम्भीर्यं गभीरभावः, उच्चता तद्विरोधिनी। 'निम्नं गभीरं गम्भीरम्, उत्तानं तद्विपर्यये', अमरः। ताटङ्केन= कर्णभूषणेन, अनुबन्धवत् दोषोत्पत्तिदर्शी, अनुसंधानं पूर्वाऽपरविचारः,। अनुबन्धः शिशौ, दोषोत्पादे, मुख्याऽनुयायिनि, विनश्वरे प्रकृत्यादौ, प्रवृत्तस्याऽनुवर्तने, इति मेदिनी। जम्बालः कर्दमः। गलितो विशीर्णः। परिगृहीतवस्त्राञ्चल इव। परिच्छेदः—अवधारणात्मको विवेकः। तदस्यामवस्थायां वर्तमानं मां दोषेणाऽऽक्र- मितुं नार्हसि। सहचर्यपि मदयन्तिका अपि, सिद्धमेव परस्पराऽकाङ्क्षत्वात् विद्धि=जानीहि परस्परसङ्गम्। प्रयासः परिश्रमः पाणितलस्थमेव पुण्यम्, प्रया- सस्य विफलत्वेपि, तदापत्प्रतीकारप्रवृत्तत्वात्, दानस्य मदस्योदकं, दानार्थमुदकञ्च। तापिच्छपल्लवस्वरसेन, विलिखितः श्लोको वृत्तम् 'त्वं विश्वसिहि' इत्यादि यस्मिन् तत्, केतकीपत्रम्। मम कलावत्याः, करे पाणौ चकार=अर्पितवान्। चकार— इति प्रयोगेण मूर्च्छांसत्त्या चित्तविक्षेपेण पारोक्ष्यं प्रतीयते ॥१४५॥

अहन्तु—पूर्वोत्पन्ने त्वदीयमदनविकाराऽनुमाने गृहीतप्रामाण्या-संप्रत्येव- त्वदाऽऽगमनं प्रतिज्ञाय सत्वरमुपागतास्मि—इत्येषा प्रवृत्तिः=वृत्तान्तः।

इदं पुनरवशिष्यते किमेवंगते त्वया प्रतिपत्तव्यमिति, तत्र यदि स्वधैर्यप्रख्यापनेच्छया वा, धर्मध्वजतया वा, लज्जया वा, गुरुजनानुद्धततया वा बिभ्यती त्वमस्मदभ्यर्थनां नानुमन्यसे तर्हि सकलबर्हिर्मुखादिभिरप्यर्हितशासनेन भगवता देवेन मदनेन निवर्हितव्या एव ते प्राणाः । तदानीं हि यादृशोऽनुरागोपरागो भवदीयचित्तचन्द्रमसो मया व्यलोकि स इदानीमनुक्षणमुत्तरोत्तरकक्षाधिरोहणक्रमेण सहस्रशिखर इव प्रतिभाति, तथा च सति पुष्पाशुगाभियोगाज्जीवनं जहतो जनस्य कीदृशो धर्मस्य धैर्यस्य वा प्रसिद्धेरवकाशः । अधर्मादलज्जमानया च त्वया कया वा विधया लज्जापरिपालनं कृतं भवतीति स्वयमेवावधारय, त्वदेकायत्तजीवनस्य च गुरुजनस्य त्वयि कथाऽवशेषायां जीवनोपरोध एव स्यादिति कोऽयं गुरुजनस्याप्युपरोधः । अथ जात्या, वयसा च, रूपेण च, गुणान्तरैश्चात्मानुरूपं, काम्यं च, कामयमानं च, अविभाव्यमानदृष्टादृष्टोभयविरोधं तं जनमात्माभिगमनादुज्जीवयसि तत्परमार्थतः प्रथमन्तावदात्मन एवोपकृतं भवति । द्वितीयं च प्रयाणाभिमुखास्तत्प्राणाः परिरक्ष्यन्ते, अपरं चानृतनिमित्तकान् महापातकान्ममोद्धरणं कृतं भवति, गौरवातिशयप्रसाददानं च सम्पद्यते, ततश्च स्वायत्ते प्रतीकारे तेन प्राणान्परिरक्षन्त्या आत्महत्याप्रसक्तः प्रत्यवायस्तावदपास्तः । एवं च धैर्यलज्जानिषिद्धविषयप्रवृत्तिरेव विरुद्धा, गुरुजनोप्यनुरूपवरप्रतिपत्त्या

---

विच्छिन्नासु दूरीभूतासु, अनुपहतोऽक्षराणाम्=वर्णानां लेखो लिपिविन्यासो यस्मिन् तत्, लिख्यते ऽस्मिन्निति लेखः पत्रं तत् परिगृह्य गृहीत्वा ॥ १४६ ॥

**इदं पुनरवशिष्यते** । धर्मध्वजतया=दाम्भिकतया, गुरुजनेभ्यः- अनुद्धततया । अभ्यर्हितशासनत्वञ्च तद्वशगत्वं सर्वेषां ब्रह्मादीनां पूर्वं प्रतिपादितमेव । निबर्हितव्याः=नाशयितव्याः। अनुरागे उपरागत्वारोपः–चित्ते चन्द्रमस्त्वारोपनिमित्तकः। जहतस्त्यजतः । गुरुजनस्य पितृजनस्य । उपरोध आवरणम् । **अथ जात्या**=कुलेन, वयसा नूतनेन, रूपेण = कान्तिमता, गुणान्तरैः=विनयार्जवादिभिः आत्मनः अनुरूपं, कमनीयं स्वयमभिलषन्तम् । उज्जीवयसि प्राणयसि । उपकृतम् = उपकारः, भावे क्तः । **तत्प्राणाः** मानसकेतुप्राणाः । मम=कलावत्याः। गौरवातिशयेन प्रसादस्य दानम् । स्वायत्ते स्वाधीने । तेन = अभिगमनेन । प्रत्यवायः पापम् । अपास्तो निरस्तः । **एवञ्च**–स्वप्राणरक्षण–परप्राणरक्षणमध्यस्य सत्यवचनरक्षणादिषु गुणेषु अभिगमने वर्तमानेषु–धैर्यं विरुद्धम्, लज्जा विरुद्धा, अगृहीतपित्राद्यनुमतितया निषिद्धविषय-

कृतार्थ्येत। श्रूयन्ते च बह्व्यः कन्याः स्वेच्छयैवाभिमतान् भर्तॄन् भजमाना धर्मानुशासनेषु। तथाहि—भगवन्तं काश्यपं तपोधनं कण्वमननुमत्यैव शकुन्तला दुःष्यन्तं कान्तमङ्गीचकार, भार्गवादमार्गन्त्येवाभिमतिं देवयानी ययातिमात्मानमेव ययाचे, अनाकलयन्त्येव जनकं भीष्मकं भ्रातरं च रुक्मिणं रुक्मिणी स्वयमवृणीत नारायणम्, विजितवज्रायुधं वज्रनाभमनभिमत्यैव प्रभावती प्रद्युम्नाभिमुखं निम्नयामास मानसम्, अगणितगीर्वाणाधिपमवहेलितं कुर्वाणा बाणासुरं नयनतुषारकरम् उषा स्वयमनिरुद्धमन्वरुद्धे''त्यभिधाय व्यरमत्।

तदभिधानं च वस्तुतो यथातथास्तु, मां तु स्वयमेव तदभिसारोत्सवधृताभिमुख्यां धूमायमानामनलशिखामिव समीरणोद्गमः, स्वारसिकीं रमणीयतामिव तरुणिमोद्भवः, उल्लासशीलां जलनिधिकल्लोलावलिमिव चन्द्रोदयः, अत्युत्सुकां चक्रवाकीमिव विभावसुप्रादुर्भावो नितरामेव तरलयाञ्चकार।

अथाहं 'सहचरि! किमिह निगूहनप्रत्यूहेण इयमहमभिजनमनभिजनाना, बन्धुजनमननुरन्धाना, मन्दाक्षं मन्दयन्ती, कलङ्कारम्भमप्यलङ्कारं मन्यमाना,

---

प्रवृत्तिश्च विरुद्धैव, प्रभूतदोषवत्त्वात्। **श्रूयन्ते चेति** गान्धर्वविवाहान् दृष्टान्तयति-बह्व्यः कन्या इति। काश्यपं=कश्यपस्य गोत्रापत्यम्। शकुन्तला नाटकादौ प्रसिद्धा भा० ९ स्कं०। देवयानी काव्यसुता भार्गवात्कवेः, अभिमतिमनुमतिम्, अमार्गन्ती=अगवेषयन्ती, आत्मानमेव न तु गुरुजनान्, ययातिं नृपम, ययाचे (द्विकर्मको धातुः), ययातिरीप्सिततमः, आत्मा—अकथितः। रुक्मिणी श्रीकृष्णस्य प्रथमा महिषी। नारायणम्=श्रीकृष्णम्। प्रभावती = वज्रनाभासुरसुता, प्रद्युम्नः श्रीकृष्णतनूजः, निम्नयामास नमयामास। अवहेलितं कुर्वाणा=अगणयन्ती, उषा = बाणासुरदुहिता नयनयोर्लोचनयोः—तुषारकरमाह्लादकं चन्द्रम् अनिरुद्धं श्रीकृष्णपौत्रम् अन्वरुद्ध स्वप्नाऽनुरोधेन वृतवती। सा तु = 'कलावती' भर्तृदारिके! इत्यारभ्य,—इत्यभिधाय व्यरमत् तूष्णीं बभूव ॥१४७॥

**तदभिधानञ्च**—वस्तुतो यथास्तु तथास्तु—मां तु नितरामेव तरलयाञ्चकार। अत्र समीरोद्गमः, तरुणिमोद्भवः, चन्द्रोदयः, विभावसुप्रादुर्भावश्चेति चत्वारि—उपमानानि, तदभिधानमुपमेयम्। एवं मामित्यस्यानलशिखादयः, तरलत्वं साधर्म्यम् ॥१४८॥

**अथाऽहम्**—कौमुदीमेदुरेषु दिङ्मुखेषु—अवतीर्य प्रासादात्—विहारोपवनमतिक्रम्य, द्वारेण निर्गत्य, कलावत्याऽनुगम्यमाना मनोरथ-कर्णीरथमारूढा अभ्यसरम्—इत्यन्वयः। अभिजनं पूर्वजवर्गम् अनभिजनाना = अबुध्यमाना, बन्धुजनं मित्रवर्गम् अननुरुन्धाना = अनुरोधकमकुर्वती। मन्दाक्षं व्रीडम्। व्रीडा लज्जा, 'गुरोश्च हल' इति

जनापवादाननाकलयन्ती, मर्यादामपर्यापयन्ती, सुरभिसमयेन वा, मलयानिलयेन वा, चन्द्रोदयेन, वा कुसुमसायकेन वा, यौवनेन वा, अनुरागेण वा, लाघवेन वा, दैवेन वा, अन्येन वा येन केनचिदेवंजातीयकेन हेतुना नुद्यमाना, आश्रवतामेव भवतां भजामीत्यभिधाय, अप्रतिहतं देवस्य प्रसूनशरासनस्य शासनमिव तदेव केतकीदलमवतंसीकृत्य, तत्स्पर्शोद्भिन्नं च नवकदम्बमुकुलभूषणानुकारिपुलकजालकं कपोलफलकेन कलयन्ती, तदक्षरश्रवणपरितोषेणेव स्मयमानेन श्रवसा लक्ष्यमाणा, हृदयेन स्पृहामिव तामेव कलावतीं करेणाकलय्य दुर्विनयबीजमिव कथञ्चिद्देहमुदस्य धूताविवातिवेलमवदातायां स्फटिककुट्टिमभूमौ चरणौ न्यस्यन्ती, मर्यादामिव संवरणहेतुं वासवलभीमुत्सृजन्ती, स्मरेणेव प्रसरता शिशिरकरेण क्रियमाणममन्दाक्षभावमुद्वहन्ती, अन्तरनुरागेणेव बहिरपि चन्द्रिकोद्रेकेण सितभावं दधाना, चरणोत्क्षेपेण धाष्टर्यपटहमिव नूपुरं मुखरयन्ती, दुरदृष्टैरिव गमनान्तरायकारिभिः कलहंसकैरनुस्रियमाणा, इतस्ततः समापतद्भिरपवादैरिव मलिनैरलिकुलैराक्रियमाणा, हृदयात्प्रचलता सद्वृत्तेन मौक्तिकहारेण दृश्यमाना, त्रासेनेव मलयमारुतेन तरलायमाननेत्राञ्चला, निराकृतान्धकारकुञ्जरकुले आकाशनिकुञ्जमाकलयति शशाङ्ककण्ठीरवे, तुषारनिस्तुषीकृतेष्विव कौमुदीमेदुरेषु दिङ्मुखेषु, छायामात्रपर्यवसिते तिमिरप्रसङ्गे, रजनीचम्पकलताकोरकप्रकरेषु दीप्यमानेषु प्रदीपेषु, मरकतमणिमयभूमिप्रतिफलनच्छलेन

---

अप्रत्यये टाप्, वजि व्रीडः। 'व्रीडमावहति मे स संप्रति' इति कालिदासः। मन्दानि अक्षाणि = इन्द्रियाणि यस्मिन् तत्, 'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा' इत्यमरः। मन्दं कुर्वतीति मन्दयन्ती, 'तत्करोतीति' णिच्। अजातोपयमत्वेनाभिसरणं कलङ्कः। अपर्यापयन्ती=पर्याप्तमकुर्वती=अपालयन्तीत्यर्थः। उद्दीपनविभावान् आह—सुरभिसमयेनेत्यादिना। आकलय्य =अवलम्ब्य। **अमन्दाक्षभावः**=अमन्ददृष्टिमत्त्वं, लज्जाऽभाववत्त्वञ्च। 'चन्द्रिकावत्सु रात्रिषु सितवसनवत्त्वमभिसारिकाणामिति' सितभावं दधाना। मुखरयन्ती, तत्करोतीति णिच्। कलैरव्यक्तमधुरं शब्दायमानैः, हंसकैः पादकटकैः। 'हंसकः पादकटकः'। 'कादम्बः कलहंसः स्यात्'-अमरः। सद्वृत्तेन सच्चरित्रेण। निराकृतानि निरस्तानि—अन्धकाररूपाणि कुञ्जरकुलानि यस्मात् तस्मिन्—आकाश एव निकुञ्जस्तं शशाङ्करूपे कण्ठीरवे गजरिपौ केसरिणि। दिङ्मुखेषु खस्वस्तिकाञ्चलेषु। पर्यवसिते=पर्यवसानं प्राप्ते। रजन्यां चम्पकलतात्वारोपः, दीपकेषु कोरकप्रकरत्वाऽऽरोपः। मरकतमणिमयी या भूमि-

तन्मयूखदूर्वाङ्कुरकवलानिव कलङ्ककुरङ्गकार्भकमभ्यवहारयति हरिणलाञ्छने, विरहविकलकोककामिनीकरुणकलकलप्रलापाकर्णनकदर्थितासु जलदेवतास्विवान्तःसङ्क्रान्तमृगाङ्कमण्डलासु द्रवत्वमापद्यमानासु जलदेवतास्विव चन्द्रकान्तोपलशालभञ्जिकासु, अञ्जलिपेयामिव चन्द्रिकामाचामत्सु चकोरनिचयेषु, भविष्यदन्धकारसृष्टिबीजेष्विव कमलकोरकसमुद्गकान्तराले शयानेषु मधुकरकदम्बकेषु, घनसारक्षोदक्षुरितसर्वावयवासु-कुमुदकृतकर्णावतंसासु—चन्दनललाटिकाभिरामासु—मुक्ताफलमयप्रसाधनासु-तत्कालोच्छलितजलनिधिफेनपटलमिव केवलधवलवसनं वसानासु—चन्द्रिकाधिष्ठातृदेवतास्विव प्रसृतास्वभिसारिकासु, धृताऽशीतकरतनयविग्रहे सव्यसाचिनीव शरोत्सर्गविद्यासर्वस्वं प्रकाशयति कुसुमायुधे, रतिरमणकार्मुकशिञ्जिनीनिनाद इव विजृम्भमाणे कोकतरुणकरुणकूजिते, सकलेन्द्रियसंमोहनचूर्णमुष्टाविव प्रसरन्त्यां चन्द्रिकायां, घनीभावापन्नेषु चन्द्रिकाच्छेदेष्विव विकसितेषु कुमुदकदम्बकेषु, बाह्यवृत्तिविमुखेषु जनहृदयेष्विव मुकुलायितेषु कमलकुलेषु, विरहवेदनाविधुरचक्रकतरुणकूजितगणनकौतुकिभिरिन्दुकरैरिन्द्रनीलोपलगुलिकास्विव कुमुदरजतभाजनोदरे निधीयमानासु भ्रमरपरम्परासु, पद्मरागमणिमयप्रणालिकामार्गेण मदनोपचारकुङ्कुमरसपङ्कधारास्विव प्रवहन्तीषु चन्द्रकान्तनिस्यन्दद्रवकुल्यासु, चन्द्रकर-सक्षतीकृतचक्रवाककुचायां निमीलितनीलोत्पलविलोचनायां प्रियतमसंभोगसुखमिवानुभवन्त्यामवतीर्णयौवनायां विभावरीवरवर्णिन्यां, सर्वतोधृतरन्ध्रे स्फटिककुम्भ इवानवसानां चन्द्रिकां पयोधारामभिवर्षति तुहिनदीधितौ, प्रवहता चन्द्रिकोद्भवेन निस्यन्देनानुमीयमाननिम्नभावाभिरिन्दुकान्तमयीभिरधिरोहिणीभिरवतीर्य प्रासादात् , मरकतमरीचिनिचयेन कौमुदीसमुदयेन च परस्पररूपानभिभाविना व्यामिश्रभावमापन्नेन जाह्नवी-यमुनासंभेदमिव

---

स्तस्याः प्रतिबिम्बनव्याजेन—तत्किरणरूपान् दूर्वाङ्कुराणां ग्रासान्—इव कलङ्करूपी यः कुरङ्गकस्याऽर्भकः, तम् अभ्यवहारयति भोजयति सति मृगाङ्के = चन्द्रे । अशीतकरतनयः कर्णः । सव्यसाची=अर्जुनः । बाह्या घटपटादि-विषयिणी या वृत्तिः, तस्याः सकाशात्—विरुद्धमुखेषु—निद्रायितेषु—प्राणिनां स्वान्तेषु। 'अभावप्रत्ययावलम्बना वृत्तिर्निद्रा' यो. सू. । 'संभेदः सिंधुसङ्गमः' 'सिधुर्ना सरिति

लीलाङ्गणं वल्लभलाभकामनयाऽवगाह्य, तलमात्रावच्छिन्नच्छायतया समुपकल्पितनीलोपलमयालवालवलयैरिव जनदर्शनापहारिणां तिमिरतस्कराणां निवासदुर्गैरिव समन्ततश्चन्द्रिकयाऽभियुज्यमानैः कुसुमभ्रमरसंयोगेन वलद्वलयस्यैकदेशस्य प्रहारमिवोपदर्शयद्भिर्मन्दश्चरितवर्णाभिव्यञ्जकध्वनिभिरिव द्विरेफकूजितैरुपशोभमानैः शाखिभिरशून्यसर्वदेशं विहारोपवनमतिक्रम्य, पद्मरागमयकपाटद्युतिपूर्णेन केवलानुरागमयेनेव द्वारेण निर्गम्य, पूर्वपरिशीलितानां तेषां तेषां शाखिनां पौर्वापर्येण पन्थानं प्रत्यभिजानाना, केतकीकुसुमगन्धानुबन्धिना कृतकलकलेन पुरस्तात्प्रसर्पता नासीरजनेनेव मधुकरकदम्बकेन सेव्यमाना, पृष्ठतः कृतया कलावत्येव लज्जयेव कलावत्याऽनुगम्यमाना, कल्पनाभिरामैरिन्द्रियैरर्वद्भिरुह्यमानं, मन्मथसारथिना यथेच्छं नुद्यमानं मनोरथकर्णीरथमारुढाऽभ्यसरम् ॥१४९॥

ततो 'भर्तृदारिके! पश्याभिसारसौख्यसंपत्तिं, तथाहि—चन्द्रिकैव सर्वतो घटितं स्फटिकमयं प्रासादं संपादयति, गिरिशेखरेभ्यः स्यन्दमाना इन्दुकान्तदृषद्द्रवनिर्भरा एव झाङ्कारिणां निर्झराणां श्रियं नोज्झन्ति, तेभ्यः समुत्पतन्त्यः प्रभूताः पयोविप्रुष एव प्रसूनाञ्जलिसामञ्जस्यं जनयन्ति, तन्नि-

---

स्त्रियाम्'—अमरः। लीलाङ्गणम्=कन्दुकादिविहारभुवम्। पूर्वपरिशीलितानां पुष्पावचयवेलायामनुभूतानाम्। प्रत्यभिजानाना—स एवायं पन्थाः—इत्याकारकप्रत्यभिज्ञाविषयी कुर्वती। नासीरजनेनेव = सेनामुखवाद्यवादकजनेनेव। 'सेनामुखन्तु नासीरम्' अमरः। 'नलस्य नासीरगते चितेनतुः' श्रीहर्षः। अर्वद्भिरश्वैः। मन्मथः कामदेव एव सारथिस्तेन। नुद्यमानं प्रेर्यमाणम्। कर्णीरथः प्रवहणम्, महिलावहनयोग्यो रथः। 'कर्णीरथस्थां रघुवीरपत्नीम्' इति कालिदासः। अभ्यसरम्= अभिसारं कृतवती ॥ १४९ ॥

**ततो भर्तृदारिके!** पश्याऽभिसारसौख्यसंपत्तिम्—**तथाहि**···इत्यादिना सपरिहासं कलावत्या अभिधीयमाना गच्छन्ती···अयं स माधवीलतामण्डपः,—यत्र ···तत्र···इति कलावत्याऽभिहिता तमुद्देशमासाद्य किमप्यपश्यन्ती विदीर्णहृदया—**इदं व्यचिन्त्यम्**। चन्द्रिकायामेव स्फटिक—घटित (रचित) प्रसादत्वाऽऽरोपः। चन्द्रकान्तमणिनिःस्यन्दनिर्झराः—झाम्—इत्याकारक शब्दकारकाणां निर्झराणां= जलप्रवाहाणाम्, श्रियं शोभां, न उज्झन्ति=न त्यजन्ति, नित्यं धारयन्तीत्यर्थः। तेभ्यः=निर्झरेभ्यः। विप्रुषः=जलबिन्दवः प्रसूनाञ्जलिसामग्रीकल्पं समर्थयन्ति।

नादाकर्णनसम्भवदम्भोदविभ्रमाश्च कलापिन एव लास्यलीलामुल्लासयन्ति, चन्द्रमाश्चायं चाटुकार इव मार्गवर्तिषु तन्मात्रयोग्येषु जलेषु प्रतिफलन-च्छलेन मञ्जीरशिञ्जितप्रसक्तान् कलहंसानिव समाकलयति, पुरस्ताच्च प्रसरंश्चरणन्यासाय कुमुदसहस्राणीवास्तृणीते, अपि च भर्तृदारिकैव नव-वल्लभसमागमावस्थामिवाभ्यस्यति, चलद्भिरलिकुलैर्दश्यमानाधरा धुनोषि ससीत्कारं मुखकमलं, तद्भयेनैव हस्तद्वयेन स्वस्तिकेन कम्पमाना पिदधासि पयोधरपरिणाहं, चन्द्रमसा सर्वतः करेण स्पृश्यमानाऽपि न भजसि तदाभि-मुख्यमिति—कलावत्या सपरिहासमभिधीयमाना गच्छन्ती मनोरथमूलको-ल्लासवशेन नेदीयांसमिव मार्गमनायासादतिगम्य, सेयं तमाललेखा चन्द्रि-कायां परभागवशाद् दूरादेव दृश्यतां स्पृशति, यतो बहिर्निष्क्रम्य स जनो-ऽस्माभिरुदैक्षि, तस्माच्चेतो नातिदूरे कुसुमसमूहदन्तुरोऽयं माधवीलताम-ण्डपो यत्र मामनुसरन् स जनो मया दत्तसङ्केतया व्यसर्जि, तदेतावत्पर्यन्तै-वेयमस्मदीया यात्रेति' कलावत्याऽभिहिता, तमुद्देशमासाद्य किमप्यपश्यन्ती विदीर्यमाणहृदयेदं व्यचिन्तयम् ॥ १५० ॥

कलावती तावदियं द्वितीयहृदयभूता मां प्रतारयेदित्यसम्भावनीयमेव । अथ स एव विप्रलम्भं संभावयेत्तत्रापि विना प्रयोजनं किमिति तथा विद-

---

'अभ्रेष—न्याय- कल्पास्तु देशरूपं समञ्जसम्'—अमरः। कलापिनो मयूराः। आस्तृणीते आच्छादयति। धुनोषि=कम्पयसे। तद्भयेनैव अलिकुलदंशनभयेनैव, कम्पमाना सती स्वस्तिकाकारेण हस्तद्वयेन मिलितेन, पयोधरयोः परिणाहं विशालतां, पिदधासि= आच्छादयसि । नेदीयांसमिव = अतिसमीपमिव । सेयं = पूर्वानुभूता तापिच्छ-श्रेणिः। उदैक्षि = उदीक्षितः, स जनः = मानसकेतुः। मया कलावत्या, व्यसर्जि विसृष्टः। तमुद्देशं कलावत्या संकेतितं स्थानम्, आसाद्य=प्राप्य, इदं वक्ष्यमाणं विकल्पजातं, व्यचिन्तयम् = चिन्ताविषयमकरवम्। स्पष्टमन्यत् ॥ १०५ ॥

कलावती तावत्'''इत्यादिकं विकल्पयन्ती, तत्सन्निहितनिकुञ्जान्तराण्यपि गवेषयन्ती, काञ्चित्कन्यकामवलोक्य, किमियं वनदेवता स्यात्, सुरभिसमयश्रीर्वा स्यात्, अथवा स एव जनो रूपव्यत्ययेन मां प्रतीक्ष्यमाणः स्यात्, उत काचिद-भिसारिकैव स्यात्—इति सन्दिहानायां मयि'''मया सह कृतप्रणामा कलावती व्यजिज्ञपत्, सा तु—किञ्चिन्निःश्वस्य—भगवतो गृत्समदस्यान्तेवासी, जाबालेरात्म-जन्मा तपोनिधिनामाऽहम्, अद्यैव—शरवणप्रवेशादेतमवस्थाम् अवापम्, कल्याण्यौ पुनः के वा, कुतो वा, एवं विधायां वेलायामिति—अब्रवीत्। ततो महात्मनामपि

ध्यात्, नहि प्रयोजनाऽन्तरं संभवति वधूजनवञ्चनस्य, अथापि सहचरीमायां निर्माय कश्चिदेवमावहेत्सोऽपि फलाभिसन्धिव्यतिरेकेण प्रवर्तमानो लोकमर्यादामतीयात्. तत्किमहमेव स्वप्नदशायां तदन्वभूवम्, उतेदानीमपि स्वप्नावस्थैव, आहोस्विन्मानोरथिककल्पनाविलासः, अथ मयैवैतदुक्तमन्यथा गृहीतं स्यात्तदेषा स्वयमभ्रान्ता किमिति मामनुस्मरेत्, किमुतास्या एव पूर्वसंकेतितप्रदेशप्रस्मरणमित्यादिकं विकल्पयन्ती, कुमारीसमाचाराद्दयिततमसमागमाच्चोभयतो विभ्रष्टा, त्रिशङ्कुवदन्तरालदशायां विद्यमाना, स्वप्रयत्नविसंवाददर्शनादापन्नविलक्षणवैलक्ष्यया किमप्यनालपन्त्या मदपेक्षयाऽप्यतिरिच्यमानवदनवैवर्ण्यया कलावत्याऽनुगम्यमाना, दुर्वारत्वाद् दुराशाविभ्रमाणां तत्सन्निहितकुञ्जान्तराण्यपि गवेषयन्ती यावदितस्ततो विद्यमानानामनेकेषामन्येषामपि निकुञ्जानां गवेषणस्पृहया विडम्ब्ये तावदेवान्यतमं लतागुल्ममासाद्य निषण्णामत्यन्तविषण्णाकारां वल्कलमात्रनिवसनां रूप-

---

दैवस्य दुरीहाविहारमपरिहार्यमुदीक्ष्य तिरोहितायां देहपरित्यागेच्छायां···मन्दाक्षमन्दायमानायाम्- मयि रोदितुं प्रवृत्तायाम्, कलावती—नयनोदबिन्दून् बद्धाञ्जलौ करकमलान्तराले—आदधाना अवादीत्—'भगवन् ! इयमस्ति—गन्धर्वस्य चित्रसेनस्य दुहिता मदयन्तिका नाम, अथेदानीं दत्तसंकेता···आयाता, संवृत्तश्चावयोर्विसंवादः, यदि भगवतो विदितस्तदुदन्तः, तत्करोतु भगवान्—आवयोरुपरि दयामिति'। स तु निःश्वस्य—कल्याणि ! मया शपता स निशाचरतां नीतः, तदेतस्याः—अनपकारविरोधी अयं जनः, कां दयां विधास्यति—इति कथयामास। प्रतारयेत् = वञ्चयेत्। अथ=अथवा, स एव मानसकेतुरेव, विप्रलम्भं विसंवादम्, विदध्यात् कुर्यात्। **प्रयोजनान्तर**मनुरागभिन्नं, प्रयोजनं तु सिद्धमेवेत्यर्थः। अन्वभूवम्= अनुभूतवती पूर्वं मानसकेतुदर्शनावसरे। एतस्याः सहचर्याः उक्तम्—एतदुक्तम्। अन्यथा वैपरीत्येन =, गृहीतं ज्ञातम। **अभ्रान्ता** भ्रान्तिरहिता। प्रगतं स्मरणं **प्रस्मरणं** विस्मरणम्। कुमार्या अविवाहितायाः, समाचाराद् व्यवहारात्। विभ्रष्टा रहिता। त्रिशङ्कुः = हरिश्चन्द्रपिता अन्तरिक्षस्थः, न भूमौ न दिवि, तद्वत् स्वस्याः कलावत्याः प्रयत्नस्य प्रयासस्य विसंवादो वैफल्यं तस्य दर्शनादनुभवात्। आपन्नं प्राप्तं विलक्षणं विचित्रं वैलक्ष्यं विहतं नष्टं लक्ष्यं लक्षयितुं प्राप्तकालं संकेतस्थानं यस्याः सा विलक्ष्या तया, अतिरिच्यमानमधिकं वैवर्ण्यं विवर्णभावो मुखशोषणादिकं यस्याः। **दुराशा**—विलासानाम्। गवेषयन्ती = मृगयन्ती। विडम्ब्ये= विडम्बिताऽभवम्। निषण्णामुपविष्टाम्, अत्यन्तं विषण्णः आकारो यस्याः ताम्—

व्यसनोभयेन ममैवानुरूपामपरामिव मूर्तिं— मम तादृशदशादीक्षागुरुमिव काञ्चित्कन्यकामवलोक्य, किमियं तपस्यन्ती वनदेवता स्यात्, कामोज्जीवनाय क्लिश्यन्ती सुरभिसमयश्रीर्वा, अथ मां जिज्ञासमानो मायावी स एव जनो रूपव्यत्ययेन मां प्रतीक्ष्यमाणः स्यात, उत मया सह समानामवस्थां पूर्वमेवापन्ना काचिदभिसारिकैव भवेदिति सन्दिहानायामेव मयि कलावती सविनयमुपसृत्य तत्तेजोऽतिशयाभिभूता मया सममेव कृतप्रणामा भगवतीं विविदिषाव इति व्यजिज्ञपत्। सा तु निःश्वस्य किञ्चिदब्रवीत्— बालिके! युवयोराभिजात्याद् गृहीतहृदयतया व्याहरामि भगवतो गृत्समदस्यान्तेवासी जाबालेरात्मजन्मा तपोनिधिनामाऽहमद्यैव शरवणप्रवेशादेवमवस्थामवापं; कल्याण्यौ पुनः के वा कुतो वा—एवंविधायां वेलायामिति'। ततो महात्मनामप्यपरिहार्यमुदीक्ष्य दैवस्य दुरीहाविहारं, मुहूर्तमन्तर्हितदेहपरिहारस्पृहायां निरर्थवेदयिष्यमाणनिरर्थकस्वीयदुश्चरितमन्दाक्षमन्दायमानायां किञ्चित्पार्श्वतो भूत्वा करकोपलस्थूलैर्बाष्पबिन्दुभिरविच्छेदेन मयि रोदितुं प्रवृत्तायां कलावती बद्धाञ्जलावादधाना करकमलान्तराले नयनोदबिन्दूनवादीत्—"भगवन्नध्यक्षितातीतानागतविद्यमानवस्तुजातानां प्रत्यग्दृशां भवादृशां किन्नाम परोक्षं यदपलप्येत। इयमस्ति गन्धर्वकुलमौलिबकुलमालार्चितचरणस्य चित्रसेनस्य दुहिता मदयन्तिका नाम। अथ दैवादत्रैवोद्याने मानसकेतुसंज्ञेन गुह्यकराजेन मया द्वारभूतया परस्परानुरागाद्दत्तसङ्केता इदानीमायाता, संवृत्तश्चावयोर्यत्नविसंवादः, यदि भगवतो विदितस्तदुदन्तस्तत्करोतु भगवानन्यथानुपपन्नजीवितयोरावयोरुपरि दयामिति"। स तु निःश्वस्य पूर्वतोप्यधिकनिर्विषण्णः कथञ्चिदिव कथयामास—'कल्याणि! चिरादेव विघटितोयं दुरदृष्टेनार्थः। एवंभूतेन मया निवर्तमानेन विनश्यदवस्थ एव दिवसे,

---

रूपेण स्वरूपेण व्यसनेन=दुःखेन च मम तुल्याम्, किं बहुना मम—अपरां मूर्तिमिव। तादृशी पुंस्त्वविपर्ययरूपा या दशा तस्या या दीक्षा प्रथमोपदेशः। विविदिषावः वेदितुमिच्छावः। अभिजात्या कुलीनतया। व्याहरामि कथयामि। पूर्वं २४-३० गद्येषु कथेयमनुसन्धेया। अपरिहार्यं परिहर्तुमशक्यम्। दैवस्य-दुष्टचेष्टामयविलासम्। निरर्थं व्यर्थं वेदयिष्यमाणानि निरर्थकानि यानि स्वीयदुश्चरितानि, तैर्यन्मन्दाक्षं व्रीडं तेन मन्दीभूतायाम्, नयनोदबिन्दून् अश्रून्। प्रत्यग्दृशाम्=अन्तरात्मदृशाम् अपलप्येत=अपह्नूयेत, कर्मणि प्रत्ययः। दुरदृष्टेन दुर्दैवेन। विघटितः=वियोजितः। विनश्यदवस्थे एव दिवसे—सूर्यास्तमये-

सोऽस्या वल्लभो रिरंसया मामनुसरन्ननुबध्नन्क्रोधेन शपता निशाचरतां नीतः। इदानीन्तु जानामि नूनमस्या एव ते सहचर्याः सारूप्यात्संकेतसमयं प्रतीक्ष्यमाणस्य रागान्धस्य तस्य सा मदुपादित्सेति, तदेवङ्गते किं विधीयतां, दुर्वारा हि दारुणतराः कर्मबन्धाः, दूरे तावदन्यदहमेवात्र दृष्टान्तः, तदेतस्या अनपकारविरोधो जनोऽयं दयां कां नाम विधास्यतीति' ॥१५१॥

ततश्च तदाकर्णयन्त्येवाहं दुर्विधावशमनीये मूर्च्छया। अथ निरुपाधिबन्धुना दयार्द्रेण तेन स्वयमेव कलावत्या च ससंभ्रममानीतैर्मृणालवलयैः कमलिनीपलाशैर्नालीकिनीपल्लवतालवृन्तानिलैश्चन्द्रकान्तनिस्यन्दोदकैरन्यैश्च यथोपपन्नैरुपायैरप्रयोजनमेव जीवनमेतन्मन्दभागधेया समासादयम्। अथाहमनन्यगतिकतया विहाय ह्रियं, प्रणम्य कुशेशयकोरकाकारमञ्जलिं बद्ध्वा भगवन्तमगादिषम्—"भगवन्! फलबलादेवानुमीयते न किञ्चिदपि सुकृतं मयाऽन्यजन्मनि मन्दयात्मनि सन्दर्भितम्। इदं तु यदेवंविधे व्यतिकरे संवृत्ते गत्यन्तरविरहादावश्यके चास्य दग्धदेहस्य त्यागे तीर्था-

---

एवेत्यर्थः। ८५ गद्यादारभ्य पुनरावर्तनीया कथा। ते=कलावत्याः पृच्छिकायाः, सहचर्याः मदयन्तिकायाः। अनपकारेण विरोधी मानसकेतुशाखा, अयं जनः=तपोनिधिः। परदुःखप्रहाणेच्छा दया। अयन्तु दुःखदाता कां दयां विधास्यति करिष्यति।

मदनदशाविवृतिमयं, कुसुमं मन्दारमञ्जर्याः।
त्रिभुवनवञ्चनगुरवे, समार्पि तुष्ट्यै-रतीशाय ॥१५१॥

ततश्च तपोनिधिवचनश्रवणानन्तरमेव, अहं मदयन्तिका आकर्णयन्त्येव शृण्वन्त्येव, मूर्च्छया कर्त्र्या, दुर्विधायाः=दुर्दशाया वशमधीनमनीये प्रापिता (कर्मणि लङ्)। अथ मूर्च्छानन्तरम्, निर्व्याजबन्धुना तेन तपोनिधिना ससंभ्रमं=सत्वरं सादरञ्च, बिसकण्टकैः कमलिनीपत्रैः। नालीकिनी=कमलसमूहः। 'व्यजनं तालवृन्तकम्'। चन्द्रकान्तमणिप्रस्रुतजलैः। अप्रयोजनं व्यर्थम्, प्रियसङ्गमाऽभावात्। समासादयम्=अप्रापम्। अथ=मूर्च्छाव्यपगमानन्तरम्, भगवन्तं=तपोनिधिम् इति—अगादिषम्। नास्ति अन्या गतिः शरणं यस्याः तस्या भावस्तया (शेषाद्विभाषा इति कप्)। ह्रियं लज्जाम्। 'शतपत्रं कुशेशयम्' 'तौ युतावञ्जलिः पुमान्'। बद्ध्वा=रचयित्वा, बन्ध-बन्धने क्त्वा। भगवन्=तपोनिधे! फलबलादभिसारस्य व्यर्थत्वात्। संदर्भितं ग्रथितम्। अत्राऽयमनुमानप्रयोगः—अहं जन्मान्तरीयसुकृतरहिता, परस्पराऽनुरागेपि सङ्गमाभावात्, चित्राङ्गदासुरथवत्। यत्र यत्र सुकृताभावः-तत्र तत्र सङ्गमाभावः। यदेवंविधे व्यतिकरे संवृत्ते भगवत्पादपल्लवौ दृष्टिविष-

नामपि पावनत्वमापादयन्तौ भगवत्पादपल्लवौ दृष्टिविषयीकृतौ, तत्प्रायः सुकृतविशेषस्य विलसितम्। अन्यथा मनोरथानामप्यपथानामेवंविधानां फलानां कथमिवोपभोगः, तदधुनेच्छामि धर्माधर्मयोः प्रथमप्रमाणेन भवदनुज्ञानेनानुगृहीता स्पृहयामि विहितापरिहार्यसाहसं देहहतकं विहातुमिति"॥१५२॥

कलावती तु स्वयमुपहितप्ररोचनस्यास्य प्रयोजनस्य विपत्त्याऽऽत्मानं सापराधमिवाभ्युपगच्छन्ती, समाश्वासनोपायमप्यपश्यन्ती, मद्वदेव स्वस्याप्यन्वयव्यतिरेकयोरेकतरस्मिन्नविहितावधारणा न किमप्यभाणीत्॥१५३॥

स्वयमसीमां महीयसीमापदमापन्ना अपि महात्मानोऽन्यदीयायामापदि दुरासदं विद्वेषमासादयन्ति। यतः स महातपा मुनिस्तथाविधयोरावयोर्मुखात्प्रणयवत्योरवतिष्ठमानयोरात्मानमपि कृतानुचिताचारमविनीतमिव गणयन्,

---

यीकृतौ तदिदं प्रायः सुकृतविशेषस्य विलसितम्। अन्यथेति–उभयोः शेषः, जन्मान्तरीयसुकृतसत्त्वे कथमेतादृशो विप्रलम्भः, सुकृतविशेषाभावे कथं भवद्दर्शनमित्यर्थः, तत्=तस्माद्–दुःखस्याऽसह्यत्वादित्यर्थः। धर्माऽधर्मयोर्विषये प्रत्यक्षप्रमाणभूतयोर्भवत आज्ञया कृतानुग्रहा सती, विहितं कृतमपरिहार्यं साहसं येन तं, देहहतकं विहातुमिच्छामीति वाक्यार्थकर्मभूतं गदनमकार्षम्। यदि भवत आज्ञा तर्हि देहं विहातुमिच्छामि–इति करुणविप्रलम्भस्य बीजसूचना। 'यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये। विमनायते यदैकस्तदा भवेत्करुणविप्रलम्भाख्यः'। लोकान्तरम्=देशान्तरं, देहान्तरं, वा। पुण्डरीकः कादम्बर्यां, सीता उत्तररामचरिते, मानसकेतुरत्रोदाहरणानि। 'आर्षं ज्ञानं धर्माऽधर्मयोः प्रमाणम्'॥१५२॥

कलावती तु–आत्मानं सापराधमिव–अभ्युपगच्छन्ती न किमप्यभाणीत्। अस्य प्रयोजनस्य=अभिसरणप्रयोजनस्य। समाश्वासनोपायं धैर्योपायम्। मया तुल्यं मद्वत्, स्वस्य आत्मनोऽपि, अन्वयव्यतिरेकयोर्देहधारणाऽधारणयोः। अन्वयः भावयोः सम्बन्धः, व्यतिरेकः=अभावयोः सम्बन्धः। तथा चाऽत्र–'मानसकेतु–सङ्गमसत्त्वे मदयन्तीदेहसत्त्वं, तदभावे–मदयन्तीदेहाऽभावः' इति मदयन्त्या अन्वयव्यतिरेकौ। तद्वत्–कलावत्याः मदयन्त्या सह। मदयन्ती सत्त्वे कलावतीसत्त्वं, तदभावे तदभावः इत्यादिरन्वयो व्यतिरेकश्च सर्वत्र बोध्यौ। 'भावयोर्व्याप्तिरन्वयः, अभावयोर्व्याप्तिर्व्यतिरेकः'–इति न विस्मरणीयम्॥१५३॥

"दुःखितमनुदुःखितो ना स्यात्" इति न्यायेन तपोनिधिरपि दुःखित आसीदिति प्रतिपादयन् प्रथमं सामान्यतोऽर्थान्तरमुपन्यस्यति–स्वयमिति। दुरासदमत्यन्तं विद्वेषम्=अप्रीतिम्, मनोव्यथामित्यर्थः, आसादयन्ति प्राप्नुवन्ति।

जीवनाधिकारे स्वरितत्वमिव प्रसञ्जयन्निदं जगाद–'बाले ! मैवमवहेलयात्मानं, नह्येवम्प्रायाः कल्याणशीलाः प्रकृतय एकान्ततया क्लेशभाजनं भवितुमर्हन्ति, विहितोऽत्र भगवता गृत्समदेन वत्सलभावादवधिः । तद्यथा तस्य राक्षसभावान्मोक्षे मम स्वरूपलाभः, तस्य त्वधिकेनैकेन जन्मनेति तद्यथागतं गम्यतामिति' ॥ १५४ ॥

एतदाकर्ण्य च प्राप्तपरिसान्त्वनोपाया सा स्वधिया कृतानुरूपाऽऽयासा मामाश्वयामास–'प्रियसखि ! प्रमाणाभासशरणा अपि प्राणिनः प्राणेषु स्पृहां प्रतिपद्यन्ते, तव त्वयं महर्षिः स्वयमेव समाश्वासनमभिदधाति,

---

यतः–इत्यारभ्य समर्थ्यं वाक्यम् । जीवनस्य = आयुरनुवृत्तिकालस्य, अधिकारे = प्राणानुवृत्तिसम्बन्धे स्वरितत्वमिव = अधिकारसमाप्तिचिह्नमिव, प्रसञ्जयन् लगयन् जगाद । ( पाणिनीये व्याकरणे– 'स्वरिते नाऽधिकारः' १।३।७१ इति सूत्रम्–स्वरितत्वं–वर्णधर्मरूपगुणविशिष्टं सूत्रान्तरम्–अधिकृतं बोधयति, यथा–'प्रत्ययः' ३।१।१ 'परश्च'–३।१।२ इति सूत्रद्वयं पञ्चमाध्यायसमाप्तिपर्यन्तमधिकृतम् । 'धातोः' ३।१।९१ इत आरभ्य तृतीयाध्यायसमाप्तिपर्यन्तमस्याधिकारः । 'ङ्याप्प्रातिपदिकात्' ४।१।१ इत्यस्य पञ्चमाध्यायसमाप्तिपर्यन्तम् । एवम्–'अङ्गस्य' 'भस्य' 'पदस्य' 'सर्वस्य द्वे' इत्यादीनां न्यूनाधिकाऽवधौ किम्मानमिति प्रश्ने 'प्रतिज्ञास्वरिताः पाणिनीयाः' इति नियम उपतिष्ठते, तथा च यावत्पर्यन्तं यस्य स्वरितत्वं प्रतिज्ञातं तावदेव तस्याऽधिकारः, तथाऽत्र तपोनिधिनापि मानसकेतुशापदाननिमित्तक–मदयन्तीदुःखप्रयोजके स्वात्मनि–स्वरितत्वमिव प्रतिसञ्जितं, जीविताऽवसानायेति, तपोनिधेर्महान् पश्चात्तापोऽभूदिति तात्पर्यम् । ) बाले !—'नात्मानमेव मन्यस्व, पूर्वाभिरसमृद्धिभिः । आमृत्योः श्रियमन्विच्छेन्नैनां मन्येत दुर्लभाम् '–इति मनूपदेशस्य स्मरं माऽवहेलय = मा तिरस्कुरु, (मा शब्दोयं न माङ्, अतो न लुङ् ) अविच्छेदेन दुःखभाजनम् । वत्सलभावात् = शिष्यप्रेम्णा । अवधिः पर्यवसानम् । तद्यथा–इति अवधिं दर्शयति । तस्य मानसकेतोः । मम तपोनिधेः स्वरूपलाभः पुरुषत्वप्राप्तिः, तस्य तु–मानसकेतोस्तु–अधिकेनैकेन जन्मना स्वरूपलाभ इति, तत्–तस्मात्प्रत्याशायाः सत्त्वात् आगतमागमनमार्गमनतिक्रम्य यथागतं गम्यताम्–इति जगाद–इति पूर्वेणान्वयः ॥ १५४ ॥

एतद् = कन्यात्वप्राप्ततपोनिधिवचनं श्रुत्वा, प्राप्तः परिसान्त्वनोपायो यया सा कलावती, कृतोऽनुरूपः आयासो यया । प्रियसखि ! प्रमाणाऽऽभासः शरणमवलम्बनं येषान्ते तादृशा–अपि । ऋषति जानाति–इति–ऋषिः, तत्रापि

न चास्य भ्रमः प्रमादो विप्रलिप्सा करणापाटवं वा संभवति। शरीरमेव ह्यस्य स्थलविशेषबलाद्विपर्यस्तं न तु प्रभावः, भगवदभिहितश्च शाप इव शापान्तोऽपि न सांशयिकत्वेन शङ्कनीय' इति ॥ १५५ ॥

ततोऽहं तदभिधानस्य विपर्ययसंभावनानर्हतया दुस्त्यजतया चानुबन्धिन आशापस्यानुभावनीयत्वाच्चैतावतो दुःसहस्य क्लेशराशेरपरिसमाप्तत्वाच्चैतद्देहारम्भकाणां दुष्टदुष्टादृष्टानां तथेति प्रतिपद्य, सद्य एवाभिसारार्हमशेषवेशं, 'भगवन्! यथाऽऽज्ञापयसि न किमप्यशक्यं तपस्विनां भवद्विधानां, भवत्प्रसादो हीतरानभिज्ञातामेव मां सम्प्रत्येव स्वभवनमपि प्रापयेत्। अन्यदपि मद्विडम्बनापाकरणानुरूपं विदध्यादेव, किन्तु मन्दाया मम कृते तत्र जने कष्टं दशान्तरमासादितवति गृहान् गच्छन्ती समभ्युपगतमर्यादा-

महान्—त्रिकालज्ञः। प्रमाणाभासान् निरस्यति—न **चास्येति**। भ्रमोऽतस्मिन्—तद् बुद्धिः, यथा शुक्तौ रजतबुद्धिर्भ्रमः। 'प्रमादोऽनवधानता'। विप्रलब्धुमिच्छा विप्रलिप्सा वञ्चनेच्छा। करणानामिन्द्रियाणामपाटवं वैकल्यं वा नैव संभवति। स्वयं स्त्रीत्वेन परिणतस्यास्य कुतः करणपाटवमित्याकाङ्क्षायामाह—**शरीरमेवेति**। **स्थलविशेषः** शरवणम्। प्रभावस्तु न विपर्यस्तः। ननु शापावसानं कथं निश्चीयेत—इत्याकाङ्क्षायामाह—**भगवदिति**। प्रत्यक्षानुभूतं शापवाक्यं दृष्टान्तीकृत्य शापान्तवाक्ये प्रामाण्यं निश्चीयते। संशयमापन्नः सांशयिकः संशयापन्नमानसः, तस्य भावः संशयिकत्वम्, संशययुक्तमनस्कतया हेतोः शंकाविषयो न कर्तव्यः शापान्तः-कर्म, भवत्या कर्त्री— **एतदाकर्ण्य इति सा समाश्वासयामासेति पूर्वेणान्वयः** ॥ १५५ ॥

**ततोऽहं** तदुपदेशरसायनं हृदयेन धृत्वा—इमं महत्तरुमाश्रित्य निवासधियं **निबद्धवत्यस्मि**। तद्वचनस्य—विपर्ययो मिथ्याज्ञानं तद्विषयिणी या संभावना-तस्या अनर्हतया। आशापस्य शापपर्यन्तस्य—एतद्देहजनकानाम्। दुष्टदुष्टानि दुष्टप्रकाराणि ( प्रकारे गुणवचनस्येति द्वित्वम् ) यानि—अदृष्टानि प्राक्तनकर्माणि, तेषाम् अनुभवनीयत्वादवश्यभोक्तव्यत्वादित्यनेनान्वयः समुच्चीयते चकारेण। प्रतिपद्य स्वीकृत्य। इतरैः कलावतीभवदतिरिक्तैर्न अभिज्ञाता तां तादृशीमेव। प्रापयेत् = प्रापयितुं समर्थः, भवत्प्रसादः कर्ता, ( शकि लिङ् चेति शक्यर्थे लिङ्, भवन् विद्यमानः प्रसादो भवत्प्रसादः, अतो न पौनरुक्त्यं भवद्विधानामित्यनेन )। विदध्यादेव = विधातुं शक्नुयादेव, नात्र सन्देह—इत्यर्थः। तत्र जने = प्रिये मानसकेतौ—दशान्तरं राक्षसत्वम् प्राप्तवति, सम्यग्—अभ्युपगतोऽङ्गीकृतो

भङ्गभारापि द्वितीयं कृतघ्नभावमात्मनि समारोपयेयम् । अतोऽत्रैवान्यतम-माश्रित्य प्रदेशं वन्येन विधिना वर्तमाना निवसेयमिति स्पृहयामि, तदिहा-नुग्रहमभ्यनुज्ञया भगवता विधीयमानमपीत्युक्त्वा, 'मा कदापि साहसं कार्षी-रार्षीयं प्रक्रिया न जातु विक्रियामासादयित्रीति' तदुपदेशरसायनं हृदयेन धृत्वा, जीवितप्रियजीवितयोः प्रातिकूल्यानुकूल्यसम्पादयितारं तमेव सादरं प्रणम्य, मद्भद्देवाऽनभ्युपगतगृहगमनपक्षया कलावत्याऽनुगम्यमानाऽस्य महा-सरसो नातिदूरमिमं महातरुमाश्रित्य निवासधियं निबद्धवत्यस्मि' ॥१५६॥

अथ तथाविधमद्वृत्तान्तदर्शनवृत्तान्तःकरणखेदायां कलावत्यामिव जीवनं प्रत्यनादरं विभावयन्त्यां विभावर्यां, तादृशमदीयदुर्दशोदीक्षणेन दूय-मानानां वनलतानां बाष्पपृषत्प्रकरेष्विव तुन्दिलेषु मन्दमारुताहतेष्ववश्याय-

---

मर्यादायाः कन्यकासमाचारस्य यो भङ्गः स्वेच्छाभिसाररूपः—तस्य भारोऽपवादो यया तादृशी सत्यपि । कृतमुपकारं हन्तीति कृतघ्नस्तस्य भावस्तम्—अकृतज्ञत्वम्। आत्मनि मदयन्त्यां, मयि, समारोपयेयम् = समारोपणावसरमानयेयम् ( प्रैषाति-सर्गप्राप्तकालेषु कृत्याश्च इति प्राप्तकाले लिङ् , संभावनायां वा, ) पूर्वं स्वैरमाग-च्छन्त्या मर्यादाभङ्गः कृत एव इदानीं गृहगमने कृतघ्नत्वं स्यात्, मत्कृते शप्तस्य मानसकेतोः शापावसानपर्यन्तमत्रैवावस्थानस्योचितत्वादित्यर्थः। अतः कारणात् अपि स्पृहयामीत्यस्यानुषङ्गः । इत्युक्त्वा—धृत्वा, सादरं प्रणम्य, आश्रित्य निवास-निश्चयं कृतवत्यस्मि—इति भावः । अन्यतमं कमप्येकं, वन्येन वानप्रस्थोचितेन वर्तमाना वृत्तिं कुर्वती । निवसेयम् = निवासं कर्तुम् अर्हाऽस्मीति स्पृहयामि, ( अर्हे कृत्यतृचश्चेति लिङ् )। मा कदापि इत्यारभ्य आसादयित्री—इत्यन्तं तपोनिधि-वचनम् , एतदेव रसायनम्। रसायनं हरीतकी—"स्मृतिं बुद्धिं प्रमोहञ्च जयेच्छीघ्रं हरीतकी" च. र. पा. १ इत्यादि वचनानुसारात् बुद्धिप्रमोहहरी, तथा—तपो-निधिवचनं मदयन्तीबुद्धिप्रमोहहरमिति रसायनम् , आधिनिवारकस्य—उपदेशरसा-यनस्य हृदयेन धारणमुचितम् , रोगौषधयोः सामानाधिकरण्यात् ॥१५६॥

**अथाऽहं**—भानवीयैः **गभस्तिभिः** करैः लोहितं देहं वहन्तीषु हरित्सु—**उत्थाय बिन्दुसरोजले** विहिताऽवगाहा, दुकूलं विहाय, वल्कलं परिगृह्य, **नगेन्द्रकन्यामुपचर्य्य—इमं देशमभ्यागाम्** । तथाविधः पूर्ववर्णितप्रकारकः ( विफलप्रवृत्तिः ) यो मम वृत्तान्तः = वार्ता तस्य दर्शनेन वृत्तः = जातः—अन्तःकरणऽखेदो मनोव्यथा यस्यास्तथाभूतायां विभावर्याम्=तम-स्विन्यां विभावयन्त्यां = प्रकाशयन्त्यां सत्याम् । दुर्दशादर्शनेन, दूयमानानां

बिन्दुषु दृश्यमानेषु, मत्कृतेरसामञ्जस्यज्ञानात्सञ्जातकरुणानां काननानो-कहानां क्रन्दितेष्विव शकुनिकुलकलकलप्रलापेष्वाकर्ण्यमानेषु, रजनिमभि-व्याप्य जनितप्रजागरे क्रमेण क्षीयमाणरुचौ मदीयदेह इव चन्द्रमसि मन्दतामापद्यमाने, चिरादनालोकितां मां चिचेतुकामासु सहचरीष्विव किञ्चित् प्रकाशमानमुखासु दिशासु दृश्यमानासु, अप्रयोजनतया सखी-जनेन निक्षिप्तैर्मदर्थमुपकल्पितैः कुङ्कुमाङ्गरागैरिव गभस्तिभिर्भानवीयैर्लोहि-तं देहं वहन्तीषु हरित्सु, उत्थायाहमिन्दुकरोज्ज्वले बिन्दुसरोजले विहिताव-गाहा, विहाय चन्द्रातपच्छेदमिव दुकूलं, परिगृह्यारुणकरैकदेशमिव वल्कलं, तद्वचसि प्रामाण्यनिश्चयादेकमेव कम्बुवलयं परिशेषयन्ती, सदसत्कर्मसा-क्षिणं भुवनचक्षुषमुपस्थायोपक्रान्तं काम्यमपि कर्म त्यज्यमानं प्रत्यवायाय जायत इत्यभियुक्तमर्यादामुपादाय लज्जया सखीजनदर्शनं परिजिहीर्षुस्तदा-

---

सन्तप्यमानानाम् । पृषत्प्रकरो बिन्दुसमूहः । 'अवश्यायस्तु नीहारः, कारुण्यं करुणा घृणा, गहनं काननं वनम् , अनोकहः कुटः शालः, क्रन्दितं रुदितम् , शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः, सजातीयैः कुलम्, कोलाहलः कलकलः, प्रलापोऽनर्थकं वचः' इति—अमराभ्यसनेन सर्वं सुगमम् । क्षीयमाणा हीयमाना रुचिः कान्तिर्यस्य । चिचेतुकामासु = पुनः पुनः भृशं चेतुकामासु ( यङ् लुगन्ता-त्तुमुन् बहुव्रीहौ 'तुं काम मनसोरपी'ति तुमोऽन्त्यलोपः ) दिशासु = दिक्षु ( भागुरिमतेन टाप् ) । बिन्दुसरः पूर्वं वर्णितम् । अवगाहः स्नानम् । चन्द्रज्यो-त्स्नाखण्डमिव दुकूलमुत्तरीयं त्यक्त्वा, सूर्य्यकिरणखण्डमिव वल्कलं भूर्जप-त्रादिकम् । तद्वचसि तपोनिधिवचसि । कम्बुवलयं शङ्खमयं कटकम् । परितः शेषं कुर्वती, अन्यत्सर्वं भूषणजातं परिहरन्तीत्यर्थः । सदसत्कर्मणां प्रत्यक्षद्रष्टारम् ( कर्मसाक्षी जगच्चक्षुरंशुमाली त्रयीतनुः ) उपस्थाय=उपस्थानेन पूजयित्वा । उपक्रान्तं कृतारम्भं, काम्यं फलाऽभिसन्ध्या क्रियमाणं , कर्म = उपासनादिकम् , त्यज्यमानं सत् पापाय कल्पते—इति हेतोः । अत्रेदं बोध्यम्—कर्म त्रिविधं—नित्यं, नैमित्तिकं, काम्यञ्चेति । शास्त्राज्ञया राजाज्ञया वा यो यस्मिन्कर्मणि नियुक्तस्तत्तस्य नित्यम् 'अहरहः सन्ध्यामुपासीत'—इति विहितं सन्ध्योपासनं शास्त्रीयं नित्यं कर्म, तदकरणे पापभागी स्याद् द्विजातिः। प्रतिदिनं पत्रं वितरणीयमिति नियुक्तस्य पत्रहरस्य पत्रवितरणं नित्यं लौकिकं कर्म, तदकरणे दण्ड्यः सः । नैमित्तिकं ग्रहण-स्नानादि । काम्यं कामनया क्रियमाणम् । तत्र नित्यनैमित्तिकयोरकरणे परित्यागे वा प्रत्यवायः = पापम् । कृतारम्भस्य काम्यस्यापि परित्यागे प्रत्यवायो भवत्येव । इतिहेतोरभियुक्तानां मान्यानां मर्यादां = स्थितिम् । परिहर्तुमिच्छुः । औत्सर्गि-

गमनसमयादौत्सर्गिकात्प्रागेव गत्वा भगवतीं नगेन्द्रकन्यां तत्कालोचितेन सलिलकुसुमात्मकेनोपचारेणोपचर्य्य मन्दमागेमं देशमभ्यागाम् ॥१५७॥

कलावती तु तदशक्यप्रतीकारमपि तमर्थं प्रणयसामर्थ्यमात्रेण सखीभ्यो विवक्ष्यन्ती, किञ्चिद्विलम्ब्य, दिनान्तरीयतदागमनसमयसजातीयसमयं प्रतीक्षमाणा, प्रमाणापेतमपि तत्सर्वं मदीयदुर्विलसितं समागतां मन्दारमञ्जरीमपि श्रावयाम्बभूव ॥१५८॥

सा तु तदाकर्णनाऽनन्तरमेव भूयस्तमां दूयमानहृदया प्रणयमात्रं प्रमाणयन्ती पूर्वापरमनाकलय्य, 'नाहमेवं वेदनया कदर्थ्यमानायां मदयन्तिकायामात्मानं विवाहविषयकोत्साहसाहसेन परिहासयिष्यामीति' दाक्षायणीमेव समाचचक्षे । निर्वर्तितदेवतासपर्या च कलावत्या दर्श्यमानमार्गा तत्कालमिलितेन मत्सखीसमूहसहितेन स्वसखीसमूहेन सह समागम्यैकमात्रदिवसानन्तरितदर्शनामपि मां दशाविशेषवशेन बहुकालादनालोकिता-

---

कात् स्वाभाविकात् । नगेन्द्रकन्यां सर्वमङ्गलाम् **मङ्गलागौरीम्** । इमं प्रदेशं = सहकाराऽनोकहस्य तलम् अभ्यागाम्—'इणो गा लुङि—इति' गाऽऽदेशः ॥१५७॥

**कलावती तु—किञ्चिद्विलम्ब्य—तत्सर्वं मदीयदुर्विलसितं समागतां मन्दारमञ्जरीमपि श्रावयाम्बभूव ।** अशक्यः प्रतीकारो यस्य—तमर्थं = विप्रलम्भम्। 'प्रश्रयप्रणयौ समौ'। वक्तुमिच्छन्ती विवक्ष्यन्ती। समययापनं विलम्बः । दिनान्तरीयः = अन्यदिनसंबन्धी यः—तदागमनसमयः = सखीजनाऽऽगमनसमयः, तस्य सजातीयः सदृशः यः समयः प्रकृतदिवसीय—मुहूर्तदण्डादिकः समयस्तं प्रतीक्षमाणा परिपालयन्ती, दिनान्तरीयतदागमनसमयस्य व्यतीतत्वात् सजातीयत्वविशेषणनिवेशः । समययोः साजात्यञ्च—समानसूर्यगत्यवच्छिन्नत्वं बोध्यम् । प्रमाणानि प्रत्यक्षादीनि अपेक्षितानि यस्मिन् तत् । श्रावयाम्बभूव = शब्दप्रामाण्येन प्रतिपादयामास ॥१५८॥

**सा तु**—प्रणयमात्रं प्रमाणयन्ती नाहमेवमात्मानं परिहासयिष्ये—इति **समाचचक्षे, निर्वर्त्तितदेवतासपर्या च मुहूर्तमिवासिष्ट** । भूयस्तमामत्यन्तम् । अनाकलय्य=अविचार्य । वेदनया=यातनया, कदर्थ्यमानायां = पीड्यमानायाम् । विवाहविषयको य उत्साहः=उद्योगस्तेन कारणेन । न परिहासयिष्यामीति हास्यास्पदं न नेष्ये इति प्रकारेण दाक्षायणीमेव सर्वमङ्गलामेव समाचचक्षे = आख्यातवती । अथ च निर्वर्तिता कृता देवतासपर्या यया सा तादृशी सती, एकमात्रदिवसेन अनन्तरितम् अव्यवहितं दर्शनं यस्यास्तथाभूतामपि मां,

मिव मन्यमाना परिरम्भादिना संभाव्य, महारम्भाणि बाष्पवारीणि विसृजन्ती मुहूर्तमिवासिष्ट ॥१५९॥

अहं तु कलावतीसकाशात्तथाविधां तस्याः सन्धामवधार्य, कुतश्चिदापतता महता प्रवाहान्तरेणापसार्यमाणपूर्वप्रवाहेव सरिन्निष्फलेनाप्युद्वेगवता हृदयेन विवक्षावशादात्मानं स्तम्भयित्वा, निरुद्ध्य बाष्पवेगं तामभ्यधाम्—'सखि मन्दारमञ्जरि! मन्दाऽहमञ्जलिबन्धेन विज्ञापयामि यदिदं विधिनैवंविडम्बितायां मयि मृतजीवनाय जीवन्मारणमिवान्धचक्षुर्गोलकभेदनमिव गण्डस्योपरि विस्फोटकमिव क्षते क्षारप्रक्षेपमिवात्यन्तमप्रयोजकं प्रतिज्ञाधिरोहमहासाहसं विहितवत्यसि, किमिदं तवोपकारः, उत ममैवापत्प्रतीकारोपायः, अथ बन्धुजनवैमनस्यसंमार्जनम्, आहोस्वित्पारलौकिकोपकरणं, किमुत मद्ब-

---

परिरम्भादिना = आलिङ्गनादिना। महारम्भाणि = अत्यन्तानि। बाष्पवारीणि = अश्रूणि। मुहूर्तप्रायम् आसिष्ट = आसीनाऽभूत्। आसु-उपवेशने लुङि तङ्, उपाविक्षदित्यर्थः ॥१५९॥

अहं तु—इति तामभ्यधाम्—'सखि मन्दारमञ्जरि! विरम्यताम्—ईदृशादभिनिवेशादिति'। सा तु—एतदुपश्रुत्य–मामवादीत्–'सखि मदयन्तिके! मदीयं हृदयं नाज्ञासीः,? यत् समानसुखदुःखतैव सखिभावस्य स्वरूप'मिति–प्रसिद्ध एव लोकप्रवादः, तदतःपरं शापितासि मच्छरीरस्य स्पृष्टिकया यदि भूयोऽपि कदाचिदेवमभिदधासि—इत्यभिधाय व्यरमत्। अहन्तु–मन्दारमञ्जरीं तस्यावगच्छ कथञ्चिद्विसर्ज्य तत्कालाऽऽगतौ पितरावपि व्यसर्जयम्। तस्याः = मन्दारमञ्जर्याः, सन्धां=प्रतिज्ञाम्। अपसार्यमाणः पूर्वप्रवाहो यस्यास्तादृशी नदीव। विवक्षाया भाषणेच्छाया वशादधीनत्वात्। आत्मानं चेतम्। स्तम्भयित्वा=अवरुध्य, धैर्यं धृत्वा इति भावः। बाष्पवेगमश्रुवेगम्। मेलितौ करावञ्जलिः। विडम्बितायां वञ्चितायाम्। मयि=मदयन्त्याम्। समन्याः–उल्लिखति–मृतस्य शवस्य जीवनाय हेतोः जीवतः सप्राणस्य मरणमनुचितम्, मृतस्य जीवनोपायाऽभावात्, तदिव–अन्धः स्वयं दुःखी, तत्राऽपि चक्षुर्गोलकभेदनमतीव दुःखकरन्तद्विव। गण्डः स्वरूपतो दुःखम् तस्योपरि पिटकः किमिव दुःखं न जनयेत् तद्वत्, क्षतं स्वयमसह्यवेदनं तत्र क्षारस्य भस्मनः प्रक्षेपः किमिव कष्टं नोत्पादयेत, स इव अप्रयोजकम् = अननुकूलम्। प्रतिज्ञाऽधिरोहस्य = प्रतिज्ञापालनस्य–साहसं धार्ष्ट्यं कृतवत्यसि। 'साहसन्तु दमे दुष्करकर्मणि'। 'अविमृश्यकृतौ धार्ष्ट्ये, इति हैमः। प्रतिज्ञापालनविषयकं दुष्करं कर्म वा (विष-

नवासानुकूलं, किं वा तपस्युपयोगीति नावधारयामि तद्विरम्यतामस्मात् क्लेशमात्रफलकादीदृशादभिनिवेशादिति' ॥१६०॥

सा त्वेतदुपश्रुत्य समभ्यधिकैरश्रुभिरसुमर्थं हृदयान्तर्गतमात्रं प्रक्षालयन्तीव सकोपमिव सोपालम्भमिव मामवादीत्-'सखि मदयन्तिके! यदेवमभिदधासि तत्किमिदानीमेव ते विपर्यस्ता प्रकृतिः, किं वा प्रस्मृतवत्यसि प्रणयविशेषम्, उत नाकलसि ममाभिप्रायम्, अथ पूर्वमपि प्रणयाभिनयमात्रमाचरन्ती मदीयं हृदयं नाऽज्ञासीः, यत्समानसुखदुःखतैव सखिभावस्य स्वरूपमिति प्रसिद्ध एव लोकप्रवादः। प्रयोजनं तु वस्तुतोऽस्तु मा नाम भूद्वा किन्तद्गवेषणप्रयासेन कार्यं, यदिहोदयत्येव पीयूषमयूखे जलनिधिः समुल्लसति, द्रवताञ्चोपैति चन्द्रकान्तोपलः, मुकुलायते च कमलं, तत्केनानुरोधेन केन वा विरोधेनेति तावदवधारय, वस्तुस्वभावे च प्रयो-

---

यत्वं पष्ठ्यर्थः)। अत्र विकल्पाः-किमिदमित्यादयः। **नावधारयामि**=न निश्चिनोमि। तादृशप्रतिज्ञापालनस्य त्वदुपकार-मदापत्प्रतीकारादीन् प्रति कारणत्वमेव नास्तीत्यर्थः। तत्=तस्मात, विरम्यताम्=निवर्त्यताम्, अस्मात्=पूर्वोक्तात्, क्लेशमात्रं फलं यस्य तस्माद्, ईदृशात्='यदि मदयन्तिकाया विवाहो न भवेत्तर्हि विवाहमहमपि न कुर्य्याम्'-इत्याकारकाद् अभिनिवेशादाग्रहात्। अहन्तु-इति-अभ्यधामिति पूर्वेणान्वयः ॥ १६० ॥

समभ्यधिकैरतिमात्रैः। असुमर्थं प्रतिज्ञाधिरोहणम्। विकल्पानाह-**विपर्यस्ता**=विपरीता जाता। प्रस्मृतवत्यसि=प्रनष्टस्मृतिवत्यसि। अथ=अथवा—पूर्वमपि=सर्वमङ्गलापूजावनविहारादावसरे प्रणयस्य प्रेम्णोऽभिनयमात्रम्=अवस्थानुकरणमात्रम् आचरन्ती कुर्वती सती मम चित्तं नाज्ञासीः, वास्तवस्नेहाऽभावादित्यर्थः। ('भवेदभिनयोऽवस्थानुकारः, स चतुर्विधः। आङ्गिको वाचिकश्चैवमाहार्यः सात्त्विकस्तथा"॥ सा. द. ६ प.)। समर्थयति **यदिति**। समाने सुखदुःखे ययोस्ते समानसुखदुःखे, तयोर्भावः समानसुखदुःखता, सखिभावस्य सखित्वस्य स्वरूपमिति प्रसिद्ध एव जनरवः। किमिदं तवोपकारः? इत्यादिना प्रयोजनं पृष्टमासीत्-तदुत्तरयति-**प्रयोजनन्त्विति**। गवेषणस्यान्वेषणस्य परिश्रमेण किं कार्यम्। दृष्टान्तमुपन्यस्यति **यदिति**। उदयत्येव=उद्यत्येव चन्द्रे समुद्रः समुच्छलति, चन्द्रकान्तमणिश्च द्रवीभवति, तत्केन-अनुरोधेन, कमलं मुकुलीभवति तत्केन विरोधेन-इति तु प्रथमं निश्चिनु। विचित्रो हि वस्तुस्वभावः, तत्र च प्रयोजनं मार्गयन् मनुष्यः, विचारशालिनामुपहासविषय एव भवेत्-यदाह भास्करः-

जनं पर्येषयन् जनो महतामुपहास्य एव स्यात्। स्वयं विहितायां प्रतिज्ञायां साभिनिवेशा मां तद्विपरीतं प्रयोजयन्ती तुरगारूढस्यैव तुरगविस्मरणमनुहरसि तदतः परं शापितासि मच्छरीरस्पृष्टिकया यदि भूयोऽपि कदाचिदेवमभिदधासि" इत्यभिधाय च व्यरमत् ॥१६१॥

अहं तु-मया सहैव वने वस्तुकामां स्वशरीरक्लेशमगणयन्तीं मन्दारमञ्जरीं वयस्यावर्गं च भवनादप्यऽभ्यधिके सखीसमाजे विपिनवासप्रतिज्ञा मम भवतीभिरुपरुद्धा स्यादिति कथञ्चिद्विसर्ज्य तत्कालागतौ पितरावपि तयैव विधया व्यसर्जयम् ॥१६२॥

अथैकदा जगदम्बिकार्चनसंविधानानुरोधादन्वहमविच्छिद्यमानगतागतप्रसङ्गया "कथञ्चित्प्रार्थनाभिर्वयस्याभावमुपलम्भितेन परिग्राहितदिव्या-

---

'यथोष्णताऽर्कानलयोश्च, शीतता विधौ, द्रुतिः के, कठिनत्वमश्मनि।
मरुच्चलो, भूरचला स्वभावतो, यतो विचित्रा वद वस्तुशक्तयः'—इति ॥

निगृह्णाति स्वयमिति। मदयन्तिका हि स्वयं वनवासप्रतिज्ञायां साऽऽग्रहा सती, मन्दारमञ्जरीं प्रति कथयति 'विरम्यतामस्मादभिनिवेशादिति'। तदाह तद्विपरीतमिति। प्रयोजयन्ती=प्रेरयन्ती। समस्यामुपन्यस्यति—तुरगेति। अनुहरसि = अनुकरोषि। तदित्यव्ययो हेत्वर्थे। अतः परमेतस्मात्समयादुत्तरं, शापितासि = कारितशपथासि, अहं त्वां शपथं कारयामीत्यर्थः (हृक्रोरन्यतरस्याम्)। स्पर्शनं स्पृष्टिः, कुत्सिता स्पृष्टिः स्पृष्टिका, मच्छरीरस्येति षष्ठीसमासः। स्त्रीस्वभावोक्तिः। अभिधाय कथयित्वा व्यरमत (व्याङ्परिभ्यो रमः) ॥ १६१ ॥

अहन्तु—मदयन्तिका तु— सखीसमाजे—भवनादपि अधिके सति—भवतीभिः कर्त्रीभिः, मम वनवासप्रतिज्ञा रुद्धा भवेदित्युक्त्वा कथञ्चिन्महतानुरोधादिना विसर्ज्य गृहान् गमयित्वा, पितरौ = जननीजनकावपि तयैव विधया वनवासप्रतिज्ञोपरोधप्रकारेण—व्यसर्जयम् विसृष्टवती।

अतिदुष्करमपि कार्य्यं सिद्ध्यति यस्य प्रभावेण।
तपसे देवाय नमस्तपसोऽधिष्ठातृरूपाय ॥ १६२ ॥

अथैकदा—मन्दारमञ्जर्यां (कन्यास्वरूपेण तपोनिधिना च) सहासीनायां मयि स एव सुबाहुनामा दानवेन्द्रः,—(तपोनिधिं प्रति कन्दरमालिनः सन्देशमभिज्ञाय) मन्दारमञ्जरीलाभे द्वारभूतां मामभिज्ञाय सप्रपञ्चमाख्यातवान्। जगदम्बिकायाः पूजनकार्यानुरोधात् प्रतिदिवसं विच्छेदरहितयाताऽऽयातप्रसङ्गया—मन्दारमञ्जर्यां सहासीनायाम् मयि इत्यनेनान्वयः। कथञ्चिदिति। रूपपरिवृत्ता-

ङ्गरागवसनाभरणप्रसाधनेन तपोनिधिना कन्यास्वरूपेण" मया सममनिरूप्य भेदं सारूप्यं बिभ्राणेन दृश्यमानेन मदीयं सुखमयं कष्टमयं चावस्थाद्वयं युगपदेवाऽनुभवन्त्या मन्दारमञ्जर्या सहासीनायां मयि यो मया पूर्वं मानसकेतुना सह समालपन् दृष्टः स एव सुबाहुनामा दानवेन्द्रो दानवेन्द्रेण कन्दरमालिना दौहित्रस्य तादृशीं दशामुपशृण्वता तत्समीपं प्रहितो, रूपसाम्येन वेषसंवादेन च मयि तपोनिधौ च सञ्जातविपरीतसमूहालम्बनोऽपि वयस्यान्तराणां सकाशादवधारिततत्त्वः समागम्य कृतप्रणामो, 'महर्षे ! कन्दरमाली मातामहो बाहुभ्यामुपगूह्य शिरस्याजिघ्रन् भवदनागमनकारणेन तवाकस्मिकेन रूपव्यत्ययेन दूयमानस्त्वां समादिशति, एवं संवृत्तेऽपि नाऽऽत्मानमत्यन्तं वैमनस्याय समर्पयितुमर्हसि, विदितास्ते भुवनवृत्तान्ताः, अध्यक्षित एव धर्माः, विजिता एव सर्वक्लेशाः, अपि च दौहित्र इति स्नेह एव मां मुखरयति, भवाँस्तु जगतां निग्रहाऽनुग्रहसमर्थः परानपि समाधातुं शक्तोऽस्ति, किम्पुनरात्मान'मित्यभिधाय, स्वयं प्रत्यभिज्ञायमानतया चिरात्प्ररूढस्नेहतया

---

वपि तपस्वित्वाऽनपायात् । मया मदयन्तिकया सह निरूपयितुमशक्यः भेदो यस्य तादृशं सारूप्यं सादृश्यं धारयता लक्ष्यमाणेन, सादृश्यं बिभ्राण इव दृश्यमानेन तपोनिधिना कन्यास्वरूपेण पूर्वं वनविहारे कुसुमावचये समालपन् "समुपहिताञ्जने"-त्यादिश्रवणानन्तरं कथाप्रश्नसंलापं कुर्वन् । दौहित्रस्य=तपोनिधेः । मयि=मदयन्तिकायां कन्यारूपे समानरूपवेषवति तपोनिधौ च सञ्जातं विपरीत-समूहालम्बन-ज्ञानं यस्य तादृशोऽपि, मदयन्तीं तपोनिधित्वेन, तपोनिधिं मदयन्तीत्वेन ज्ञान-विषयीकृत्येत्यर्थः । अयं भावः—घटत्वेन घटं विज्ञाय, पटत्वेन पटं विज्ञाय-'इमौ घटपटौ' इत्याकारकं ज्ञानं यथार्थं समूहालम्बनम् । घटं पटत्वेन, पटं घटत्वेन ज्ञानवषयीकृत्य घट-पटावित्याकारकं ज्ञानं विपरीतं समूहालम्बनं तद्वदत्रापि सङ्गमनीयम् । युगपदनेकव्यक्तिविषयकं ज्ञानं समूहालम्बनमित्युच्यते । सख्यन्त-राणां सकाशात्-अवधारितं तत्त्वं यथार्थाऽवबोधो येन तादृशः-मदयन्ती-तपोनिधि-विषयक-यथार्थज्ञानवान् सन् समागम्य = समीपमागम्य । महर्षे ! = तपोनिधे । अध्यक्षितः प्रत्यक्षीकृतः । सर्वक्लेशाः = अविद्याऽस्मितारागद्वेषाऽभिनिवेशाः-पञ्च क्लेशाः । निग्रहो नियन्त्रणम् , अनुग्रहः कृपा, तयोः शक्तः । समाधातुम् = आश्वासयितुम् । भवांस्तु शक्तोऽस्ति-इत्यन्वयः । 'तपोनिधिविषये'-इत्यभिधाय,-स्वयमात्मना प्रत्यभिज्ञायमानतया परिचितत्वेन, 'सेयं मदयन्तिका, या मानस-

त्र मन्दारमञ्जरीलाभद्वारभूतां मामभिज्ञाय सप्रपञ्चमाख्यातवान् ॥१६३॥

"भवति ! तदानीं मानसकेतोः सकाशादाकर्णित एव भवत्या महासुरेन्द्रः कन्दरमाली, तदात्मजन्मा च समरमुखेषु स्वावधिकाऽभ्यधिकभावाऽभाववत्कृतगरुडध्वजो विजयध्वजो नाम। तत्र कन्दरमाली पुरन्दरप्रमुखान् वृन्दारकान्निर्जित्य बहुतरं समयं भुक्तसकलविषयोपभोगतया, शुद्धतया च, मुनीनां सङ्गत्या च, धर्मासक्तया च प्रह्लाद इव विहायाऽधर्मप्रसङ्गं, परिजहार त्रिदशाभिभवविषयकमभिनिवेशविशेषम्। विजयध्वजस्तु कन्दरमालिनन्दनो गत्वा मन्दराचलममन्दसमान्दोलितदुग्धोदन्वदुत्कलिकाकलापपरिशीलितामन्यतमां तदीयमेखलामवलम्ब्य, मयदानव इव त्रिनयनं परितोषयितुकामो बहुतराणि दिव्यानि हायनसहस्राणि तपस्यन्नेवातिवाहयाम्बभूव ॥१६४॥

---

तावनुरक्ता मया दृष्टा' इत्याकारक- प्रत्यभिज्ञाविषयीभूतत्वेन। 'न केवलं परिचय एव साहाय्ये कारणं स्नेहोऽपीति' न्यायादाह—चिरादिति—कुञ्जदर्शनात्। अभिज्ञाय ज्ञात्वा, सप्रपञ्चं सविस्तरम्, आख्यातवान् = आख्यानं प्रतिपादितवान् ॥ १६३ ॥

मन्दारमञ्जरीलाभे—इत्युक्तम्, कस्य कृते—इत्याकाङ्क्षायामाख्यानमारचयन् 'समालवीथी'वृत्तं स्मारयति—भवति ! इति। सम्बोध्या मदयन्तिका, संबोधकः सुबाहुः। भवति ! भवत्या कन्दरमाली श्रुत एव, तदात्मजन्मा च विजयध्वजो नाम, तत्र कन्दरमाली प्रह्लाद इव······विजयध्वजस्तु त्रिनयनं परितोषयितुकामो दिव्यानि हायनसहस्राणि तपस्यन्नेवातिवाहयाम्बभूव। समरारम्भेषु—स्वः विजयध्वजोऽवधिः सीमा यस्य सः स्वाऽवधिकः-स चासौ—अभ्यधिकभावः आधिक्यम्—तस्य योऽभावः 'विजयध्वजादभ्यधिको न' इत्याकारकः—अभावः, तादृशाभाववान् कृतः—गरुडध्वजो दैत्यारिर्येन तादृशः, 'गरुडध्वजः विजयध्वजादभ्यधिको न' इत्याकारकाऽभाववान् गरुडध्वज इत्यर्थः। जितगरुडध्वज इति तात्पर्यम्। भुक्ताः सकलविषयोपभोगा येन तस्य भावस्तया, भोगात्तदिच्छाविनिवृत्तिः। त्रिदशानां देवानां योऽभिभवः पराजयः तद्विषयकमभिनिवेशमाग्रहं परिजहार त्याज। दुग्धोदन्वतः क्षीरसागरस्य या उत्कलिकाः—तरङ्गास्तासां कलापैः समूहैः परिशीलितां व्याप्ताम्—अन्यतमामेकामपि तस्य मन्दराचलस्य मेखलां कटिप्रदेशम् (लाक्षणिकोऽयं शब्दः)। मयदानवस्तपः कृत्वाऽऽदित्यप्रसादाज्ज्योतिर्विज्ञानं लेभे, तस्य रचितः सूर्यसिद्धान्तः प्रसिद्धः, स इव। अतिवाहयाम्बभूव यापयामास। अत्रेदं बोध्यं, पुराणेषु क्षीरसागरौ द्वौ। प्रथमो-'लवणेक्षु-सुरा-सर्पि-दधि-दुग्ध-जलैः सम'मिति प्रतिपादितः षष्ठो वलयाकारः। अन्यस्तु—"उत्तरे हिमवत्पार्श्वे क्षीरोदो

तथाहि—प्रखरपवनप्रकीर्यमाणतप्तसिकताशकलपुनरुक्ततरणिकिरणाऽऽशुशुक्षणिवर्षेषु निदाघदिवसेषु चतुर्णां ज्वलतां जातवेदसामन्तरालवर्ती कमलवन्मार्तण्डमण्डलमात्रनिबद्धदृष्टिरभवत्; तिरोहितहरिदन्तरिक्षाऽन्तरेषु वर्षत्सु बलाहककुलेषु विरामरहिताभिरतिप्रमाणाभिर्धाराभिरभिहन्यमानः कदम्बतरुरिवाऽनावृतोऽपि न विकारमभजत्; अनवरतनीहारनिवहबध्यमानदुर्दिनासु हैमवतीषु रजनीषु अश्वप्रतिग्राहक इव जलोदरं न व्यभिचचार; कदाचिच्छकुन्त इव फलमयमाहारमकल्पयत्; कदाचित्पवन इव वृक्षादवशीर्णानि पर्णानि स्वान्तर्गतान्याततान; जातुचिद्वैसारिण इव सलिलमेवाऽऽस्वादयामास, कदाचिदाशीविष इव पवनमात्रेण पिचण्डमापूरयाञ्चकार; जातुचिच्छिलापुत्रक इव एकाङ्गुष्ठमात्रेणाऽवतिष्ठमानोऽवयवावच्छिन्नं सर्वाङ्गीणं वा मन्दमपि स्पन्दं न

---

नाम सागरः। प्रारब्धं मन्थनन्तत्र देवैर्दानवसंयुतै" रिति-खण्डक्षीरसागरः, स एवात्रप्रतिपादितो मन्दरपरिसरे ॥ १६४ ॥

**तथा हि**= "ग्रीष्मे पञ्चतपास्तु स्याद्वर्षास्वभ्रावकाशिकः। आर्द्रवासास्तु हेमन्ते क्रमशो वर्द्धयंस्तपः"—मनुः। प्रखरेण तीव्रेण पवनेन वायुना प्रकीर्यमाणानि यानि तप्तसिकतानां शकलानि तैः पुनरुक्ता द्विगुणा ये तरणिकिरणाः तद्रूपो य आशुशुक्षणिः शिखावान् तस्य वर्षा येषु—तेषु ग्रीष्मदिवसेषु—ज्वलतां प्रदीप्यमानानां, चतुर्णामग्रतः पृष्ठतः पार्श्वयोश्च संधुक्षितानां जातं वेदयन्तीति जातवेदसस्तेषां पावकानां मध्ये वर्तमानः सहस्रपत्रवत्सूर्यबिम्ब एव संलग्नचक्षुरासीत्। कालिदासोऽपि—रघौ त्रयोदशे—'हविर्भुजामेधवतां चतुर्णाम्' इत्यादिना सुतीक्ष्णं राममुखेन वर्णयति। ग्रीष्मर्तुचर्येयम्। तिरोहितमाच्छादितं हरितां दिशामन्तरिक्षस्य गगनस्यान्तरमवकाशो यैस्तेषु वारिवाहककुलेषु वृष्टिं कुर्वत्सु विश्रान्तिरहिताभिः विपुलाभिर्धाराभिस्ताड्यमानः कदम्बपादप इव आच्छादनहीनोऽपि विकृतिं न भेजे। वर्षर्तुचर्येयम्। **अनवरतं** निरन्तरं नीहारनिवहैः कुहरसमूहैर्निबध्यमानं क्रियमाणं दुर्दिनं यासु तासु हैमवतीषु हैमन्तीषु यामिनीषु **जलोदरं** जलाशयमध्यं न व्यभिचरितवान् (आकण्ठमग्नः शीतोदे इति स्मृत्यन्तरात्), दृष्टान्तमाह—अश्वानां समुद्रोत्पन्नानां घोटकानां ( दरियाई घोड़ा ) प्रतिग्राहको ग्रहीता यथा—जलान्तः-प्रविष्टः सन् तन्मध्यं न मुञ्चति तथा। शीतर्तुचर्येयम्। अथाऽऽहारचर्यां वर्णयति—**कदाचि-**दित्यादिना। शकुन्तः पक्षी। अवशीर्णानि पतितानि। पर्णानि पत्राणि। अन्तर्मध्ये, उदरे च। वैसारिणो मीनः। आशीविषः सर्पः। पिचण्डमुदरम्। शिलापुत्रक—इव= पाषाणप्रतिमेव। अवयवावच्छिन्नं = करचरणादिवृत्ति, सर्वाङ्गीणं = सर्वशरीरनिष्ठं,

विभराम्बभूव । एवं तपस्यति तस्मिन् विश्वामित्र इव ब्राह्मणजातीयं तेजोमयं देहान्तरमापन्ने ततो निर्जग्मुर्जगन्ति सन्तापयन्त्यः समन्ताद्विहायस्तलमवलिहाना महाप्रवाहा दहनहेतयः; तत्प्रभावाद् विहिताभिभव इव धूमायमाने च दिङ्मुखैः सममन्तरिक्षतलेन पूर्ववददीप्यत निदाघदीधितिः; तत्तपोभीतानां दिक्पालानां सन्तापोष्णा निःश्वाससन्ताना इव मुहूर्तमपि न व्यरमन्त प्रचण्डाः करीषंकषा मरुतः; तद्गौरवाऽऽक्रान्तेवाऽऽत्मानं धारयितुमपारयन्ती भूतधात्री महीधरैः सहाऽनवरतमाचकम्पे; तद्भयावेशान्मार्गमस्मरन्त इव ग्रहगणाः प्रतिकूलां गतिमाकलयाञ्चक्रुः; प्रस्थातुमिच्छन्त्या महेन्द्रराज्यलक्ष्म्या नूपुरनिनाद इव भयाद्वेपमानस्य पाकशासनस्य परस्परमभिहन्यमानानां करवलयानां कलकलः समुदलसत्; तद्विजयलक्ष्मीकुसुमाञ्जलय इव निपेतुरकस्मादेवोच्चैःश्रवसो विलोचनाभ्यां जलधिमध्यवाससमयाऽन्तर्गतमुक्ताफलाऽनुकारिणो बाष्पोदबिन्दवः; कृताऽभ्यन्तरप्रवेशेन बहुलाङ्गलाभोपेतेन

---

वा स्पन्दं चलनं मन्दमपि ईषदपि न धारयामास। तपःप्रभावमाह—**एवमित्यादिना**। यथा-विश्वामित्रः—विप्रजातीयशरीरान्तरमापन्नः, तथा—तेजोमयं देहान्तरमापन्ने—विजयध्वजे ततः—तेजोमयात् तच्छरीरात्—दहनहेतयः = वह्निज्वालाः निर्जग्मुः। तस्य विजयध्वजस्य प्रभावात्—विहितः कृतोऽभिभवो यस्य तादृशः-इव निदाघदीधितिः सूर्यः, पूर्वस्मिन् काले—इव पूर्ववत् ( तत्र तस्येवेति वतिः ) न अदीप्यत = न चकाशे। क्व सति—अन्तरिक्षतले दिङ्मुखैः समन्ताद् धूमायमाने = च सति—इत्यन्वयः, तत्प्रभावात् इत्यस्योभयत्रान्वयः। पवनविकृतिं दिगीशभीतिञ्च दर्शयति—**तत्तपोभीतानामित्यादिना**। करीषं शुष्कगोमयपिण्डं कषन्ति—इति विग्रहे सर्वकूलाऽभ्रकरीषेषु कषः इति खच्, 'अरुर्द्विषदजन्तस्य मुम्'। भूकम्पं सूचयति—**तद्गौरवेत्यादिना**। अपारयन्ती=अशक्नुवती। भूतधात्री = रत्नगर्भा। महीधरैः पर्वतैः (सहयुक्तेऽप्रधाने—इति तृतीया)। भौमादीनां ग्रहाणां वक्रगतिमाह-**तद्भयावेशादिति**। महेन्द्रस्य कम्पेन सुरश्रियः प्रस्थानं सूचयति—**प्रस्थातुमिति**। उच्चैःश्रवसः अश्रुपातेन पुरन्दरपराजयं विजयध्वजजयञ्च सूचयति—**तद्विजयेति**। यदि समुद्रमथनात् पूर्वम्—उच्चैःश्रवसोन्तर्गतानि मुक्ताफलानि भवेयुः—तदनुकारिणो नेत्रजलबिन्दव—इति सम्भाव्योत्प्रेक्षा। चिन्तया—ऐरावतस्यापि मदशोषमाह— **कृतेति**। कृतः अभ्यन्तरे = जलान्तराले, चेतसि च प्रवेशः स क्रमो येन, बहुलः अङ्गानां हस्त्यश्वरथपदातीनां लाभेन = प्राप्त्या युक्तेन, बहुना लाङ्गलस्य—आभया—उपेतेन च तस्य बलं वीर्यमेव

तद्बलेन प्रतीपमाकृष्यमाणाः कलिन्दनन्दिनीकल्लोला इव न बाह्याऽभिमुखं प्रसस्रुरैरावतकुम्भस्थलदानवीचयः, स्वसमाकर्षणसंभावनया भीता इव गीर्वाणगणिकागणकेशपाशास्तत्यजुर्बाष्पविप्रुष इव कम्पमानकराभिः सखीभिरुद्बध्यमानाः सुमनसः; तद्भयातिशयादापूर्यमाणयोः सूर्याचन्द्रमसोरन्तर्मोहात्मकमिव बहिरप्यपर्वण्येव राहुरूपं तमो न व्यरमत्; तत्प्रभावोद्भाविताऽभिभवतया दवीयोविहारे विमुखीभवन्त्य इव विधुब्रध्नयोर्दीधितयोऽतिसन्धानधावनविधानात्परिधिं सन्दधिरे; तत्साध्वसाऽतिरेकाहितहेतिग्रहणशक्तिवैकल्यादिव विधृतसामिधेनीभिरध्वर्युभिः समिध्यमाना अपि न जज्वलुर्जातु वैतानिका जातवेदसः; तत्पराक्रमचिन्तया दिवानिशं विभ्रश्यन्तो विवस्वदादीनां तेजसामवयवा इव समालक्ष्यन्त पतयालवो महोक्षसमूहाः; तदीयविक्रमादभिमुखीभवितुमप्रतिभा देवताभिरध्या-

---

बलः = बलदेवः तेन प्रतीपं प्रतिलोममाकृष्यमाणाः कालिन्दीकल्लोला इव ऐरावतकुम्भस्थलस्य दानवीचयो मदतरङ्गाः बाह्याभिमुखं बहिर्भागं प्रति न अभिसस्रुः नाऽभिसरन्ति स्म। मदस्य कालिन्दीजलस्य च श्यामत्वं प्रतीपाभिसरणञ्च साधर्म्यम्। देवाङ्गनाकम्पमाह-**स्वसमाकर्षणेति**। सुमनसः पुष्पाणि-तत्यजुः,केशपाशाः कर्तारः। सुमनसो देवान् त्यक्ष्यन्तीति-अपशकुनेनेति सूच्यते । अपर्वणि राहूपरागमाह-**तद्भयातिशयादिति** । भयस्य अतिशयादाधिक्यात्-आपूर्यमाणयोः संश्रियमाणयोः, (सूर्यश्चन्द्रमाश्चेति द्वन्द्वे, देवता द्वन्द्वे चेति आनङ्) अन्तरन्तःकरणे-मण्डलाधिष्ठातुः देवस्येत्यर्थः, मोहात्मकं तम-इव-बहिर्बिम्बे राहुरूपं तमोऽमावास्याव्यतिरिक्तेऽपि काले सूर्ये, पौर्णमासीव्यतिरिक्तेपि काले चन्द्रे चादृश्यत-इत्यर्थः । विधुसूर्यमण्डलयोः परिवेशोऽपि दृश्यतेस्मेत्याह-**तत्प्रभावेति** । तस्य प्रभावेण-उद्भावितो जनितो योऽभिभवस्तिरस्कारः-तस्य भावस्तत्ता तया, अतिशयेन दूरं दवीयः-तस्य विहारो-विहरणं भ्रमणं तस्मिन् अविमुखा विमुखा भवन्त्यो विमुखी भवन्त्यस्ता इव विधुश्चन्द्रः ब्रध्नः सूर्यस्तयोः किरणाः अतिसंधानेऽतिसमीपे यद् धावनं शीघ्रगमनं तस्य विधानात्-परिधिं परिवेशं चक्रिरे, दीधितयः कर्त्र्यः । अग्नयोऽपि न जज्वलुरित्याह— **तत्साध्वसातिरेकादिति** । विजयध्वजभयाऽधिक्य-जनित-खड्गग्रहण-सामर्थ्यविकलतया इव, गृहीतसामिधेनीनामक-मन्त्रैस्तदुपकरणैश्च यजुर्वेदाध्यायिभिः सम्यग्-इध्यमानाः=कृतसमिदाधाना अपि याज्ञिका वह्नयः कदाचिदपि न ज्वलन्तिस्म । अन्नप्रधानस्य मर्त्यलोकस्य कृषेः परमकारणभूततया जगतः पालका वृषभा अपि अकस्मादपतन्नित्याह-**तत्पराक्रमेति** । पतयालुमहोक्षसमूहेषु-विभ्रश्यद्-विवस्वदादि-तेजोऽवयवत्वमुत्प्रेक्षितम् । तेजोभ्रंशने हेतुस्तत्पराक्रम-

स्यमाना अपि प्रतीपमवहन्महावाहिन्यः; तद्धलादारुज्यमाने विभज्यमाना-वयव इव कन्दराच्छलेन मन्दराचले हर्षोत्कर्षादुल्लसन्त इव समास्फालित-कल्लोलजालताला अम्भोनिधयो भयादक्षुभ्यन् । एवमाकुलीभवत्सु भुवनेषु भगवान् भवानीवल्लभोऽभिमताभिदित्सयाऽस्य निभालनीयतां बभाज॥१६५॥

स तु प्रथमं पुष्करावर्तकोदरे विद्यमानानां विद्युतां निषद्यामिव यौग-पद्येन विद्योतमानानां, ब्रह्माण्डमण्डलेन्धनसन्धीयमानकुक्षिसन्धुक्षणानां लक्षमिवाशुशुक्षणीनां, कल्पान्तकालीनानां परःसहस्राणां समाहारमिव मिहिरसमूहानाम्, अनधिगतवार्द्धकसार्द्धभावानां सार्द्धमिद्धं परार्द्धमिव सुधादीधितीनां पश्यन्नुपहतदर्शनशक्तिरासीत् ॥१६६॥

---

चिन्ता । महानद्योऽपि विकृतिमभजन्त—इत्याह—देवताभिः स्वाधिष्ठात्रीभिः, अध्यास्यमाना अपि कृताधिष्ठाना अपि-महावाहिन्यो गङ्गा-सरयू-यमुना-नर्मदा-गोदा-वरी-कृष्णा-कावेरी-प्रभृतयः प्रतिभाररहिताः सत्यः प्रतीपं=प्रतिकूलमवहन् । समुद्रक्षो-भमाह—तद्धलादारुज्यमाने इति । अत्र मन्दरकन्दराणां छलशब्देनापह्नवः, तत्र च विभज्यमानाऽवयवत्वमुत्प्रेक्षितम् , विभङ्गे विजयध्वजबलं कारणम् , अन्वयस्तु—सदा हर्षोत्कर्षादुल्लसन्तः समास्फालितकल्लोलजाला एव तालाः यैरेतादृशा अम्भो-निधयः—तद्धलादारुज्यमाने अत एव कन्दराच्छलेन विभज्यमानावयवे—इव मन्दरा-चले सति भयादिवाक्षुभ्यन् । एवं भुवनेषु त्रिषु लोकेषु-आकुलीभवत्सु = क्षुभ्यत्सु सर्वैश्वर्यसम्पन्नः शर्वो वरदानेच्छया विजयध्वजस्य-दृष्टिविषयतां जगाम-दर्शनं ददौ-इति भावः ।

विजयध्वजतपसाऽयं तुष्टस्तस्मै वरं दातुम् ।
दर्शनपथमवतीर्णो जगतामुपकारकः शम्भुः ॥ १५६ ॥

**स तु**—प्रथमं-पश्यन्-उपहतदर्शनशक्तिरासीत् । विजयध्वजस्तु-प्रथमं = दर्शमात्रे पुष्करं = सर्वतोमुखमावर्त्तयन्ति = प्रवर्त्तयन्ति ते पुष्करावर्त्तकाः वार्षिका मेघास्तेषामुदरे मध्ये विद्यमानानां = सतां यौगपद्येन = साहित्येन-एककालाऽवच्छेदेन विद्योतमानानाम् = प्रदीप्यमानानाम् , विद्युतां=तडिताम् , निषद्यामिव = आपणमिव—अथ च—ब्रह्माण्डमण्डलरूपेण—इन्धनेन सन्धीयमानं क्रियमाणं कुक्षेः पिचण्डस्य संधुक्षणं दीप्तिर्येषाम्—आशुशुक्षणीनां हुतभुजां व्यक्तीनां लक्षमिव—असङ्ख्यमिव, कल्पान्तानलराशिमिवेत्यर्थः । सर्वं तत्कालि-काऽसंख्यसूर्यगणराशिमिव । न अधिगत्तौ प्राप्तौ वार्द्धक—सार्द्ध—भावौ = वृद्धत्व—सार्द्धत्वौ यैस्ते-तेषाम्—सुधांशूनाम्, सार्द्धं = साकम्, इद्धं=दीप्तं परा-र्धमिव = संख्यास्थानान्तमिव, १००००००००००००००००० एकं दशेत्यादि-

क्रमेण च स्वस्तिकसन्निवेशश्रृङ्गं, महाजवगुणचरणं, मल्लिकाऽऽकारविकार-नयनमूर्द्धानं, महागिरिशयं, वहुप्रकारसितं, मूर्त्तमिव धर्मं, शरदभ्रमिवाऽन्तर-दभ्रं भूतरसं, दुग्धोदन्वन्तमिव प्रवालधारितं, हिमवन्तमिव प्रकाशितभवानीकं, कैलासमिव दिग्वदनदीयमानोल्लासं, भूलोकमिव समास्तृतसिन्धुराजितं, धूर्ज-

---

गणनायाम् अष्टादशं स्थानमित्यर्थं लक्ष्यमाणः, रुद्धदर्शन-सामर्थ्य आसीत्-इति समन्वितार्थः ॥ १६६ ॥

**क्रमेण च**—स्वस्तिकेत्यादि-विशेषणविशिष्टं नन्दिकेश्वरमद्राक्षीत्, तत्र च समारूढम् उदञ्चतीभिरित्यादिना वर्णितम्-उमापतिम**पश्यत्**-इति संगतिः । **चकारः** पूर्वोत्तरक्रिययोः समुच्चायकः, प्रथममुपहतशक्तिरासीत्-क्रमेण नन्दिकेश्वरमुमापतिञ्च अपश्यदिति-समुदितमर्थं समुच्चिनोति । स्वस्तिकस्य लेख्ययन्त्रस्य सन्निवेश-इव संस्थानमिव श्रृङ्गे विषाणे यस्य तम्-'नन्दिकेश्वरम्' ( स्वस्तिको मङ्गलद्रव्ये, चतुष्क-गृहभेदयोः ) । महाजवस्याऽतिवेगस्य गुणाः गुणनकर्त्तारः (गुणयन्तीति विग्रहे पचाद्यच् , गुण = आमन्त्रणे चुरादिः) चरणाश्चत्वारः पादा यस्य तम् । 'मल्लिको हंसभिद्यपि'—'मल्लिका तृणशून्येऽपि, मीनमृत्पात्रभेदयोः'-मेदिनी । 'मलिनैर्मल्लिकाख्यास्ते'—इति हंसभेदेष्वमरः, 'तृणशून्यन्तु मल्लिका', 'भूपदी शीतभीरुश्च' इत्यमरः। मल्लिका = 'बेला'—इति प्रसिद्धः 'मल्लिका शतभीरुश्च गवाक्षी भद्रमल्लिका। शीतभीरुर्मदायन्ती भूपदी तृणशून्यकम्'- इति वाचस्पतिः । अत्र 'गवाक्षी' इति अनुकरणनाम, मल्लिकाकोरकाऽऽकारनयनम् , मल्लिकाविकार (पुष्प) सदृशमूर्द्धानम् । ऊहनीया अन्येप्यर्थाः कोषाऽनुसारात् । महागिरौ कैलासे हिमवति च शेते-इति (अधिकरणे शेतेः-इति अच्)। बहुभिः प्रकारैः विधाभिः सितं = बद्धम् , श्वेतञ्च । ( षिञ् बन्धने निष्ठेति कर्मणि क्तः । अवदातः सितो गौरः ) 'वृषो हि भगवान् धर्मः'—इति मनोरुत्प्रेक्षते मूर्त्तमिव **धर्ममिति** । **शरदः** संबन्धिनमभ्रं मेघमिव-अन्नरसवर्धकत्वादुत्प्रेक्षा, अन्तः=मध्ये अदभ्रं प्रभूतं सञ्जातरसम् । क्षीरसागरमिव-प्रवाला धारिता येन तम्( सागरे उत्पन्नत्वात् वृषभे मालादिषु धृतत्वात्साधर्म्यम्। वाहिताग्न्यादिः ) । प्रकाशिता जनिता भवानी गौरी येन हिमवता तमिव प्रकाशितं भवस्य-अनीकं सैन्यं येन नन्दिकेश्वरेण तम्। दिशां वदनेषु मुखेषु दीयमान उल्लासः विकासो येनेति समानमुभयत्र, उभयोः श्वेतत्वात् स्थूलत्वाच्च । **समास्तृता** विस्तीर्णा ये सिन्धवः समुद्राः तै राजितम् = शोभितं भूलोकमिव-समास्तृता विशाला ये सिन्धुरा = गजाः तैरजितम्, किन्तु-समास्तृतं सिन्धुरस्य गजस्य-अजिनं यस्मिन् इति-तकारनकारयोर्लिपिसाम्यात्साव-

टिजटाजूटस्खलितपृष्ठाऽभिघातोच्छलजाह्नवीजलप्रवाहेणेव चान्द्रमसमरीचिनिचयरुचिरेण—गगनगमनवेगोद्गमितेन प्रसारितावयवेन बालहस्तेन चामरेणेव वीजयन्तं, पदवीसंमर्दमिलितैस्तडित्पिञ्जरैर्बलाहकशकलैः सधूमैस्त्रिपुराऽनलस्फुलिङ्गैरिव चरणलग्नैरिव विराजमानं, हरनिर्माल्यमन्दारकुसुमसमूहानभ्यवहृतानिव फेनव्याजेन विशदयन्तं, त्रिषाणविघट्टनोल्लिखितेनाऽन्यतमेन कैलाससानुनेव ककुदेन विद्योतमानं, भवभक्त्या संवलितकम्बलेनेव गलेन विलसन्तं, श्रेयोनगरतोरणेनेव शृङ्गान्तरेण प्रकाशमानं, भुजगराजनिःश्वाससमीरणाऽऽहितप्रेरणादनिशं खणखणायमानकिङ्किणीकोलाहलकैतवेन पुरस्सराणां सुराणामुत्सारणामिव कुर्वाणं, गणप्रधानं, वृषभरूपधारिणं नन्दिकेश्वरमद्राक्षीत् ॥१६ ॥

---

र्याञ्च प्रतीयते, शम्भूपकरणेषु गजाजिनस्य प्रसिद्धत्वात् । पुनश्च—**बालहस्तेन** = बालधिना पुच्छाग्रेणेत्यर्थः—चामरेणेव वीजयन्तम् । बालहस्तं विशिनष्टि—**धूर्जटीत्यादिना** । धूर्जटेः जटाजूटात् स्खलितः (अथ च—नन्दिकेश्वरस्यैव) पृष्ठाभिघातेन—उच्छलता जाह्नवीजल-प्रवाहेणेव चान्द्रमस्यो या मरीचयस्तासां निचयवद्रुचिरेण—गगनगमनस्य वेगेन—ऊर्ध्वं गमितेन—अतएव प्रसारिता अवयवा बाला यस्य तेन बालहस्तेन । पुनश्च—पदव्याः सरण्याः सम्मर्देन मिलितैः, तडित्पञ्जरैः पीतैः मेघखण्डैः—धूमसहितैः त्रिपुरदाहाऽनलस्फुलिङ्गैः—चरणेषु लग्नैरिव विराजमानम् । तडित्पिञ्जराणां मेघानां सस्फुलिङ्गदाहाऽनलसादृश्यम् । गगनस्थत्वेन **त्रिपुरेति** । पुनश्च—हरनिर्माल्यभूता ये मन्दारकुसुमसमूहास्तान् अभ्यवहृतान् भुक्तान्—इव फेनस्य हिण्डीरस्य, व्याजेन = छलेन विशदयन्तं स्पष्टयन्तम् । पुनश्च—विषाणयोः शृङ्गयोः विघट्टनेन संघर्षणेन घृष्टेन केनापि कैलासस्य प्रस्थेन—इव ककुदेन = ककुदा विशेषेण शोभमानम् । 'ककुद्वत् ककुदं श्रेष्ठे, वृषाङ्के, राजलक्ष्मणि'—इति विश्वः । पुनश्च—**भवेत्यादि** । गले विद्यमानायां सास्नायां भवभक्तिसूचक-चिह्नत्वेन संवलनमुत्प्रेक्ष्यते । (सास्ना तु गलकम्बलः) । श्रेयसः = लोकद्वयकल्याणस्य यन्नगरं पुरं तस्य तोरणेनेव बहिर्द्वारेणेव शृङ्गयोरन्तरेण मध्येन प्रकाशमानम् । पुनश्च—पुरःसराणां सुराणाम्—उत्सारणां निःसारिकामिव कुर्वाणम्—तत्र साधनं संपादयति अनिशं **खणखणायमानेति** । अनुकरणशब्दोऽयम् । तत्र हेतुमाह—**भुजगराजेति** । भुजगराजस्य वासुकेः निःश्वाससमीरणेन—आहितं कृतम्—यत्प्रेरणं चालनं तस्माद् हेतोरनिशं खणखण—इत्याकारकं शब्दं कुर्वता क्षुद्रघण्टिकाकलकलच्छलेन इति । गणेषु श्रेष्ठम् । मूर्त्तं धर्ममिवेत्युक्तं विशदयति **वृषभरूपधारिणमिति** । देवत्वेन सर्वमुपपद्यते । 'नन्दिको नन्दिकेश्वरः'-इत्यमरः॥ १६७॥

तत्र च समारूढम्—उदञ्चतीभिश्चरणमयूखलेखाभिर्वृषस्य प्रकीर्णकमालामिव प्रसञ्जयन्तम् , अनन्तानां ब्रह्माण्डानामारम्भसूत्रपातानिव वितन्वन्तं, प्रतिमुहूर्तभिन्नानां तुषारकिरणानां कौमुदीकोषमिव प्रकटयन्तं, बहूनां ब्रह्मोत्पत्तिकमलानां मृणालजालानीवोद्वमन्तं, कल्पान्तकेलिकलापलग्नपुष्करावर्तकशकलायमाने पर्याणीकृतकुञ्जराजिनपल्लवे नूपुरीभवदाशीविषमुखविशदायमानविषदहनहेतिनिवहैरनवरतं शम्पा-सम्पातमिव सम्पादयन्तम्, अपरिच्छिन्नपृषत्कतया दृश्यमानमन्दाकिनीप्रवाहेण किरातकलेवराऽऽकलनकालकवलितान् अक्षयान् धनञ्जयेषुधिसम्बन्धिनो बाणगणानिवोद्गिरन्तं,

---

तत्र च = नन्दिकेश्वरे सम्यगारूढं उमाया ब्रह्मविद्यायाः पतिः पालकस्तं, नित्यं ध्यानैकतानत्वात् । उमा = ब्रह्मविद्या 'उमां हैमवतीं ददर्शेति' श्रुतेः, पततीति पतिः 'सर्वधातुभ्य इन्' उमया सह पततीति विग्रहेण सोमत्वं लभ्यते—तथा च—

> "उमासहायं परमेश्वरं गुरुं त्रिलोचनं नीलकण्ठं प्रशान्तम् ।
> ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्—"

इति श्रुतिप्रतिपाद्यं ध्येयस्वरूपं सिद्ध्यति, ततश्चान्तःकरणगोचरस्य—बहिश्चक्षुर्गोचरस्य च ऐक्यं फलति—इति ध्येयद्रष्टृयोः संवादः कार्यसाफल्यसूचकः, कार्यञ्चात्र विजयध्वजस्य विजयः । कथम्भूतमुमापतिम्—उदञ्चतीभिरुद्गच्छन्तीभिः चरणमयूखानां लेखाभिः पङ्क्तिभिः—वृषस्य=स्ववाहनस्य प्रकीर्णका = अनेकजातीयपुष्परचिता या माला तामिव लगयन्तम् । असंख्यानां ब्रह्माण्डानाम्—आरम्भस्य = प्रस्तावस्य सूत्रपातमिव प्रथमप्रवृत्तिमिव, वितन्वन्तं कुर्वन्तम् । कौमुदीकोषं ज्योत्स्नाकोषम् प्रकाशयन्तम् । मृणालजालान् बिससङ्घान् इव—उद्वमन्तम्=उद्गिरन्तम् । लेखाभिरित्यस्यान्वयः—चतुर्षु । पुनः कथम्भूतम्—अनवरतं नित्यं शम्पायाः शतह्रदायाः संपातमिव वर्षणमिव सम्पादयन्तं सम्पन्नं कुर्वन्तम् । कैः करणैः—कल्पान्तरूपा उमापतिकर्तृका ये क्रीडासमूहास्तेषु लग्नाः सक्ता ये पुष्करावर्त्तसञ्ज्ञका मेघास्तेषां खण्ड इवाऽऽचरति पृष्ठास्तरणीकृते गजाजिनरूपे पल्लवे मञ्जीर इवाचरताम्- फणिनां लपनेभ्यः स्पष्टं निर्गच्छन् यो दहनस्तस्य ज्वालासमूहैः । पुनश्च—बाणानिवोद्गिरन्तम्, कस्य ? धनञ्जयेषुधिसम्बन्धिनः, कीदृशान् ? अक्षयान् अर्जुनतूणीरगतान् बाणान् , कथमुमापतिरुद्गिरतिस्म इत्याकाङ्क्षायां सङ्गतिमाह—किरातेति । भिल्लदेहधारणसमयग्रस्तान् (महाभारत—किरातार्जुनीयप्रसिद्धेयं कथा), केन द्वारेण—अपरिच्छिन्नानि अपरिमितानि यानि पृषन्ति = बिन्दवस्तेषां भावस्तत्ता तया-दृश्यमानो यो मन्दाकिन्याः शिवजटाजूटस्थाया गङ्गायाः

दक्षाऽध्वरप्रमथनाऽवसरप्रसक्तपूषदन्तशकलैरिव कपालैः कलितावतंसं, सर्वाङ्गीणैर्भुजङ्गराजफणामणिभिररुणवर्णैर्भैरवप्रादुर्भावकाललग्नैरन्धकासुररुधिरच्छेदैरिव विरोचमानं, कल्पान्तकालाऽनलज्वालाभिरिवाऽवलग्नाभिर्भाललोचनसमुद्गताभिरिवाऽखण्डिताभिःशिखाभिरतिप्रसारप्रतिबन्धेच्छयेवोपरिष्टात्कृतसुरवाहिनीमयाऽऽवरणाभिर्जटाभिर्विराजमानं, मन्दाकिनीप्रवाहविहारिणीमिव राजहंसीं–पुण्डरीकाक्षसमर्पितस्वलोचनमयनीलोत्पलीयामिव मृणालीम्—अखण्डब्रह्माण्डमण्डलानामवयवोद्घाटिनीमिव कुञ्चिकां—बालरूपगृहीतां नक्षत्रलक्षमयबह्वक्षरविलेखनार्हामिव खटिकां–शबरवेषाऽवतंसीकृतामिव कैतकशिखां—चन्द्रलेखां दधानं, भुवनदाहभीत्या सन्निरुद्धप्रसारस्य भालतलविलोचनस्यावयवान्तरेभ्यो निर्गच्छतीभिर्ज्वालाभिरिवाऽऽभरणभुजङ्गोद्गीर्यमाणगरलहव्यवाहहेतिसंहतिभिरालिह्यमानदेहं, नयनान-

प्रवाहस्तेन, अविच्छिन्नपृषत्कत्वं मन्दाकिनीप्रवाह–धनञ्जयेपुध्योः शाब्दं साधर्म्यम्, 'पृषन्ति' बिन्दुपृषताः, 'पृषत्क–बाण–विशिखाः'। पूर्वत्र 'शेषाद्विभाषा' इति कप्। पुनश्च-**कपालैः**-साधनभूतैः कलितो रचितोऽवतंसः भूषणो येन तादृशम्। कैरिव–दक्षप्रजापतियज्ञध्वंससमये प्रसक्ता भग्नत्वेन स्वशरीरे लग्ना ये पूष्णो देवस्य दन्तानां खण्डास्तैरिव ( भा. स्क. ५ अ. ४ )। पुनश्च–अन्धकासुरस्य शोणितबिन्दुभिरिव–विद्योतमानम्, कदा लग्नैरिव–भैरवस्य = भूतनाथस्याऽऽविर्भावसमये लग्नैरिव–( एतेन भैरवोद्भवाऽन्धकक्षययोः–समानकालिकत्वं सूच्यते ), कैरुपमेयैः–भुजगराजस्य फणासु निविष्टै रत्नैः, किमाभैः–अरुणवर्णैः। **जटाभिर्विराजमानम्**, कथम्भूताभिर्जटाभिः-उपरिष्टात्कृतसुरवाहिनीमयाऽऽवरणाभिः। काभिरिव जटाभिः–अखण्डिताभिः। कीदृशीभिः–अवलग्नाभिः = सक्ताभिः। काभिरिव–प्रलयकालिकदहनज्वालाभिरिव जटाभिर्विशेषेण दीप्यमानम्। पुनश्च–चन्द्रलेखामिव दधानम्। कामिव–शबरवेषे भूषणीकृतां केतकपुष्पस्य शिखामिव, पुनः कामिव–खटिकामिव = कठिनीमिव, कदा गृहीतां–बालरूपे बाल्यावस्थायां स्वीकृताम्, किमर्हां–नक्षत्राणां तारकाणां यल्लक्षमयानि असंख्यनक्षत्रस्वरूपाणि यानि बहूनि अक्षराणि तेषां यद् विलेखनं लिपिविन्यासः, तद्योग्यामिव–खटिकाम्—इति दण्डान्वयसरणिः। **भुवनस्य** = विष्टपस्य कर्मभूतस्य यो दाहो भस्मीभावस्तस्य भीत्या = भयेन हेतुना सम्यङ् निरुद्ध आवृतः प्रसरो वेगो यस्य–तस्य–भालस्य ललाटस्य तले मध्ये यद् विशिष्टं लोचनं = नयनं तस्य–अवयवानां भागानामन्तरेभ्यो मध्येभ्यो निःसृताभिरर्चिभिरिव–आभरणभूतैः सर्पैः उद्गीर्यमाणम्–उद्वम्यमानं यद् गरलं = विषं तदेव हव्यवाहोऽग्निः तस्य हेतिसंहतिभिः = ज्वालासमूहैः आ-स-

लाहुतिभूतस्य कुसुमधन्वनो दग्धभग्नामधस्तात्पतितां धनुर्वीरुधमिव भ्रूलतां बिभ्राणम्, अविरतं समुल्लसद्भिर्नयनमयपुष्पवन्मयूखैर्निमेषोन्मेषसंहृताऽऽविर्भावितानां जगतां संख्यामिव गणयन्तं, त्रिपुरवधाऽवसरश्रुतिपरिसरप्रसारिबाणवाजवृत्तिसमीरणसमास्वादनसमासादितदीर्घतरसंस्कारतयेव दक्षिणकर्णालङ्करणेन लोचनमयचन्द्रचन्द्रिकासुधाऽवलेहलोलुपतयेव वामश्रवणाऽऽभरणेन फणिना तरलीक्रियमाणरसज्ञं, स्वाऽनुचरनामसाम्यप्रणयादिव मिहिरेण मदनभस्मरजोरुषिततयेव तत्सुहृदा सुधाकरेण करैरुभयतः स्पृश्यमाननासादण्डं, कल्पान्तकूपीटयोनिपानप्रस्तावे भस्त्रया मुखमभितः प्रसृताभिर्बहिरेवाऽवलग्नाभिर्ज्वालाभिरिव श्रवणाऽऽभरणाऽऽशीविषगरलाऽतलज्वालाभिरिव शर-

---

मन्ताद् लिह्यमानः व्याप्तो देहो यस्य—तम् । नयनाऽनलस्य नेत्राग्नेः आहुतिभूतस्य = आहुतित्वमापन्नस्य कुसुमानि धनुर्यस्य कुसुमधन्वा तस्य ( धनुषश्चेत्यनङ्, यज्वन्वत् ) कामस्य, पूर्वं दग्धा पश्चाद्भग्ना तामधस्तादधः पतितां=च्युताम्—धनुर्वीरुधमिव चापलतामिव भ्रूलतां=भ्रूरेव—लता तां बिभ्राणं = दधानम् । एवं दण्डान्वयसरणिरनुसर्त्तव्या । **अविरतमित्यादि** संक्षिप्यते । नेत्रमयकुसुमानां किरणैः, निमेषेण संहृतानाम् , उन्मेषेणाऽऽविर्भावितानाम् । निमेषः नेत्रनिमीलनम् । उन्मेषः = उन्मीलनम् । त्रिपुरासुरस्य वधावसरे—कर्णप्रान्तप्रसरणशीलशरवेगनिष्ठजगत्प्राणपानप्राप्तदीर्घतरसंस्कारतयेव—दक्षिणकर्णस्थेनाऽलङ्कारेण—लोचनमयी = आलोचनमयी या चन्द्रिका सैव सुधा तस्याऽवलेहस्य लोलुपतया = लालसावत्तयाइव—वामकर्णभूषणेन—फणिना—तरलीक्रियमाणा=चपलीक्रियमाणा रसज्ञा जिह्वा यस्मिन्नुमापतौ तम् । अष्टमूर्त्तेरुमापते रविर्दक्षिणलोचनं विधुर्वामलोचनमिति पुराणप्रसिद्धार्थं वर्णयति **स्वानुचरेति** । ( माठरः पिङ्गलो 'दण्ड'श्चण्डांशोः पारिपार्श्वकाः' ) । स्वानुचरस्य दण्डस्य । मिहिरेण सूर्येण । चन्द्रस्य शुभ्रत्वेन मदनभस्मरजोलिप्तत्वमुत्प्रेक्षितम् । तत्सुहृदा = मदनसुहृदा । उभयतः = दक्षिणतो मिहिरेण, वामतः सुधाकरेण—स्पृश्यमानो नासाया 'दण्डो' यस्य तम् । पुनश्चदशनदीधितिभिर्विद्योतमानं, कथम्भूताभिः कौमुदीवद् धवलाभिः, काभिरिव शरभावतारे ( शिवपुराणप्रसिद्धे ) कवलिताभिः ग्रस्ताभिः नरसिंहस्य सटाभिरिव केसरैरिव, शरभावतारेण नृसिंहः कवलितः इति कथा शि० पु० । कल्पान्तस्य यः कूपीटयोनिः = ज्वलनः, तस्य पानप्रकरणे भस्त्रया—करणभूतया मुखमभितः स्वाऽभिमुखं प्रसृताभिः = प्रगताभिः बहिरेव सक्ताभिः—भाभिरिव—श्रवणभूषणभूतानामाशीविषाणां गरलस्य विषस्य—अतला = अगाधा या ज्वाला ताभिरिव—

भाऽवतार-कवलितनरसिंहसटाभिरिव कौमुदीवदवदाताभिर्दशनदीधितिभिर्द्योतमानं, पुरुहूतप्रहितकण्ठतटाऽवघट्टनस्फुटितशतकोटिकणिकाभिरिव मणिभिरगणिताभिः स्फुरता फणिनायकेन विहितहारं, रागवशादविरतं गृहीतकण्ठयेव कालिकया मेचकीकृतकण्ठं, कैलासतटेनेवोपरिष्टाल्लग्नबलाहकलेखेन श्यामरूपकण्ठाधोवर्तिना महापरिणाहेन वक्षसा लक्ष्यमाणं, प्रारब्धद्रुमयुद्धफाल्गुननिक्षिप्ततमालवल्लीमिव लग्नां रोमराजीमुदरेण वहन्तं, वलयीकृतभुजङ्गराजैर्भग्नाशावारणकरैः कामधेनुसमूहैरिव महापीनैराकृष्यमाणमन्दराचलकल्लोलिनीप्रवाहैरिव प्रसाधनरत्नमरीचिजालैरुल्लसद्भिः शिलीमुखपुङ्खवृत्तिवैवस्वतकरच्युतदण्डायमानैः कुण्डलिभिर्मण्ड्यमानम्, आकृष्यमाणबाणभूतपुराणपुरुषवनमालाकुसुमपरागेणेव हरिवदनसितेन भसितेन धवलायमानैरखण्डताण्डवाऽऽडम्बरोत्क्षेपचूर्णितचन्द्रशकलायमानकररुहालङ्कृतैर्बाहु—

दशनदीधितिभिर्द्योतमानम्—इति—आम्रेडितम्। पुनश्च पुरुहूतेन प्रहितः कण्ठतटावघट्टनेन स्फुटितः यः शतकोटिः=स्वरुः, तस्य कणिकाभिरिव—अगणिताभिः—मणिभिरुपलक्षितेन स्फुरता चलायमानेन वासुकिना—कृतमौक्तिकलतम्। कालिकया=उमया। 'कालः श्यामलमेचकाः'। वक्षसा=उरसा। प्रारब्धं द्रुमैः करणैः (शर्वेण सर्वायुधभङ्गे कृते किरातार्जुनीये द्रष्टव्यम्) युद्धं येन फाल्गुनेन=पार्थेन प्रक्षिप्तां तमालवल्लीमिव—रोमराजीम्। **वलयीकृतेति**। भग्नानामाशानां दिशामावारणमाच्छादनं कुर्वन्ति तैः=विस्तीर्णैः, महान्तश्च ते—पीनास्तैः, अन्यत्र—भग्नाया आशायाः=तृष्णाया वारणकरैः=निवारकैः, महद्—आपीनम्=ऊधो येषान्तैः अत एव कामधेनूनां समूहैरिव—वलयीकृता वलयाकारेण वेष्टिता ये भुजङ्गराजास्तैः—करणभूतैः—आकृष्यमाणो यो मन्दराचलस्तस्य या कल्लोलिन्यस्तासां प्रवाहैरिव—प्रसाधनस्य मण्डनस्य यानि रत्नानि—तेषां किरणसमूहैः—ऊर्ध्वं लसद्भिः शोभमानैः, अथ च—शिलीमुखस्य=बाणस्य पुङ्खवृत्तिः पुङ्खग्रहणतत्परः यो वैवस्वतस्तस्य दण्डधरस्य करस्तस्माच्च्युतो यो दण्डः स इव—आचरद्भिः कुण्डलिभिः सर्पैः—मण्ड्यमानं=भूष्यमाणम्। 'आशा तृष्णा दिशोः स्त्रियाम्'। 'ऊधस्तु क्लीबमापीनम्' 'अलिबाणौ शिलीमुखौ—'कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः', 'कुण्डली गूढपाच्चक्षुःश्रवाः काकोदरः फणी'—'प्रसाधनं मण्डनञ्च'। त्रिपुरासुरवधे—विष्णुं शरं विधाय शिवेन त्रिपुरो हतः—इति कथा, तदाह—आकृष्यमाणः बाणभूतो यो पुराणपुरुषः तस्य वनमालापुष्परजसेव—हरिः शेषः, केसरी च, तयोरेव सितवदनवत्त्वात्, भसितेन=भस्मना बाहुभिः=दशभिर्भुजैः

भिरुपशोभमानं, मूर्धवर्त्तिमरुद्भिरुपहिताञ्जलिबन्धैरविरतोद्गीयमाणज्वलनजटालैरस्त्राधिदैवतैरुपस्थीयमानं, यावद्विषयकप्रमित्याश्रयमपि विषमदर्शनं, नित्याकाङ्क्षाप्रयत्नमपि फलोपभोगोदासीनं, सिताऽऽत्मानमप्यबद्धं, भूतिमयमप्यनहङ्कारं, निरावरणमपि हर्यक्षाजिनतिरोहितदेहम्, उदन्याहीनमपि धृतमन्दाकिनीप्रवाहं, शुद्धात्मानमप्यनिर्वचनीयं, विश्वरूपेण वैरूपं, हिरण्यगर्भेण बृहदारण्यकं, विघ्नराजेन वैराजं, बाहुलेयेन कालेयं, पुरुहूतेन पुरुषसूक्तं, दस्रद्वयेन नामसाहस्रम्, अत्रिणा त्रिणाचिकेतं, भृगुणा निर्गुणाम्नायभागं, वशिष्ठेन ज्येष्ठसाम, अङ्गिरा सुमङ्गलं, भरद्वाजेन भारुण्डं, याज्ञवल्क्येन यज्ञा-

---

पञ्चवक्त्रस्य तथैवोचितत्वात् । अतएव बहुवचनम् । मरुद्भिरितरदेवैः, अस्त्राणामधिदैवतैः कर्तृभिरुपस्थीयमानम् । यावद्विषयका=विषयत्वावच्छेदकाऽवच्छिन्ना या प्रमितिः=प्रमा तस्या–आश्रयमपि–विषमं दर्शनं ज्ञानं यस्येति विरोधः, त्रिलोचनमिति परिहारः । नित्यम्- आकङ्क्षाविषकः प्रयत्नः = कृतिर्यस्य स फलोपभोगलोलुपो दृश्यते, अयन्तु–उदासीन इति विरोधः । नित्यौ–आकाङ्क्षाप्रयत्नौ यस्येति परिहारः, 'ईश्वरेच्छाकृत्यादीनां नित्यत्वात्', 'जीवेच्छादीनामनित्यत्वम्, उदासीनत्वञ्च–'स्वयं विधाता तपसः फलानां, केनापि कामेन तपश्चचार'–इति न्यायात् । (षिञ्–बन्धने क्तः) सितः = बद्धः, 'अवदातः सितो गौरः' । भूतिः संपत्तिः, भसितञ्च । भूतिमयं भस्मलिप्ताङ्गम् । निरावरणो दिगम्बरः–अज्ञानावरणरहितश्च, हर्यक्षः केसरी । उदन्या = पिपासा । अशुद्धात्मा निर्वक्तुं योग्यो न भवति–'कथाऽपि खलु पापानामलमश्रेयसे यत'इति, अयन्तु–शुद्धात्माऽपि तथेति विरोधः, 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहे'ति न्यायात्–निर्वचनं कर्तुमशक्य–इति परिहारः, पूर्वत्र–अर्हे कृत्यतृचश्चेति अनीयर्–, उत्तरत्र–शकि लिङ् चेति शक्यर्थे–इति विरोधाभासः । ( अथ–वेदस्य सूक्ताऽनुवाक–साम–शस्त्रस्तोत्रोपनिषदादिजपद्भिः–मुनिभिः स्तूयमानमित्याह–विश्वरूपेत्यादि–स्तूयमानमित्यन्तेन ) । **विश्वरूप**स्त्वाष्ट्रः, वैरूपं छन्दः । हिरण्यगर्भः प्रजापतिः, बृहदारण्यकं = यजुर्वेदब्राह्मणोक्तस्य–उपनिषदो नामधेयम्, ( उषा वै अश्वस्य मेध्यस्य शिर इत्यादिकायाः) । **विघ्नरा**जो विनायकः, वैराजं छन्दः । बाहुलेयस्तारकजित, कलिना दृष्टं कालेयं सूक्तं, साम च । **पुरुहूतः** पुरन्दरः, पुरुषसूक्तं सहस्रशीर्षेत्यादिषोडशर्चम् यजुः अ० ३१ ऋ० म० १० । **दस्रौ** नासत्यौ, नामसाहस्रम् शिवनामसहस्रम् । अत्रिः प्राजापत्यः सोमपिता, त्रिणाचिकेतं वरत्रयोपेतं नाचिकेतोपाख्यानम् । **भृगुः** प्राजापत्यः, निर्गुणप्रतिपादकं वेदभागम् । वसिष्ठो विधातृसुतः, भरुण्डेनोक्तं भारुण्डं सूक्तम् । यज्ञायज्ञीयं = सूक्तादि । वरतन्तुः कौत्सगुरुः, वारवन्ती-

यज्ञीयं, वरतन्तुना वारवन्तीयं, वामदेवेन वामदेव्यं, बृहस्पतिना बृहत्संज्ञं, विदूरथेन रथन्तरं, दुर्वाससा नासदासीयं, गौतमेन गायत्रम्, अगस्त्येन स्वस्त्ययनानि, पर्वतेनाऽथर्वमूर्द्धानं, गृत्समदेन तरत्समन्दीं, बौधायनेन रौधसं, पराशरेणाऽपराजितां, शार्कराक्षेण शाकरं, देवलेन देवव्रतं, मार्कण्डेयेन मुण्डकोपनिषदं, बादरायणेन रौद्रोपनिषदं, मधुच्छन्दसा छान्दोग्यं जपता स्तूयमानम्, अनिर्देश्यमपरिमेयमनौपम्यमुमापतिमपश्यत् ॥१६४॥

वितीर्णवरानुज्ञश्च प्रणम्य विजयध्वजो मनुष्यजातीयाद्भयाऽभावमप्रसक्तप्रतियोगिकं मन्यमानोऽन्यस्मात्सर्वस्माद्मरभावं नगरं तत्स्पृहाव्यतिरेकेणाऽन्यैरशक्यप्रवेशनिष्क्रमं तृणीकृतेतरदुर्गमवृणीत । अथानुमान्य मनीषितमुपेतवति चक्षुषोरविषयभावं विषमविलोचने समागत्य रसातलं, नमस्कृत्य कन्दरमालिनश्चरणौ, तेनाभ्यनुज्ञातः सुखमवात्सीत् ॥ १६९ ॥

---

यं सूक्त साम च । वामदेवेन दृष्टं वामदेव्यं सूक्तं साम च । आनो भद्रा- इत्यादीनि **स्वस्त्ययनानि** । बृहस्पतिः सुराचार्यः, बृहत्संज्ञं बृहद्रथन्तरं साम इत्यादिरीत्या व्याख्येयानि, मार्गयितव्यान्युदाहरणानि । सर्वत्र कर्तरि तृतीया, **जपता** इति प्रत्येकाभिप्रायेण—एकवचनम् । स्तूयमानमिति कर्मणि शानच्— उमापतिः कर्म, अपश्यदिति प्रधानक्रियाकर्मत्वेन द्वितीया, स्तूयमानमित्यन्तेषु— विशेषणत्वेन द्वितीया, सामानाधिकरण्यात् । स्वरूपतो निर्देष्टुमशक्यम् = इयत्तया परिमातुमशक्यम्, ईदृश इति उपमातुमनर्हम् यत्तदद्रेश्यमित्यादि श्रुतेः । उं = व्यापकं ब्रह्म मातीति—उमा ब्रह्मविद्या तस्याः पतिं पातारं देवमपश्यत्॥१६८॥

**वितीर्ण**—वराऽनुज्ञश्च विजयध्वजः प्रणम्य—नगरमवृणीत, अथ—समागत्य **रसातलं सुखमवात्सीत्** । मनुष्यजातीयाद् = मर्त्याद् भयस्य=साध्वसस्य अभावम्=अत्यन्ताऽभावम्, न प्रसक्तं प्राप्तं प्रतियोगि—भयं यस्य तादृशं मन्यमानः सन्, अन्यस्माद् = मनुष्यजातीयभिन्नात्, सर्वस्माद् देवादेः सकाशाद्-अमरभावम् = अमरणम् प्रसक्तं प्राप्तं प्रतियोगि—मरणं यस्मात् तद्—मन्यमानः सन् तस्य = स्वस्य विजयध्वजस्य स्पृहाव्यतिरेकेण = इच्छां विना अन्यैः परैः, अशक्यौ कर्तुमशक्यौ प्रवेश—निष्क्रमौ=गताऽऽगतौ यस्मिन् तत्, तृणीकृतानि=तुच्छीकृतानि—इतरदुर्गाणि =अन्यदुर्गाणि —येन तत् तादृशम्—नगरम् = नागनगरनामधेयं पुरमवृणीत = वृतवान् । अथ—विषमलोचने—मनीषितमनुमान्य चक्षुषोरविषयभावमुपेतवति सति रसातलं समागत्य ( स्वपितुः ) कन्दरमालिनश्चरणौ नमस्कृत्य तेन = कन्दरमालिना अभ्यनुज्ञातः सन् सुखमवसत् ॥

भवभयभङ्गे शक्तं, निरीक्ष्य शम्भोस्तु चरणाऽब्जम् ।
सुखमवसद्दनुजेन्द्रो, रसातलेशस्तु नो चित्रम् ॥ १६९ ॥

तस्य च त्रिपुरमिव मयतारकाक्षविद्युन्मालिनां,वज्रपुरमिव वज्रनाभस्य, सौभमिव शाल्वस्य, प्राग्ज्योतिषमिव नरकाऽसुरस्य, कालस्वर्णमयं ब्रह्माण्डान्तरमिव, सुखगम्यं, स्वर्गाधोजगद्विरिसागरं नागनगरं नाम जागर्ति । यत्र कालविशेषाऽनवच्छिन्नप्रकाशा निरस्ततमसः पद्मरागमणय एव मयूखोत्करदन्तुराः संख्यातीताः कमलबन्धवः,गम्भीराम्भोभृतःपरिखा एवाऽनासादितमहावराहादिविक्षोभोपसर्गाः पयोनिधयः, खचितनीलोपलरुचिमेदुराणि काञ्चनमयमन्दिराण्येव धूमजटिलाः कूपीटयोनयः, मरकतमयमहासद्ममयूखसमुदाय एव विहायस्तलं, तद्गुम्फितानि कदम्बकोरकस्थूलानि मुक्ताफ-

---

तस्य च–नागनगरं जागर्ति, यत्र च–कालविशेषेत्यारभ्य मृगाङ्कमण्डलानि 'सन्ति' इत्यन्वयः । मयादीनामसुराणां स्वर्ण-रजत-लोह-रचितं त्रिपुरमासीत् , वज्रनाभस्याऽसुरस्य'वज्रपुरम्'। शाल्वः शिशुपालसखा, तस्य सौभ-नामकं व्योमयानं नगराकारमासीत्।नरकाऽसुरः कामरूपाधिपतिः भौमासुरापरपर्यायस्तस्य प्राग्ज्योतिषं नगरमासीत् । तानीमान्युपमानानि । कालस्वर्णमयं ब्रह्माण्डान्तरमिवेति स्वतन्त्रमुपमानम् । सुखगम्यमिति विस्तीर्णत्वेनाऽसङ्कीर्णत्वबोधनाय । जागर्ति= विद्यते । यत्र नगरे-कालविशेषेण=दृश्यमानसूर्येण समयेन अनवच्छिन्नः परिच्छेद-रहितः प्रकाशः-उद्योतो येषां तादृशाः, दूरीकृताऽन्धकाराः मयूखसमूहोन्नताः, असंख्याः पद्मरागमणय–एव कमलानां=पद्मानां बन्धवः प्रकाशकाः सूर्याः । अतल–वितल–सुतल–तलातल -महातल–रसातल-पाताल–इति सप्त–'पाताल' लोकाः पृथिवीपुटानि रत्नद्युतिप्रकाशानि, न सूर्यप्रकाशानि–भूगर्भस्थत्वात्तेषाम् । 'अमेरिकां' पातालमिति मन्यमानास्तु–भ्रान्ताः, भूपृष्ठस्थत्वात् तस्य रम्यकहिरण्मय-कुरुवर्षात्मकस्य देशस्य । भूपृष्ठे सूर्योदयाऽवच्छिन्नः–प्रकाशः– सूर्याऽधीनत्वात् , भूविवरेषु तु–निरवच्छिन्नः–रत्नाधीनत्वात्—इति मननीयम्। गम्भीरम्=अगाधं यदम्भस्तद्बिभ्रति–इति–क्विप् , ताः परिखा एव अम्भोनिधयः समुद्राः, तेषां वैशिष्ट्यमाह–अनासादितेति । न आसादितः प्राप्तः महावराहस्य=आदिवराहस्य देवाऽसुरकर्तृकमथनस्य च विक्षोभरूपः–उपसर्ग उपद्रवो यैस्ते– तादृशाः । खचितानि = निबद्धानि यानि नीलोपलानि तेषां रुच्या मेदुराणि धूमरुचिसुन्दराणि–सुवर्णमयभवनान्येव कूपीटस्य जलस्य योनयो वह्नयः । 'कूपीटसुदरे जले'—इति रत्नकोशात्–कूपीटशब्दो जलवाची, 'अग्नेरापः'–इति श्रुतेः । अत्र कूपीटयोनिपदोपादानेन धूमस्य जलीयत्वं सूच्यते, तथा च 'स्थानेऽन्तरतमः' इत्यत्र महाभाष्यम्—'अब् विकारः, अप्स्वेव प्रविशति'–इति । काञ्चनमयमन्दिराणां

लान्येव तारकाणि, तदुपनिबद्धानि स्फाटिकपुण्डरीकाण्येव नित्यमखण्डताभाञ्जि मृगाङ्कमण्डलानि। अपि च यत्खलु केतकमिवोमाधवानवेक्ष्यमाणमुखं, शशविषाणमिव वृद्धश्रवसोऽप्यविषयः, भीष्मयुद्धमिव पृष्ठतः कृतधनञ्जयाऽनुभावं, दुर्योधनसैन्यमिव धर्मराजाऽनवाप्यप्रवेशं, विन्ध्यदक्षिणमिव निषिद्धक्रव्यादसंसर्गं, पर्वाऽन्यदिवसमिव निषिद्धसरिन्नाथाऽन्तर्भावम्, अभेद्यकवचमिवाऽऽशुगाऽनवाप्यप्रवेशं विभाति। यत्र चेन्द्रचापदर्शनं दानवसुन्दरीणां स्तनाभोगेषु, सुमनःप्रहाराऽनुभवो वनविहारेषु, दानवनाशनं गजेन्द्रगण्डासङ्गिनि भृङ्गवर्गे, वज्रसम्बन्धो भूषणेषु, शिखिसमुल्लास आरामेषु, यमुनासोदर्यभावो नीलमणिकुट्टिमेषु, सदा-शराभियोगः कार्मुकेषु, वारुणीभीतिर्मान-

---

धूमखचितत्वं, कृपीटयोनीनां धूमजटिलत्वञ्च बिम्बप्रतिबिम्बभावं बोधयति। एवमुत्तरत्र। मृगाङ्कमण्डलानि = चन्द्रमण्डलानि। अपि चेत्यारभ्य—उपमिनोति यत् = नगरम्, विभाति इत्यनेनाऽन्वयः। केतक्याः पुष्पं केतकम्—उमाधवेन = शिवेन अनवेक्ष्यमाणं दर्शनाऽनर्हं तत्पूजायां निषिद्धत्वात्। नगरपक्षे—उ वितर्के, माधवेन—अनवेक्ष्यमाणमुखम्, तस्य दैत्यारित्वात्। 'वृद्धश्रवाः सुनासीरः'। भीष्मकर्तृकयुद्धम्। धनञ्जयो वह्निरर्जुनश्च। धर्मराजः पितृपतिस्तदंशभूतो युधिष्ठिरश्च। 'क्रव्यादोऽस्रप आशरः' इत्यमरः। 'चतुर्दश्यष्टमी कृष्णा, अमावास्या च पूर्णिमा। पर्वाण्येतानि राजेन्द्र! रविसङ्क्रान्तिरेव च'॥ अश्वत्थ—सागरौ वन्द्यौ न स्पृष्टव्यौ कदाचन। अश्वत्थं मन्दवारे तु सागरं पर्वणि 'स्पृशेत्'॥ नत्वन्य दिवसे—अत आह—पर्वान्येति। अन्तर्भावो मज्जनं, तद्भेद-प्रतिपादनञ्च। आशुगा बाणाः, वायुदेवश्च। नागनगरं परिसंख्याति—यत्र चेत्यादिना। इन्द्रचापस्य शक्रधनुषः दर्शनं दानवानामसुराणां या सुन्दर्यस्तासां स्तनाऽऽभोगेषु कुचपरिणाहेषु, चापाकाररेखायाः सत्त्वात्, केसरादिचर्चितत्वाद्वा, न तु दानवशरीरेषु। एवमुत्तरत्र। सुमनसो देवाः, पुष्पाणि च। दानवानां—नाशनम् = नाशः, दान-वनस्य = मदजलस्य—अशनम् = भक्षणम्। 'जीवनं भुवनं वनम्' 'गण्डः कटो मदो दानम्'। भृङ्गवर्गे भ्रमरसमूहे। 'वज्रोऽस्त्री हीरके पवौ'। शिखी मयूरः कृशानुश्च। 'आरामः स्यादुपवनम्'। यमुनासोदरो यमस्तस्य भावः कालत्वम्। 'कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः'। सदा शराणामभियोगः सम्बन्धः। आशराणाम् = राक्षसानाम्। अत्रेदं ध्येयम्—दितिसुता दैत्याः, दनुसुता दानवाः, इमे सर्वे काश्यपाः। राक्षसास्तु—निर्ऋतिदिक्पालवंशजाः। अमरस्तु—असुरत्वसामान्यमादाय पर्यायत्वं दैत्यदानवयोराह। अत्यन्तविभिन्नत्वात्कौणपनामानि पृथक् पपाठ—'राक्षसः कौणपः'—इत्यादिना। वारुणी = वरुणदेवजन्या भीतिर्भीः, मदिराभीतिश्च।

मपरिजिहीर्षन्तीषु मानिनीषु, आशुगाऽऽविर्भावस्तालवृन्तचालनेषु, ऐलविलसद्भावो दानवकुमारेषु दृश्यते । तस्मिँश्चैवंविधप्रभावे विजयध्वजे समरमुखेषु पथ्यवृत्तौ मनुष्यधर्मोपयोग्यो गदाऽभिघातो न प्रबभूव, विशृङ्खलबलोल्लासिनि गम्भीरवेदिनीव समीरणप्रयुक्तमङ्कुशमकिञ्चित्करताम- ञ्चतिस्म, दानवप्रथमभूते विपरीतवर्णाः शापा इव वारुणाः पाशा निरवकाशा बभूवुः, विजयश्रीमये च निर्ऋतिप्रेरितो निस्त्रिंशप्रहारो न वेदनामुपजहार, न्यायवृत्तौ च वैवस्वतप्रणीतो दण्डो नोपनिपतितुं शशाक, जिष्णौ च चित्रभानूदयशक्तिर्न कदाप्यवकाशमाससाद, जम्भारिप्रहितस्य दम्भोलेरवयवा अपि शतकोटिभावमलभन्त, अपरिच्छेद्यप्रभावो ब्राह्मणशाप

---

मानिनीषु = मानवतीषु । आशुगो वातो बाणश्च । 'व्यजनं तालवृन्तकम्' । ऐलविलः कुबेरः । इल=प्रेरणे, विल क्षेपे चु०, इलनम्-इलः विलनं विलः, घञर्थे कः । अनित्यण्यन्ताश्चुरादयः । इलसहितं विलम् = इलविलम्-प्रेरणपूर्वकं क्षेपणम् क्रीडाभेदः, तस्मादागतं पारितोषिकम्-ऐलविलम्, तत्-दानवानां कुमारेषु=द्वादशवर्षजातीयेषु बालकेषु दृश्यते । अनेन प्रबन्धेन नगरस्य दिक्पालकर्तृकधर्षणं व्यपोह्यते । अप्रश्नपूर्विका परिसंख्या श्लेषवती । गद्यार्थमुपसंहरति-**तस्मिंश्चैवंविधप्रभावे**-इति । समरमुखेषु संग्रामारम्भेषु, पथ्या हिता वृत्तिराजीवनं वर्त्तनञ्च यस्य तस्मिन्, मनुष्याणां मर्त्यानां धर्मोपयोग्यः गदानां रोगाणामभिघातः पीडनमिव मनुष्यधर्मणो धनदस्य गदाया-अभिघातः प्रहारः न प्रबभूव = समर्थो न बभूव । 'मर्त्यानामेव रोगाभिभवो, न देवानां, नापि देवयोनीनाम्' । 'मनुष्यधर्मा धनदो राजराजो धनाधिपः'-अमरः । विशृङ्खलमुद्धतं यद्बलं तेन-उल्लासिनि । 'त्वग्भेदाच्छोणितस्रावान्मांसस्य क्रथनादपि । आत्मानं यो न जानाति साऽस्य गम्भीरवेदिता'- इति-लक्षणलक्षितो गजो गम्भीरवेदीत्युच्यते, तस्मिन्निव सम्यगीरणपूर्वकं प्रयुक्तमङ्कुशमकिञ्चित्करतां प्राप्नोति, तथा समीरणेन वायुना देवेन प्रयुक्तं प्रेरितमङ्कुशमकिञ्चित्करतामञ्चतिस्म । दानवेषु प्रथमभूते मुख्यभूते तस्मिन् विजयध्वजे । शापाः पाशाः-इत्यनयोर्विपरीतवर्णत्वम् । श्रीमयत्वं निर्ऋतित्वञ्च विरुद्धम् । निर्ऋतिर्दक्षिणपश्चिमकोणाधीशः, अलक्ष्मीश्च । निस्त्रिंशप्रहारः खड्गप्रहारः । 'कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः' । न्याया = न्यायवती वृत्तिर्यस्य तस्मिन् (अर्शआद्यजन्तः) जिष्णौ = जयनशीले, लेखर्षभेऽर्जुने च, ( व्यस्तं रूपकम् ) चित्रभानोः सूर्यादुदयः प्रादुर्भावो यस्य तस्य कर्णस्य शक्तिः घटोत्कचे लग्ना, न तु-जिष्णौ-आससाद = प्राप । जम्भारिणा पुरन्दरेण प्रहितस्य=प्रेरितस्य दम्भोलेरशनेरंशा अपि शतको-

इव तस्य देहस्तिर्यग्जातीयध्वजनिरूप्यसङ्गरप्रसङ्गे भास्वद्भवरथाङ्गभङ्ग-माधत्त ॥ १७० ॥

स इमां देवीं मन्दारमञ्जरीमुद्दिश्य मां दूतमद्य प्रजिघाय, "यदा भवत्या मानसकेतुस्तस्मिन्निकुञ्जे व्यलोकि तदानीमेव दिगन्तरागतां वनविहार-खिन्नां मधुसमयाधिदेवतामिव विद्याधरराजदुहितरमेनामुदीक्ष्य महाऽद्भुत-स्तिमितेन मया गत्वा नागनगरम्, अनागसा गुणसागरेणोद्वेलता सरसीकृत-लोका देवीयं न्यवेदि विजयध्वजाय, तदाप्रभृत्येव जायमानेन कुसुमसायक-विकारेण स नितान्तमायास्यते। तथाहि—अवहेलितसुदर्शनोऽपि सुदर्शनेनै-तदीयरूपेण वशीक्रियते, तिरस्कृतशतकोटिरप्येकामेनां बहु मन्यते, तृणीकृत-देवताऽन्तरोऽपि कामदेवनिदेशं नाऽतिक्रामति, प्रवेशमलभमानस्य सुधादी-

टीनामब्जानां भावः १००००००००० तं शीर्णतामित्यर्थः, अलभन्त = प्राप्नुवन्, न परिच्छेद्यः प्रभावो यस्य ब्राह्मणशापस्य स इव तस्य = विजयध्वजस्य देहः (कर्त्ता) तिर्यग्जातीयो गरुडो ध्वजश्चिह्नं यस्य दैत्यारेस्तन्निरूप्ये प्रसङ्गे—भास्वद्भव-रथा-ङ्गस्य सुदर्शनचक्रस्य भङ्गमामर्दनम् आधत्त = कृतवान् ॥ १७० ॥

प्रासङ्गिकं विजयध्वजवर्णनं सङ्गमयति—**स इमामिति**। स विजयध्वजः—मां = सुबाहुं प्रजिधाय = प्रेषयामास। विद्याधरराजस्य चन्द्रकेतोः एनां मन्दारमञ्जरीं दृष्ट्वा, मया नागनगरं गत्वा—इयं देवी = मन्दारमञ्जरी विजयध्वजाय न्यवेदि—इत्य-न्वयः। महता = बृहता अद्भुतेन = आश्चर्येण—हेतुना स्तिमितेन = निश्चलेन मया कर्त्रा—सुबाहुना—न्यवेदि (कर्मणि लुङ्), का? इयं देवी, कथम्भूता? सरसीकृताः = कासारीकृता लोका यया सा (कर्मणि प्रथमा लुङोक्तत्वात्)। सरसीकरणे साध-नमाह—**गुणसागरेणेति**। गुणसागरस्य सामर्थ्यबोधनाय 'अनागसा'—निर्दो-षेणेति, फलोपधायकत्वबोधनाय 'उद्वेलता'—इति विशेषणद्वयम्। तदाप्रभृत्येव = मन्मुखाच्छ्रवणप्रभृत्येव—'श्रवणन्तु भवेत्तत्र दूतबन्दिसखीमुखात्'—इत्युक्तेः। सुबाहुर्दूतः सखा च विजयध्वजस्य, सुग्रीव इव शुम्भस्य। कुसुमसायकविकारेण कर्त्रा, स विजयध्वजः कर्म, आयास्यते खेद्यते। विजयध्वजस्य अवहेलितसुदर्शनचक्रत्वं पूर्वं प्रतिपादितम्। सुदर्शनेन = रमणीयेन एतदीयेन मन्दारमञ्जरीसम्बन्धिना रूपेण (कर्त्रा) वशीक्रियते = अधीनीक्रियते। विरोधाभासः स्पष्टः। एवम् उत्तरत्र—शतगुणिता कोटिः शतकोटिः—स्वरुश्च। तृणीकृतं देवतान्तरं येन तादृशोऽपि कामस्य चित्तविकारस्य देवोऽधिष्ठाता तस्य निर्देशमाज्ञाम् नाऽतिक्रामति = नोल्लङ्घयते। कामस्य देवत्वेन विरोधः, स्वमनोभवत्वेन परिहारः। चित्तासङ्गं वर्ण-

धितेर्विलूय समानीता मयूखखण्डा इव तद्देहविन्यस्ता मृणालदण्डाश्चण्डांशु-मप्यतिशयानेन मनसिजज्वरेण म्लायन्ति, तदीयोद्दाममदन-दहन-दाह-दलन-वैदग्ध्यानुदयसमासादितमन्दाक्षाणीव नलिनीदलानि निमीलन्ति, कन्दर्पदहनदह्यमानतदवयवभसितसमुदाया इव कर्पूरपांसवः प्रेक्ष्यन्ते, जलयन्त्रगृहेष्वितस्ततो लुठतश्च भावनावैभवादवेक्ष्यमाणामेनां परिरिप्स-माणस्य सेवार्थं स्वयमेवोद्यतं वारिप्रवाहमिवोद्गच्छति बाहुयुगलं, चित्रं यद्रतिरमणकार्मुकनिर्मितप्रेरणया तन्मर्मरुजायामलङ्कर्मीणमपि विप्रलम्भो-पतापोपशमाय परिजनोपनीतं पुष्पजातं तत्कलेवराऽऽलिङ्गनतुल्यकालमेव म्लायति, तस्य च गन्धगज इवोपमृदितपद्मिनीवनः-ऐरावत इवाऽवग-णितहरिचन्दनमालः-निदाघदिनमणिरिव निःशेषशोषितजीवनः-वाडव इव जलाऽभिषेकवर्धनीयो विरहतापः प्रसरति । तदलं कालातिपातेन देवीयं मन्दार-

---

यित्वा दशां वर्णयति-प्रवेशेत्यादिना । नागनगरस्य विजयध्वजाऽनुमतिं विनाऽन्य-प्रवेशाऽभावः पूर्वं प्रतिपादितः । विलूय=छित्वा । अतिशयानेन = अतिक्रामता । म्लायन्ति=म्लाना भवन्ति । तदीयः विजयध्वजीयः ('त्यदादीनि च' 'वा नामधे-यस्य चे'ति वृद्धसञ्ज्ञा, 'वृद्धाच्छः'-इति छप्रत्यः, 'आयनेयीत्यादिना' छस्य ईयादेशः) यः उद्दाम उत्कटः मदन-दहनः कामाग्निः, तस्य यो दाहः तेन यद् दलनं तेन यो वैदग्ध्याऽनुदयो वैचित्र्याऽनुदयः तेन समासादितमन्दाक्षाणीव = प्राप्तलज्जानीव नलिन्या दलानि = पत्राणि निमीलन्ति=सङ्कुचन्ति । भसितं=भस्म । कर्पूरपांसवः= कर्पूररेणवः । प्रेक्ष्यन्ते = दृश्यन्ते । जलयन्त्रगृहेषु = धारागृहेषु, इतस्ततो लुठतो विजयध्वजस्य, भावनाबलात्-दृश्यमानां मन्दारमञ्जरीम्-आलिङ्गितुमिच्छतः, तस्य बाहुयुगलं कर्तृसेवार्थं स्वयमेवोद्यतं वारिप्रवाहं प्रति स्वयमेवोद्गच्छतीवेति क्रियो-त्प्रेक्षा । स्वयमेवेत्यस्योभयत्रान्वयः । चित्रमाश्चर्यम् । अलङ्कर्मीणं समर्थम् । विप्र-लम्भः शृङ्गारभेदः । आलिङ्गनतुल्यकालम् आलिङ्गनसमकालमेव, तत्क्षणमेवे-त्यर्थः । तस्य च विजयध्वजस्य विरहतापः प्रसरति = प्रसारं प्राप्नोति, वर्धते-इत्यर्थः । क इवेति प्रश्ने मालया-उपमिनोति-गन्धगज-इवेत्यादिना । गन्धगजो मत्तगजः । वनं = काननं जलञ्च । जीवनं = जीवितं जलञ्च, वाडवो वडवानलः, स च जलाभिषेकेण वर्धते तद्वत् । प्रबन्धार्थं निगमयति-तदलमिति । कालातिपातो न कर्त्तव्य इत्यर्थः । इयं देवी मन्दारमञ्जरी विजयध्वजस्य वक्षसि स्थितिं बध्नातु, तेन सह यौवनसुखमनुभवन्ती स्वकीयं गुणगणं सफलयतु च-इत्यभिधाय वाचं न्ययंसीत् सुबाहुरिति पूर्वेणान्वयः । विबुधानां देवानां वारणमवरोधकं यो विषा-

मञ्जरी विबुधवारणविषाणमुसलोल्लेखशालिनि साक्षात्कृतकुलिशकर्कशभावे मुरमथनरथाङ्गनेमिनिष्ठनिशितभावाऽनुभाविनि विजयध्वजस्य वक्षसि त्रिजगद्विजयलक्ष्मीरिव निरपायां स्थितिं बध्नातु, सफलयतु च तेन सहाऽनुपहताभिलाषं यौवनसुखान्यनुभवन्ती स्वकीयं गुणगण''मित्यभिधाय वाचं न्ययंसीत् ॥ १७१ ॥

एतदाकर्ण्य चाऽवनतवदनविधुबिम्बायां गृहीतकररुहकिरणशलाकया कराङ्गुल्या तद्वचनप्रत्याख्यानलेखामिव भुवि लिखन्त्यामप्रतिपत्तिमुग्धायां प्रसह्याऽपहरणसाध्वसविधूयमानायां मन्दारमञ्जर्यां वैलक्ष्यातिशयं वहति सहचरीसमूहे तमहं प्रत्यवोचम्—''भद्र ! युज्यत एव रमणीये जने सहृदयानां हृदयाऽभिनिवेशः, स्वत एवाऽनुरागयोग्ये च जने प्राथनाऽनन्तरमपि नानुरागः

---

णस्य मुशलस्य च उल्लेखः=चिह्नं तच्छालिनि तद्विशिष्टे-'वक्षसि'-इत्यस्य विशेषणम् । ऐरावतविषाणरूपमुशल-क्षतवति चेति वीरत्वव्यक्तिः, "वीरप्रिया हि वनिता भवन्ति" इत्युक्तेः। पुनश्च—साक्षात्कृतः कुलिशस्य भिदुरस्य कर्कशभावः=कठोरता येन तस्मिन्, पुनश्च मुरमथनस्य=मुरारेः रथाङ्गनेमिनिष्ठः यो निशितभावः=तीक्ष्णत्वं तस्याऽनुभववति वीरस्य विजयध्वजस्य वक्षःस्थले, त्रिभुवनं विजय—शोभेव निर्विघ्नां स्थितिं निवासं बध्नातु स्वीकरोतु,—तेन विजयध्वजेन सह=साकं न—उपहतोऽभिलाषो यस्मिन् कर्मणि यथा स्यात्तथा यौवनस्य तारुण्यस्य सुखानि संभोगभेदान् अनुभवन्ती=तत्तदिन्द्रयजन्यसाक्षात्कारविषयीकुर्वती सती स्वकीयम्=आत्मीयं गुणानां गणं समूहं सफलीकरोतु (प्रार्थनायां लोट् ) इत्याकारकप्रबन्धमभिधाय वचनमुपरमयत्, यम उपरमे लुङ् ( यमरमनमातां सक् च ) ॥ १७१ ॥

एतदाकर्ण्य—तमहं प्रत्यवोचम्—इत्यन्वयः । चस्त्वर्थः । किं सति ? मन्दारमञ्जर्याम्—अवनतं नम्रं वदनविधुबिम्बं यस्यास्तादृश्याम्, पुनश्च भुवि लिखन्त्यां, कया ? कराङ्गुल्या, कथम्भूतया ? गृहीता कररुहकिरणरूपा शलाका यया तया कराङ्गुल्या । कामिव? तद्वचनस्य=सुबाहुवचनस्य प्रत्याख्यानं तस्य लेखामिव। पुनश्च—अप्रतिपत्त्या=कर्तव्यताराहित्येन मुग्धायां विचारशून्यायाम् । पुनश्च—प्रसह्य=बलाद् अपहरणभयेन (करणेन) कम्पमानायां । पुनः किं सति ? सहचरीगणे वैलक्ष्यस्य विवर्णत्वस्य—अतिशयमाधिक्यं वहति=धारयति सति, पूर्वं दानवदर्शनादेव वैलक्ष्यं जातम् , तद्वचनश्रवणादतिशयः । भद्र ! युज्यते—एवेत्यादि । हृदयालुः सहृदयः। क्षुण्णः पन्थाः अन्यतररागस्याऽपि जगति दर्शनात्, 'न ह्यनुरक्तप्रार्थनामात्रमनुराग-

संभवेदित्यपि रसिकजनेन न क्षुण्णः पन्थाः ? कस्य वा न विदितो निजगतीकृतत्रिजगतीरत्नसमुदायो दानवो वंशः, तत्राप्यशेषत्रिदशशिरोऽवतंससंसद्विश्रान्तनिदेशो विजयध्वजः। किं क्रियतां यदेवम्भूतामवस्थामासादितवत्यां मयि मन्दभागधेयायां मान्द्याद्वा, रभसाद्वा, स्नेहाभिमानाद्वा, भाविनोऽर्थस्य गौरवाद्वा प्रतिज्ञातमनया 'यदेवंविधायां मदयन्तिकायां नाऽहमात्मानं परिणयेन योजयेयमिति' नैतद्विपर्ययः सहचरीसमूहेन गोचरीक्रियते, न मदीयव्यापारैरपि पार्यते, न जनयित्राऽपि संजनयितुं शक्यते, तदर्थं प्रार्थ्यमाना च प्रभूततमैः प्रकारैः प्राणावसानं प्रत्येव व्यवसायमाबबन्ध भूयसो वारान्, यद्व्यतिरेकप्रयुक्तश्चास्या अयं परिणयव्यतिरेकः स एव तावन्ममाऽभिमतवरसंप्रयोगो गगनकुसुमकक्षामाक्रामति, प्रागेव तु मन्दारमञ्जर्य्याः पाणिग्रहणचर्य्या मदीयप्रियसहचर्य्याः, तदुत्तरमपि जनको दैवञ्च प्रमाणमिति"॥१७२॥

---

साधकम्' किन्तु गुणाः जन्मान्तरीयसंस्कारसहकृताः, अतएव 'मनो हि जन्मान्तरसङ्गतिज्ञम्' इति महाकविः कालिदासः। निजस्य स्वस्य गतीकृताः शरणीकृताः त्रिजगतीरत्नानां त्रिभुवनरत्नानां समुदायः=समूहः येन तादृशः दनोर्वंशः कस्य वा न विज्ञातः, अपि तु—सर्वस्य। 'जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते'। अशेषाणां त्रिदशानां शिरोभूषणसंसदि विश्रान्तो निदेशो यस्य तादृशः। वंशादिकं प्रशस्य स्वीकाराभावाय पश्चात्तापं प्रकटयति-किं क्रियतामिति। **प्रतिज्ञातम्**। प्रतिज्ञायां मान्द्यादयो हेतवः, अनया मन्दारमञ्जुर्य्या। प्रतिज्ञायाः आकारमाह—यदेवंविधायामित्यादिना। एतस्याः प्रतिज्ञायाः विपर्ययः=मदयन्तिकाविवाहं विना मन्दारमञ्जरीविवाहः—सखीसमूहेनापि विषयीकर्तुं न शक्यते, मम चेष्टाभिरपि न पार्य्यते, पित्रापि कर्तुं न शक्यते। तदर्थं=विवाहार्थम्, बहुवारान् नानाप्रकारैः प्रार्थ्यमाना तु प्राणत्यागनिश्चयमेवाऽकरोत्। यस्य व्यतिरेकेण=अभावेन प्रयुक्तः स्वनिष्ठप्रयोजकतानिरूपितप्रयोज्यतावान् कृतः, जनित इत्यर्थः। अस्या मन्दारमञ्जुर्य्या अयम्=अविवाहितत्वरूपविशेषणतासन्निकर्षेण प्रत्यक्षप्रमाणगम्यः परिणयस्य विवाहस्य अभावः तावत्=अद्याऽवधि स एव=प्रयोजक एव मम=मदयन्तिकायाः-अभिमतस्य वरस्य वोढुः संप्रयोगः सङ्गः, आकाशपुष्पश्रेणीमवलम्बते, तस्मात् प्रयोजकात्, मम विवाहात् प्रागेव तु मदीयप्रिय-सख्या मन्दारमञ्जुर्य्याः विवाहस्य चर्य्या=कृतिः गगनकुसुमायमाना—इत्यर्थः। प्रयोजकनिष्पत्तिं विना न प्रयोज्यनिष्पत्तिरिति भावः। तदुत्तरमपि=मद्विवाहोत्तरमपि विवाहे नाहं प्रमाणम् न सख्यः, किन्तु—तस्याः जनकः, दैवञ्च प्रमाणमिति—प्रत्यवोचम्॥१७२॥

अथ प्रार्थनप्रत्यादेशविमुखे गतवति तस्मिन् सुबाहौ तादृशञ्च तस्यां विजयध्वजस्याऽभिनिवेशमाकर्ण्य, प्रतिपदमपहारसंभावनया ततो गन्तुमपारयन्त्यां तस्यां विषादमलिनायमानमुखरागासु सर्वास्वप्यस्मासु स कन्यारूपो महामुनिस्तपोनिधिरभ्यधात्—"यद्येवमस्मान्मायाविनो महाऽसुराद्भवत्यो बिभ्यति तदस्मिन्नेवाऽऽश्रमपदे प्रियसखी मन्दारमञ्जरी निवसतु सुखं, यदा खलु मानसकेतुनाऽहं बलाद्रुह्यमाण आकर्णितस्तदा भगवता गृत्समदेनाभ्यधायि 'यः कश्चिदस्मिन्नाश्रममण्डले योजनत्रयाऽवच्छिन्ने पर्यन्ते बलादकामां स्त्रियमभिभवितुमिच्छति तस्य मूर्धा दृषत्पतितपरिणततालफलवच्छतशकलभावमाकलयत्विति'। विदितश्चायं त्रिजगत्सु शापः, तदत्र निवसन्त्या अस्याः प्रसभमपहारशङ्का सर्वथैव निरवकाशी कृता स्यादिति" तच्च तदीयमभिधानं निधानमिवाऽकस्मादधिगतमस्माकमरोचततमाम् ॥१७३॥

अथ काश्चित्सहचरीः प्रस्थाप्य विद्याधरेन्द्रस्य चन्द्रकेतोः सकाशं सन्दिश्य च दानवेन्द्रदूताऽऽगमनादारभ्य तपोनिधिवचनपर्यन्तमर्थं,तदनुमतिं प्रतीक्षमाणा वयं यावदतिष्ठाम तावदेव तद्वृत्तान्तश्रवणाऽनन्तरम् अकृतविलम्बो देवश्चन्द्रकेतुरतन्द्रवृत्तिकया देव्या चन्द्रलेखया सह समागम्य, मत्तपस्योपरोधभयादितो नातिदूरे संविधाय ऋद्धिमन्ति मन्दिराणि, मन्दारमञ्जरीं सहचरीनिवहसमेतां स्वभवनादन्यूनपरिच्छदां तत्रावस्थाप्य तद्वियोगदूयमानेन मानसेन गृहानगमत्। मन्दारमञ्जरी तु प्रणयवशात्प्रथमतोऽपि मया सहैव वनवासमतिमात्रमेव स्पृहयन्ती एवम्भूतेनोदन्तेन सम्पन्नपरितोषविशेषा कृतविद्वेषा व्यापा-

---

अथ गतवति तस्मिन् सुबाहौ, प्रतिपदम् अपहरणशङ्कया ततो गन्तुम् अपारयन्त्यां मन्दारमञ्जर्याम्—स कन्यारूपो महामुनिस्तपोनिधिः—उक्तवान्—यदि एवं मायाविनो महाऽसुराद् भवत्यो बिभ्यति तदस्मिन्नेवाऽऽश्रमपदे सुखं निवसतु मन्दारमञ्जरी। तत्र हेतुमाह यदा इति गृत्समदशापम्। शापप्रसिद्धिमाह विदित-इत्यादिना। तत् फलमाह—तदत्र—इत्यारभ्य—इतिपर्यन्तम्। अरोचततमाम् = अत्यन्तमरोचत ॥ १७३ ॥

अथ काश्चित्सहचरीः प्रस्थाप्य=प्रेषयित्वा सर्ववृत्तं तस्याः पितरौ प्रति सन्दिश्य तदनुमतिं प्रतीक्षमाणा यावदतिष्ठाम तावदेव ताभ्यामागत्य मन्दिराणि संविधाय, तां तत्रावस्थाप्य चन्द्रकेतुचन्द्रलेखाभ्याम् अगम्यत स्वभवनमिति भावार्थसङ्क्षेपः—वाच्यपरिवर्तनेन। मन्दारमञ्जरी तु—चन्द्रशेखरचरणमात्रप्रवणां स्वान्तवृत्तिं विधाय,

रान्तरेषु, स्वान्तवृत्तिं विधाय कुमुदबान्धवशेखरप्रणयिनीं तच्चरणमात्रप्रवणा-मवशिष्टसमये मया सह विनोदयन्ती हृदयमिह संयतमानसाऽवात्सीत्। एवं वसन्त्याश्चात्र मम भूयाञ्जगाम समयः, न चाद्यापि मनोरथः फलाभिमुखो लक्ष्यते, न चाऽमी क्लेशाऽनुभवमात्रफलका अप्रयोजका आध्यात्मिका मारुता विजहति देहं, साहं 'महाभाग! एवम्प्रायभागधेया किं नामाऽऽत्मनो हृदय-निर्विशेषभूतस्य सखीजनस्याऽपि अनर्थापातहेतु'रित्यभिधाय मदयन्तिका व्यरंसीत्" ॥१७४॥

चित्रभानुस्तु तदीयां कथामाकर्ण्य सञ्जातविस्मयो बद्धाञ्जलिरवादीत्–"भगवति! बह्वाश्चर्येयमधरीकृतसुधामधुरभावा भवत्संबद्धा वार्ता, यदव-धारणेन स्वात्मानमप्यहं पुण्यवन्तं गणयामि, फलितं च मे प्राग्भवीयेन सुकृतविशेषेण यदिमां भूमिमासाद्य भगवत्या अपि साक्षात्कारोत्सवो-ऽनुभूतः। अथ विचित्राः संसारस्य वृत्तयः, तत्त्वविद्भिरप्यपरिच्छेद्या कर्मणां विपाकाः, विषयव्यावृत्तबुद्धिभिरपि दुरतिक्रमाः कुसुमसायकसमुल्लासाः, न च स्वप्नेऽपि संभाव्यमिथ्याभावानि दिव्यदृशां तपस्विनामेतादृशानामभि-धानानि, तदपर्याप्तकौतुकमपि हृदयं बलादेव गुरुजनोपसर्पणाय मां त्वरयति, अनन्तरं भगवत्येव प्रमाण"मिति–अभिधाय तूष्णीमभूत् ॥ १७५ ॥

---

पूजावशिष्टसमये मया सह हृदयं विनोदयन्ती–अवात्सीत्। एवमत्र वसन्त्या मम भूयान् समयो जगाम। ध्यानैकतानतया पारोक्ष्यम्। मनोरथः = मानसकेतुलाभः, भवितुमाशंसनीयः। अप्रयोजकाः = व्यर्थाः। आध्यात्मिका मारुताः=प्राणाः। जहति= त्यजन्ति। एतावता निर्विद्य उपसंहरति स्वप्रबन्धार्थम्–साहमिति। न केवलमहं स्वकीयाऽनर्थकारणभूता, अपि तु सखीजनस्यापि–इत्यभिधाय मदयन्तिका व्यरंसीत्। इति मदयन्तिकाचित्रभानुसंवादः।

कार्यसिद्धौ द्वारभूतः संवादः कार्यिणः स्वयम्।
प्रत्याख्यातप्रतिद्वन्द्वः, सहकारि–तपोनिधिः ॥ १७४ ॥

**चित्रभानुस्तु–बद्धाञ्जलिरवादीत्।** अधरीकृतः सुधाया मधुरभावो माधुर्यं यया तादृशी वार्ता। 'वार्त्ता प्रवृत्तिर्वृत्तान्तः।' प्राग्भवीयेन=पूर्वजन्मार्जितेन पुण्यभे-देन, (कर्त्रा) फलितं साफल्यं प्राप्तम्। नपुंसके भावे क्तप्रत्ययः। साफल्यं विशदयति-यदिदमित्यादिना। सम्भाव्यो मिथ्याभावो येषां तानि। अभिधानानि वचनानि। अप-र्याप्तं कौतुकं यस्य, हृदयं चित्तं गुरुजनानामुपसर्पणाय समीपगमनाय त्वरयति = त्वरावन्तं करोति। अनन्तरम् = तत्परम्, तूष्णीमभूत् **मौनमासाञ्चक्रे** ॥ १७५ ॥

अथ जिगमिषति कुमारे मन्दारमञ्जर्यास्तद्दर्शनावाप्तिवाञ्छया पूर्वकथाप्रसङ्गेन विलम्बस्य वृत्ततया तदुपरोधजिहासया च द्वेधाभवन्मानसायां मदयन्तिकायामपूर्ववस्तुदर्शनशंसिनि मन्दं मन्दं प्रस्पन्दमाने चित्रभानोरक्ष्णि दक्षिणे, तत्क्षणेन काचिदागत्य सत्वरगमनश्रमप्रवर्तमाननिःश्वासोत्कम्पितपयोधरभारा, कुसुमाऽऽभरणभूषितगात्रा, केशपाशाऽनवकाशीकृततमालपलाशा, कामनीयकं सेवितुकाममिव चामरं स्कन्धसीमन्यवलम्बमानं दधाना, दूरादेव चित्रभानुदर्शनात्फुल्ललोचनेव पद्मिनी, तुलाकोटिकूजितकैतवेन स्ववक्तव्यशब्दमिवाऽभ्यस्यन्ती सखी, 'भर्तृदारिके मदयन्तिके ! इयं विहितहैमवतीचरणपरिचर्या भर्तृदारिका मन्दारमञ्जरी भवदवेक्षार्थमुपायाती'त्यभिधाय कुमारमुखदत्तदृष्टिरतिष्ठत् ।। १७६ ।।

ततो मदयन्तिका तदानीमेव तदाऽऽगमनमवधार्य सिद्धमनोरथमात्मानं मन्यमाना, 'कुमार ! परोपकारसाराः खलु महात्मनां प्रवृत्तय' इत्यभिधाय, धृष्टतयाऽभिदधामि इत्यभिदधाना, यथार्हमिव दैवादनतिक्रान्ताऽवसरा प्रियसखी मन्दारमञ्जर्य्यपि निसर्गसिद्धं भवत्सौन्दर्यमुदीक्ष्य नयनेन्द्रियसर्गफलानुबन्धिनमादधातु, अवधारयतु च महाभागतामहार्यां सर्वसहायाः, आकलयतु च महीयमानतामहीयमानां महीतलनिवासलोचनानां, विजानातु

---

अथ—जिगमिषति कुमारे काचिदागत्य सखी, 'भर्तृदारिके मदयन्तिके ! इयं भर्तृदारिका मन्दारमञ्जरी भवदवेक्षार्थमुपायाति'—इत्यभिधाय कुमारमुखदत्तदृष्टिरतिष्ठत् । मन्दारमञ्जरीकर्मिका, चित्रभानुकर्तृक-दर्शन-प्राप्तीच्छा- मदयन्तिका समवेता **एका कोटिः**, अपूर्वकथाप्रसङ्गजातविलम्बतया चित्रभानूपरोधपरिहारेच्छा च मदयन्तिकासमवेता—इति कोटिद्वयावगाहीच्छावत्त्वेन द्वेधाभवन्मानसायाम् । मनसीच्छावत्त्वञ्च परम्परया, आत्मा मनसा युज्यते—इत्यादि—न्यायात् । पुरुषस्य दक्षिणाक्षिस्पन्दनं शुभसूचकमित्याह—**प्रस्पन्दमाने** इति । कामनीयकं रमणीयं वस्तु सेवितुमिच्छन्तमिव चामरं स्कन्धपर्यन्ते—अवलम्बमानं धारयन्ती, **दूरादेव**=उदयाचलादेव शरदि चित्रानक्षत्रस्थस्य भानोः सूर्यस्य दर्शनाद्विकसितपद्मा पद्मिनीव दूरादेव दृष्टिगोचरयोग्यप्रदेशादेव चित्रभानुकुमारदर्शनात्प्रफुल्ललोचना पादकटकक्वणनच्छलेन स्ववक्तव्यशब्दमभ्यस्यन्तीव, काचित् सखी—इत्यन्वयः ।। १७६ ।।

**ततो** मदयन्तिका-इत्युदीर्य सस्मितं विरराम—इत्यन्वयः । अत्र सर्वत्र प्रार्थनायां लोट् ।। १७७ ।।

च प्रजापतेरजातपूर्वं कौशलं, गणयतु च गुणगणमाहात्म्यस्य समाहारम्, उपनयतु च विनययौवनयोरपर्यायां पर्याप्तिं, सम्मन्यतां च जनन्यदृष्टमनन्यदृष्टपूर्वम्, अनुमनुतां च जनकमखिलजन-कमनीयमहिमानं, समर्थयतां च समर्थभावमात्मसुचरितानां, विदाङ्करोतु चास्मिन्नहनीयं गहनीयमपि निवासं महनीयपरिणामम्, अनुसन्धानविषयीकरोतु च मामप्यवन्ध्यायमानसख्यानुबन्धा'मित्युदीर्य सस्मितं विरराम ॥१७७॥

चित्रभानुस्तु साऽनुनयं रत्नसानुनिवाससौख्यं स्वानुभवगोचरं तद्दर्शनेन विधित्समानः स्वकीयस्पृहासंवादिनीं तदीयामाज्ञां स्वतोऽप्यनतिक्रामणीयां नितरामनुरुध्यमानो 'भगवति! यथाज्ञापयसी'त्यभिधाय पूर्ववदेव तस्थौ।

अथ मदयन्तिका हृदयं सत्वरं तदागमनकामुकं दधाना यावत्तस्यां दिशि तरलायमानतारकं चक्षुः प्रक्षिपति तावदेव प्रचलितकलहंसकुलकोलाहलमिव चरणाभिघातेन रुणरुणायमानानां नूपुराणां झाङ्कारमश्रृणोत्१७९

अथ काश्चित्स्वेदजलबिन्दुचितगात्र्यः सिन्दुवारवीरुध इव संचारिण्यः, काश्चित्करधृतशुकशावका धवलपीतसिचयापिहिताः सरस्वतीमनुकुर्वाणाः,

---

चित्रभानुस्तु—सानुनयं यथाऽऽज्ञापयसीत्यभिधाय पूर्ववदेवावतस्थौ। रत्नानां सानौ=प्रस्थे निवासस्य सौख्यम्। तद्दर्शनेन=मन्दारमञ्जरीदर्शनेन। विधित्समानः=विधातुमिच्छन् ॥१७८॥

अथ मदयन्तिका यावत्तस्यां दिशि चक्षुः प्रक्षिपति, तावदेव—नूपुराणां झाङ्कारमश्रृणोत्। शीघ्रं मन्दारमञ्जर्या आगमाऽभिलाषिचित्तं दधाना इत्यादि-सुगमम्। रुणरुणायमानानामिति—अनुकरणशब्दः। झाङ्कारमिति नूपुरध्वनीनामनुवादकमनुकरणम् ॥ १७९ ॥

अथ बह्वयः कन्यकाः प्रादुरभूवन्, ताश्च क्षणं तस्थुरित्यन्वयः। काश्चित्=कतिचित्। किं शब्दस्य केनापि रूपेण चिदव्ययस्य योगेऽपरिचितत्वविशिष्टः किमोऽर्थो बोध्यः। अपरिचितत्वञ्चात्र संख्यया, कुत्रचिन्नाम्ना। यथा—'कश्चित्कान्ताविरहगुरुणा', 'कश्चित्कराभ्यामुपगूढनालम्' 'संशय्य क्षणमिति निश्चिकाय कश्चित्' इत्यादिषु विवेचनीयम्। स्वेदजलबिन्दुभिः—चितानि = व्याप्तानि गात्राणि यासान्ताः,('अङ्गगात्रकण्ठेभ्यो वक्तव्य'मिति ङीष्)अतएव संचरणशीलाः सिन्दुवारवीरुध इव=निर्गुण्डीवीरुध—इव। काश्चित् हस्तगृहीतकीरपोताः, अतएव धवलश्चासौ पीतश्च ('वर्णो वर्णेन' इति समासः) यः सिचयः शिरोवस्त्रं तेन पिहिता आच्छादिताः, अतएव सरस्वतीमनुकुर्वाणाः। काश्चित्—मणिखचितालङ्कारकान्तिमिश्रितवपुषः,

काश्चिन्मणिभूषणच्छविच्छुरितदेहा अद्भुतकरशाखाकूजत्कोकिला मञ्जरी-रजःपिञ्जरिता इव सहकारवल्लयः, काश्चित्करगतदर्पणोदरप्रतिबिम्बितसकल-तद्वनप्रदेशसन्निवेशाः कौतुकातिशयाल्लिखिततच्चित्रपटपाणय इव प्रेक्षमाणाः, काञ्चनाऽलङ्करणमौक्तिकमरीचिमिश्रिता मदनभस्मरूषितगात्रां रतिमिव विड-म्बयन्त्यः, अपराः स्कन्धावलम्बमानधवलबालव्यजना गवाक्षान्तरप्रविष्ट-चान्द्रदीधितिदण्डमण्डिता इव मन्मथनिवासवलभ्यः, इतराः काञ्चनमय-ताम्बूलमरालपाणयोऽतिप्रणयाद्दिव्यनिहितनलदूतहंसावतंसितकरामिव दम-यन्तीं स्पर्धमानाः, काश्चित्केतकीदलपाणयो निर्मलेन्दुकलामयदन्तपत्रकरा इव कुसुमसायकान्तःपुरप्रतिहारपालिकाः, काश्चिन्माणिक्यमयभूषणा जङ्गमा इव मदनोद्यानाऽशोकलतिकाः, इतराः कर्णधृतशिरीषकोषाः शैवालशवलिता इव मदनविहारसरस्यः, अन्या दन्तपत्त्रभासमानमुखाः परिणतचन्द्रा इव शरद्रजनयः, काश्चिद्विविधपल्लवविभूषितवदनाः साम्राज्याभिषेककलश्य इव मदनस्य, इतरा मरुदुद्धूतारुणतरचेलाञ्चलाः पताका इव तारुण्यस्य, अपरा नीलोत्पलप्रसाधितपाणयोऽन्तःपुरप्रचाराऽनुरूपाः प्रहरणोपायना

---

अतएव अद्भुतकरमयशाखासु कूजन्तः शब्दायमानाः कोकिला यासान्ताः, मञ्जरीभिः पिञ्जरीकृताः पीतीकृताः सहकारस्य—वल्लय इव = लता—इव, वृक्षाणां वल्लीनिर्माण-रीतिः भविष्ये बृहत्संहितायाञ्च द्रष्टव्या। वल्लिशब्दात्, 'कृदिकारादक्तिन'—इति ङीषि दीर्घान्तोऽपि। काश्चित् = इतराः हस्तस्थितादर्श-मध्य-संक्रान्त-समस्ततदर-ण्यप्रान्त-संस्थानाः, अतएव-कौतुकस्य=कुतूहलस्य-अतिशयादाधिक्यात् चित्रितनद्व-नचित्रविशिष्टवस्त्रखण्डहस्ता-इव दृश्यमानाः, एवं रीत्या व्याख्येयानि सर्वाणि विशेषणानि। कामदेव—भस्मना लिप्तगात्रम्, रतिमिव = कामदेवपत्नीमिव अनु-कुर्वन्त्यः सत्यः। अपराः—बालव्यजनं=चामरम्। चान्द्रीया दीधितिः प्रभा तया भूषिता मन्मथ—निवासस्य—चन्द्रशाला-इव। इतरा दमयन्तीं स्पर्धमाना इव। स्पर्धासाधनमाह—**काञ्चनमये**त्यादिना। काञ्चनमयताम्बूलानि मरालाश्च पाणिषु यासान्ताः, अथवा काञ्चनमयास्ताम्बूलार्थं मरालाकाराः करङ्काः पाणिषु यासान्ताः। अतिप्रेम्णा हेतोः दिव्येन निहितेन निसृष्टेन नलदूतहंसेन-अवतंसितः = भूषितःकरो यस्यास्तां दमयन्तीमिव। काश्चित्कामदेवद्वारपालिका इव ('स्त्रीद्वाद्वांरं प्रतीहारः')। काश्चिद् मदनोद्यानस्य—अशोककलिका—इव। इतराः शेवालकर्बुरिता मारस्य विहा-रवाप्य-इव। 'चित्रं किर्मीरकल्माषशवलैताश्च कर्बुरे' 'जलनीली तु शेवालं शैवालः'। अन्याः परिणतेन्दवः शरत्समयरात्रय इव। काश्चित् कामदेवस्य—साम्राज्या-

इव पञ्चपृषत्कस्य, अपराः कृष्णबाललीला इव कुब्जानुगताः, कतिपया दशावतारवार्ता इव वामनाऽनुयाताः, काश्चिच्चन्दनलता इव कञ्चुकिभिरनुगताः, काश्चिद्गिरिराजभुव इव हिमवालुकाऽभिमिश्रिताः, काश्चिद्विन्ध्यमेखला इव मुखदर्शितसोमोद्भवा, इतरा गान्धारीप्रतिमूर्तय इव नेत्रसद्भावेऽप्यपरिच्छिन्नरूपविशेषाः, काश्चिज्जलधिवेला इव तमालप्रवालाऽलङ्कृताः, काश्चित्सिंहलीला इव नागकेसरसंयोगशालिन्यः, काश्चिद्धरिवंशकथा इव हारमौक्तिकैस्तारकामयं पुष्करं दर्शयन्त्यः, इतरा महाभारतवार्ता इवाऽनुभूयमानवनपर्वाणः, अपरा रामायणकथा इव सुन्दरोरुकाण्डमण्डिताः, अन्या

---

भिषेककलश्य–इव । इतराः–तारुण्यस्य पताका–इव । अपराः पञ्चपृषत्कस्य = पञ्चबाणस्य, प्रहरणस्य=लक्ष्यवेधस्य उपायनभूता इव । अपराः कुब्जैः=वक्रैः सेवकैः अनुगता अनुसृता अतएव कृष्णस्य=कंसारेः बाललीला–इव । तत्र कुब्जायाः सत्त्वात्, प्रकृते तु–अन्तःपुरसहायकेषु कुब्जस्य परिगणितत्वात् , तथा च 'वामन-षण्ढ-किरातम्लेच्छाऽऽभीराः शकार-कुब्जाद्याः' इति सा. द. । कतिपयाः वामनैः खर्वैः सेवकैरनुयाता अनुसृताः अतएव दश = 'मत्स्यः, कूर्मो वराहश्च नारसिंहोऽथ वामनः । रामो रामश्च रामश्च बौद्धः कल्की च ते दश'–इत्युक्ता अवताराः = मायादेहा यस्य स दशावतारो विष्णुः, तस्य वार्त्ता–इव, तद्वार्त्तायां वामनाऽवतारस्य सत्त्वात्, अन्यत्र वामनानां सेवकत्वात् । कञ्चुकी = सर्पः, अन्तःपुरचरो वृद्धो दौवारिकश्च । हिमश्च वालुका च, हिमरूपा वालुका वा, अन्यत्र–हिमवालुका = कर्पूरः, 'घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका'–अमरः । सोमोद्भवा नर्मदा, सा च विन्ध्यमेखलासु दर्शितमुखा इति मुखदर्शिता ( वाहिताग्न्यादिः ), अन्यत्र मुखेन दर्शितं सोमस्य उद्भव उदयो याभिस्ताः, चन्द्रवन्मुखवत्त्वात् । गान्धारी = धृतराष्ट्रमहिषी नेत्रसत्त्वेऽपि अपरिच्छिन्नः अपरिचितः रूपाणां शुक्लपीतादीनां विशेषो भेदो यया तादृशी, पत्युरन्धत्वेन स्वयमपि नेत्रयोः पट्टिकाबन्धनेनाऽन्धसदृशाऽवस्थानात् । प्रकृते नेत्राणां शोभनत्वेपि, अपरिच्छिन्नः=परिच्छेत्तुमशक्यः रूपविशेषः आकृतिर्यासान्ताः । तमालस्तापिच्छः समुद्रवेलासु प्रभूततया भवति, तमालपत्रं तिलकम् कन्यकासु । सिंहस्य लीलाः–नागस्य गजस्य केसरेषु सटासु संयोगशालिन्यो भवन्ति, कन्यकास्तु नागकेसरस्य=चाम्पेयस्य–सुगन्धद्रव्यस्य संयोगशालिन्यः, तदङ्गरागवत्त्वात् । हरिवंशकथा–तारकासुरस्य खड्गफाल-दर्शिका, कन्यका हारमौक्तिकैर्नक्षत्रमयाऽऽकाशस्य सूचिकाः । पुष्करशब्दो नानार्थः । अनुभूयमानं वन-पर्व यस्यां महाभारतकथायाम् , अनुभूयमानानि वनानां पर्वाणि= प्रदेशा याभिस्ताः कन्यकाः । सुन्दरं यद् उरु महत् पूजनीयं काण्डं सुन्दरकाण्डम्

मीमांसकगोष्ठ्य इवाऽनन्यथासिद्धाभ्यासविहितकर्मभेदाः, काश्चिदुपनिषद इवाऽद्वितीयरूपाः, काश्चिद्वैशेषिकान्तेवासिन्य इव सप्तकीकृतशब्दार्थाः कन्यका बह्व्यः प्रादुरभवन् ॥१८०॥

ताश्च सत्वरमुभयतः परस्पराभिमुख्येन समुदायतामापद्य काञ्चनलतामयमिव भागद्वयमादधाना, मध्यतो रथ्यामिव विरचयन्त्यो, विलोचनविलासैः कुवलयावलीमयमिव, मुखमण्डलै राकासुधाकरमयमिव, केशपाशैरसितमदनचामरमयमिव, पाणिभिः पल्लवमयमिव, अधरप्रभाभिः प्रभातातपमयमिव, भूषणमणिकिरणपरम्पराभिस्तेजोमयमिव, कलेवरकान्तिभिश्चम्पकमयमिव, चरणैररुणराजीवमयमिव–जीवलोकमुपदर्शयन्त्यः क्षणं तस्थुः।

---

तेन मण्डिता रामायणस्य कथा, रमणीयोरुभागेन मण्डिताः कन्यकाः। अन्यथासिद्धः=अपूर्वविधिविहितत्वेन सिद्धः, अभ्यासविहितः 'दध्नाऽग्निहोत्रं जुहोति' 'यवाग्वाऽग्निहोत्रं जुहोति'–इत्यादिवाक्यविहितः अग्निहोत्ररूपकर्मभेदो यस्यां तादृशी मीमांसकानां गोष्ठी=संसद्, अभ्यासवाक्यानां विहिताऽनुवादकत्वेन गुणमात्रविधायकत्वात्। 'एकमेवाद्वितीयम्' इति अद्वितीयब्रह्मप्रतिपादिका उपनिषदः, अद्वितीयं रूपमाकारो यासान्ताः कन्यकाः। सप्तसंख्यकपदार्थप्रतिपादकत्वेन वैशेषिकान्तेवासिन्यः सप्तकीकृतशब्दार्थाः, शब्दार्थः=पदार्थः सप्तकीकृतः स, रि, ग, म, प, ध, नी, इति षड्जादिसप्तस्वरवत्त्वेन याभिस्ताः कन्यकाः, षड्ज–ऋषभ–गान्धार-मध्यम–पञ्चम-धैवत-निषादानां संक्षिप्ता संज्ञा सरिगेत्यादि, "तेषां संज्ञा स, रि, ग, म, प, ध, नीत्यपरा मता' इत्युक्तत्वात्। कनन्ति= दीप्यन्ते–इति कन्याः (अघ्न्यादयश्चेति यक्प्रत्ययः) अनुकम्पिताः कन्याः कन्यकाः, सहचर्य्यः बह्व्यः=अनेकाः ('ओतो गुणवचनात्'–इतिङीषन्ताज्जस्) प्रादुरभूवन्=प्रकटीभूताः ॥१८०॥

ताश्च क्षणं तस्थुरित्यन्वयः। किं कुर्वत्यः? सत्वरं=तूर्णम्, उभयतः पार्श्वद्वये, भागद्वयम्=पार्श्वद्वयम्। मध्यतः कन्यकाश्रेण्योरन्तराले। (स्यादुत्पलं कुवलयम्) राकासुधाकरः=पूर्णचन्द्रः। केशपाशैः केशकलापैः। असितम्= कृष्णम्। 'पल्लवोऽस्त्री किसलयम्'। चम्पकस्य पुष्पं चम्पकम्। राजीवं= पद्मम्। जीवलोकं भुवनम्=उपदर्शयन्त्यः साक्षात् कारयन्त्यः, क्षणं= स्वामिन्यागमनपर्यन्तं तस्थुः प्रतीक्षन्तेस्म।

नेपालादौ दृश्या, शोभेयं राजभवनेषु।
परिणयसमये, याने, देवादेर्दर्शने वाऽपि॥
व्याख्यानाऽवसरेऽस्मिन्, मेऽङ्गानि समालिहन्तीव।
प्रादुरभूद् बहुरूपा, तां देवीं शीतलां वन्दे॥१८१॥

अथ तदाऽऽभरणमणिमरीचिभिः परस्परमनुबध्यमानाभिरदृश्यतामुपेयुषि मध्यभागाऽवकाशे समदनकुतूहलप्रहितचक्षुश्चित्रभानुः-सहसैव तमुद्भिद्येव निर्गच्छन्तीं,-जातवेदसो जठरादिव पाञ्चालीं, रागसागरोदरादिव सौन्दर्य-लक्ष्मीं, चन्द्रान्तरादिव कौमुदीं, सान्धिवेलाजलधरादिव विद्युल्लतां, चण्डांशुमण्डलादिव तपतीं, सूर्यकान्तमणिमध्यादिव ज्वलनशिखां, दुग्धोदन्वत

अथ—चित्रभानुः-मन्दारमञ्जरीं ददर्श-इत्यन्वयः संक्षिप्ततमः। अथ मध्यभागाऽवकाशे-अदृश्यतामुपेयुषि समदनप्रहितचक्षुश्चित्रभानुः, सहसैव तमुद्भिद्येव निर्गच्छन्तीं-मार्गेण समायान्तीम्,......काञ्चनमयीं सञ्चारिणीं-लीलायाः पाञ्चालिकामिव-मन्दारमञ्जरीं ददर्श-इत्यन्वयः-संक्षिप्ततरः। अथ मध्यभागावकाशे-अदृश्यतामुपेयुषि समदनप्रहितचक्षुश्चित्रभानुः—

१—सहसैव-तमुद्भिद्येव-निर्गच्छन्तीम्—जातवेदसो जठरादिवेत्यारभ्य-सुवर्ण-प्रतिमाम्-इत्यन्तेनोत्प्रेक्षिताम्, २-स्वप्रभाभिः सह...किरणजालमभिभवन्तीम्, ३—सन्तरन्तीम्, ४—जङ्गमाऽनङ्गलतामिव उपलक्ष्यमाणाम्, ५—मार्गेण समायान्तीम्, ६—केशकलापमञ्जर्या समुद्भासमानाम्, ७—मृगमदबिन्दुतिलकेन-अलङ्कृतभालभागाम्, ८—भ्रूलताद्वितयेन विराजमानाम्, ९—पक्ष्मलोमपङ्क्तिभ्यां विभूषिताम्, १०—विलोचनाभ्यामभिरामाम्, ११—कर्णाभ्यामुपशोभमानाम्, १२—कपोलाभ्यां कमनीयाम्, १३—नासिकादेशेन प्रकाशमानाम्, १४—दशनपालिं दधानाम्, १५—बिम्बाधरेण रमणीयाम्, १६-चिबुकं बिभ्राणाम्, १७—कण्ठं वहन्तीम्, १८—विभूषिताऽवटुतटाम्, १९—स्तनाभ्याम् उपशोभमानाम्, २०—भुजाभ्यां विभ्राजमानाम्, २१—रोमावलिं वहन्तीम्, २२—नाभिं दधानाम्, २३—अवलग्नगगनं बिभ्राणाम्, २४-नितम्बबिम्बेन विलसन्तीम्, २५—ऊरुभ्यां स्फुरन्तीम्, २६—जङ्घाकाण्डेन विराजमानाम्, २७—चरणाभ्यां रमणीयाम्, श्री गौरीद्वयीमिव—गृहीतकेशवेशाम्—इत्यारभ्य......पाञ्चालिकामिवेत्यन्तैरुत्प्रेक्षणैरुत्प्रेक्षिताम्—मन्दारमञ्जरीं ददर्श—इत्यन्वयः—संक्षिप्तः। समदनकुतूहलं=कामकौतुकपूर्वकम्—प्रहितं चक्षुर्येन। तं=भूषणकिरणान्धकारम्, उद्भिद्येव=ऊर्ध्वं भित्त्वेवेति क्रियोत्प्रेक्षा, निर्गच्छन्तीमित्यादि-द्वितीयान्तपदानां—मन्दारमञ्जरीमित्यनेन विशेष्यवाचकेनान्वयः, पञ्चालदेशनृपतेर्द्रुपदस्य पुत्री याज्ञसेनी यज्ञकुण्डादुत्पन्ना—अत-आह—जातवेदस-इति। भूषणकिरण-जातवेदसोर्दीप्तिमत्त्वेन साधर्म्यम्—उत्प्रेक्षाहेतुः। एवमुत्तरत्र। साधारणलक्ष्मीः सागरादुत्पन्ना, इयन्तु—रागसागरादिवेति विशिष्टा हेतूत्प्रेक्षा। चन्द्रान्तरादिव=सुधांशुबिम्बमध्यादिव कौमुदीम्=चन्द्रिकाम्। सान्धिवेलायाः सायंकालस्य मेघात्, विशेषेण द्योतते—इति—विद्युत् ('द्युते-

इव चन्द्रलेखां, मेरुमणितटादिव भास्वन्मूर्त्तिं, दहनादिव सुवर्णप्रतिमां, स्वकीयाभिः प्रभाभिः सहचरीनिवहविभूषणमणिकिरणजालमभिभवन्तीं, सकलदिग्व्यापिनि लावण्यवारिप्रवाहे नूपुररवोपहूतकलहंससमारोहणेनेव सन्तरन्तीं, दीप्यमानप्रभूततमप्रसाधनमणिकिरणदन्तुरतया जङ्गमामनङ्गदीपलतामिवोपलक्ष्यमाणां, सहचरीनिकरदृगन्तसन्तानकञ्चुकितेन महेन्द्रनीलोपलाकलिततोरणेनेव कुवलयदलमालिकाशालिनेव कलिन्दनन्दिनीकल्लो-

---

रिसन्नादेश्च जः' इति साधुः ) सैव लता ताम्। चण्डांशोः सूर्य्यस्य मण्डलादिव=बिम्बादिव तपतीं=तापीम् । (ऋक्षवतः पर्वतस्य दक्षिणस्था नदी तापी) ('तपती तपनोत्सृष्टा') तापीनर्मदयोर्मध्यस्थः पर्वत ऋक्षवान् ( सतपुड़ा )। सूर्यकान्तमणिमध्यादुत्पन्ना ज्वलन-शिखा सामान्यज्वलनशिखाऽपेक्षया अद्भुता भवितुमर्हतीति चमत्कारः। दुग्धोदन्वान् क्षीरसागरः तस्मादिव—चन्द्रलेखाम्, लेखात्वारोपः स्त्रीत्वसाधर्म्यलाभाय, एवं लतात्वारोपः । मेरुः सुमेरुः भूगोलकर्णिकारूपो भागश्चतुःसप्तत्यंक्षांशेभ्य उपरितनोभाग इत्यर्थः, स च पुराणेषु ध्येयत्वेन सूर्य्यकिरणानां पर्यन्तत्वेन पर्वताकारेण वर्णितः, कर्क—मकर—वृत्तमध्यवर्त्तिनः सूर्यापेक्षया तस्य ६६ षट्षष्ट्यंशदूरस्थत्वेन—उन्नतत्वं परिक्रमणीयत्वञ्च सर्वमुपपद्यते—एव । अत आह—मेरोः मणिमयात्तटात् प्रान्ताद् भास्वतो विवस्वतो मूर्त्तिमिव । दहतीति दहनः ( कर्तरि ल्युर्बाहुलकात् ) तस्मादिव—सुवर्णस्य प्रतिमां, निर्गच्छन्तीं मन्दारमञ्जरीं ददर्श—इत्यनेनान्वयः । अत्र सर्वत्र—इवेन नित्यसमासो विभक्त्यलोपश्चेति—अनुशासनानुसारेण—उत्प्रेक्षामनुसृत्य व्याख्यातम्, इवशब्दस्य पाञ्चालीमिवेत्याद्यन्वये तु—उपमा—इति बोध्यम्। स्वस्या इमाः स्वकीयास्ताभिः प्रभाभिः कान्तिभिः, सहचरीणां निवहस्य=समूहस्य यद् विभूषणमणिकिरणानां जालम्=समूहस्तद् अभिभवन्तीम्=तिरोदधानाम् । सकलासु व्याप्तवति दिशासु लावण्यं सर्वाङ्गसौन्दर्यं तदेव वारि जलं तस्य प्रवाहे पूरे-सन्तरन्तीम्=प्लवमानाम् । साधनमुत्प्रेक्षते-नूपुराणां मञ्जीराणां रवैरुपहूता ये कलहंसाः कादम्बाः तेषु समारोहणेनेव, हंसकेषु-कलहंसत्वारोपो गम्यः, नूपुररवोपहूतत्वोक्तेः, कलहंसानां जलतरणकर्तृत्वं प्रसिद्धमेव । 'मञ्जीरो नूपुरोऽस्त्रियाम्' 'हंसकः पादकटकः' इत्यमरः। 'कादम्बः कलहंसः स्या'दित्यपि। दीप्यमानानां प्रभूततमानां प्रसाधनमणीनां किरणैः दन्तुरतया=उन्नततया जङ्गमां चलायमानाम् अनङ्गस्य दीपलतामिव उपलक्ष्यमाणां=दृश्यमानाम् । मार्गं विशिनष्टि—सहचरीत्यादिना । सहचरीणां निकरस्य दृगन्तसन्तानेन सञ्जातकञ्चुकेन महेन्द्रनीलमणिरचितेन तोरणेनेव, अथ च कुवलयदलानां मालिकाभियुक्तेनेव, अथ च कलिन्दनन्दिन्याः कल्लोलावलिभिश्चित्रितेनेव मार्गेण समायान्तीम्। पुनश्च-केशक-

लावलिशवलितेनेव मार्गेण समायान्तीं, सुजातरूपोद्भवहेतोर्यौवनानलस्येव धूमवीरुधा—जगद्विजयिनो विषमबाणवीरस्य चामरमालया—जनमोहनकारिणो लावण्यैन्द्रजालिकस्य मयूरपिच्छिकया—रसानुगुणवृत्तेर्वर्षारम्भस्य बलाहकलेखया—घनप्रणयशालिनः शृङ्गारमयूरस्य कलापकलिकया—हृदयसन्तापहारिणो बाल्यदिवसावसानस्य तमिस्रलेखया—यमुनयेव बलाकर्षणयोग्यया—उज्ज्वलरसवाहिन्येवोर्मिमत्या—मन्मथसिद्धाञ्जनवर्तिकयेव जगद्वशीकरणानुरूपया—मायूरच्छदच्छत्रिकयेव भास्वदालोकनिवारणसमर्थया—कृष्णमूर्त्त्येव मदनोत्पत्तिहेतुभूतया—धूमलतयेव नयनविकारकारिण्या—कादम्बिन्येव शिखण्डोल्लासकृता—युवजनजीवभूतयेव प्राप्तबन्धया—भ्रमरपरम्परयेव कुसुमाऽनुबन्धबन्धुरया—शिखिबर्हपङ्क्त्येव कबरीभूतया—चैत्ररथतमालवीथ्येव प्रसाधितालकया—कामकरवालिकयेव लग्नसिन्दूरलोहिताग्रया

---

लापमञ्जर्या समुल्लासमानाम् । केशकलापमञ्जरीं विशिनष्टि—सुजातरूपोद्भवेत्यादिना । सुजातः सुन्दरो यो रूपोद्भवो रूपप्रादुर्भावस्तस्य हेतोः यौवनवह्नेः धूमलतया इव । जगद्विजयते तच्छीलस्तस्य विषमबाण एव वीरस्तस्य चामरमालया । ( व्यस्तानि रूपकाणि )। ऐन्द्रजालिकानां मयूरपिच्छिका पृष्ठतो भ्रमन्ती मनोहरा दृश्यते, तदाह—जनेति । रसस्य = जलादेव जायमानस्य मधुरादेरनुगुणा = अनुकूला वृत्तिर्यस्य तस्य वर्षारम्भस्य वर्षर्त्तोः सम्बन्धिन्या बलाहकानां मेघानां लेखया । घनो = निविडः प्रणय एव घने मेघे प्रणयस्तच्छालिनः, शृङ्गार एव मयूरः = शिखी तस्य—कलापस्य कलिकया—तत्स्वरूपया । हृदयस्य सन्तापहारिणो बाल्यावस्थ एव बाल्यं बालसम्बन्धि तस्य दिवसावसानस्य तमिस्रस्य=अन्धकारस्य लेखया । पुनरुत्प्रेक्षते—बलेन शौर्येण बलरामेण च आकर्षणयोग्यया कालिन्द्या इव । उज्ज्वलरसः शृङ्गारः घनरसश्च ( 'शृङ्गारः शुचिरुज्ज्वलः'—अमरः ) अभास्वरशुक्लरूपवत्त्वाजलस्याप्युज्ज्वलत्वम्, ऊर्मिमती तरङ्गिणी । सिद्धाञ्जनस्य वर्तिका जगतो वशीकरणेऽनुकूला तयेव मयूर ( पत्र ) तनूरुहनिर्मितया छत्रिकया = स्वल्पच्छत्रेणेव भास्वतः सूर्यस्य य आलोकः प्रकाशस्तस्य वारणे निवारणे शक्तया भास्वान् विवेकशाली य आलोको दर्शनं तस्य वारणे समर्थया। मदनस्य = प्रद्युम्नस्य मनोभवस्य च । नयनानां विकारः, कामेन दुःखेन च । शिखण्डः पिच्छो गुच्छश्च । प्राप्तः लब्धो बन्धो बन्धनं यया, मनोहरत्वाद् 'युवजनजीवनभूतयेति' । बन्धनाऽभावे तत्र लग्नजीवितं स्खलितं स्यादिति बन्धनेन धार्यते इत्युत्प्रेक्षा । कुसुमानामनुबन्धेन बन्धुरया सुन्दरया, समानमुभयत्र । कबरीभूता = चित्रिता, कबरी=केशवेशः । प्रसाधिता=भूषिता अलका यया तमालवीथ्या, प्रसा-

केशकलापमञ्जर्या समुद्भासमानां, कुन्तलकलापकिरणोत्करप्रकाशकारणेन महेन्द्रनीलमणिनेव मृगमदबिन्दुतिलकेनालङ्कृतभालभागां, शम्बराऽसुरनिकृत्तमन्मथधनुःशकलयुगलेनेव कामविकारान्धकारप्ररोहसमुदायेनेव यौवनोपनिषदारम्भप्रणवदलद्वयेनेव सौन्दर्यप्रशस्तिलिखिताक्षरपङ्क्तिद्वयेनेव भ्रूलताद्वितयेन विराजमानां, कनीनिकेन्द्रनीलरत्नप्रभाप्रवाहद्वयाकाराभ्यां नेत्रनीलनलिननासीरचरीभ्यामिव मधुकरमालिकाभ्यां—तनुतरजलदशकलराजिभ्यामिव तारकातिरोधानकर्मकुशलाभ्यां पक्ष्मलोमपङ्क्तिभ्यां विभूषितां, मीनकेतनसायकनीलनलिनाभ्यां वदनारविन्दमधुकराभ्यां स्मरविजयपता-

घितं भूषितम् अलकं भालं यया केशपाशमञ्जर्या। रुग्नं सिन्दूरवत् लोहितं रुधिरम् अग्रे यस्याः सा करवालिका तयेव—लग्नं यत्सिन्दूरं तेन लोहितं शोणमग्रं यस्यास्तया। पुनश्च **कुन्तलानां** चिकुराणां कलापस्य समूहस्य किरणानां मयूखानाम् उत्करस्य चयस्य प्रकाशहेतुना महेन्द्रनीलमणिनेव–मृगमदस्य कस्तूरिकाया बिन्दोस्तिलकेन विशेषकेण–अलङ्कृतः शोभितो भालस्य भागो यस्यास्ताम्। "चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः"। "तमालपत्रतिलकचित्रकाणि विशेषकम्"–अमरः। पुनश्च–**भ्रूरेव लता** तस्या **द्वितयेन विराजमानाम्**। भ्रूलताद्वितयमुत्प्रेक्ष्य विशिनष्टि–**शम्बरासुरे**त्यादिना। शम्बरासुरेण निकृत्तं छिन्नम् यद् मन्मथधनुषः शकलयोः युगलम् = युग्मं तेनेव। अथ च मदनविकृतिजनिततिमिराङ्कुरनिकरेणेव। अपि च–यौवनस्य या उपनिषद् = रहस्यविद्या तस्या य आरम्भः = उपक्रमः तत्र यः प्रणवः = मन्त्रादावुच्चारणीयो वर्णः तस्य दलद्वयेनेव खण्डयुगलेनेव ( भ्रूविक्षेपकटाक्षादीनामनुभावत्वेन रहस्यबोधकतया उपनिषत्त्वारोपः )। सौन्दर्यस्य प्रशस्तेः प्रशंसायाः लिखिता या–अक्षरपङ्क्तिस्तस्या द्वयेनेव=युगलेनेव। पुनश्च–**पक्ष्मलोमपङ्क्तिभ्यां विभूषिताम्**। कथम्भूताभ्याम्? **कनीनिका**रूपे ये नीलरत्ने तयोर्यः प्रभायाः प्रवाहस्तस्य यद्द्वयं तदाकाराभ्याम्,नेत्ररूपं यन्नीलनलिनानां नासीरं=सेनामुखं तस्मिन् विचारणशीलाभ्यामिव मधुकराणां मालिकाभ्याम्। अपि च तारकयोः कनीनिकयोः, नक्षत्राणाञ्च तिरोधानकर्मणि = अन्तर्धानक्रियायां कुशलाभ्याम्=समर्थाभ्याम्, तनुतरे ये जलदशकलयो राजी ताभ्यामिव। पुनश्च **विलोचनाभ्यामभिरामाम्**। कथम्भूताभ्याम्? **मीनकेतनस्य**=कामस्य सम्बन्धिनः सायकरूप-नीलकमलस्वरूपाभ्याम्–('अरविन्दमशोकञ्च, चूतञ्च नवमल्लिका। नीलोत्पलञ्च पञ्चैते, पञ्चबाणस्य सायकाः' ), अथ च–वदनमेव–अरविन्दं तत्र मधुकरस्वरूपाभ्याम्, अथवा वदनमरविन्दमिव तस्य माधुर्य्यकराभ्याम् ( भावप्रधानो

कामीनाभ्यां–हरिणरुचिरत्वादेव तारोल्लासनशीलाभ्यां–कृष्णत्वादेव कर्णाभिमुखाभ्यां–कुवलयापीडपराभवयोग्याभ्यां च–कामपालत्वादेव कालिन्दीकल्लोलाकर्षणकलाकुशलाभ्याम्–उत्पलभ्रमागतभ्रमरसंबन्धादेवाभिभूतमृगमदाभ्ययौवनगन्धसिन्धुरमदप्रवाहाभ्याञ्च–मदनप्रियत्वादेव रतिकर्णावतंसकुवलयाकराभ्यां—चकोरलोचनापचारादेव मन्मथविकारप्रदोपारम्भतिमिरोद्गमप्रायाभ्याम्–अञ्जनाश्रयत्वादेव पूर्णानन्दस्वरूपाभ्यां–तपःपरिणामश्यामान्वयादेव महायामाभ्यां–वृजिनप्रायाभ्यामपि प्रमोदातिशयजनकाभ्यां—पृथुभ्यामप्यनुपहिताहार्यतरलभावाभ्यां—रूपग्राहकाभ्यामपि श्रवणाभिमुखाभ्यां–कालात्मकाभ्यामपि विशेषगुणवद्भ्याम्–असितरूपाभ्यामपि कृतश्रु-

---

निर्देशः), अपि च स्मरस्य विजयपताकाया मीनस्वरूपाभ्याम् । अपि च हरिणेन रुचिरः शोभितश्चन्द्रस्तस्य भावस्तस्मात्–ताराणां नक्षत्राणाम्–उल्लासनशीलत्वम्, चन्द्रस्य तारापतित्वात्–हरिण इव रुचिरत्वादेव = हरिणनयनवत्सुन्दरत्वादेव तारयोः कनीनिकयोरुल्लासनशीलाभ्याम् । अपि च कृष्णः–पार्थसारथित्वात् तत्प्रतिपक्षिराधेयापरनामक–कर्णस्याभिमुखः, विलोचने तु—श्यामले, कर्णान्तविश्रान्ते च, तत्र श्लिष्टहेतुत्वेन कृष्णत्वमुत्प्रेक्षितम् । अथ च—कुवलयाऽऽपीडस्य गजस्य पराभवे योग्यः कृष्णः–तद्वत् कुवलयस्य उत्पलस्य य आपीडः शेखरः= शिखास्थं माल्यम् ('शिखास्वाऽऽपीडशेखरौ'–अमरः) तस्य पराभवयोग्याभ्यां च । चकारः कृष्णत्वादेवेत्यस्यानुकर्षणार्थः । अथ च–कामपालत्वाद्=हलायुधत्वाद् कामोद्दीपकत्वात्–च । मृगमदः=कस्तूरिका, गन्धसिन्धुरो गन्धगजः । कर्णावतंसः कर्णभूषणम् । ''स्यादुत्पलं कुवलयम्'' 'प्रदोषो रजनीमुखम्' प्रकृष्टदोषश्च । तिमिरोद्गमस्तमःप्रादुर्भावो मोहोद्गमश्च । अञ्जनं कज्जलम्, अञ्जनाऽऽश्रयो हनूमान् पूर्णज्ञानित्वात्पूर्णानन्दस्वरूपः । तपःपरिणामेन श्यामत्वस्य सम्बन्धादेव, महदायामो दैर्घ्यं ययोस्ताभ्याम् । वृजिनं पापं कलुषञ्च । पृथुभ्यां विस्तीर्णाभ्याम्, पृथुरादिराजश्च, पृथुकाः चिपिटाः, आहार्य्यस्तरलभावः कृत्रिमचञ्चलता । विलोचनस्य रूपग्राहकत्वं प्रसिद्धमेव, परन्तु श्रवणे शब्दसाक्षात्कारे–अभिमुखत्वं विरुद्धम्, श्रवणयोः=कर्णयोरिति परिहारः । अतीतादिव्यवहारहेतुः कालो न विशेषगुणवान्, विलोचने तु कालात्मके = श्यामले, अतो मनोहरत्वादिविशेषगुणवन्तौ ताभ्याम् । नैयायिकानां विशेषगुणास्तु–'बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः । अदृष्टभावना शब्दा अमी वैशेषिका गुणाः' ॥ इति । एते च न काले वर्तन्ते, अतो विरोधः, परिहारः पूर्वमुक्तः । असितः अबद्धः मुक्तः श्रुतेर्वेदस्य लङ्घने–

तिलङ्गनोद्यमाभ्यां–विशेषदर्शनवद्भ्यामप्यविमुक्तविभ्रमाभ्याम्–अतिप्रसन्नाभ्यामपि मदनविकारघूर्णिताभ्यां–विशुद्धकरवालाकृतिभ्यामपि अङ्कविरहिताभ्यां–तैजसाभ्यामप्यमुक्तसरसीभावाभ्यां विलोचनाभ्यामभिरामाम्, विलोचनमीनविलोभनशैवालाङ्कुरेण मदनरथध्वजलम्बितशिखिपिच्छावचूलेन कपोलचन्द्रबिम्बकलङ्केन पद्मरागाभरणप्रभासन्ध्यातिमिरोदयेन तमालपल्लवेन कृतोत्तंसाभ्यां–सर्वविद्यारहस्यसुधारसबिन्दुप्रायैः कुन्तलकलापकादम्बिनीसमुद्गीर्णकरकायमाणैः सुरभिसमयावतारकुन्दकलिकाकारैः रसानुगुणशरदारम्भनक्षत्रकल्पैरतिस्थूलैर्मुक्ताफलैः प्रसाधिताभ्यां–समिध्यमानमदनवीतिहोत्रविस्फुलिङ्गकणिकाभिरिव कुसुमसमयोदिताभिरशोककलिकाभिरिव माणिक्यसूचिभिरनुप्रोतेन पृष्ठस्थितेन धम्मिल्लधूमयोनिजन्मना कर्णाग्रवर्त्तिरन्ध्रप्रविष्टेन सौदामनीदाम्नेव श्रवणाभरणद्वयेन परिष्कृताभ्यां कर्णाभ्यामुपशोभमानां, लावण्यलक्ष्मीदर्पणाभ्यामिव प्रतिफलितसवतद्गुणाभ्यां–केलती-

---

उद्यमवान् न भवति, तस्य विधिनिषेधाग्रस्तत्वात्, बद्धस्तु–अश्रद्धया–भवति उद्यतः, असितरूपाभ्यां कृष्णरूपाभ्यामिति परिहारः। विशेषदर्शनानि विशेषविचारा येषां सन्ति ते विशेषदर्शनवन्तः-विमुक्तः विशिष्टो भ्रमोऽयथार्थज्ञानं तथा भवन्ति–अतो विरोधः, विशेषदर्शनवद्भ्यां रूपवद्भ्यां तथापि अत्यक्तविलासाभ्याम् इति परिहारः। प्रसन्नः प्रसादयुक्तो विकारघूर्णितो न भवतीति विरोधः, यौवनस्य समदनत्वेन परीहारः। विशुद्धः करवालः अङ्केन = चिह्नेन अपराधेन हिंसकत्वेन च सहितो भवति, विलोचने तु करवालाकृतिनी अपि न सागसी, अङ्कशब्दो नानार्थः। यः खलु तैजसः सरसीभावं कासारत्वं विमुञ्चत्येव, सरस्या जलाधारत्वात्, स-रसीभावो रसवत्त्वमिति परीहारः। चक्षुरिन्द्रियं तैजसम्, रूपग्राहकत्वात्। पुनश्च—**कर्णाभ्यामुपशोभमानाम्**। कथम्भूताभ्यां? कृतोत्तंसाभ्याम्, प्रसाधिताभ्याम्, परिष्कृताभ्याम्, केन केन? विलोचनरूपो यो मीनः तस्य विलोभनभूतेन शैवालस्याऽङ्कुरेण, मदनस्य–रथध्वजलम्बितस्येव शिखिनः पिच्छस्य अवचूलेन गुच्छेन, तमालस्य पल्लवेन, कथंभूतेन पल्लवेन? कपोलरूपस्य चन्द्रबिम्बस्य कलङ्कभूतेन, पद्मराग खचितानामाभरणानां प्रभायाः कृते सन्ध्याकालिकतिमिरस्य प्रादुर्भावरूपेण तमालपल्लवेन–कृतः–उत्तंसः = अवतंसो ययोस्ताभ्याम्। 'पुंस्युत्तंसाऽवतंसौ द्वौ, कर्णपूरे च शेखरे'–इत्यमरः। अथ च मुक्ताफलैः प्रसाधिताभ्याम्। मुक्ताफलविशेषणानि **सर्वविद्येत्यादीनि** सुगमानि। श्रवणयोराभरणद्वयेन— परिष्कृताभ्यां शोभमानाम्। आभरणद्वयविशेषणानि **समिध्यमानेत्यादीनि** सुगमानि। पुनश्च—**कपोलाभ्यां कमनीयाम्**। कथम्भूताभ्याम् इत्याकाङ्क्षायां—**लावण्येत्यादीनि**

कपोलधारणानुरूपोपधानाभ्यामिव मदनकरनीरजीकृततयोज्ज्वलाभ्यां–मधूकक‍लिकाभ्यामिव प्रचलद्दलकमधुकराकुलिताभ्यां–चन्द्रबिम्बाभ्यामिव पुरुषोत्तमनयनविषयीभावयोग्याभ्यां–मदनोपगृहीताभ्यामिव गाम्भीर्यविहीनाभ्याम्–अशोककिसलयावतंसेनेव कुङ्कुमद्रवपङ्केनेव बाल्ययौवनसान्धिवेलरागेणेव श्रवणकुरुविन्दकिरणश्रेणिजालकेन परिष्कृताभ्यां कपोलाभ्यां कमनीयां, सौभाग्यसंपन्निबन्धनपर्यवसानपुष्पकस्येव भालाभरणलग्नस्य भ्रूयुग्मान्तरालम्बिनोऽतितनीयस्योस्तिमिरलेखयोः सीमन्तमन्तरा सन्तन्वतोऽरुणरागस्येव लोहितकस्य विहितवंशाधिरोहणाया लावण्यलक्ष्मीलासिकायाः करग्रहणयोग्यया माञ्जिष्ठसूत्रपरम्परयेव कौसुम्भवसनवैजयन्त्येव दीधितिधारया प्रसाधितेन–मीनकेतनपताकावंशेनेव वलयितविद्युद्गुणावनद्धाभ्यामि-

---

विशेषणानि–विशदानि । प्रतिफलिताः प्रतिबिम्बिताः सर्वे तद्गुणा ययोस्ताभ्याम् । केलत्यां क्रीडायां यत्कपोलधारणं तस्यानुरूपे उपधाने=उपबर्हौ ताभ्यामिव मदनस्य कराभ्यां नीरजीकृततया=निर्धूलीकृततया उज्ज्वलाभ्यां–भासमानाभ्याम् । चन्द्रबिम्बं पुरुषोत्तमस्य–विराड्रूपस्य विष्णोर्वामं नयनम् । पुरुषोत्तमस्य श्रेष्ठवरनयनविषयीभावयोग्याभ्यामित्यर्थः प्रकृते । उन्नतावेव कपोलौ शोभेते अत उक्तं **गाम्भीर्यविहीनाभ्यामिति** । सन्धिवेलायां भवः सान्धिवेलः, स चासौ रागस्तेनेव । 'कुरुविन्दं रत्नभेदे, मुस्ता-कुल्माषयोः स्त्रियाम्'—अमरः । पुनश्च–**नासिकादेशेन प्रकाशमानाम्** । कथम्भूतेन ? लोहितकस्य=पद्मरागमणेः दीधितिधारया=कान्तिपरम्परया **प्रसाधितेन**=मण्डितेन । अथ च–हेम्नः सुवर्णस्य बालिका=बालीति प्रसिद्धा तया ग्रथिताभ्यां गुम्फिताभ्याम्–तत्र च गर्भितः मध्ये ग्रथितः पद्मरागः शोणमणिर्ययोस्ताभ्याम्–अतिस्थूलाभ्यां मध्यस्थितपद्मरागगर्भीकरणयोग्याभ्याम्—मुक्ताफलाभ्याम्–मौक्तिकाभ्यामुल्लसच्छोभमानमग्रं यस्य तेन । उत्प्रेक्षते–भालस्य=ललाटस्याभरणे लग्नस्य=खचितस्य अतएव भ्रूयुग्मान्तराले लम्बमानस्य सौभाग्यसंपदः निबन्धनं पर्यवसानं यस्य तस्य पुष्पकस्येव=पुष्परागमणेरिव, अनुकम्पितस्य पुष्पस्येव वा, अतिशयेन तन्व्यौ तनीयस्यौ तत्रापि सूक्ष्मत्वबोधनाय पुनरतिशब्दः, अतिसूक्ष्मयोः तिमिरलेखयोः तद्रूपयोः भ्रूरेखयोः अन्तरा=मध्ये सीमन्तं विभागद्वयरूपं केशवेशं सन्तन्वत इव कुर्वत इव अरुणरागस्य=रक्तवर्णस्य लोहितकस्य रक्तमणेः दीधितिधारया प्रसाधितेनेति संबन्धः पूर्वमुक्तः । मीनकेतनस्य=कामस्य पताकायाः वंशेनेव–इति नासिकादेशेनेत्यस्य स्वतन्त्रं विशेषणं मुक्ताफले–उत्प्रेक्षते–वलयितः वलयाऽऽकारेण भुग्नो यो 'विद्युतां गुणः' विद्युद्रूपो गुणो वा हेमबालिकासादृश्यार्थं, तेन अवनद्धाभ्यामिव=बद्धा-

व करकाभ्यां स्वतेजोऽभिभवोद्भावितविरोधतया मध्यनिरुद्धभास्वद्भ्यामिव देवदैत्यगुरुभ्यां कुशेशयकेसरकलिपताभ्यामिवान्तर्निहिताशोककोरकाभ्यां कुन्दकलिकाभ्यां लोहिताङ्गोभयभागवर्त्तिभ्यामिव नक्षत्राभ्यां हेमबालिकाग्रथिताभ्यां गर्भितपद्मरागाभ्यामतिस्थूलाभ्यां मुक्ताफलाभ्यामुल्लसदग्रेण—तिलकुसुमेनेव पयोधराविर्भावकलीनोन्नतिभृता—लावण्यरसस्रोतसाप्यनिम्नगतिभाजा—अनभिहितस्वरूपेणाप्यात्तगन्धेन—शुकमुखसदृशेनाप्याकलितसच्छिद्रान्तरात्मना—प्रभाकरेणाऽपि द्विपुटीप्रत्यक्षवादिना नासिकादेशेन प्रकाशमानां, रसनासिंहासनारूढवाग्देवताकरस्फटिकाक्षमालामिव जिह्वावीरुदुद्भूतकलिकावलीमिव रतिरमणवीरसारसनमौक्तिकमालिकामिव सर्वविद्या-

भ्याम् करकाभ्यां = वर्षोपलाभ्याम् इव, स्वयोः = देवदैत्यगुर्वोः तेजसः प्रतापस्य अभिभवेन=पराजयेन उद्भावितः=प्रकाशितो यो विरोधो वैरं तत्तया—मध्ये = अन्तरा निरुद्धः=आवृतः भास्वान् सूर्यो याभ्यां तादृशाभ्यां देवदैत्यगुरुभ्यामिव = जीवशुक्राभ्यामिव-मुक्ताफलाभ्याम् ,अन्तर्मध्ये निहितो वृतः,अशोकस्य कोरकः कलिका ययोस्तौ ताभ्याम् , कुशेशयस्य=शतपत्रस्य केसरैः=किञ्जल्कैः कलिपताभ्याम् = रचिताभ्याम्—कुन्दस्य कलिकाभ्यामिव-मुक्ताफलाभ्याम् ,अथ च—लोहिताङ्गस्य=अङ्गारकस्य उभयभागयोः वर्त्तिभ्यां नक्षत्राभ्यामिव श्वेतवर्णाभ्यां काभ्यामपि भाभ्याम् इव—मुक्ताफलाभ्यामुल्लसदग्रेण नासिकादेशेन—प्रकाशमानाम् । अथ च—तिलकुसुमेनेव,अपि च पयोधरयोरल्पो य आविर्भावः आविर्भावकः (अल्पे कन्) तेन लीना या—उन्नतिस्तां बिभर्तीति तेन । अपि च लावण्यरसस्य स्रोतसा = स्रुतिस्थानेनाऽपि—अनिम्ना=अनीचा या गतिस्तां भजतीति तेन, विरोधः स्पष्टः । अथ च—अनभिहितम् = अकथितं जनेषु अप्रसिद्धं स्वरूपं यस्य स आत्तः स्वीकृतः गन्धो गर्वो येन तादृशो न भवति—इति विरोधः, आत्तः साक्षात्कृतः गन्ध आमोदो येनेति परीहारः। अपि च—शुकस्य=वैयासकेरिति विरोधः, कीरस्य मुखतुल्येनापि आकलितः सच्छिद्रान्तरः आत्मा यस्य तेन। अपि च—प्रभाकरेण=मीमांसकेन, तन्मते ज्ञानमात्रस्य मिति-मातृ-मेयविषयकत्वेन त्रिपुटीप्रत्यक्षमेव न द्विपुटीप्रत्यक्षमिति विरोधः । प्रभाकरेण=कान्तिकृता—इति प्रकृते, द्वयोः पुटयोः समाहारः—तया यः प्रत्यक्षः गन्ध-साक्षात्कारस्तद्वादिना तत्प्रस्तावकेन—**नासिकादेशेन** प्रकाशमानाम् । 'अङ्गारकः कुजो भौमो लोहिताङ्गो महीसुतः' । 'स्रोतोऽम्बुसरणं स्वतः' । 'निम्नं गभीरं गम्भीरम्'—इति सर्वत्रामरः। पुनश्च—**दशनपालिं दधानाम्**=दन्तपङ्क्तिं बिभ्राणाम् । रसनारूपे सिंहासने आरूढा या वाग्देवता तस्याः करस्य या स्फटिकमयी—अक्षमाला = जपमाला तामिव जिह्वारूपवीरुधो लतायाः सकाशाद्—उद्भूता या कलिकानामावली तामिव,

रहस्यसुधाबिन्दुवीथिमिव उज्ज्वलतरामप्यरोकाशातसञ्जनयित्रीमपि निशा-तशिखां-सुमनःशरदात्मिकामप्यमुक्तघनभावां दशनपालिं दधानां, यौवनग-न्धसिन्धुरप्रसाधनचूर्णेन-मदनमहोत्सवोपयोगिपटवासपरागेण-सौन्दर्योद-न्वदन्तरविद्रुमदलेन-रतिविलासिनीसीमन्तमाणिक्यमणिना--स्मितकौमुदी-समुदयरागेण-रूपदीर्घिकाकोकनदकोरकाङ्कुरेण-कलेवरकान्तिवल्लीपल्लवेन-शृङ्गारोपवनजवाप्रसूनेन-वाग्देवताकरकमलपञ्जरान्तर्गतकीरविलोभनानुरू-पबिम्बफलेन-लोहिताङ्गेनाप्यधरोदितरूपेण-अरुणेनाप्यनुष्णकरेण-शोणेना-

---

रतिरमणस्य=कामस्य यद् वीरसारसनं वीरकाञ्ची तस्य मौक्तिकमयीं मालिकामिव, सर्वासां विद्यानां ये रहस्यसुधायाः बिन्दवस्तेषां वीथिमिव=श्रेणिमिव, अरो-केण=रन्ध्राभावेन आसमन्तात्-शातं=सुखं सञ्जनयित्रीम् अपि निशाता=कुन्द-कुड्मलाकारतीव्रा शिखा=अग्रभागो यस्यास्ताम् । सुमनसां पुष्पाणां शरदः= बाणव्यथादायकः=जेताऽऽत्मा स्वरूपं यस्याः तथाभूतामपि-न मुक्तस्त्यक्तः घन-भावो=निविडता यया ताम्-दशनपालिं दधानाम्-(अत्र-अशातनिशातयोः शरदा-त्मिकत्वाऽमुक्तघनभावत्वयोर्विरोधः स्पष्टः) । पुनश्च-**बिम्बाधरेण रमणीयाम्** । कथम्भूतेन ? यौवनरूपो यो गन्धसिन्धुरो मत्तगजः-तस्य प्रसाधनचूर्णरूपेण ( वर्ण-मात्रेण सादृश्यम् ) । मदनस्य महोत्सवोपयोगिना, पटवासस्य=वस्त्रार्थगन्धस्य परागरूपेण । सौन्दर्यस्य य उदन्वान् तस्यान्तरस्य=मध्यस्य विद्रुमस्य=प्रवालस्य दलरूपेण । रतिरूपा या विलासिनी तस्याः सीमन्तस्य=केशवेशस्य ( लम्बमानेन इत्यर्थः) माणिक्य-मणिरूपेण । स्मितरूपा या कौमुदी तस्याः समुदयस्य= समूहस्य रागरूपेण। रूपस्य या दीर्घिका वापी तस्याः कोकनदस्य=रक्तोत्पलस्य यः कोरकः कलिका तस्य अङ्कुरेण=अभिनवोद्भिद्रूपेण । कलेवरस्य=शरीरस्य या कान्ति-श्छविः सैव वल्ली=लता तस्याः पल्लवरूपेण। शृङ्गारोपवनस्य या जवा=ओड्रः तस्याः प्रसूनरूपेण-( वर्णसाम्यात् ) 'ओड्रपुष्पेपि वृक्षेपि जवाशब्दः प्रकीर्तितः' 'जवा-यान्तु जपा स्मृता, 'ओड्रपुष्पं जवा ( जपा )'। वाग्देवतायाः करकमलयोः पञ्जरस्य= सम्पुटस्य अन्तर्गतः=मध्यस्थितः यः कीरः शुकः-तस्य विलोभनानुरूपं विलोभनानु-कूलं यद् बिम्बफलं तद्रूपेण । लोहिताङ्गेनापि=महीसुतेनापि न धराया उदितः= उत्पन्नः अधरोदितस्तद्रूपेणेति विरोधः, मङ्गलस्य भूमिपुत्रत्वात्, लोहितानि=रक्तानि अङ्गानि=अवयवा यस्य तेन, अधर-इति उदितं संकेतितं रूपमाकारो यस्य तेन-इति परिहारः । अरुणेन=सूर्येणेति विरोधः, अव्यक्तरागेणेति परीहारः । कराः= किरणाः । अन्यत्र अनुष्णं करोतीति टः । 'मिहिरारुणपूषणः' 'अव्यक्तरागस्त्वरुणः'। 'शोणो' हिरण्यवाहो नदः अमरकण्टकोत्तरप्रदेशान्निर्गतः पाटलिपुत्रसविधे गङ्गया

पि कृतसिताभिभूतिना—मधुस्वरूपेणापि पीयूषास्वादशालिना—सद्राक्षारसेनापि तिरस्कृतद्राक्षारसेन बिम्बाधरेण रमणीयां, वदनकान्तिप्रवाहसञ्चरणपरिवाहमिव निम्नमध्यं—चम्पककोरकमिव लग्नतिलद्विरेफं चिबुकं बिभ्राणाम्, उत्तमसूत्रगुम्फिताभिरनवद्याभिर्विमर्दसहाभिर्युक्तिभिरिव मुक्ताभिः परीतं—कुसुमबाणविजयकम्बुमिव रसरभसपरवशरतिकरकल्पितसिन्दुवारमुकुलमालिकापरिक्षेपम्—अजातशत्रोरिव धृतानन्तविजयभावं—नकुलस्येव सुघोषं—सहदेवस्येव सन्मणिपुष्पकं—पुराणपुरुषपाणिपरिवर्त्तनमिव पञ्चजनविजयलभ्यं—च-

---

मिलति। सिता नदी नेपालराज्ये 'पालपा' प्रदेशेऽस्ति। कृता सितायाः अभिभूतिरभिभवो येन शोणेनेति विरोधः, स च न सम्भवति, कथं विन्ध्यप्रदेशस्थः शोणः हिमालयस्थायाः सिताया अभिभूतिं कर्तुं शक्नुयात्। शोणेनापि = रक्तोत्पलच्छविनापि कृता सितानां=सितवर्णवतां विषयाऽभिलापेण बद्धानां कामिनाञ्च अभिभूतिः तिरस्कारो येन। मधुरादिरसुरः न पीयूषास्वादशाली, मधुरस्वरूपेणेति परीहारः। लाक्षा द्राक्षाशब्दयो रलयोरैक्यात् विरोधः, भेदात् परीहारः। एतादृशेन बिम्बाधरेण रमणीयाम्। पुनश्च चिबुकं बिभ्राणाम्। कथम्भूतम्? वदनकान्तेः यः प्रवाहः धारा तस्य सञ्चरणस्य गमनस्य परीवाहमिव उच्छ्वासमार्गमिव—नतं मध्यं यस्य तत्। अथ च—चम्पकस्य कोरकमिव लग्नः तिलरूपो द्विरेफो यस्मिन् (तिलः कृष्णचिह्नम्) चिबुकम्=ओष्ठाऽधोभागं बिभ्राणाम्=धारयन्तीम्। ('जलोच्छ्वासाः परीवाहाः')। चिबुकस्य मध्यत्वं सुलक्षणम्। तत्र तिलवत्त्वं सुलक्षणतरं दर्शनीयत्वञ्चेति विज्ञेयम्। पुनश्च—कण्ठं वहन्तीम्। कीदृशम्? मुक्ताभिः परीतम्, काभिरिव? युक्तिभिरिव। किमर्हं? विमर्दं संघर्षं सहन्ते इति विमर्दसहास्ताभिः, शेषं स्पष्टम्। कुसुमबाणस्य कामस्य विजयशङ्खमिव, रसस्य रभसेन परवशा पराधीना या रतिस्तस्याः करेण कल्पिता या सिन्दुवारमुकुलानां मालिकायाः परिक्षेपे वेष्टनं यस्मिन्। अजातशत्रोरिव=युधिष्ठिरस्येव धृतः पोषितः—अनन्त-विजययोः कृष्णार्जुनयोः भावो मित्रभावो येन, तस्येव धृतः अनन्तस्य दोरकस्य विजयभावः प्राधान्यं येन, अनन्तः केयूरस्थाने कण्ठे च परिधीयते। नकुलश्चतुर्थः पाण्डवः पशुपालनविधानज्ञत्वेन सुघोषः, ('घोष आभीरपल्ली स्यात्'—अमरः) सुष्ठु घोषो ध्वनिर्यस्मिन् कण्ठे। सहदेवः पञ्चमः पाण्डवः, मणिपुष्पकं रत्नमयं कङ्कणम्—उभयत्र। 'पुष्पकं रीतिपुष्पे च विमाने धनदस्य च। नेत्ररोगे तथा रत्नकङ्कणे च रसाञ्जने॥ लोहकांस्ये मृदङ्गारशकट्याञ्च नपुंसकम्'। पुराणपुरुषस्य पाणिपरिवर्त्तनं यस्मिन् तमिव (पाञ्चजन्यमिवेत्यर्थः), पञ्चजनस्य तन्नामकस्याऽसुरस्य विजयेन लभ्यम्, तदस्थित्वात् पाञ्चजन्यशङ्खस्य, प्रकृते—पञ्चजनेन = पुरुषेण कर्त्रा विजयेन हेतुना लभ्यम्, पञ्चजनस्य कर्तु-

तुर्विधपदजातनिवासभूमिविभाजिकाभिरिव तिसृभिर्लेखाभिरलङ्कृतं कण्ठं वहन्तीम्, अरुणप्रभयेव तिमिरभारलग्नया—पद्मरागप्रभयेव महानीलानुस्यूतया—अलङ्करणकाञ्चनकषणलेखयेव धम्मिल्लनिकषावसक्तया—कण्ठाभरणवन्धलोहितपट्टसूत्रवीरुधा लम्बमानया विभूषितावटुतटाम्, अरुणकिरणशोणाभ्यामिव मदनादित्योदयपर्वताभ्यां—कमलकेसरपरागरञ्जिताभ्यामिव कान्तिसरसीचक्रवाकतरुणाभ्यां—सिन्दूररजःसुन्दराभ्यामिव कामदेवसपर्याकाञ्चनकलशाभ्यां—कुङ्कुमोपदिग्धाभ्यामभ्रमुवल्लभकुम्भाभ्यामिव सञ्जातदिव्यकुसुमस्रक्संयोगाभ्यां—लावण्यवेलातालीफलाभ्यामिव मधुररससंभृताभ्यां—भाविवल्लभकरजव्रणाङ्किताभिव्यञ्जिकाभिर्मणिमालाभिरुपशोभिताभ्यां—पर्वतत्वादेव स-

---

विजयेन लभ्यम् वा ('कृत्यानां कर्त्तरि वे'ति वा षष्ठी)। अपि च—नामाऽऽख्यातोपसर्गनिपातभेदेन चतुर्विधस्य पदजातस्य=पदसमूहस्य निवासभूमेः=निवासस्थानस्य विभाजिकाभिरिव=विभागबोधिकाभिरिव तिसृभिः त्रित्वसंख्याविशिष्टाभिः रेखाभिः=लेखाभिः,—अलङ्कृतं शोभितं कण्ठं=गलं वहन्तीम्=धारयन्तीम्, धारणञ्च समवायेन, अवयवाऽवयविनोः समवायात्। पुनश्च—**विभूषिताऽवटुतटाम्**। कया? कण्ठाभरणबन्धलोहितपट्टसूत्रवीरुधा। कथम्भूतया? लम्बमानया। कया इव? **अरुणप्रभये**त्यादिविशेषणविशिष्टया—तिमिरभारलग्नया। अरुणस्य=सूर्यसूतस्य प्रभया-इव। महानीलखचितया-पद्मरागप्रभयेव। धम्मिल्लरूपनिकषोपलसक्तया अलङ्करणभूतसुवर्णकषणस्य लेखयेव—कण्ठाभरणबन्धलोहितपट्टसूत्रवीरुधा—करणभूतया। विभूषितम् अवटोः कृकाटिकायाः तटं यस्यास्ताम्। 'अवटुर्घाटा कृकाटिका'। ("अथान्तरेणाऽवटुगामिनाऽध्वना" इति श्रीहर्षः)। पुनश्च **स्तनाभ्यामुपशोभमानाम्**। किंरूपाभ्याम्? अरुणस्य=गरुडाग्रजस्य किरणैः=रश्मिभिः शोणाभ्याम्=रक्तोत्पलच्छविभ्याम्—इव मदनरूपस्य आदित्यस्य—उदयपर्वतरूपाभ्याम्। एवं—कान्तिसरस्याः यौ चक्रवाकतरुणौ ताभ्याम्। तरुणी च तरुणश्चेति 'पुमान् स्त्रिया' इत्येकशेषः। कामदेवस्य पूजायाः सुवर्णघटौ ताभ्याम्। अभ्रमुवल्लभः=ऐरावतो गजः। भावी यो वल्लभः, तस्य नखक्षताङ्कितानां सूचिकाभिः मणिमालाभिः उपशोभिताभ्याम्। सन्दर्भिता ग्रथिता अश्मानः पाषाणाः गर्भे मध्ये येषां तादृशाः प्रसिद्धाः पर्वताः, आरोपितपर्वतत्वौ—स्तनौ तु सन्दर्भिताश्मा इव गर्भोऽभ्यन्तरभागो ययोस्ताभ्याम्, काठिन्ये तात्पर्यम्। इतरेतरयोः परस्परयोः विश्लेषं वियोगं विभागञ्च असहमानाभ्याम्, निविडत्वे तात्पर्यम्। स्तनयोश्चक्रवाकत्वारोपस्तद्धर्मारोपे निमित्तम्। **कुम्भत्वाद्-एव** 'कुम्भो राश्यन्तरे हस्तिमूर्द्धांशे, राक्षसान्तरे।

न्दर्भिताश्मगर्भाभ्यां—चक्रवाकत्वादेवेतरेतरविश्लेषमसहमानाभ्यां—कुम्भत्वादेव धराधरोन्नतिस्तम्भकनन्दनाभ्यां—तालत्वादेवोन्मादसम्पादकाभ्यां—मुकुलत्वादेव कृतगुच्छपरिचयाभ्यां—कृष्णाग्रजन्मत्वादेव प्रलम्बभावमसहमानाभ्याम्—अत्युन्नतत्वादेव दुर्लक्षमुखाभ्यां—सुवृत्तत्वादेव प्रकाशप्रचुराभ्यां—हृदयभवत्वादेव निबद्धमनोभवसौहृदाभ्यां—पयोधरत्वादेव समुन्मिषन्माणिक्यमरीचिमञ्जरीसौदामनीदामभ्यां—कुशेशयकोरकत्वादेव मिलितमहेन्द्रनीलमिलिन्दमालाभ्यां स्तनाभ्यामुपशोभमानां, केयूरपद्मरागमयूखैः पल्लविताभ्यां—करजाङ्कुरैः कुसुमिताभ्यां—कबरीवलाहकलेखामुक्ताभिर्जलबिन्दुधाराभिरिव पत्रपाश्यागुम्फितमौक्तिकवल्लरीभिः कृतमूलसेकाभ्यामिव लताभ्यां-प्रकोष्ठवलयग्रथितमरकतमणिमयूखमयसंवर्त्तिकासंवृताभ्याम्—अग्रजाग्रद्वलयक्वणितम-

---

कार्मुके वरनार्याञ्च, घटे क्लीबन्तु गुग्गुलौ'—इति मेदिनी। तालस्य फलं तालं, भोक्तुरुन्मादकं, स्तनौ तु द्रष्टुरेव, उद्दीपकत्वात्। मुकुलत्वादेव—'कुड्मलो मुकुलोऽस्त्रियाम्'—अमरः। 'पुष्पादिस्तबके गुच्छो, मुक्ताऽऽहारकलापयोः'—रन्तिदेवः। कृष्णस्याग्रजन्मा=बलभद्रः प्रलम्बासुरहन्ता, प्रलम्बस्य भावं सत्ताम्, प्रकृते प्रलम्बभावमवस्रस्तताम्। अत्युन्नतत्वाद् हेतोर्दुर्लक्ष्ये मुखे चूचके ययोस्तौ ताभ्याम्, अनुद्भिन्नचूचकत्वे तात्पर्य्यम्। यद् यद् सुवृत्तं वर्तुलं सुचरित्रञ्च, तद् तद् प्रकाशप्रचुरं, यथा सूर्यमण्डलम्, यथा च राजा रघुः इति व्याप्तिः। प्रकृते च वर्तुलत्वात्सर्वतोदृश्यमानप्रभाकरवत्त्वे तात्पर्यम्। स्तनमनोभवयोरेकस्थानजत्वात्सोदरत्वेन सौहार्दम्, कामोद्दीपकत्वे तात्पर्य्यम्। समुन्मिषन्ती—माणिक्यमरीचिमञ्जरी सौदामनी च मेघपक्षे, मेघोदये माणिक्यखनौ माणिक्यानां मेघे सौदामन्याः समुदयात्। सुदाम्ना अद्रिणा एकदिक् सौदामनी विद्युत् 'तेनैकदिक्' इति अण्, अन्—इति प्रकृतिभावः। 'सुदामा पर्वतो द्वीपभेदो, मेघश्चेति' नानार्थः। स्तनयोस्तु—समुन्मिषन्ती माणिक्यमरीचिमञ्जरीरूपा सौदामनी ययोस्ताभ्याम्। मिलिता महेन्द्रमणिवन्नीला मिलिन्दानामलीनां माला श्रेणी यस्मिन् कुशेशये, मिलिता सङ्गता महेन्द्रनीलरूपाणां मिलिन्दानां माला=हारो ययोस्तौ ताभ्याम्—**स्तनाभ्याम्** कुचाभ्यामुपशोभमानाम्। पुनश्च **भुजाभ्यां विभ्राजमानाम्**। केयूरखचितैः पद्मरागकिरणैः। करजाङ्कुराः=नखाङ्कुराः पत्रपाश्या=ललाटाऽभरणम्, 'पत्रपाश्या ललाटिका'—इत्यमरः। प्रकोष्ठस्य=कूर्पराधोभागस्य वलये=कटके ग्रथिता ये मरकतमणयः—तेषां ये मयूखाः किरणाः तन्मयः याः संवर्त्तिकाः=नवपत्रिकाः ताभिः संवृताभ्याम्=वेष्टिताभ्याम्। अग्रे जाग्रतौ यौ वलयौ तयोः क्वणितमेव मधुकरगुञ्जितं—तेन मनोज्ञे करकमले ययो-

धुकरगुञ्जितमनोज्ञकरकमलाभ्यां—लावण्यरससरसीनिरूढाभ्यामिव मृणाली-भ्यां—चम्पकमालाभ्यामिव रतिकेलिकण्ठग्रहयोग्याभ्यां—मदनपाशलताभ्या-मिव हृदयबन्धननिबन्धनाभ्यां—पीनतराभ्यामपि धृतपारिमाण्डल्याभ्याम्—अङ्गदसङ्गताभ्यामपि धृतरामानीकभेदशालिनीभ्यां—सत्कटकात्मिकाभ्यामपि कोमलाभ्यां भुजाभ्यां विभ्राजमानां, भुजविजिताभिर्मृणालिकाभिरिव सेवार्थ-मागताभिरिव वन्दनद्युतिवृन्दारकन्दितेनेन्दुना प्रहिताभिः स्वकलाभिरिव

---

स्ताभ्याम् । लावण्यरस्य=प्रभाझरस्य सरस्यां प्रादुर्भूताभ्यां मृणालीभ्यामिव । रति-केलिः=रतिक्रीडा । हृदयबन्धनस्य=चित्ताऽऽसङ्गस्य, निबन्धनाभ्याम् = मूलभूता-भ्याम् । परिमाण्डल्यम् = अणुनिष्ठं परिमाणम् तच्च न पीनं कुतः पीनतरमिति विरोधः, धृतं पारिमाण्डल्यं वर्त्तुलत्वं याभ्याम्—इति परीहारः । अङ्गदेन=केयूरेण सङ्गताभ्यामपि धृतः=रक्षितः रामाऽनीकस्य सैन्यस्य भेदः = अवान्तरभेदो येन तच्छालिनीभ्याम्, ( भुजा स्त्रीलिङ्गोप्यस्ति ) केयूरधारणेन धृतरामसैन्यभेद-वत्त्वं न संभवतीति विरोधाभासः, अङ्गदो बालिपुत्र—इति शब्दश्लेषेण परिहारः । 'केयूरमङ्गदं तुल्ये'—इत्यमरः । 'कटकोऽस्त्री नितम्बोद्रेः' न कोमल इति विरोधः, कटकं वलयोऽस्त्रियामिति परीहारः, अत्र अथो—भुजा द्वयोर्बाहौ करे—इति मेदिनी । 'द्वौ परौ द्वयोः । भुजबाहू प्रवेष्टो दोः स्यात्—कफोणिस्तु कूर्परः ॥ अस्योपरि प्रगण्डः स्यात्, प्रकोष्ठस्तस्य चाप्यधः । मणिबन्धादाकनिष्ठं करस्य करभो बहिः ॥ पञ्चशाखः शयः पाणिः' इति कोशाद् बाहोरवयवभेदाः पृथक् पृथक् वेदितव्याः । स्तनाभ्यामधोलम्बमानत्वेन भुजवर्णनस्योत्तरकालिकत्वं सङ्गच्छते । मनोहरत्वेनोदर-कटिनाभिकाञ्चीवर्णनं विहाय, रोमावलिं वर्णयति—रोमावलिं वहन्तीम्—इति । भुजेन भुजया वा विजिताभिः कोमलत्वातिशयेन मृणालिकाभिः=बिस-व्यक्तिभिः, 'मृणालं नलदे क्लीबं पुंनपुंसकयोर्बिसे' इति मेदिनी । मृणालपदार्थ-निष्ठसत्त्वरजस्तमसामुपचयविवक्षायां पुंस्त्वमपचयविवक्षायां गौरादित्वान् ङीप् मृणाली स्वार्थे अल्पे वा कन् प्रत्ययस्थादिति—इत्वम्, साम्यविवक्षायान्तु नपुंस-कत्वम्, सर्वेषां पदार्थानां त्रिगुणत्वात्—पदार्थनिष्ठस्य लिङ्गस्य पदे समारोपः, अतएव शब्दनिष्ठं साधुत्वप्रयोजकं लिङ्गं भिन्नमेवेति शाब्दिक-सिद्धान्तः, तथा च—कलत्र-शब्दस्य स्त्रीवाचकत्वेऽपि क्लीबत्वे दारशब्दस्य पुंस्त्वं, मक्षिकाशब्दस्य पुंव्यक्तावपि टाबन्तस्यैव प्रयोगः, बिडालशब्दस्य स्त्रीव्यक्तौ च पुंवत्प्रयोगः संगच्छते—अतएव 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्ये'ति महाभाष्यस्यान्तिमः सिद्धान्तः । लिङ्गाऽनु-शासनन्तु—प्रथम-प्रवेशार्थम्, प्रकृते तु 'सान्द्रं चन्दनमङ्कके, वलयिता—पाणौ मृणाली लता'—इति राजशेखरस्य प्रयोगः । तद्वन्दनस्य—द्युतिवृन्देन=द्युतिसमूहेन—

करसम्बन्धशालिनीभिर्द्विरदन्तमयीभिर्वलयावलीभिराकलितशोभां—तारुण्यरक्ताऽशोककिसलयाभ्यां करजरुचिजालसरोवारिरुहाभ्यां मीनकेतननृपतिनिवासभूमितया धृतमीनशतपत्रान्वयाभ्यामावरणमभिलषन्तीं—दिवमिव सुपर्वभिरङ्गुलिभिर्विहितसङ्गां—हाराग्रगुम्फितगारुत्मतमणिशलाकामिव नाभिसरोविहारिमधुकरपरम्परामिव रोमावलिं वहन्तीं, त्रिवलितनुतरतरङ्गां रोमावलीशैवललताविलसितां रतिमन्मथयोः शृङ्गारसरसीमिव नाभिं दधानां, हारमुक्ताफलनक्षत्रलक्ष्यमाणं धृतरोमावलीबलाहकलेखमवलग्नगगनं बिभ्राणां, लावण्यवल्लेरालवालेन शोणमणिमयीभिर्मकरध्वजविजयनीराजनदीपावलीभिरुल्लसता—मध्यशून्यवादिनेव

---

( कर्त्रा ) आस्कन्दितः कृताऽभियोगो य इन्दुः, तेन प्रहिताभिः प्रेषिताभिः स्वकलाभिरिव करस्य=हस्तस्य सबन्धशालिनीभिः संयोगसम्बन्धवतीभिः, हस्तिदन्तमयीभिः कटकश्रेणीभिरिव आकलिता = जनिता शोभा यस्यास्ताम्। तारुण्यरूपो यो रक्ताऽशोकस्तस्य पल्लवाभ्यां करजानां = नखानां रुचिजालमेव सरः = कासारः तत्र वारिरुहाभ्याम् = जलजाभ्याम्-मीनकेतनः काम एव नृपतिः तस्य निवासभूमित्वेन- धृता मीनरूपैः शतपत्रैः=कुशेशयैरन्वयः = सबन्धो याभ्यां—ताभ्यां शयाभ्याम् आवरणमभिलषन्तीम् अतएव—सुपर्वभिर्देवैर्दिवमिव=द्यामिव सुपर्वभिः शोभन—ग्रन्थियुक्ताभिः, अङ्गुलीभिः=करशाखाभिः विहितः = कृतः सङ्गो यस्यास्ताम्। हारस्य-अग्रे = मेरुस्थाने, गुम्फिता = ग्रथिता ये गारुत्मतमणयः श्याममणयस्तेषां शलाकामिव, अथ च-नाभिरूपे सरसि विहारिणी या मधुकराणां = भ्रमराणां परम्परा श्रेणिस्तामिव—रोम्णां = नाभ्यधोदेशवर्त्तिनां लोम्नां आवलिं=पङ्क्तिं वहन्तीं बिभ्राणां मन्दारमञ्जरीमित्यनेनान्वयः। पुनश्च—**नाभिं दधानाम्**। कीदृशीम्? त्रिवलिरूपा अतिशयेन तनवस्तरङ्गाः=ऊर्मयो यस्यां, रोमावलीरूपया शैवललतया विलसितां=शोभिताम्। किं बहुना—रति-मारयोः शृङ्गारस्य सरसीमिव=कासारमिव-नाभिं दधानाम्। पुनश्च-**अवलग्नगगनं बिभ्राणाम्**। कीदृशम्? हारस्य मुक्ताफलरूपैः नक्षत्रैर्लक्ष्यमाणम्=अनुमीयमानम् ( गगनस्य बाह्यप्रत्यक्षाऽयोग्यत्वात् ), धृता रोमावलीरूपा बलाहकस्य लेखापङ्क्तिर्येन तत्—अवलग्नरूपं=शरीरमध्यभागरूपं गगनं व्योम बिभ्राणाम् = दधानाम्। पुनश्च—**मेखलादाम्ना कृतपरिक्षेपाम्**। कीदृशेन? लावण्यस्य वल्लेः=वतत्याः—आलवालेन=आवालेन ( मूलस्थजलाधारेण) शोणमणिप्रचुराभिः मकरध्वजस्य=कामस्य विजयनीराजनस्य दीपपङ्क्तिभिः करणभूताभिरुल्लसता=शोभमानेन। मध्ये शून्यवादो यस्यास्ति स मध्य-

कृतमहालोकायतसूत्राऽनुबन्धेन मन्मथमत्तमातङ्गबन्धनशृङ्खलाकलापेन मेखलादाम्ना कृतपरिक्षेपां, रूपविशेषविश्राममणिवेदिकातलेन कुसुमबाणशयनीयेनेव रतिविमर्दसहेन नितम्बबिम्बेन विलसन्तीं, करभपरिभावकाभ्यां रम्भास्तम्भदम्भसंभावनाऽसहनाभ्यां करीन्द्रकराहङ्कारविकारागदङ्काराभ्यामूरुभ्यां स्फुरन्तीं, मञ्जीरमणिमयूखमालामयचामरदाममण्डलेन स्मरविजयस्तम्भेनेव जङ्घाकाण्डेन विराजमानाम्, अशोककुसुमपूर्वावस्थास्वरूपैरिव यावकद्रवै रञ्जिताभ्यां–नखमयूखमृणालदण्डलोभादागताभ्यामिव हंसकाभ्यां विभूषिताभ्यां–रामणीयकशिथिलीकृतैः किसलयाह-

---

शून्यवादी तेनेव ( संभावितोत्प्रेक्षा ) कृतो महान् लोकायतसूत्राणां=चार्वाकमतसूत्राणामनुबन्धो रचना येन, प्रकृते तु–कृतः=रचितः महद्भिर्निपुणैर्लोकैः मालाकारादिभिः आयतसूत्रेण दीर्घसूत्रेण अनुबन्धोऽनुसरणं यस्य तेन । अथ च मन्मथ एव यो मत्तमातङ्गः=मत्तगजः–तस्य बन्धनस्य याः शृङ्खलास्तासां कलापेन=समूहेन मेखलादाम्ना=काञ्चीदाम्ना–कृतः परिक्षेपः=परिवेष्टनं यया ताम् । पुनश्च **नितम्बबिम्बेन-विलसन्तीम्** । कीदृशेन ? रूपविशेषाणां=गौरादीनां विश्रमणं विश्रमः स एव विश्रामः ( प्रज्ञादेराकृतिगणत्वात् स्वार्थेऽण् ) तस्य मणिमयवेदिकायास्तलभूतेन । अथ च–कुसुमबाणस्य=कामस्य शयनीयेनेव=पर्य्यङ्केनेव रतिविमर्दस्य=निधुवनविमर्दस्य सहेन = सहनकारिणा नितम्बमण्डलेन शोभमानाम् । पुनश्च **ऊरुभ्यां स्फुरन्तीम्** । कीदृग्भ्याम् ? करभस्य=मणिबन्धात्कनिष्ठिकामूलपर्य्यन्तस्य करभागस्य परिभावकाभ्याम्=स्वरूपतः परिमाणतश्च तिरस्कारकाभ्याम् । अथ च–बाह्यवल्कलत्रयरहितस्य रम्भस्य यो दम्भः लावण्यगर्वः तस्य सम्भावनाया अपि-असहनाभ्याम्=असोढृभ्याम् । अपि च–करीन्द्रकरस्य=करिराजकरस्य योऽहङ्काररूपो विकारः=रोगः तस्य अगदङ्काराभ्याम्=चिकित्सकाभ्याम् ऊरुभ्याम्= सक्थिभ्याम् स्फुरन्तीम्=स्फुलन्तीम् । पुनश्च **जङ्घाकाण्डेन विराजमानाम्**। कीदृशेन ? मञ्जीरस्य=नूपुरस्य खचितत्वसम्बन्धिनो ये मणयस्तेषां ये मयूखाः= किरणास्तेषां मालामया ये चामरास्तेषां यानि दामानि तेषां मण्डलेन=बिम्बभूतेन। अपि च स्मरस्य विजयस्तम्भेनेव जङ्घायाः प्रसृतायाः काण्डेन = दण्डेन विराजमानाम् । 'काण्डोऽस्त्री दण्डबाणाऽर्ववर्गाऽवसरवारिषु'–इत्यमरः। पुनश्च **चरणाभ्यामतिरमणीयाम्** । कीदृशाभ्याम् ? अशोककुसुमानां=रक्ताशोकप्रसूनानां= पूर्वाऽवस्थास्वरूपैरिव कारणस्वरूपैरिव यावकानां लाक्षाणां द्रवैः रागैः रञ्जिताभ्यां रागमण्डिताभ्याम्। नखमयूखरूपा ये मृणालदण्डाः तेषां लोभात्–आगताभ्यामिव अनुकम्पितौ हंसौ हंसकौ तावेव हंसकौ=पादकटकौ ताभ्यां विशेषेणाऽलङ्कृता-

ङ्कारग्रन्थिभिरिव नीचत्वमापन्नैर्गुल्फैरन्विताभ्यां—कान्तिविशेषनिर्जिताभिरि-न्दुकलाभिरिवाऽऽसन्ननवाभिरङ्गुलीभिरलङ्कृताभ्याम्-अशोकानोकहदोहदप्र-हरणावसरलग्नाभिस्तत्कलिकाभिरिवाऽऽभरणरक्तमणिपङ्क्तिभिरुद्भासिताभ्यां चरणाभ्यामतिरमणीयां, श्रीगौरीद्वयीमिव गृहीतकेशवेशां, मन्मथमायामिव दर्शितालीकशोभां, नक्षत्रमालामिव चित्रालङ्कृतहस्तश्रवणां, दमयन्तीमिव सुमनोमार्गणवीरसेनभवानुरागां, गान्धारीमिव भीमविपक्षाऽङ्गजाताम्,

---

भ्याम्। रमणीयस्य भावो रामणीयकं=रमणीयता (योपधत्वाद्वुञ्) तेन शिथिलीकृतैः स्रस्तैः किसलयानां=पल्लवानाम् अहङ्कारग्रन्थिभिरिव=गर्वग्रन्थिभिरिव नीचत्वं नतत्वम्=आपन्नैः=प्राप्तैः गुल्फैः=घुटिकाभिः अन्विताभ्यां=युक्ताभ्याम्। अथ च कान्तिविशेषैर्निर्जिताभिः चन्द्रकलाभिः आसन्ना=आसत्तिमती नवसंख्या यासान्ताः आसन्ननवा=दशत्वसंख्या यासां ताभिरङ्गुलीभिः अलङ्कृताभ्याम्। अपि च अशोकानोकहस्य=अशोकतरोः दोहदार्थं यत्प्रहरणं=पादाघातः तदवसरे लग्नाभिस्तस्य=अशोकस्य कलिकाभिः कोरकैरिव आभरणनिबद्धशोणमणिश्रेणीभिः उद्भासिताभ्यां द्योतिताभ्याम् चरणाभ्याम्=अङ्घ्रिभ्याम्—अतिरमणीयाम्=अतीवरमयितुमर्हाम्—मन्दारमञ्जरीं ददर्शेत्यन्वयः। इति प्रत्यङ्गविशेषणानि। अथ द्विषष्टिभिरुपमानगुलिकाभिः सादृश्यसूत्रग्रथितामुपमामालां समर्पयति सङ्कलरमय्यै नायिकामूर्त्यै (मालोपमया वर्णयतीत्यर्थः)। श्रीः केशवप्रिया, गौरी=ईशप्रिया, अनयोर्द्वयीमिव=द्वित्वविशिष्टामिव, यतः—गृहीतः स्वीकृतो यो केशानां=शिरोरुहाणां वेशो रचनाविशेषः, स एव केशवश्च—ईशश्च यया ताम्, गृहीत—केशवेशत्वं शाब्दं साधर्म्यम्। मन्मथस्य=कामस्य मायामिव=मोहमिव दर्शिता अलीकं भालमेव अलीकं मिथ्या तस्य शोभा यया ताम्। दर्शिताऽलीकशोभत्वं शाब्दं साधर्म्यम्। चित्रया चतुर्दशेन नक्षत्रेण अलङ्कृतो हस्तः त्रयोदशनक्षत्रम्, श्रवणः द्वाविंशतितमं नक्षत्रं, यस्यां नक्षत्राणां मालायाम् तामिव—चित्रम्=अद्भुतं यथा-स्यात्तथा अलङ्कृतौ हस्तश्रवणौ=करकर्णौ यया ताम्, चित्राऽपेक्षया हस्तश्रवणयो-रतिमैत्रतारात्वेनाऽलङ्कृतत्वम्। तथा च 'जन्माख्यसम्पद्विपत्क्षेमप्रत्यरिसाधकाः। वधमैत्रातिमैत्राःस्युस्तारा नाम सदृक्फलाः'। सुमनसां देवानां मार्गणे दूते वीर-सेनभवे वीरसेनपुत्रे नले अनुरागः स्नेहो यस्या दमयन्त्यास्तामिव—सुमनसः पुष्पाणि मार्गणा बाणा यस्याः सा सुमनोमार्गणा—सा वीरसेना यस्य स कामः तेन हेतुना भवो जातोऽनुरागो यस्यास्ताम्। भीमस्य युधिष्ठिराऽनुजस्य विपक्षाः=प्रतिपक्षाः, अङ्गजाताः पुत्रा दुर्योधनादयो यस्यास्तादृशी गान्धारी सौबली तामिव भीमस्य=भयङ्करस्य विपक्षे=अभयङ्करे अङ्गजातः कामो यस्यास्ताम्, अथवा

अहल्यामिव प्रसूतशतानन्दां, तारामिव लालिताङ्गदां, पाञ्चालीमिवानेकवरलभ्यां, मन्दोदरीमिव जनितेन्द्रजिदङ्गजां, मैथिलीमिवाऽभिरामां, चन्द्रकलामिव लब्धनीललोहितशेखररत्नभावां, रोहिणीमिवेन्दुसुन्दरमुखीम्, अरुन्धतीमिवाङ्गजशक्तिसंवर्धनपरां, लोपामुद्रामिव लब्धस्तनकुम्भसम्भवां, रुक्मिणीमिव मन्मथजनयित्रीं, रतिमिव पुष्पचापव्यतिरेकहीनां, पौलोमीमिव शतमखोपभोग्यां, कुन्तीमिव निगूढकर्णान्तिकगतागतव्यग्रदृष्टिं, सद्बुद्धिमि-

---

भीमविपक्षा=मृदवः अङ्गजाताः=अवयवसमूहा यस्यास्ताम्। प्रसूतः = जनितः शतानन्दनामा पुत्रो यया तामिव प्रसूताः शतशः आनन्दा यया ताम्। तारा = बालिवानरप्रिया, अङ्गदस्तत्पुत्रः केयूरश्च, लालितः पालितः धृतश्च । अनेके बहवः ये वराः पाणिग्राहका युधिष्ठिरादयस्तैर्लभ्या द्रौपदी तामिव अनेकैः वरैः देवप्रसादैर्लभ्या प्राप्तुं योग्या ताम् । जनितः प्रसूतः इन्द्रजित् तन्नामा अङ्गजः पुत्रो यया तादृशी मन्दोदरी तामिव जनितः इन्द्रस्य जेता अङ्गजः कामो यया ताम्। अभि = अभिमुखः सम्मुखः अनुकूलः रामो यस्यास्तादृशी मिथिलस्य राज्ञोऽपत्यं स्त्री मैथिली = सीता तामिव अभिरावीति अभिरा ( 'आतोऽनुपसर्गे कः' ) सा मा = श्रीः यस्याः ताम्, अभितः शोभावतीम्। लब्धः प्राप्तः नीललोहितशेखरस्य रत्नभावः रत्नत्वं यया चन्द्रस्य कलया तामिव लब्धः प्राप्तो नीललोहिते वामदेवे शेखररत्नवत् भावो भक्तिर्यया ताम्। इन्दुना सुन्दरं मुखं यया तादृशी रोहिणी = चन्द्रप्रिया, तामिव इन्दुवत्सुन्दरं मुखं यस्यास्ताम्। अङ्गजः = पुत्रो यः शक्तिः पराशरपिता तस्य सम्यक् वर्धने पालनपोषणादौ परा तत्परा-अरुन्धती तामिव-अङ्गजस्य कामस्य शक्तिवर्धने लब्धः प्राप्तः स्तनयोः कुम्भसंभवोऽगस्त्यः स्ववल्लभो यया तादृशी लोपामुद्रा = अगस्त्यपत्नी तामिव--लब्धः = प्राप्तः स्तनकुम्भयोः सम्भवः = उत्पत्तिर्यया ताम् । मन्मथस्य = कामावतारस्य प्रद्युम्नस्य जनयित्री प्रसूः रुक्मिणी तामिव—मन्मथस्य मनोभवस्य जनयित्रीम् = उत्पादिकाम् ( नायिकाया आलम्बनविभावत्वात् )। पुष्पचापस्य कामस्य यो व्यतिरेको विरेचनं विरहः तेन हीना रहिता रतिस्तामिव सकामाम् । पुलोम्नो दानवस्याऽपत्यं स्त्री पौलोमी शची–शतमखेन= शतमन्युना उपभोग्या = भोक्तुमर्हा, तामिव शतैर्मखैर्यागैः पुण्यसाधनैरुपभोक्तुं योग्या, 'नाल्पपुण्यलभ्या' ताम्। निगूढा कर्णान्तिकगताऽगतव्यग्रा दृष्टिर्यया तादृशी कुन्ती=युधिष्ठिरादिमाता तामिव–( कर्णस्य वीरत्वेन कुन्ती महाभारतसमये–त्वं मे पुत्रोऽसि अतो भ्रातॄणां साहाय्यं कुरु–इति कथनाय कर्णपार्श्वे गूढं गताऽगतं कृतवतीति महाभारते) प्रकृते तु–कर्णः श्रोत्रम्, दृष्टेः कर्णविश्रान्तत्वे तात्पर्यम्। आयतं दीर्घं दर्शनं यस्यास्ताम्, समानम्=उभयत्र। वशीकृतो मीनकेतनः

वाऽऽयतदर्शनां, प्रभावतीमिव वशीकृतमीनकेतनां, राधामिव कुवलयापीड-विपक्षनयनव्यापारभूमिं, सत्यभामामिव परिभूतपारिजातां, वेलामिव विद्रु-ममालाधरां, वरुणदिशमिव सान्ध्यवेलारागवतीं, वसन्तलक्ष्मीमिव कोकिल-कलालापवतीं, ग्रीष्मसमयलक्ष्मीमिव पाटलामोदसुरभिश्वासमारुतां, प्रावृष-मिव समुन्नद्धभरसहजघनां, शरदमिव सिताभ्रच्छेदच्छुरितां, हेमन्तपद्मा-लयामिव विकसितशोभाञ्जनां, शिशिरसमयश्रियमिव दीर्घतमेक्षणां, महाश्वे-तामिव नयनैकविषयीकृतपुण्डरीकां, कादम्बरीमिव कपोलतलप्रणयीकृतपत्त्र-

---

प्रद्युम्नो यया तादृशी प्रभावती = प्रद्युम्नमहिषी, तामिव वशीकृतः मीनकेकनः काम-देवो यया ताम् । कुवलयापीडस्य = सहस्रगजबलस्य कंसगजस्य विपक्षः शत्रुःकृष्णः, नयनव्यापारस्य नेत्रचेष्टाया भूमिः स्थानं यस्यास्तादृशी राधा=वृषभानुसुता तामिव कुवलयम् = भूवलयम् आपीडयन्ति ये ते कुवलयापीडाः दानवाः तेषां विपक्षः, शेषं पूर्ववत् । परिभूतः पुरुहूतोपवनात्स्वाङ्गणारोपणेन तिरस्कृतः पारिजातो देवत-रुर्यया तादृशी सत्यभामा सत्राजितः सुता कृष्णमहिषी तामिव परिभूतम् = अनु-भूतं पारिजातस्य पुष्पं पारिजातं यया ताम्, परिभूतमवज्ञातं पारिजातं मुख-सौरभादिना यया इति वा । विद्रुमाणां प्रवालानां माल्यं = पङ्क्तिः समुद्रतटे, स्रक् प्रकृते । समुद्रे विद्रुमोत्पत्तिः, कण्ठे विद्रुमधारणम् । सान्ध्यवेलायां संध्यायां रागवती=रक्ता वरुणस्य दिक् पश्चिमा तामिव कोकिलानामालाप इव आलापो यस्यास्ताम् । पाटलायाः = आमोदेन=मनोहरगन्धेन सुरभयो मनोज्ञाः श्वासा इव मारुता यस्यां ग्रीष्मलक्ष्म्यां तामिव—पाटलाऽऽमोदवत्सुरभयः श्वासमारुता यस्या-स्ताम् । समुन्नद्धः सम्यग् बद्धः, भरः=जलभारो येन तादृशः, सहजः = स्वाभा-विकः, घनो मेघो यस्यां,—प्रावृषि, तामिव—समुन्नद्धस्य महतो भरस्य रतिभरस्य सहः सहनकर्तृ जघनं कटिपुरोभागो यस्यास्ताम् । सिताऽभ्रस्य श्वेतमेघस्य छेदेन खण्डेन छुरिता मिश्रिता शरद् तामिव सिताऽभ्रस्य = श्वेताऽभ्रकस्य छेदेन पत्र-खण्डेन ( चमकी ) इति प्रसिद्धेन छुरिता=भूषिता कपोलादौ नायिका ताम् तथा-भूताम् । विकसितः प्रफुल्लितः शोभाञ्जनः शिग्रुवृक्षो यस्यां हेमन्तस्य श्रियां तामिव—विकसितशोभं = प्रफुल्लितशोभमञ्जनं नेत्रकज्जलं यस्यास्ताम् । दीर्घतमानि दीर्घ-दर्शीनि ईक्षणानि=दर्शनानि विचाराः देशान्तरगमनादिविषया यस्यां शिशिर-समयश्रियि तामिव—दीर्घतमे = विशाले ईक्षणे लोचने यस्यास्ताम् ( 'ईक्षणं दर्शने दृशि'—इति मेदिनी ) आयताक्षीमित्यर्थः । नयनयोर्नेत्रयोरेकः केवलं विष-यीकृतो गोचरीकृतः पुण्डरीकः श्वेतकेतुसुतो यया तादृशी महाश्वेता = कादम्बरी प्रसिद्धा तामिव—केवलं विषयीकृत उपमानीकृतः पुण्डरीकं सिताम्भोजं यया ताम् ।

लेखां, कुमारबालकेलिमिव सर्वमङ्गलावेक्ष्यमाणां, मदनयागमण्डपभूमिमिव कुण्डलाभोज्ज्वलां, रतिरमणसिन्धुरविहारसरसीमिव करनिरस्तकुशेशयां, यागभूमिमिव प्रशस्तपृष्ठां, नन्दनभुवमिव हरिचन्दनाधिवासितां, रम्भामिव धृतमणिग्रीवाग्रजानुरागाम् , उर्वशीमिव लब्धसौम्यसंभवभावां, मेनकामिव कौशिकेनापि कमनीयां, संज्ञामिव धृतच्छायां, छायामिव रमणीयक्रोडां, सुभद्रामिव जितहिरण्यपुरपरिगृहीतां, यमुनामिव रेवतीरमणानुसारिमुखां,

---

कपोलतले=कपोलाधःप्रदेशे, प्रणयीकृता प्रेमपात्रीकृता पत्रलेखा=ताम्बूलकरङ्कवाहिनी यया कादम्बर्या तामिव–कपोलतले प्रणयीकृता=प्रेमपूर्वकं विन्यस्ता पत्रलेखा=पत्राकारतिलकं यस्यास्ताम्। 'तमालपत्रतिलकचित्रकाणि विशेषकम्'। सर्वमङ्गलया शर्वाण्या अवेक्ष्यमाणा = दृश्यमाना–कुमारस्य = क्रौञ्चदारणस्य बालकेलिमिव बाललीलामिव–सर्वैर्मङ्गलैः कल्याणैरवेक्ष्यमाणाम्। कुण्डस्य लाभेन उज्ज्वला मदनस्य यागमण्डपस्य भूमिस्तामिव–कुण्डलयोराभयोज्ज्वला ताम्। करेण शुण्डादण्डेन निरस्तं प्रक्षिप्तं कुशेशयं सहस्रपत्रं यस्यां ताम् रतिरमणरूपस्य सिन्धुरस्य गजस्य विहारसरसीमिव–करेण हस्तेन निरस्तं तुच्छीकृतं कुशेशयं पङ्कजं यया ताम्। (पृष्ठन्तु चरमं तनोः) पृष्ठं साम। अधिवासितामधिष्ठिताम्–नन्दने अधिवासितां=कृताधिवासनाम् सञ्जातसुगन्धिम्। धृतो मणिग्रीवाग्रजेन कूबरनाम्नि=कुबेरज्येष्ठपुत्रे अनुरागो यया तादृशी रम्भा नाम अप्सराः, तामिव—ग्रीवाऽग्रं च जानु च ग्रीवाग्रजानु, धृतमणिना ग्रीवाग्रजानु–रागो यस्याः (व्यधिकरणो बहुव्रीहिः)। अथवा धृतमणिः परिहितमणिः या ग्रीवा तया अग्रजः श्रेष्ठोऽनुरागो यस्याः सा ताम्। अथवा–धृतो मणिग्रीवाग्रजे = नलकूबरे अनुरागो भक्तिः पूज्यत्वबुद्धिर्यया। लब्धः प्राप्तो धवत्वेन, सौम्यसम्भवे=बुधपुत्रे = पुरूरवसि भावो यया उर्वश्या = अप्सरसा ताम्–इव लब्धः प्राप्तः सौम्यसंम्भवः सौम्यरूपो भावो यस्यास्ताम्, लब्धः सौम्यसंभवो बुधग्रहजनितो भावो भावफलं यया इति वा। 'श्लिष्टवाक् सततहास्यरुचिज्ञः'–इति जातकम्। कौशिकेन = विश्वामित्रेण कमनीया मेनका तामिव कौशिकेनापि=शक्रेणापि कमितुं योग्या सौन्दर्याधिक्यात् कमनीया ताम्। धृता स्वपतिसूर्यसविधे छाया=स्वकीयप्रतिबिम्बरूपा यया तादृशी संज्ञा सूर्यपत्नी (कथा पूर्वमुक्ता) तामिव धृता = छाया कान्तिर्यया ताम्। रमणीयः रन्तुं योग्यः क्रोडोऽश्वरूपः सूर्यः यस्याः छायायाः पूर्वोक्तायास्तामिव–रमणीयः शोभनः क्रोडो भुजान्तरं यस्यास्तामिव। जितं हिरण्यपुरं येन तादृशोऽर्जुनस्तेन परिगृहीता = कृतपाणिग्रहा सुभद्रा, तामिव जिताः पराजिता नैसर्गिकशोभया हिरण्यपुरैः=हिरण्यालङ्कारैः परिगृहीताः = परिवेष्टिता यया ताम्। रेवतीरमणो

रुचिमिव विपुलगुरूपभोगार्हवक्षोरुहां, वाग्देवतामिव हंसगामिनीं, देवयानीमिव काव्योद्भवहेतुं, शर्मिष्ठामिवाऽभ्युपगतकचगुर्वात्मभूभृत्यभावां, गुणकेशीमिव स्वभर्तृजीवनदैर्घ्यहेतुम् , अदितिमिवोल्लासितनिर्जरां, वराङ्गीमिव स्फुरत्तारकां, त्रयीमिव सच्चरणां, न्यायोक्तिमिव विशिष्टविभ्रमां, वैशेषिकस्थितिमिव तिरस्कृतोपमानशब्दां, मीमांसामिव गुणसंख्याश्रितभेदां, वेदान्तमर्यादामिवाऽपूर्वदृष्टिसृष्टिविदग्धां, सांख्यस्थितिमिव गुणात्मकप्रकृतिं, पा-

---

बलरामस्तदनुसारि मुखं यस्याः सा तां यमुनामिव—रेवतीरमणानुसारि = चन्द्रतुल्यं मुख्यं यस्यास्ताम् । विपुलौ गुरोः = बृहस्पतेः उपभोगार्हौ वक्षोरुहौ स्तनौ यस्याः रुचेस्तामिव विपुलौ विस्तीर्णौ गुरू गौरवयुक्तौ अतएव उपभोगार्हौ मर्दनक्षमौ वक्षोरुहौ कुचौ यस्यास्ताम् । हंसे गच्छतीति तच्छीला वाग्देवी, हंस इव गच्छतीति प्रकृते । काव्यः शुक्राचार्यः उद्भवस्य = उत्पत्तेर्हेतुः यस्या देवयान्यास्तामिव—काव्यस्य कविताया उद्भवस्य रचनाया हेतुः कर्त्री ताम् । अभ्युपगतः स्वीकृतः कचस्य= बृहस्पतिसुतस्य गुरोः शुक्राचार्य्यस्य आत्मभुवः = आत्मजाया देवयान्या भृत्यभावः = दास्यं यया तादृशी शर्मिष्ठा वृषपर्वासुरसुता देवयान्याः सपत्नी, कथा पूर्वमुक्ता, तामिव अभ्युपगतः स्वीकृतः कचैः केशैः गुरुणा महता उद्दीपितेन— आत्मभुवा = कामेन भृत्यभावो यस्यास्ताम् । स्वभर्तुः स्वस्वामिनः जीवनदैर्घ्यस्याऽऽयुर्वर्धनस्य हेतुः स्वायुर्दानात् गुणकेशी ( महाभारते द्रष्टव्या ), तामिव स्वभर्तुर्जीवनदैर्घ्ये हेतुस्ताम्, शुभलक्षणत्वात् शुभग्रहवत्त्वात् । उल्लासिता निर्जरा देवा यया सा अदितिर्देवमाता तामिव उल्लासिताः पूजया तोषिता निर्जरा देवा यया ताम् । स्फुरन् तारकस्तन्नामा पुत्रो यस्यास्तादृशी वराङ्गी तां तारकासुरमातरमिव स्फुरन्ती तारका कनीनिका यस्यास्ताम् । चरणः शाखा देवे, पादः प्रकृते । विशिष्टो भ्रमो विभ्रमः अतस्मिंस्तद्बुद्धिः न्याये, विभ्रमो विलासः प्रकृते । 'स्त्रीणां विलासविब्बोकविभ्रमा ललितं तथा । हेला लीलेत्यमी हावाः' इत्यमरः । तिरस्कृतौ = अधःकृतौ उपमान—शब्दौ यया तादृशी वैशेषिकदर्शनमर्यादा, तत्र प्रत्यक्षानुमानयोः प्रमाणयोरेव स्वीकारात्, तामिव—तिरस्कृतः उपमानशब्दो यया ( अनुपमेयत्वात् ), ताम् । गुणानां = यागाङ्गानां संख्यया आश्रितो भेदो यस्यां मीमांसायाम्, तामिव गुणानामौदार्यादीनां संख्याभिराश्रितो भेदोऽनन्तत्वं यस्यास्ताम् । अपूर्वा = दर्शनान्तराऽप्रतिपादिता या दृष्टिरेव सृष्टिः ( न तु तत्त्वतः सृष्टिसत्त्वम् ) तया विदग्धा नैपुण्यशालिनी वेदान्तदर्शनमर्यादा तामिव—अपूर्वा = अलौकिकी या दृष्टेः दृशः सृष्टिविसर्गस्तस्यां विदग्धां चतुराम् । गुणात्मिका = सत्त्वरजस्तमोगुणात्मिका प्रकृतिर्मूलप्रकृतिर्यस्यां तादृशी सांख्यदर्शनस्य स्थितिः = मर्यादा तामिव—गुणा-

तञ्जलवाणीमिव पुरुषाऽनुग्राहकत्वपरां,शब्दविद्यामिव दृश्यमानरक्ताऽधिकारां, सौगतवाचमिवोपचतुरस्कन्धां, क्षेत्रगणितपरिभाषामिव विविक्तबाहुकर्णां, स्मृतिमिव धृतसंस्कारां,पारिजातमञ्जरी मिव सुरयुवतीनामवतंसनीयां,श्यामामप्यत्युज्ज्वलाम् ,अवरसंयुक्तामपि संवृतां, रागमयीमपि मुक्ताश्रितां, सुगतानुगतामपि मन्मथायत्तां, बृहन्नितम्बामपि नाहार्यशोभां, भास्वत्करामपि नखरमयूखमण्डितां, न्यायानुसारिणीमपि समावयवां, चन्द्रमुखीमपि चक्रा-

---

त्मिका प्रशस्तगुणवती प्रकृतिः स्वभावो यस्यास्ताम्। पुरुषस्य=जीवस्य कर्मणः अनुग्राहकत्वमनुग्रहकर्तृत्वं तत्परं मुख्यं यस्यां तादृशी पातञ्जलस्य=पतञ्जलिरचितस्य योगशास्त्रस्य वाणी सरस्वती तामिव–पुरुषकर्तृकमनुग्रहविषयत्वं प्रधानं यस्यास्ताम्। दृश्यमानः रक्ताधिकारः 'तेन रक्तं रागात्' इति सूत्रप्रतिपाद्यो यस्यां सा तादृशी शब्दविद्या व्याकरणविद्या तामिव–दृश्यमानः प्रत्यक्षीक्रियमाणो रक्तस्याऽनुरक्तस्य प्रेक्षकस्य ( चित्रभानोः ) अधिकारो विवोढुमधिकारो यस्यास्ताम्। चतुर्णां समीपे सन्ति ते उपचतुराः पञ्चस्कन्धाः=विज्ञान–स्कन्धादयो यस्यां तादृशी सौगतानां वाक् तामिव–उपचतुरौ चतुरस्रौ स्कन्धौ यस्यास्ताम्। विविक्तः कृतविवेको बाहुर्भुजः कर्णश्च पारिभाषिको यत्र तादृशी क्षेत्रगणितस्य रेखा गणितस्य परिभाषा तामिव–विविक्तौ=निर्मलौ बाहूकर्णौ च यस्यास्ताम्। धृता गर्भाधानादारभ्यान्त्येष्टिपर्यन्ताः संस्कारा यस्यां तादृशी स्मृतिः=धर्मसहिता मन्वादिका तामिव–धृतः संस्कारः उद्वर्तनाऽभ्यङ्गपरिमार्जनस्नानादि यया ताम्। सुरयुवतीनां देवाऽङ्गनानाम्–अवतंसनीयाम् अवतंसीकर्तुं योग्यां पारिजातस्य देवतरोर्मञ्जरीमिव सुराङ्गनानां भूषणभूतां— मन्दारमञ्जरीं ददर्श इत्यन्वयः। ( मालोपमा यदैकस्योपमानं बहु दृश्यते ) इति। अथ विरोधाभाससमाश्रित्य वर्णयति—**श्यामामि**-त्यारभ्य—**कदलीमि**त्यन्तैः। श्यामां कृष्णामपि उज्ज्वलां शुक्लामिति विरोधः, नवयौवनां स्वच्छामिति परीहारः। अवरेण नीचेन संयुक्तां संवृतां गुप्तामिति विरोधः, न वरेण पाणिग्राहकेण संयुक्ताम्–अविवाहिताम् अपि कृतसंवरणाम्। मुक्ता मोक्षवन्तः, तदाश्रिता रागमयी=आसक्तिमयी न भवतीति विरोधः, मुक्ताहारैराश्रितामिति परीहारः। **सुगतो** बुद्धो मारजित्, सुष्ठु गतं गमनं यस्याः। बृहन्नितम्बः कटको यस्य सः अहार्यः पर्वतः, अहार्या हर्तुमशक्या शोभा यस्य तादृशः, इयन्तु बृहन् नितम्बः कटिपश्चाद्भागो यस्यास्ता दृश्यपि न आहार्या कृत्रिमा शोभा यस्यास्ताम्–'अहार्यो हर्तुमशक्ये शैलेऽपि'–इति हैमः। 'तिग्मं तीक्ष्णं खरं तद्वत्' नखोऽस्त्री नखरोऽस्त्रियाम्' न खरैस्तीव्रैर्मयूखैर्मण्डिता इति विरोधः, नखराणां नखानामिति परिहारः। समे सर्वे पदार्थाः अवयवाः=अवयवरूपा न तु अवयविनः इति न्यायानुसारिणीनां विरुद्धं, तत्र

ङ्काम्यगतिम्, उन्नतपयोधरामपि विलसन्नयनखञ्जनां, धृतहारामपि न न्यूनगुणाम्, अदोषात्मिकामपि दृश्यतारकां, समासादितशुचिभावामपि प्रेक्षणीयतमालपत्त्रां, मन्दोदरीमपि त्यक्तविभीषणभावां, छायोद्भवभूमिमपि अलब्धमन्दत्वां, नर्मदामपि न विजयमोघश्रुतायुधात्मभुजां, सत्कटकामप्यधराभिरामां, मृगाक्षीमपि पुण्डरीकेक्षणां, सुपार्श्वस्थितिमपि गिरां दूरे वर्त-

अवयवपुञ्जवादस्य निरस्तत्वात्। अवयविवादस्य सिद्धान्तितत्वात्। समास्तुल्याः समाना अवयवाः करचरणादय इति परिहारः। चन्द्रः—मुखं यस्याः सा रात्रिः, चक्राङ्गैः हंसैः काम्या कमनीया गतिर्गमनं यस्यां तादृशी न भवति—तेषां रात्रिचरत्वाभावात्, इयन्तु चन्द्र इव मुखं यस्याः, हंसैरपि कमनीया गतिर्यस्याः—इति परिहारः। 'हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः' इत्यमरः। उन्नताः पयोधरा मेघा यस्यां प्रावृषि सा विलसन्तः खञ्जनाः खञ्जरीटाः—यस्यां तादृशी न, खञ्जनानां शरदि विलासवत्त्वात्। उन्नतौ पयोधरौ स्तनौ यस्याः, विलसन्तौ नयनरूपौ खञ्जनौ यस्याः। धृतः हारो भागहारो यस्याः संख्यायाः सा न्यूनः= गुणः=गुणको यस्याः तादृशी भवति, इयन्तु धृतः हारो मुक्ताहारो यया तादृश्यपि न्यूना गुणास्तन्तवः दाक्षिण्यादयश्च तादृशी न। दोषा रात्रिर्दृश्यमानतारका भवति, इयन्तु न सन्ति दोषाः, यस्याः तादृश्यपि दृश्यमाना दर्शनीया तारका कनीनिका यस्याः तादृशी। तमालस्य तापिच्छस्य पत्रं दलं समासादितः शुचिभावो येन तादृशं न भवति, श्यामत्वात्तस्य, इयन्तु तादृश्यपि प्रेक्षणीयं तमालपत्रं=तिलकं यस्यास्तादृशी। मन्दं कृशमुदरं यस्यास्तादृश्यपि त्यक्तः विभीषणभावो भयङ्करभावो यया। छाया सूर्यस्त्री उद्भवभूमिरुत्पत्तिस्थानं यस्य स लब्धं मन्दत्वं येन तादृशः शनैश्चरः, इयन्तु छायायाः कान्त्याः उद्गमस्थानमपि—न लब्धं मन्दत्वं मूढत्वं यया तादृशी। विजयमोघश्च, श्रुतायुधश्च नदौ आत्मनो भुजौ यस्यास्तादृशी नर्मदा=मेकलकन्यका, इयन्तु नर्म=क्रीडां ददातीति विजये मोघश्रुतौ व्यर्थत्वेन श्रुतौ—आयुधात्मानौ भुजौ यस्यास्तादृशी न। सन्=शोभनः कटको नितम्बो यस्य तादृशो धरः पर्वतोऽभिरामो रमणीयो भवति, इयन्तु सत् कटकं वलयो यस्यास्तादृशी, अधरः= ओष्ठः—अभिरामो यस्यास्तादृशी च। 'अहार्य-धर-पर्वताः'—अमरः। 'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी'—इति च। या मृगाक्षी सा पुण्डरीकस्य=आग्नेयदिग्गजस्येव ईक्षणे नेत्रे यस्यास्तादृशी न भवति, गजनेत्रयोः सूक्ष्मत्वात्; पुण्डरीकमिव सिताम्भोजमिव ईक्षणे नयने यस्याः। सुष्ठु पार्श्वे समीपे स्थितिर्यस्याः सा गिरां दूरे वर्त्तमाना न भवति संबोध्यत्वात् समीपस्थस्य, सुष्ठु=शोभना पार्श्वयोः=कक्षाऽधोभागयोः स्थितिः संनिवेशो यस्याः अवर्णनीया च। जगत्प्राणः पवनः रूपवान् ना-

मानां, जगत्प्राणभूतामपि सकलातिशायिरूपां, चतुरस्रशोभिनीमपि रम्यत्रिकाम्, अनुदरामपि तिलोत्तमासोदरां, कदलीकाण्डपीवरोरुमपि रम्भास्तम्भमसंभावयन्तीं, दत्तमुद्रां कोषभूमिमिव मदनसर्वस्वस्य, आश्रितकचां सञ्जीवनविद्यामिव हररोषानलभस्मनो विषमबाणस्य, धृतप्रवालां सञ्जीवनौषधिमिव यौवनस्य, सुस्थापितकुचकलशामर्चनवेदिमिव कामस्य, अनेकप्रेक्षकरम्यां लास्यशालामिव विलासानां, निगूढभावां विवृतिमिव रसतन्त्रस्य, कृतपत्रविन्यासां राजधानीमिव मदनमहाराजस्य, पूजितसरस्वतीकामध्ययनभूमिमिव सञ्चरितानां, बहुमौक्तिकजालकावृतां निगूढकौतुकालोकनचन्द्रशालामिव रतिदेव्याः, कृतरसासेकामुपवापस्थलीमिव सुरतकेलिबीजानाम्, उल्लसत्कलानिधिं शरदमिव चातुर्यचकोरस्य, रमणीयसन्निवेशां सभामिव सौभाग्यस्य, उन्मूलितदूषणां विजयभुवमिव गुणानां, कलधौतमयकटकामुदयाचलतटीमिव सौन्दर्यचन्द्रमसः, गतोष्णभावां क्षणदामिव दक्षिणताचन्द्रिकायाः, सदाकल्पलतां नन्दनमेदिनीमिवौदार्यमन्दारस्य, अनुभवैकगम्यां भावनामिव दिव्यनारीस्मरणानां, कुलिशालंकृतकरां बलवैरिकलेवरलतामिवाऽनुलोमतापुलोमतनयायाः, अत्युन्नतां वासयष्टिमिव कलाकलापिनीनां, सर्वतापापहारिणीं सुधादीर्घिकामिव माधुर्यस्य, नवकिसलयसुकुमारां रसालवल्लिमिव कोकि-

---

स्तीति विरोधः, चतुरस्रत्रिकयोर्विरोधः, 'पृष्ठवंशाधरे त्रिकम्' इति परिहारः। अनुदरां सोदरामिति विरोधः, तिलोत्तमाया अप्सरसः सदृशीम् इति परीहारः। रम्भायाः अप्सरसः स्तम्भो=गर्वः, रम्भा=कदली च, शेषं स्पष्टम्। अथोत्प्रेक्षते—द्विचत्वारिंशद्भिश्चूर्णकैः दत्तमुद्रामित्यारभ्य—काञ्चनेत्यन्तैः। कोषभूमिमिव=निधिभूमिमिव। कचो गुरुसुतः शिरोरुहश्च, विषमबाणः कामः। प्रवालो विद्रुमः। विवृतिम्=टीकाम्। रसतन्त्रस्य=रसायनविद्यायाः, शृङ्गारादिरसप्रतिपादकग्रन्थस्य च। पत्रविन्यासः=पत्रलेखः। मौक्तिकानां जालकैः समूहैरावृताम्। उपवापः=वपनम्। कलधौतं सुवर्णम्। दक्षिणः सरलोदारः। दक्षिणता=सरलता एव चन्द्रिका तस्याः। नन्दनमेदिनी पुरन्दरोद्यानभूः। भावना संस्कार-विशेषः। दिव्यनारीणां स्मरणानि तेषाम्। कुलिशेन=कुलिशरेखया अलङ्कृतः करो यस्याः, अनुलोमता एव पुलोम्नो दानवस्य तनया शची, वासार्थं यष्टिः वासयष्टिः, कलारूपाः कलापिन्यो मयूर्यस्तासाम्। माधुर्य्यस्य=मधुरतायाः। रसालवल्लिः=सहकारलता, कोकिलानां पिकानामालापाः कूजनानि, विशिष्टा भ्रमाः भ्रमणानि

लालापानां, रमणीयप्रसवां वीरुधमिव विभ्रमभ्रमराणां, सुकुमारलालनीया-मम्बिकोत्सङ्गभूमिमिव विनयविनायकस्य, प्रतिपादिततरुणिमोपभोगामधि-कारापहारशासनपटीमिव शैशवस्य, अनुबन्धिनीं लोभायतिमिव शोभायाः, रतिनाटिकाप्रस्तावनोपयुक्तां कुसुमाञ्जलिघटनामिव कान्तिनर्तक्याः, अभि-नवयौवनां करिकपोलपालीमिव मदलेखानां, लम्बमानस्रग्दामां कुसुमदोला-मिव दीप्तिविलासिन्याः, बहुसूच्यमानगुणां गुम्फनधरामिव सूक्तिस्रक्सन्द-र्भाणां, कुवलयमालाकोमलां कालिन्दीमिव कटाक्षकल्लोलकेलीनां, यथाव-दुपपन्नाङ्गां जगद्विजयविद्यासिद्धिमिव प्रसूनबाणस्य, दृश्यपारिजातपल्लवापू-र्ववेलामिव रतिसुधोदयस्य,प्राप्तप्रजापतिसर्गातिशयामायुष्येष्टिमिव शृङ्गारस्य, अपगततमतमस्कां राकारजनीमिव स्मितचन्द्रिकाणाम्, अद्भुतपारदां रसायन-निष्पत्तिमिव लावण्यस्य, मृगनेत्रां सहस्यरात्रिमिव शीलशीतलतायाः, सहज-रमणीयामविच्छेदविद्यामिव विच्छित्तेः, सुधाऽवदातां चन्द्रशालामिव मन्दा-क्षस्य, उन्मुक्ताहारां तपस्वितामिव मनस्वितायाः, अभङ्गुरस्नेहां दीपिकामिव

विलासाश्च। सुष्ठु कुमारस्य कार्त्तिकेयस्य लालितुं योग्यां, सुकुमारा चासौ लालनीया च। अम्बिका दुर्गा। विनय एव विनायकः। प्रतिपादितः तरुणिम्नो यौवनस्य— उपभोगो यया शैशवस्य बाल्यस्य अधिकारापहारस्य या शासनपटी=आज्ञापत्रिका तामिव। अनुबन्धिनीम्=प्रवृत्तस्यानुवर्त्तनशीलाम् लोभस्य आयतिमायाममिव शोभायाः। कान्तिरेव नर्त्तकी लासिका तस्याः। कपोलपाली कपोलस्थली। मदस्य लेखास्तासाम्। दीप्तिरेव विलासिनी तस्याः। सूक्तय एव स्रजां पुष्पमालानां सन्दर्भा ग्रन्थनानि। कटाक्षा एव कल्लोलकेलयः। यथावदुपपन्नानि अङ्गानि यस्या-स्ताम्, जगद्विजयस्य या विद्या तस्याः सिद्धिमिव—कामस्य। दृश्या ये पारिजातस्य पल्लवास्तेषां या अपूर्वा वेला तामिव, रतिरेव सुधा तस्या उदयस्य। शृङ्गारस्य= प्रथमरसस्य आयुषे हिता या इष्टिः=यागः—तामिव। आयुष्येष्टिं विशिनष्टि—प्राप्तेति। प्राप्तः प्रजापतिसर्गस्य अतिशयो यया। स्मितमेव चन्द्रिकास्तासाम्। अद्भुतः पारदो यस्यां रसायनस्य सिद्धिमिव लावण्यस्य सौन्दर्यस्य। मृगो मृगशिरः नेता यस्यां (नेतुर्नक्षत्रे अब् वक्तव्यः) सहस्यस्य=पौषस्य। शीलमेव शीतलता तस्याः। विच्छित्तेरङ्गरागस्य। सुधया=चूर्णेन पीयूषेण च अवदातां विशुद्धां सिताञ्च, चन्द्रशालां शिरोगृहं, मन्दाक्षस्य लज्जायाः। उन्मुक्ताः परिहिता आ—समन्तात् हाराः यया, उन्मुक्तस्त्यक्त आहारो यया, तपस्विन्या भावस्तपस्विता तस्याः। न भङ्गुर-स्नेहः प्रेमा तैलञ्च। मुखरायमाणाः=शब्दायमानाः सौरभस्य लोभेन अनुबन्धिनः

प्रभाविशेषाणां, मुखरायमाणसौरभलोभानुबन्धिमधुकरनिकरां विजयघोषणामिव रमणीयतायाः, काञ्चनमयीं सञ्चारिणीं पाञ्चालिकामिव लीलाया मन्दारमञ्जरीं ददर्श ॥१८२॥

सा तु स्वमार्गाभिमुखप्रेषितचक्षुषं चित्रभानुं प्रसभाऽनुरागवशीकृता प्रणयपारिप्लवाभिरपाङ्गभङ्गिभिः पश्यन्ती, मुक्ताफलच्छेदक्षोदैरिव समाच्छादयन्ती, कुमुददलदामभिरिव तिरोदधाना, केतकीकिसलयैरिवाकल्पयन्ती, कर्पूरपरागैरिव पूरयन्ती, पयःप्रवाहैरिव स्नपयन्ती, सुधाधाराभिरिव तिरोदधाना, मदयन्तिकाया अन्तिकमुपससर्प ॥१८३॥

तदानीञ्च तस्याः श्रमविस्मयौ गमनतन्निरीक्षणाभ्यां संभाव्यमानौ रतिकार्याणां स्वसाधारणीकरणेन तत्क्षणं बन्धुतां बबन्धतुः । तथाहि—तदवलोकनादुद्वेलतामुपेयुषो महाद्भुतपीयूषसागरस्य पृषता इव कुन्दमुकुलमेदुराः स्वेदबिन्दवः समस्यन्दन्त; सञ्चरणश्रमेण शिथिलीभवदुत्तरीयदुकूलाञ्चलं वक्षसि यथावन्निवेशयन्त्याश्चास्मिन्नेव पुण्यप्रपञ्चप्राप्ये प्रेयस्यनपायी प्रणयपरिणाहोऽनुरूप इतीवान्तःकरणं कङ्कणक्वणितकैतवात्करः कथयाञ्चकार; विस्मयविधूयमानवदनारविन्दायाश्च मकरन्द-

---

अनुसारिणो मधुकराणां निकराः समूहाः यस्यास्ताम्-विजयस्य घोषणामिव=पटहध्वनिमिव काञ्चनमयीं सुवर्णमयीं सञ्चारिणीं = भ्रमणशीलां लीलायाः=क्रीडायाः पाञ्चालिकामिव = पुत्तलिकामिव—**मन्दारमञ्जरीं** ददर्श = चाक्षुषप्रत्यक्षविषयतां नीतवान् ॥

दर्शनशक्तिं वितरन् पर्येति निरन्तरं भुवनम् ।
भावयतु कार्यसिद्धिं सविता नः कर्मसाक्षी यः ॥१८२॥

**सा तु—चित्रभानुं पश्यन्ती मदयन्तिकाया अन्तिकमुपससर्प** । प्रणयेन प्रेम्णा परिप्लवाभिस्तरलाभिः अपाङ्गस्य भङ्गिभिः=रचनाभिः । दर्शनमुत्प्रेक्षते—**मुक्ताफले**त्यादिना । स्पष्टम् ॥१८३॥

**तदानीञ्च तस्याः श्रमविस्मयौ—बन्धुतां बबन्धतुः** । रतिकार्य्याणामनुरागकार्य्याणामनुभावसात्त्विकादीनां स्वाभ्यां श्रमविस्मयाभ्यां साधारणीकरणेन साम्यकरणेन । 'व्यापारोऽस्ति विभावादेर्नाम्ना साधारणी कृतिः'—इति साहित्यदर्पणम् । **तथाहीति** सात्त्विकादीन् दर्शयति । पृषता इव बिन्दव इव । समस्यन्दन्त प्रास्रुवन् । स्वेदः सात्त्विकभावः । **करः कथयाञ्चकारे**त्यन्तेन—कम्पः । बाष्प-

बिन्दव इव बाष्पपृषता निपेतुः; तन्मात्रविषयकत्वेन हृदये स्थितिमाबध्नतो मकरध्वजस्य पुरःसरा मलयमारुता इव गन्धसारसुरभयो निःश्वासपवना जवना बभूवुः; तद्दृष्टिकादम्बिनीकृताभिषेकं केतकीकुसुममिव कलेवरं कण्टकितमासीत्; तद्गात्राणां परम्परासंयोगं तस्यां विधित्समाना इव भूषणमणिकिरणश्रेणयः सञ्चारिण्यः पुरस्तात्प्रसस्रुः; तीक्ष्णतमं पुलकजातं तदीयमिव दन्ताग्रं स्वकीयमंशुकमदशत्; कम्पमानकलेवरायाश्च किङ्किणी-गणक्वणक्वणप्रणादो मदनाऽद्वैतोपनिषदध्ययनध्वनिमिव निरधार्यत; कुशेशयै-क्याकलनलुलिताभिमुखापतद्भ्रमरवारणापसम्भ्रमोत्क्षिप्तकरायाश्च कन्दर्पका-र्मुकटाङ्कार इव वलयकलकलश्छलेन प्रकटतामिवाकलयाञ्चकार ॥१८४॥

तदानीमेव च वधूजनप्रथमगणनीयां शिखण्डिमूर्तिमिव पुरस्कृत्य मन्दारमञ्जरीमसञ्ज्ञायमानदर्शनेन मदनधनञ्जयेन प्रेरितानामखिलावयवम-ज्जनभाजामजिह्मगानामीषत्परिशेषजुषः पुङ्खा इव वासवदेहान्तरस्य भीष्म-स्येव कुमारस्य चित्रभानो रोमाञ्चसञ्चयाः समुदञ्चन्ति स्म; जननयनेषु

---

पृषता निपेतुरिति—अश्रुः । श्वासोऽनुभावः । गन्धसारो मलयजः तद्वत्सुरभयो निःश्वासपवनाः जवनाः वेगवन्तः । जु गतौ सौत्राद्धातोः जुचङ्क्रम्येत्यादिना कर्त्तरि युच् । कण्टकितम् = सरोमाञ्चम् । विधित्समाना इव चिकीर्षन्त्य इव । प्रसस्रुः प्रसरन्तिस्म । यथा तीक्ष्णतमं दन्ताग्रं स्वकीयमंशुकस्थानापन्नं दन्तच्छदं दशति तथा—पुलकजातमंशुकाद्बहिर्निर्जगामेत्यर्थः । मदनाद्वैतस्य=कामाद्वैतस्य या उपनि-षद्—रहस्यविद्या तदध्ययनस्य ध्वनिमिव—निरधार्यत = निरचीयत प्रणादः (कर्म) श्रोतृभिरित्यर्थः । कुशेशयैः पङ्कजैरैक्याकलनेन लुलिता सती अतएव अभिमुखे आप-तन्तो ये भ्रमरास्तेषां वारणापसंभ्रमेण उत्क्षिप्तौ करौ यया तस्याः । कामचापटङ्कार इव वलयानां कलकलः कोलाहलः ( कर्त्ता ) छलेन स्वध्वनिव्याजेन प्रकटतामिव—सर्वस्य सात्त्विकादेः आ सर्वतः कलयाञ्चकार = कृतवान् । शेषं मदयन्तिकोपाख्यान-व्याख्यानेन वर्णितप्रायम् ॥१८४॥

**तदानीमेव च कुमारस्य चित्रभानोः रोमाञ्चसञ्चयाः समुदञ्च-न्तिस्म ।** यथा—शिखण्डिमूर्त्तिं पुरस्कृत्य—असञ्ज्ञायमानदर्शनेन धनञ्जयेन=अर्जुनेन प्रेरितानाम्—अखिलाऽवयवमज्जनभाजाम्—अजिह्मगामिनां=बाणानाम्—ईषत्परिशेष-जुषः पुङ्खाः-(कर्तारः) वासवं वसुरूपं देहान्तरं पूर्वदेहो यस्य तस्य भीष्मस्य = देव-व्रतस्य-समुदञ्चन्तिस्म=समुद्गच्छन्तिस्म तथा-वधूजनप्रथमगणनीयां मन्दारमञ्जरीं

समरमुखेषु च दर्शितचन्द्रकान्तग्रावतादात्म्यं तदङ्गं मन्दारमञ्जरीवदनकुमुद-बान्धवकौमुदीपरामृश्यमानमार्द्रतामगमत्; गुणगणमौक्तिकावलीमय इव देहस्तरलभावं बिभराम्बभूव; कविकुलसम्प्रदायं साक्षात्क्रियमाणतया संवादेन प्रमाणयदिव विस्मयावहं वदनबिम्बं विधूयमानं वीक्षाम्बभूवे; तपोवनावलोकनसमाकलितस्य शान्तरसस्य मन्दारमञ्जरीसमुदीक्षणादुदञ्चता शृङ्गाररसेन विरोधितया निरस्यमानस्य बिन्दव इव बाष्पप्रसराः प्रासुस्रुवन्; तन्निभालनरससमास्वादनेन चरितार्थतामञ्चति चक्षुषि तत्स्पर्शसुखवञ्चितशल्य इव त्वगिन्द्रिये तत्तदवयवाः स्वभूषणमणिप्रतिबिम्बकैतवेन

---

पुरस्कृत्य = अग्रतः कृत्वा न सञ्जायमानं दर्शनं साक्षात्कारो यस्य तेन मदनरूपेण धनञ्जयेन=मदनाऽनलेन प्रहितानां निखिलाऽवयवब्रुडनभाजां बाणानां किञ्चित् शेषाः पुङ्खा इव रोमाञ्चसञ्चयाः कुमारस्य चित्रभानोः समुदञ्चन्तिस्म इत्यन्वयः। (शिखण्डी नपुंसकः प्रसिद्धो महाभारते भीष्मवधहेतुभूतः) जनानां नयनेषु विषये दर्शनीयतया समरमुखेषु च, कठोरतया दर्शितं चन्द्रकान्तग्राव्णस्तादात्म्यमैक्यं येन तत् तस्य चित्रभानोरङ्गं प्रतीकः मन्दारमञ्जरीवदनरूपस्य कुमुदबान्धवस्य = चन्द्रस्य कौमुद्या चन्द्रिकया परामृश्यमानं स्पृश्यमानं सत्–आर्द्रतां क्लिन्नताम्–अगमत्= प्राप। (मृश=आमर्शने, आमर्शनं स्पर्शः, तुदादिः) तरलभावं=मध्यमणित्वम्, चापलञ्च। 'तरलो हारमध्यगः' 'तरलं चञ्चले षिङ्गे' क्रमशोऽमरमेदिन्यौ। वदनबिम्बं=मुखमण्डलं 'कर्म' विधूयमानं कम्पमानं (कर्त्रा चित्रभानुना) वीक्षाम्बभूवे प्रेक्षकैः। कीदृशम्? विस्मयावहम्, आश्चर्यसूचकम्। किं कुर्वदिव? कविकुलस्य सम्प्रदायं–'स्तम्भः स्वेदोथऽरोमाञ्चः, स्वरभङ्गोऽथ वेपथुः। वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विकाः स्मृताः'–इत्यादिकं साक्षात्क्रियमाणतया = प्रत्यक्षप्रमाणविषयतया हेतोः संवादेन =प्रत्यक्ष–शाब्दयोः सम्मेलनेन प्रमाणयदिव–प्रमाणीकुर्वदिव। अत्र कम्पः। तपोवनस्य = गृत्समदाश्रमस्य मदयन्तिकाऽऽश्रमस्य च दर्शनेन सम्यक् सञ्चितस्य (चित्रभानुनिष्ठस्य) शान्तरसस्य मन्दारमञ्जरीसन्दर्शनादुद्भूतेन–शृङ्गाररसेन (कर्त्रा) विरोधितया हेतोः—निरस्यमानस्य निष्पीड्यमानस्य (शान्तरसस्य) बिन्दव इव पृषता इव—बाष्पस्य अश्रुणः प्रसराः = धाराः प्रासुस्रुवन् = प्रस्रुता अभूवन्, स्रु—गतौ लुङि, चङि द्वित्वम्। तस्याः = मन्दारमञ्जर्याः, निभालनेन दर्शनेन यो रसः = आह्लादः, तस्य समास्वादनेन = चर्वणेन चक्षुषि=रूपसाक्षात्कारकेन्द्रिये चरितार्थतां कृतकृत्यताम्–अञ्चति=प्राप्नुवति सति–तस्याः स्पर्शसुखेन वञ्चिते = विप्रलब्धे, अतएव–'परसंपदुत्कर्षो हि हीनसं-

दर्पणोदरविशदतया प्रविशन्तस्ततोऽपगमविरहेच्छया कण्टकमयैः शङ्कुभिः कीलिता इव विभावयाम्बभूविरे; आभरणरत्नान्तरप्रतिबिम्बितौ च तौ तन्मयूखगुणवागुरानिबद्धाविवादर्शिषाताम्; रसोद्रेकप्रादुर्भवद्बाष्पपृषज्जालजटिलपरस्परलोचनसंयोगादिवाऽवयवजातमार्द्रीभवद्बिभराम्बभूवतुः ॥१८५॥

*मन्दारमञ्जरीपूर्वभागः समाप्तः ।*

## ॥ इति श्रीविश्वेश्वरसूरिविरचिता मन्दारमञ्जरी समाप्ता ॥

पदं पुरुषं दुःखाकरोतीति' न्यायेन—त्वगिन्द्रिये- सञ्जितं सञ्जातं शल्यं=शल्यजनितं दुःखं यस्य तादृशे सति—ते च ते-अवयवाः स्वभूषणखचितमणिषु प्रतिबिम्बस्य च्छलेन दर्पणस्य=मुकुरस्य—उदरवन्मध्यवद् विशदतया स्वच्छतया हेतोः—प्रविशन्तः सन्तः, ततः स्वस्थानात्—अपगमस्य पलायनस्य यो विरहः =अभावः, तद्विषयिकया—इच्छया—कारणभूतया कण्टकमयैः = कण्टकप्रचुरैः शङ्कुभिः = कीलः कीलिता इव = निखाता-इव विभावयाम्बभूविरे = ददृशिरे ( जनैः ), कर्मणि लिट् । समं परस्पराऽनुरागं वर्णयति—आभरणरत्नानामन्तरे = मध्ये—प्रतिबिम्बितौ = संक्रान्तौ च = तु तौ = नायिकानायकौ—तेषां भूषणानां मयूखा एव गुणाः=तन्तवस्तेषां या वागुरा = मृगबन्धनी, तया निबद्धाविव = कृतबन्धनाविव, अदर्शिषाताम् = व्यलोकिषाताम् । रसस्य = अनुरागस्य—उद्रेकेण = वृद्ध्या प्रादुर्भवन्ति= उद्भूतानि यानि—बाष्पपृषतां = अश्रुबिन्दूनां जालानि=समूहास्तैर्जटिले ये परस्परस्य लोचने=नेत्रे तयोः संयोगादिव—आर्द्रीभवत्—क्लिन्नीभवत्—अवयवजातम् अवयवसमूहं बिभराम्बभूवतुः=दध्रतुः । परस्परानुरागः कार्यसिद्धिहेतुः ॥१८५॥

मन्दारमञ्जरीयं, विभाति श्रृङ्गारपरिपूर्णा ।
श्रृङ्गारपूरिताभ्यां, समर्प्यते केशवेशाभ्याम् ॥ १ ॥
काशीस्थकेशवपुरे शुभबिल्वमूले,
पञ्चाङ्कनन्दधरणीमितवैक्रमाब्दे ।
व्याख्या मया विरचिताऽद्भुतगद्यकाव्ये,
कान्तार-पद्धतिरिव प्रथमाऽवतारा ॥ २ ॥
सेयं दत्तजयन्त्यां पूर्त्तिमगाद्विश्वनाथस्य ।
दयया गुरुजनकृपया विप्राशीर्वादतो विबुधाः ! ॥३॥
टीकेयं कुसुमाऽभिधा सुललिता, पूर्णा विचारैः समैः,
संसेव्या नितरां प्रबोधजनिका, शास्त्रार्थ—लोकार्थयोः ।

१. पूर्वनिपातप्रकरणमनित्यम् ।

तारादत्तबुधेन पन्तकुलजेनोद्भाविता मानसे-
खण्डे श्रीवरसायताऽभिधशुभे ग्रामे जनिं गृह्णता ॥ ४ ॥
भूयात्पाठकवर्गस्य सदा कल्याणकारिणी।
भूमण्डले प्रचारञ्च प्राप्नोत्वाचन्द्रतारकम् ॥ ५ ॥

इति श्रीजयकृष्णपन्तप्रपौत्र-जयरामपन्तपौत्र-दुर्गादत्तपन्तपुत्र-श्रीपूर्णानन्द-पन्तानुज-तारादत्तपन्त-विरचितायां कुसुमाभिधायां श्रीविश्वेश्वर-सूरिविरचित-मन्दारमञ्जरी-टीकायां पूर्वार्धं समाप्तम्।



# शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| उत्पन्नमानो | उत्पन्नमात्रो | १३ | ११ |
| सविष्कम्भेन | सविष्कम्भेण | १९ | १ |
| बद्धः | वध्वः | ४५ | ३० |
| यागस्वाध्यायादिकमसाध्य | यागस्वाध्यायादिकर्मसाध्य ... | ८१ | २ |
| अधिजन्मभूमि | अधिजन्यभूमि | ८५ | ४ |
| तेजो | तेजः | ९७ | १८ |
| तनयानुदरतिमिरं | तनयानुदयतिमिरं | १०२ | ७ |
| योगापन्नवैराग्येन | योगापन्नवैराग्येण | १११ | ६ |
| निरावरा | निरम्बरा | ११८ | २ |
| सुमथ्यमानमहार्णव... | सुरासुरमथ्यमानमहावर्णव... | १२६ | ५ |
| परिधाभिधाते | परिघाभिघाते | १४० | ६ |
| उदयारभ्य | उदयमारभ्य | १४३ | ७ |
| मनोरथवृत्तीनामप्यविषयत्वम् | मनोरथवृत्तीनामप्यविषयं स्वप्रणयविषयत्वं | १७९ | ८ |
| देवानां | देवीनां | १८३ | १ |
| परिपूर्णोपरितनावयवया | परिपूर्णोपरितनावयवतया | १९० | ८ |
| दामोदरमिव | दामोदरोदरमिव | २०१ | ९ |
| अमारजितमपि | मारजितमपि | २०३ | ८ |
| आत्मजजन्मा | आत्मजजन्म | २१५ | १ |
| अदद्दर्शदरुणत्वं, दिवसं | अदद्दर्शदरुणत्वं दिवसं, | २१७ | ६ |
| क्रमत्वं | कर्मत्वं | २२७ | २१ |
| पुनरुक्तमिवाभ्यवहान्तरम् | पुनरुक्तमिवाभ्यवहारान्तरम् | २३३ | ११ |
| चन्द्रिकेवचन्द्रलेखोदरात् | चन्द्रिकेव चन्द्रलेखोदरात् | २४१ | १७ |
| आन्दोलितताम्रपर्णीततट... | आन्दोलितताम्रपर्णीतट... | २४४ | १० |
| तपोवनावगाहनाधिगतमैवा-ग्निहोत्रधूमलेखया | तपोवनावगाहनाधिगत-येवाग्निहोत्रधूमलेखया | २४४ | १४ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
| --- | --- | --- | --- |
| प्राप्तपातालग्रहान्तर्भावे | प्राप्तपातालगुहान्तर्भावे | २४४ | २० |
| सजातसाध्वसा | संजातसाध्वसा | २४७ | १२ |
| अखिलमुनिजनाननीयां | अखिलमुनिजनमाननीयां | २५३ | १५ |
| महोदकसुरभिगन्धाहूताभिश्च | मदोदकसुरभिगन्धाहूताभिश्च | २५४ | १ |
| रजोलेखयेवोज्ज्वलतरया | रजोलेखयेवोज्ज्वलतरया | २५४ | १४ |
| तावदास्त्र | तावदास्स्व | २५५ | ८ |
| विद्यमानायां | विद्यमानतायां | २५६ | १७ |
| मामुदीक्ष्यमाणो | मामुदीक्षमाणो | २७८ | २ |
| प्रतीक्ष्यमाण इव | प्रतीक्षमाण इव | २९९ | १५ |
| सहेचर्यपि | सहचर्यपि | ३०४ | ६ |
| प्रतीक्ष्यमाणः | प्रतीक्षमाणः | ३१२ | ४ |
| प्रतीक्ष्यमाणस्य | प्रतीक्षमाणस्य | ३१३ | ३-४ |
| मामाश्वयामास | मामाश्वासयामास | ३१५ | ७ |
| लक्षमाणं | लक्ष्यमाणं | ३३४ | ५ |
| १६४ | १६८ | ३३६ | ६ |
| तमालप्रवालाऽलङ्कताः | तमालप्रवालाऽलङ्कृताः | ३४९ | ५ |
| ादुरभूद् | प्रादुरभूद् | ३५० | ३२ |
| सम्बन्धादेवाभिभूतमृगमदाभ्य | सम्बन्धादेवाभिभूतमृगमदाभ्यां | ३५५ | ३ |
| प्रतिफलितसवतद्गुणाभ्यां | प्रतिफलितसर्वतद्गुणाभ्यां | ३५६ | १२ |